श्रीमद्भट्टोजीदीक्षितप्रणीतः

# शब्दकौस्तुभः

## द्वितीयो भागः

सम्पादकौ

विन्ध्येश्वरीप्रसाद द्विवेदी, गणपतिशास्त्री मोकाटे च

ओरियंटल बुक सेन्टर

दिल्ली (भारत)

श्रीगुरुः शरणम्

ईशकृपया शब्दकौस्तुभस्येदं द्वितीयं संस्करणं भवतां पुरत उपस्थितम्। न तिरोहिताऽस्योपयोगिता विदुषां तत्र भवतां वैयाकरणानाम्।

अस्य मुद्रणावसरे तृतीयाध्यायतृतीयचतुर्थपादपुस्तकं महता प्रयत्नेनान्वेषितमपि नोपलब्धमिति महद्विषादस्थानम्। मन्येऽहमेतादृशोपयुक्तपुस्तकस्य प्रकाशनार्थमचिरादेव दानेन मामनुगृह्य सकलजनोपकारजपुण्यमासादयिष्यन्ति तत्पुस्तकगोप्तार इति।

निवेदकः

गोपालशास्त्री नेने

❀ श्रीः ❀

# शब्दकौस्तुभविषयसूची ।


१ कित्प्रकरणम् १
२ ह्रस्वादिसंज्ञासूत्रम् १३
३ एकश्रुतिविधिसूत्रम् १६
४ फिट्सूत्राणि २१
५ उपसर्जनसंज्ञाप्रकरणम् २९
६ प्रातिपदिकसंज्ञा ३०
७ उपसर्जनसंज्ञा ३३
८ युक्तवद्भावप्रत्याख्यानसूत्रम् ३४
९ द्वित्वातिदेशसूत्रम् ३६
१० एकदेशप्रकरणम् ३८
११ धातुसंज्ञासूत्रम् ४९
१२ इत्संज्ञाप्रकरणम् ५५
१३ यथासंख्यपरिभाषासूत्रम् ५९
१४ आत्मनेपदनियमसूत्रम् ६०
१५ परस्मैपदनियमप्रकरणम् ९०
१६ नदीसंज्ञाप्रकरणम् ९९
१७ घिसंज्ञाप्रकरणम् १०५
१८ अङ्गसंज्ञाप्रकरणम् १०७
१९ पदसंज्ञाप्रकरणम् १०९
२० वचनप्रकरणम् ११३
२१ कारक „ ११४
२२ निपातसंज्ञा „ १३९
२३ गति „ १४३
२४ कर्मप्रवचनीय „ १४९
२५ पुरुषनियम „ १५२
२६ परिभाषा „ १५५
२७ समाससंज्ञा „ १५९
२८ अव्ययीभावसमास „ १६१
२९ तत्पुरुषसमासप्रकरणम् १६९
३० बहुव्रीहिसमास „ २११
३१ द्वन्द्वसमास „ २१६
३२ पूर्वनिपात „ २१८
३३ विभक्त्यर्थ „ २२०
३४ एकवद्भाव „ २४८
३५ लिङ्गानुशासनम् „ २५६
३६ आदेशविधान „ २७९
३७ लुग्विधान „ २८८
३८ आदेशविधान „ २९९
३९ प्रत्ययाधिकार „ ३०१
४० स्वरप्रकरणम् „ ३०४
४१ सन्विधान „ ३०७
४२ नामधातु „ ३१२
४३ यङन्तप्रकरणम् „ ३३९
४४ णिजन्त „ ३४१
४५ कण्ड्वादि „ ३५९
४६ आयादिविधानप्रकरणम् ३६३
४७ सनाद्यन्तानां धातुत्व विधि „ ३६५
४८ स्यादिविकरणविधि „ ३६७
४९ आम्विधिप्रकरणम् „ ३६७
५० कृभ्वस्त्यनुप्रयोग „ ३७१
५१ च्लिविधान „ ३७३
५२ च्ल्यादेश „ ३७५
५३ विकरण „ ३८५
५४ कर्म्मकर्तृ „ ३९२
५५ कृत्प्रकरणम् „ ३९९

* श्रीः *

भट्टोजीदीक्षितकृते—

# शब्दकौस्तुभे ।

## प्रथमाध्याये द्वितीयपादे प्रथममान्हिकम् ।

गाङ्कुटादिभ्योऽञ्णिन्ङित् (अष्टा०सू०१-२-१) । गाङादेशात्कुटादेश्च परेऽञ्णितः प्रत्यया ङिद्वत्स्युः । अध्यगीष्ट । "विभाषा लुङ्लृङोः" (अष्टा० सू०२-४-५०) इतीङो गाङ् । इह विशेषणार्थ एव हि गाङादेशे ङकारः इति "गाङ् लिटि" (अष्टा०सू०२-४-४९) इति सूत्रे वक्ष्यते । कुटिता, कुटितुम् । अञ्णित्किम् ? कोटः । घञ् । चुकोट(१) । 'व्यचेः कुटादित्वमनसीति वक्तव्यम्" (का०वा०) । एतच्च षष्ठे "लिट्यभ्यासस्य" (अष्टा०सू० ६-१-१७) इति सूत्रे भाष्ये पठितमपि सन्दर्भशुद्ध्यर्थं वृत्तिकृतेह पठितम् । तुदादिगणे कुटादिभ्यः प्राक् पठितस्य व्यचेः कुटादित्वं वार्तिकेनातिदिश्यते । विचितुम्, विचिता । अनसि किम् ? 'उरुव्यचाः' । अत्र हरदत्तः— अनसीति पर्युदासात्कृत्येवेदम् । तेनेह न-विव्यचिथ, अव्याचीत्, अव्यचीत् । केचित्तु प्रसज्यप्रतिषेधमाश्रित्य थलादिष्वपि ङित्त्वमाहुः । तत्तु वाक्यभेदादसमर्थसमासाच्चायुक्तमिति माधवादयः । अथ कथं लिखितुं, स्वयमेव लिखिष्यते इति ? अत्र दुर्घटादयः—कुटादिभ्य इत्यत्रैव षष्ठीतत्पुरुषबहुव्रीह्योः सहविवक्षया बहुव्रीहिशेषोऽयं कुटादिभ्य इति । तेन लिखेरपि कुटस्यादितयाऽत्र सङ्ग्रह इति । तन्न, "शकुनिष्वालेखने" (अष्टा०सू०६-१-१४२) इति सौत्रप्रयोगविरोधापत्तेः, "रलो व्युपधात्" (अष्टा०सू०१-२-२६) "ईश्वरे तोसुन्" (अष्टा०सू०३-४-१३) इत्यत्र वृत्तिग्रन्थविरोधाच्च । तत्र हि लिखित्वा, लेखित्वा, लिलिखिषति, लिलेखिषति, विलेखितुम्, इति प्रदर्शितम् । तस्मात्संज्ञापूर्वकतया समाधेयमिति हरदत्तः । कथं 'चुकुटिषति' इति, सनो ङित्त्वाद्घङन्तादिव तङ्प्रसङ्गात् ? नैवम्, उपदेशग्रहणानुवृत्त्योपदेशे यो ङित्तदन्तादात्मनेपदमिति व्याख्यानात् ।

---

१ अत्र "परस्मैपदानां" (अष्टा०सू०३-४-८२) इत्यनेन णल् ।

विज इट् (अष्टा०सू०१-२-२)। विजेः पर इडादिः प्रत्ययो ङित्स्यात्। उद्विजितुम्। इट् किम्? उद्वेजनम्। इह "वृद्धिर्यस्य" (अष्टा०सू०१-१-७३) इतिसूत्रान्मण्डूकप्लुत्या यस्यादिरित्यनुवर्तते। तेनेडादिः प्रत्ययो लभ्यते, न तूत्तमैकवचनमिट्। तथाहि सति 'विजिषीय'इत्यत्रैव स्यात्। "ओविजी भयचलनयोः" (तु०आ०१२९०रु०प०१४६१) इति विजिरिह गृह्यते न तु पृथग्भावार्थ इरित्, तस्यानिट्कत्वादिति हरदत्तः। न च क्रादिनियमाल्लिटीट् संभवत्येवेति वाच्यम्, तत्र कित्त्वेन गतार्थत्वादिति तस्य भावः। वस्तुतस्तु नेदं युक्तम् 'विवेजिथ' इति थलीट्सम्भवात्। पित्त्वेन कित्त्वाभावात्। तस्मात्कुटादिसाहचर्यात्तुदादेरेव ग्रहणं न तु जुहोत्यादेरिति बोध्यम्। नन्वेवं रुधादेरपि ङित्त्वात् 'उद्विजिता' इत्याद्युदाहरता माधवेन सह विरोध इति चेत्तर्हि व्याख्यानादेव जुहोत्यादेरग्रहणमित्यस्तु। हरदत्तोक्तिस्तु दुष्टैवेति दिक्।

विभाषोर्णोः (अष्टा०सू०१-२-३)। अस्मादिडादिप्रत्ययो ङिद्वा स्यात्। ऊर्णुविता, ऊर्णविता। इडिति किम्? ऊर्णवनीयम्।

सार्वधातुकमपित् (अष्टा०सू०१-२-४)। अपित्सार्वधातुकं ङिद्वत्स्यात्। विनुतः। इह परत्र परशब्दप्रयोगात्कल्प्यमानो वतिः सप्तम्यन्तान्न कल्प्यो ङितीव ङिद्वदिति। तथा सति प्रतियोगिनि सप्तमीप्रसङ्गात् सार्वधातुकेऽपितीति। पूर्वत्राप्येवमेव अञ्णितीति, इटीति च सप्तमी स्यात्। श्रूयते तु सर्वत्र प्रथमा। तस्मात्तृतीयान्तादेव वतिर्ङिता तुल्यं ङिद्वदिति। अत एव 'पचेते' इत्यादौ ङितो यत्कार्यम् "आतो ङितः" (अष्टा०सू०७-२-८१) इतीय् सोऽपि भवति। नन्वेवं 'यादम्पती समनसा सुनुतः' इत्यत्र "तास्यनुदात्तेन्ङित्" (अष्टा०सू०६-१-१८१) इति लसार्वधातुकानुदात्तत्वं स्यादिति चेत्? न उपदेशग्रहणस्योभयसम्बन्धेन ङिदुपदेशाददुपदेशाच्चेति षाष्ठभाष्ये व्याख्यातत्वात्, अन्हिङोरिति पर्युदासेनोपदेशे ङकारवतो ग्रहणाद्वा। सप्तम्यन्ताद्वतिरित्येवंपरः षाष्ठवृत्तिग्रन्थस्त्वापातत इत्येष निष्कर्षः। अत्र 'पिच्च ङिन्न, ङिच्च पिन्न भवति' इति वाक्यार्थद्वयं "क्ङिति च" (अष्टा०सू०१-१-५) इति सूत्रे वर्णितमस्माभिः। भाष्ये तु "हलश्नः शानच्" (अष्टा०सू०३-१-८३) इति सूत्रे स्थितमेतत्।

असंयोगाल्लिट् कित् (अष्टा०सू०१-२-५)। असंयोगात्परोऽपिल्लिट् कित् स्यात्। निन्यतुः, विभिदतुः। अपित्किम्? विभेद। असंयोगात्किम्? सस्रंसे। ङित्त्वे प्रकृते कित्करणं "यजादीनां किति" (अष्टा०सू०६-१-१५) इति सम्प्रसारणार्थम्। ईजतुः, ईजुः। पूर्वत्रापि कित्त्वं कुतो न

कृतमिति चेत् ?'वक्तः' 'वक्यः' इत्यत्र सम्प्रसारणापत्तेः, 'जागृतः' 'जाग्रति' इत्यत्र गुणापत्तेश्च। ङित्त्वे तु 'वच्यादीनां किति' इत्युक्तेर्न सम्प्रसारणम्। "जागृोऽविचिण्णल्ङित्सु" (अष्टा०सू०७-३-८५) इति पर्युदासान्न गुणः। 'ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वप्रतिषेधेन" (का० वा०)। कित्त्वस्यावकाशः-ईजतुः, ईजुः। गुणस्यावकाशः-चेतति। ववृते, ववृधे इत्यत्र पूर्वविप्रतिषेधात्कित्त्वम्।

इन्धिभवतिभ्यां च (अष्टा०सू०१-२-६)। आभ्यां लिट् कित्स्यात्। समीधे दस्युहन्तमम्। पुत्र ईधे अथर्वणः। बभूव, बभूविथ। इन्धेः संयोगार्थं ग्रहणं भवतेस्तु पिदर्थम्। इन्धीत्युच्चारणार्थेनेकारेण निर्देशः "सुट्तिथोः" (अ०स०३-४-१०७) इतिवत्, न तु "इक्श्तिपौ" (का०वा०) इतीका, नलोपापत्तेः। अत्र वार्तिकम्-"इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यमिति"। अयमर्थः-इन्धेर्भाषायां "इजादेश्च" (अष्टा० सू०३-१-३६) इत्यामा भाव्यम्। छन्दसि तु "अमन्त्रे" (अष्टा०सू०३-१-३५) इति प्रतिषेधाद्यद्यप्याम्नास्ति तथापि "छन्दस्युभयथा" (३-४-११७) इति लिटः सार्वधातुकत्वे ङित्त्वात् 'समीधे' इति नलोपः। श्नमभावस्त्वार्धधातुकत्वात् व्यत्ययाद्वा। भुवोऽपि वुङ् नित्यत्वादेव गुणवृद्धी बाधिष्यते। न च शब्दान्तरप्राप्त्या वुगनित्य इति वाच्यम्, कृताकृतप्रसङ्गित्वमात्रेणापि लक्ष्यानुरोधान्नित्यत्वस्याश्रयणात्। शब्दान्तरप्राप्त्या स्वरभिन्नस्य प्राप्त्या चानित्यतायाः सिद्धान्ते बहुधा त्यक्तत्वात्। एषैव सूत्रकृतोऽपि गतिः, 'बभूव' इत्यत्र वृद्धेरनिग्लक्षणतया "क्ङिति च" इति निषेधासम्भवेन वुको नित्यताया एव शरणीकरणीयत्वात्। न च कित्त्वसामर्थ्यादनिग्लक्षणाया अपि वृद्धेर्निषेधः। 'अहं बभूव' इत्यत्र णित्त्वाभावपक्षे तथा थलि चरितार्थत्वात्। अत एव यङ्लुकि णल्थलोः 'बोभूव' 'बोभूविथ' इति नित्यत्वाद् वुकि सिद्धम्। न हि तत्र कित्त्वं प्राप्नोति, श्तिपा निर्देशात्। तस्मादेतत्सूत्रं न कर्तव्यमिति भाष्ये स्थितम्। अत्र काशिका, 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां वक्तव्यमिति"। यद्यप्येतदिह सूत्रे भाष्ये नास्ति तथापि "मणीवादेन" इतिवन्नाप्रामाणिकम्। तथाच "अत एकहल्मध्ये" (अष्टा० सू०६-४-१२०) इत्येत्वाभ्यासलोपौ प्रति नलोपस्याभीयत्वेनासिद्धौ सत्यां "दम्भेश्च" (का०वा०) इति वार्तिकमारब्धम्। "आभात्" (अष्टा०सू०६-४-२२) सूत्रस्य प्रत्याख्यानात् "श्नसोरल्लोपः" (अष्टा०सू०६-४-१११) इति तपरकरणेनानित्यत्वाद्वा नेदं वार्तिकमावश्यकमिति तु षष्ठे वक्ष्यते। तथा "सदेः परस्य लिटि" (अष्टा०सू०८-३-११८) इति सूत्रे "स्वञ्जेरुपसंख्यानम्" (का०वा०) इति वार्तिकस्य भाष्यकृता 'परिषस्वजे' इत्युदाहरणं दत्त-

म्। प्रयुज्यते च "तमिन्दुः परिषस्वजे" इति। एतच्च कित्त्वं पिदर्थमपिदर्थं चेति सुधाकरः। अपिदर्थमेवेति न्यासकारात्रेयादयः। हरदत्तस्तु सन्दिदेह। वस्तुतस्तु न्यासाद्युक्तमेव ज्यायः, इह वृत्तौ भाष्यभाष्ये चापित एवोदाहृतत्वात्। "श्रन्थ ग्रन्थ सन्दर्भे" (क्र्या.प.१५।३,१४) श्रेथतुः, श्रेथुः। ग्रेथतुः, ग्रेथुः। देभतुः, देभुः। सस्वजे, सस्वजाते। केचित्तु "श्रन्थिग्रन्थिदम्भिस्वञ्जीनां वा" इति पठन्तः कित्त्वं विकल्पयन्तीति हरदत्तमाधवौ। तन्मते ददम्भतुः, शश्रन्थतुरित्याद्यपि। सुधाकरमते तु णल्यपि श्रेथ-ग्रेथ-देभ इति। स्यादेतत्। सर्वमतेषु श्रेथतुः, ग्रेथतुः इत्यादि दुर्लभम्। 'सस्वजे' इतिवत्संयुक्तहल्मध्यस्थत्वादिति चेत्? सत्यम्। अत एव एत्वाभ्यासलोपावत्यत्र घकञ्याविति हरदत्तः। अत्र मूलं मृग्यम्। तथा सुधाकरमते श्रेथिथ, न्यासादिमते 'शश्रन्थिथ' इति वृत्तौ माधवस्याप्युक्तौ मूलं मृग्यम्। कित्त्वे विप्रतिपत्तावपि "थलि च सेटि" (अष्टा०सू०६-४-१२१) इत्यस्याप्राप्तेरविशेषात्। तथा नलोपस्यासिद्धत्वादेत्वाप्राप्तौ वचनमिति माधवोक्तिरपि शिथिलमूला। श्रन्थेतिप्राग्भागे संयोगसत्त्वाद् ग्रन्थेरादेशादित्वाच्चैत्वाप्राप्तेरुद्भटतया नलोपसिद्धत्वासिद्धत्वविचारस्य काकदन्तपरीक्षाप्रायत्वादिति दिक्। कौमाराणां तु सर्वमिदं सूत्रारूढम्। तथा च शर्ववर्मणा सूत्रितम्-"अनिदनुबन्धानामगुणेनुषङ्गलोपः परोक्षायामिन्धिश्रन्थिग्रन्थिदम्भीनामिति। अस्यैकव्यञ्जनमध्येनादेशादेः परोक्षायाम् थलि च सेटि तॄफलभजत्रप्श्रन्थिग्रन्थिदम्भीनां चेति। अत्र निरनुषङ्गैः साहचर्यात् 'शश्रन्थिथ' इत्यादीति दुर्गसिंहः। एवं स्थिते "दम्भेश्च" (का० वा०) इति वार्तिकभाष्ययोः सामान्यापेक्षज्ञापकतामाश्रित्य दम्भिप्रभृतीनामन्यत्रोक्तं पाणिनीयेऽपीष्टमिति कथञ्चित्समर्थनीयम्।

मृडमृदगुधकुषक्लिशवदवसः क्त्वा (अष्टा०सू०१-२-७)। गुधकुषक्लिशिभ्यः क्त्वो "रलो व्युपधात्" (अष्टा०१-२-२६) इति विकल्पे प्राप्ते इतरेभ्यो "न क्त्वा सेट्" (अष्टा०सू०१-२-१८) इति निषेधे प्राप्ते कित्त्वं विधीयते। मृडित्वा, मृदित्वा, गुधित्वा, कुषित्वा, क्लिशित्वा, उदित्वा, उषित्वा, "वसतिक्षुधोः" (अष्टा०सू०७-२-५२) इतीट्। यजादित्वात्संप्रसारणम्।

रुदविदमुषग्रहिस्वपिप्रच्छः संश्च (अष्टा०सू०१-२-८)। एभ्यः संश्च क्त्वा च कितौ स्तः। रुदविदमुषाणां "रलो व्युपधात्" (अष्टा०सू०१-२-२६) इति विकल्पे प्राप्ते ग्रहेस्तु विध्यर्थमेव। स्वपिप्रच्छ्योस्तु सन्नर्थम्। तावतैव चरितार्थत्वादनिटः क्त्वः कित्त्वविधानं नियामकं स्यादिति न शङ्कनीयम्। रुदित्वा, रुरुदिषति, विदित्वा, विविदिषति, मुषित्वा, मुमु-

पिपति, गृहीत्वा, जिघृक्षति, सुप्त्वा, सुषुप्सति, पृष्ट्वा, पिपृच्छिषति, कित्त्वाद् ग्रहादीनां सम्प्रसारणं "किरश्च पञ्चभ्यः" (अष्टा०सू०२-७-५) इति प्रच्छेः सन इट् ।

इको झल् (अष्टा०सू०१-२-९) । इकः परो झलादिः सन् कित्स्यात् । चिचीषति, तुष्टूषति, चिकीर्षति । ननु चिस्तुकृञ्भ्यः सनि कृते गुणं बाधित्वा "अज्झन" (अष्टा०सू०६-४-१६) इति दीर्घोऽस्तु किं कित्त्वेन ? न च 'पिपविषति' इत्यादावपि तथा स्यादिति वाच्यम् "अनुनासिकस्य क्वि" (अष्टा०सू०६-४-१५) इति सूत्राज्झलनुवृत्त्या झलादौ सनि दीर्घविधानात् । न चेह गुणमिव 'ज्ञीप्सति' इत्यत्र णिलोपमप्यविशेषाद् दीर्घो बाधेत । कित्त्वे तु सति 'चिचीषति' इत्यादौ कृतार्थो दीर्घो 'ज्ञीप्सति' इत्यत्र परत्वात् णिलोपेन बाध्यत इति वाच्यम्, येननाप्राप्तिन्यायेन दीर्घस्य गुणापवादत्वात् । न च पुरस्तादपवादन्यायेन णिलोप एव बाध्य इति भ्रमितव्यम्, उभयापवादतासंभावनायामेव तदवतारात् । इह तु णिलोपेन सह येननाप्राप्तिविरहात् । न च बाध्यसामान्यचिन्तायां णिलोपबाधो दुर्वार इति वाच्यम्, "स्थाशपां ज्ञीप्स्यमानः" (अष्टा०सू०१-४-३४) इति निर्देशात् लक्ष्यानुरोधाच्चेह बाध्यविशेषचिन्ताया एव युक्तत्वात् । न च कुटादौ "गु पुरीषोत्सर्गे" (तु०पा०१४००), 'ध्रु गतिस्थैर्ययोः" (तु० पा० १४०१) इति पाठात् 'जुगूषति' 'दुधूषति' इत्यत्र कृतार्थो दीर्घः परेण गुणेन बाध्येतेति वाच्यम्, उहनेति वक्तव्ये "अज्झन" इति प्रत्याहारग्रहणस्य निरवकाशत्वात् । न च 'गमेरिङादेशस्य' (का०वा०) इति वार्तिकं प्रत्याख्यातुं तन्त्रादिना सम्भवद्व्यभिचाराभ्यां गमेर्वा विशेषयिष्यमाणत्वादज्ग्रहणसार्थक्यं शङ्क्यम् । एवं हि 'उतो दीर्घः' इत्युक्त्वा 'इङ्हनोः' इति सूत्रयेत् । इणिकोः ग्रहणमिति पक्षेऽपि 'इहनोः' इति ब्रूयात् । हना साहचर्याच्च 'इ' धातुरेव ग्रहीष्यते न त्विवर्णान्तः । यथान्यासपाठेऽपि हनिसाहचर्याल्लुग्विकरणस्यादेशगमेर्ग्रहणसम्भवाच्च । तस्माद्दीर्घविधिना गुणबाधात्किं कित्त्वेनेति ? उच्यते, उत्तरार्थमवश्यम् "इको झल्" (अष्टा० सू०१-२-९) इति कर्तव्यम् । योगविभागः किमर्थ इति परमवशिष्यते । तत्राज्ग्रहणसामर्थ्यस्य "ज्ञीप्स्यमानः" (अष्टा०सू०१-४-३४) इत्यादेर्ज्ञापकस्य च पर्यालोचनाक्लेशपरिहारार्थं लक्षणैकचक्षुषो बाध्यसामान्यचिन्ताभ्रमं वारयितुं योगविभाग इति निष्कर्षः । वार्त्तिकं तु यथाश्रुताभिप्रायकम् । तद्यथा—

इकः कित्त्वं गुणो मा भूद्दीर्घारम्भात्कृते भवेत् ।
अनर्थकं तु ह्रस्वार्थं दीर्घाणां तु प्रसज्यते ॥

सामर्थ्याद्धि पुनर्भाव्यमृदित्त्वं दीर्घसंश्रयम्।
दीर्घाणां नाकृते दीर्घे णिलोपस्तु प्रयोजनम्॥

अस्यार्थः-इक उत्तरस्य सनः कित्त्वं विधीयते गुणो मा भूदित्येवमर्थम्। दूषयति-दीर्घारम्भादिति। गुणो न भविष्यतीति शेषः। आरम्भवाद्याह-कृते भवेदिति। अयं भावः-"सनिमीमा" (अष्टा०सू०७-४-५४) इत्यत्र मीग्रहणेन मिनोतिमपि ग्राहयित्वा दीर्घः कृतार्थ इति 'चिचीषति' इत्यादौ कृतेपि दीर्घे गुणः स्यात्। दूषयति-अनर्थकं त्विति "मीनातिमिनोति" (अष्टा०सू०६-१-५०) इत्यात्वे कृते गामादाग्रहणेष्वविशेषान्माग्रहणेनैव मिनोतिमीनात्योरपि सिद्धे मीग्रहणं तत्र मास्तु। तथा च दीर्घविधानं न कृतार्थमिति भावः। ह्रस्वार्थमिति। ह्रस्वेषु दीर्घः प्रवर्त्तताम्, न तु दीर्घेषु; अप्राप्ते शास्त्रमर्थवदिति न्यायात्। ततश्च 'बुभूषति' इत्यादौ गुणः प्रसज्यत एवेत्यर्थः। दूषयति-सामर्थ्यादिति। गुणनिवृत्तिरूपप्रयोजनसद्भावाद्दीर्घाणां दीर्घैर्भाव्यमेव। "मोराजि" (अष्टा०सू०८-३-२५) इतिवदिति भावः। न चैवं दीर्घेण गुणस्येव ऋदित्वस्यापि बाधः स्यात्तथा च 'चिकीर्षति' इति न सिध्येदत आह-ऋदित्त्वमिति। "यं विधिं प्रति" इति न्यायाद् गुण एव बाध्यो न तु ऋदित्त्वमित्यर्थः। ननु 'तितीर्षति' इत्यादौ तर्हि इत्वं बाध्यताम्, तत्राह-दीर्घाणामिति। इत्वोत्वयोर्हि गुण वृद्धी परत्वाद् बाधिके। ततश्च "अज्झन" (अष्टा०सू०६-४-१६) इति दीर्घेण गुणबाधे सत्येवेत्त्वं लभ्यं न तु ततः प्राक्। एवं च यस्य तु विधेरित्यंशो ह्रस्व इव दीर्घेष्वविशिष्ट इति भावः। एवं प्राप्ते सिद्धान्तमाह-णिलोपस्त्विति।

हलन्ताच्च (अष्टा०सू०१-२-१०)। कर्मधारयोऽयम्। अन्तशब्दः समीपे परभूते वर्तमानो विशेषणमपि निपातनात्पूर्वं निपतितः। इक इति पञ्चम्यन्तमपीह षष्ठ्या विपरिणम्यते तत्सापेक्षोऽप्यन्तशब्दो नित्यसापेक्षत्वात्समस्यते। इक्समीपाद्धलः परो झलादिः सन कित्स्यात्। बिभित्सति। इकः किं? यियक्षते। झल् किम्? विवर्धिषते। कथं 'धिप्सति' इति? हल्ग्रहणस्य जातिपरत्वात्सिद्धमित्युपपादितं "निपात एकाज्" (अष्टा०सू०१-१-१४) इति सूत्रे।

लिङ्सिचावात्मनेपदेषु (अष्टा०सू०१-२-११)। इक्समीपाद्धलः परौ झलादी लिङ् तङ्परःसिच्चेत्येतौ कितौ स्तः। भित्सीष्ट, अभित्त। इकः किम्? यक्षीष्ट, अयष्ट। सम्प्रसारणं मा भूत्। आत्मनेपदेष्विति किम्? अस्राक्षीत्, अद्राक्षीत्। अकितीत्युक्तेरम् न स्यात्। सिच एवेदं विशेषणं नतु लिङोऽसम्भवात्, झलनुवृत्त्यैव लिङः परस्मैपदस्य व्यावर्त्तितत्वाच्च।

हलः किम् ? चेषीष्ट, अचेष्ट । झल् किम् ? वर्त्तिषीष्ट, अवर्त्तिष्ट ।

उश्च (अष्टा०सू०१-२-१२) । ऋवर्णात्परौ झलादी लिङ्सिचौ कितौ स्तस्तङि । कृषीष्ट, अकृत । झलादौ किम् ? वरिषीष्ट, अवरिष्ट । "लिङ्सिचोः" (अष्टा०सू०७-२-४२) इतीट् । तङि किम् ? अकार्षीत् । ऋ इति वर्णग्रहणं व्याप्तिन्यायात् ।

वा गमः (अष्टा०सू०१-२-१३) । गमः परौ झलादी लिङ्सिचौ वा कितौ स्तः । सङ्गसीष्ट, सङ्गंसीष्ट । समगत, समगंस्त । कित्त्वपक्षे "अनुदात्तोपदेशवनति" (अष्टा०सू०६-४-३७) इत्यादिनाऽनुनासिकलोपः ।

हनः सिच् (अष्टा०सू०१-२-१४) । हन्तेः परः सिच् कित्स्यात् । आहत, आहसाताम्, आहसत । सिचः कित्त्वादनुनासिकलोपः । यद्यपि सिजन्तस्याङ्गस्यात्मनेपदं ङित्परमस्तीति "अनिदिताम्" (अष्टा०सू० ६-४-२४) इत्येव सिद्धं तथाऽपि सिजन्तस्योपधालोपो नेति ज्ञापनार्थमिदम् । तेन 'अमंस्त' इत्यादि सिद्धम् । न च "अनिदिताम्" (अष्टा०सू०६-४-२४) इति पर्युदासः शङ्क्यः, सिच इकारस्योच्चारणार्थत्वात् । अन्यथा नुमापत्तेः । न च धातुग्रहणेन तद्व्युदासः । "धातुग्रहणमुपदेशे नुम्प्रवृत्त्यर्थम्" इति कुण्डा, हुण्डा इत्यादिसिद्धये भाष्य एव वक्ष्यमाणत्वात् । न च तासेर्व्यावृत्तये तत्, तत्रापीकारस्योच्चारणार्थत्वात् । न चैवं 'मन्ता' 'हन्ता' इत्यादावात्मनेपदे उपधालोपापत्तिः । आभीयस्य तासेरिलोपस्यासिद्धत्वात् । "आभात्" (अष्टा० सू०६-४-२२) सन्प्रत्याख्यानपक्षे तु विकरणप्रयुक्तमुपधात्वमाश्रित्य लोपो नेति सामान्यापेक्षं ज्ञापकमस्तु । अङ्गवृत्तपरिभाषया वा 'मन्ता' 'हन्ता' इति साध्यताम् । ननु 'आहत' इत्यत्रातो लो(१)पं व्यावर्तयितुं समानाश्रयत्वप्रयुक्ताऽसिद्धताऽपेक्ष्यते, सा च सिचः कित्त्वं विना न निर्वहतीति कथं ज्ञापकतेति चेत् ? न, आर्धधातुकोपदेशे यदकारान्तमिति व्याख्यानादेव लोपाप्रवृत्तेः । जयादित्यस्तु सिच्तास्योरिदित्करणमनुनासिकलोपप्रतिषेधार्थमित्याह । तन्मते धातुग्रहणस्य तद्व्यावृत्त्या कृतार्थत्वात् "नुम्विधावुपदेशिवद्वचनं प्रत्ययसिद्ध्यर्थम्" इति वचनमेव शरणीकरणीयमिति दिक् । यद्यपीह "लिङ्सिचौ" (अष्टा०सू०१-२-११) इत्यनुवृत्त्या सिद्धं तथाप्युत्तरार्थमवश्यं कर्तव्यं सिज्ग्रहणं स्पष्टत्वार्थमिहैव कृतम् । अन्यथा हि लिङि वधादेशो नित्यः, 'घानिषीष्ट' इति चिण्वदिटि "स्थानिवत्" (अष्टा०सू०१-१-५६) सूत्रोक्तरीत्या वधादेशाभावेऽपि अझलादित्वान्न कित्त्वमित्यादि व्युत्पादनीयं स्यात् ।

---

(१) "अतो लोपः" (अष्टा०सू०६-४-४८) इत्येतमित्यर्थः ।

यमो गन्धने (अष्टा०सू०१-२-१५)। सूचनार्थाद्यमेः सिच् कित् स्यात्। उदायत, उदायसाताम्, उदायसत। धातूनामनेकार्थत्वात्सूचनेऽत्र यमिर्वर्त्तते। तच्च परदोषाविष्करणम्। "आङो यमहनः" (अष्टा०सू०१-३-२८) इत्यात्मनेपदं, धात्वर्थेनोपसङ्ग्रहादकर्मकत्वात्। सिचः कित्त्वादनुनासिकलोपः। गन्धने किम्? उदायंस्त पादम्। आकृष्टवानित्यर्थः। स्वाङ्गकर्मकत्वात्तङ्। उदायंस्त कूपाद्रज्जुम्। उद्धृतवानित्यर्थः। सकर्मकत्वेऽपि "समुदाङ्भ्यो यमोऽग्रन्थे" (अष्टा०सू०१-३-७५) इत्यात्मनेपदम्।

विभाषोपयमने (अष्टा०सू०१-२-१६)। यमेः सिच् किद्वा स्याद्विवाहे। रामः सीतामुपायत, उपायंस्त वा। उदवोढेत्यर्थः। "उपाद्यमः स्वकरणे" (अष्टा०सू०१-३-५६) इति तङ्। "गन्धनाङ्गे तूपयमने पूर्वविप्रतिषेधेन नित्यं कित्त्वम्" इति "नवेतिविभाषा" (अष्टा०सू०१-१-४४) इति सूत्रे भाष्ये स्थितम्।

स्थाघ्वोरिच्च (अष्टा०सू०१-२-१७)। अनयोरिदादेशः स्यात्सिच्च कित्स्यात्। उपास्थित, उपास्थिषाताम्, उपास्थिषत। "उपान्मन्त्रकरणे" (अष्टा०सू०१-३-२५) "अकर्मकाच्च" (अष्टा०सू०१-३-२६) इति तङ्। घोः—अदित, अधित। घुस्थोरितीह वक्तुं युक्तम्। यद्यपि जधादित्येन "वा गमः" (अष्टा०सू०१-२-१३) इत्यारभ्य पञ्चसूत्र्यामात्मनेपदेष्वित्यनुवर्त्तितं तथापि निष्फलत्वादुपेक्ष्यम्। तथाहि—गमेः परस्मैपदे सिजनास्ति, अङा बाधात्। लिङ् तु न झलादिः। न चात्मनेपदमेवानुवर्त्य झल्ग्रहणं त्याज्यमिति वाच्यम्, उत्तरसूत्रस्य 'अघानिषाताम्' इति चिण्वदिटि अतिव्याप्त्यापत्तेः। हन्तेस्तु परस्मैपदे वधादेशो नित्यः। यमेस्तु "यमरम" (अष्टा०सू०७-२-७३) इतीट्सकोः सतोर्झलादिः सिच् परस्मैपदे नास्ति। उपयमे तु नित्यमात्मनेपदम्। स्थाघ्वोः परस्मैपदे सिचो लुक्। एवं स्थिते "हनः सिच्" (अष्टा०सू०१-२-१४) इति सूत्रे यदुक्तं वृत्तिकृता आत्मनेपदग्रहणमुत्तरार्थमनुवर्त्तत इति। तदप्यापातरमणीयमेव। तस्माद्यथाव्याख्यानमेव साधु। स्यादेतत्—भाव्यमानस्य सवर्णाग्राहकत्वादिति तपरकरणं व्यर्थम्। सत्यम्। इश्चेत्युक्तेऽपि लाघवे विशेषाभावादित्थमुक्तमिति तत्त्वम्। भाव्यमानोऽपि क्वचित्सवर्णान् गृह्णातीति ज्ञापकावलम्बनेन तु वार्त्तिकम्।

इच्च कस्य तकारेत्त्वं दीर्घो मा भूदृतेऽपि सः।
अनन्तरे प्लुतो मा भूत् प्लुतश्च विषये स्मृतः॥ इति॥

अस्यार्थः—इश्चेति तकारेत्त्वं कस्य किम् सिद्ध्ये इति प्रश्नः। हेतो-

रपि सामान्यतः सम्बन्धित्वेनैव विवक्षायां षष्ठी, अन्यथा "हेता" (अष्टा० सू०२-३-२३) इति तृतीयो स्यात् । अत्र तकारस्येत्वोक्तिरापातत इत्युक्तम् "एओङ्" (मा०सू०३) सूत्रे। यद्वा तकारमेतीति तकारेत् । तपर इति व्याख्येयम् । तथा च भाष्यम्—"कस्य हेतोरिकारस्तपरः क्रियते" इति । 'अमूभ्याम्' इत्यादाविव भाव्यमानोप्यान्तरतम्याद्दीर्घो मा भूदित्युत्तरम्। कृतेऽपीति । इच्चेत्यंशाद्धतेपि "स्थाघ्वोः" (अष्टा०सू० १-२-१७) इति कित्त्वे सति "घुमास्था" (अष्टा०सू०६-४-६६) इतीत्त्वेन सिद्धे विधानसामर्थ्यादनन्तरतमोऽपि ह्रस्वः सिद्धस्तत्किं तपरेणेति पुनः प्रश्नः । अनन्तरे इति । असदृशे आदेशे क्रियमाणे ह्रस्व इव प्लुतोपि स्यात्स मा भूदित्यर्थः। प्लुतश्चेति । विषयविशेषे वाक्यस्य टेरित्यधिकृत्य हि प्लुतो वक्ष्यते । अत एव "कुरूनगमन्न" इत्यादौ स्मृतः, न तु "आस्थित" इत्यादौ, अटित्वात् । तथा चेष्टापत्तिर्न कार्येति तपरत्वं समर्थितम्। प्राञ्चस्तु अनन्तरेऽविद्यमानेपि विशेषे "घुमास्था" (अष्टा० सू० ६-४-६६) इतीत्वेन सिद्धेपीति यावत् । प्लुतो मा भूदित्येतदर्थं दीर्घः स्यात् "मारजि" (अष्टा०सू०८-३-२५) इतिवत्। अस्त्वेवमिति चेत्, न, प्रश्नाख्यानादिरूपे विषये प्लुतस्येष्यमाणत्वात् । तदेवं स्थलान्तरे भिन्नकालनिवृत्त्यर्थमपि तपरत्वमिह दीर्घनिवृत्तिद्वारा प्लुतसिद्ध्यर्थं पर्यवस्यतीति व्याचख्युः । अपरे तु यद्यनेन प्लुतो विधीयते तर्हि यत्राग्रिमिकस्य विषयस्तत्राप्यनेनैव स्यात् तस्यासिद्धत्वात् । ततश्च पक्षेऽनुवाददोषः स्यात् । अतो ह्रस्व एव भविष्यतीति तपरकरणप्रत्याख्यानपरश्चतुर्थचरण इति व्याचख्युः । एतच्च मतद्वयमप्ययुक्तम्। अनन्त्यस्यापीत्यादीनां टिसंज्ञा विरहादिहाप्रवृत्तेः । कैयटोऽपि मतद्वयखण्डनपरतयैव नेयः। न्यासहरदत्तादयस्तु आग्रिमिकग्रन्थैर्त्यादिभिश्च विरोधादुपेक्ष्यः। भाष्यं त्वस्मदुक्तव्याख्यानुगुणमेव । यदा विषयस्तदैव प्लुतेन भवितव्यमिति योजनया नेह प्लुतस्य विषयोऽस्तीति ध्वनितत्वादिति दिक् ॥

न क्त्वा सेट् (अष्टा०सू०१-२-१८) सेट् क्त्वा किन्न स्यात् । देवित्वा । सेट् किम् ? कृत्वा । क्त्वा किम् ? निगृहीतिः । अत्र वार्तिकम्—

नसेडिति कृतेऽकित्त्वं निष्ठायामवधारणात् ।
ज्ञापकान्न परोक्षायां सनि झल्ग्रहणं विदुः ।
इत्वं कित्त्वनियोगेन रेण तुल्यं सुधीवनि ।
वस्वर्थं किदतोदेशाद् गृहीतिः क्त्वा च विग्रहात् ॥

अस्यार्थः—पूर्वार्द्धमेको ग्रन्थः । तत्रोत्तरार्धमित्यपकृष्यते । क्त्वा-

ग्रहणं त्यक्त्वा नसेडित्येतावतापि योगेनाकित्त्वे कृते 'गुधितः' इत्यादौ निष्ठायां नाकित्वम्। कुतः ?। अवधारणात्। "निष्ठाशीङ्" (अष्टा०सू० १-२-१९) इत्यनेन, शीङादिभ्य एव निष्ठा न किदिति नियमादित्यर्थः। विपरीतनियमस्तु लक्ष्यानुरोधान्न व्याख्यास्यते। न चैवं लिटि प्रतिषेधात् 'जग्मिव' इत्यादावुपधालोपो न स्यादत आह—ज्ञापकादिति। किं तत् ? तत्राह—सनीति। 'शिशयिषते' इत्यत्र कित्त्वं वारयितुं क्रियमाणम् "इको झल्" (अष्टा०सू१-२-९) इति झल्ग्रहणं ज्ञापयति—"आतिदेशिकस्य कित्वस्य नायं निषेधः" इति। ननूत्तरार्थं झल्ग्रहणं स्यात् नेत्याह—इत्वमिति। 'उपास्थायिषतां हरिहरौ भक्तेन' इत्यत्र अस्था स आताम् इति स्थिते इत्वप्राप्तश्चिण्वद्भावश्च। परत्वाच्चिण्वद्भावे कृते युक् च प्राप्त इद्विधिश्च। अपवादत्वाद्युकि कृते यकारस्येत्प्रसङ्गः। तं वारयितुं झल्ग्रहणमिति ज्ञापकभङ्गवादिनो मतम्, तन्न, न सेडिति सिचोपि कित्त्वे निषिद्धे तत्सन्नियोगशिष्टतया इत्त्वस्याप्रवृत्तेः। अत्र दृष्टान्तमाह-रेणेति। शोभना धीवानोस्यां 'सुधीव' इत्यत्र "अनो बहुव्रीहेः" (अष्टा०सू०४-१-१२) इति ङीपो निषेधे "वनोर च" (अष्टा०सू०४-१-७) इति रेफोपि न भवति तथेत्यर्थः। भाष्ये त्वभ्युपेत्यापि समाहितम् "इत्त्वे कृतेऽपि वृद्धिर्भविष्यति" इति। युक्ता हि आकारस्य वृद्धिर्बाध्यते न त्विकारस्यापीति भावः। 'जग्मिवान्' इत्यत्र क्वसोः कित्त्वनिषेधं वारयितुं क्त्वाग्रह इति शङ्कते-वस्वर्थमिति। दूषयति-किदतिदेशादिति। औपदेशिकस्य निषेधेप्यातिदेशिकेन सिद्धम्। तदनिषेधस्य ज्ञापितत्त्वादिति भावः। स्यादेतत्-संयोगान्तेष्वातिदेशिककित्त्वाभावादौपदेशिकमेव शरणम्। अञ्जेः 'आजिवान्' इति यथा। अत्राहुः-आनुपूर्व्यात्सिद्धम्। नलोपे कृते द्विर्वचने एकादेशे च "वस्वेकाज्" (अष्टा०सू०७-२-६७) इतीट्। कृतद्विर्वचनानामेकाचामिति सिद्धान्तात्। न चेदानीं कित्त्वप्रतिषेधः, उपजीव्यविरोधात्। कित्त्वे हि प्रतिषिद्धे नलोपनिवृत्तौ द्विहल्त्वान्नुटि एकाच्त्वाभावादिडेव नावतिष्ठेत। किञ्च क्वसोश्छान्दसत्वात्सार्वधातुकत्वे "सार्वधातुकमपित्" (अष्टा०सू०१-२-४) इति ङित्वात्सिद्धम्। एवं स्थिते सिद्धान्तमाह-गृहोतिरिति। किन्निवृत्त्यर्थं क्त्वाग्रहणमित्यर्थः। तितुत्रेष्वग्रहादीनामितीट्। कित्त्वात्संप्रसारणम्। एवं "कुञ्च कौटिल्याल्पीभावयोः" (भ्वा०प०१८६) निकुचितिः, कित्त्वान्नलोपः। उपस्निहितिः, कित्त्वान्न गुणः। इदानीं क्त्वाग्रहणं प्रत्याचष्टे-क्त्वाचेति। विग्रहादिति। योगविभागादित्यर्थः। अयं भावः-न सेण्निष्ठाशीङित्यादित्रिसूत्रीं पठित्वा "पूङः क्त्वाच" (अष्टा०सू०१-२-२२) इत्यत्र योगो

विभज्यते। पूङः परा सेण्निष्ठा किन्न स्यात्। ततः क्त्वा च सेट् किन्नेत्यनुवर्तते पूङ इति निवृत्तम्। एवं चैकं क्त्वाग्रहणं प्रत्याख्यातम्। योगविभागस्तु पूर्वमेकसूत्रेण सह निर्मातव्यः।

निष्ठाशीङ्स्विदिमिदिक्ष्विदिधृषः [अष्टा०सू०१-२-१९]। एभ्यः परा सेण्निष्ठा किन्न स्यात्। शयितः, शयितवान्। अनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थः। शेशियतः, शेशियतवान्। "एरनेकाचः" (अष्टा०सू०६-४-८२) इति यण्। ञिष्विदा स्नेहनमोचनयोः (भ्वा०आ०७४४)। भ्वादिः। प्रस्वेदितः, प्रस्वेदितवान्। यस्तु "ष्विदा गात्रप्रक्षरणे" (दि०प०११८८) इति दिवादिरञित् स नेह गृह्यते। ञिद्भिः साहचर्यात्। "ञिमिदा स्नेहने" (भ्वा०आ०७४३)। प्रमेदितः, प्रमेदितवान्। "ञिक्ष्विदा स्नेहनमोचनयोः" दि०प०१२४५) इति दिवादिर्गृह्यते न तु "ञिक्ष्विदा अव्यक्ते शब्दे" (भ्वा०प०९७८) इति भ्वादिरपि, मिदिना साहचर्यादिति हरदत्तस्तच्चिन्त्यम्। भ्वादिष्वपि मिदेः पठ्यमानत्वात्। तस्मादविशेषादुभयोर्ग्रहणं न्याय्यम्। प्रक्ष्वेदितः, प्रक्ष्वेदितवान्। प्रधर्षितः प्रधर्षितवान्। सेट् किम्? स्विन्नः, स्विन्नवान्। "आदितश्च" (अष्टा०सू०७-२-१६) इतीण्निषेधः। "विभाषा भावादिकर्मणोः" इति पक्षेऽभ्यनुज्ञायते। स कित्त्वप्रतिषेधस्य विषयः।

मृषस्तितिक्षायाम् [अष्टा०सू०१-२-२०]। सेण्निष्ठा किन्न स्यात्। मर्षितः, मर्षितवान्। क्षमायां किम्? अपमृषितं वाक्यम्। अविस्पष्टमित्यर्थः। तितिक्षाग्रहणं ज्ञापकं भीमसेनादिकृतोऽर्थनिर्देश उदाहरणमात्रं न तु परिसंख्येति।

उदुपधाद्भावादिकर्मणोरन्यतरस्याम् [अष्टा०सू०१-२-२१]। उकारोपधाद्धातोः परा भावादिकर्मणोर्विहिता सेण् निष्ठा वा किन्न स्यात्। द्युतितम्, द्योतितम्। मुदितं, मोदितं साधुना। प्रद्युतितः, प्रद्योतितः। प्रमुदितः, प्रमोदितस्साधुः। उदुपधात्किम्? किटितम्, खिटितम्। भावेत्यादि किम्? रुचितङ्कार्षापणम्। सेट् किम्? कुष्टम्। "उदुपधाच्छपः" इति भाष्यम्। शब्विकरणेभ्य एवेष्यत इत्यर्थः। नेह—"गुधपरिवेष्टने" (दि०प०११२०) दिवादिः। गुधितम्।

पूङः क्त्वा च [अष्टा०सू०१-२-२२]। पूङः परे सेट्क्त्वानिष्ठे कितौ न स्तः। नित्योयं योगः विभाषयोर्मध्ये पाठात्। पवितः, पवितवान्, पवित्वा। "क्लिशः क्त्वानिष्ठयोः" (अष्टा०सू०७-२-५०) "पूङश्च" (अष्टा०सू०७-२-५१) इतीट्। "नक्त्वासेट्" (अष्टा०सू०१-२-१८) इति सिद्धे क्त्वाग्रहणं प्रागुक्तरीत्यायोगविभागेन तत्प्रत्याख्यानार्थम्। सन्नरीत्या

त्तरार्थम्। तथा च भारद्वाजीयाः पठन्ति "नित्यमकित्त्वमिडाद्योः क्त्वाग्रहणमुत्तरार्थम्" इति। कात्यायनस्तु, इह सेडिति निवर्त्य विकल्पं चानुवर्त्य अनिट एव कित्त्वं विकल्प्य कित्त्वाभावे 'पचितः' पचित्वा' इत्यादिसिद्धौ कित्त्वपक्षे "श्र्युकः किति" (अष्टा०सू०७-४-११) इतीण्निषेधात् 'पूतः' 'पूतवान्' इत्यादिसिद्धौ सत्यां "पूङश्च" अष्टा०सू०७-२-५१) इति सूत्रं प्रत्याचख्यौ उत्तरसूत्रे वाग्रहणं च। किन्त्वस्मिन्पक्षे उत्तरत्र सेड्ग्रहणं मण्डूकप्लुत्याऽनुवर्तनीयमिति क्लेशः। पूर्वक्तं क्त्वाप्रत्याख्यानं त्विदानीं न सङ्गच्छते "मृडमृद" (अष्टा०सू०१-२-७) इति ज्ञापकाद्वा न क्त्वासेडित्यर्थः साधनीयः। न च स्वपिप्रच्छिग्रहणादनिट्कस्याप्यकित्त्वं स्यादिति वाच्यम् तस्य सनर्थत्वात्। अन्यथा क्त्वः कित्त्वस्या वैयर्थ्यापत्तेश्चेति दिक्। इदं त्ववधेयम्। "पूङः क्त्वाच" (अष्टा०सू०१-२-२२) इत्यत्र सानुबन्धनिर्देशः स्पष्टार्थो न तु पूञो निवृत्त्यर्थः। तत्रेटो दुर्लभत्वात्। इड्विधौ पूङ एव निर्दिष्टत्वात्। नापि यङ्लुङ्निवृत्त्यर्थः। इड्विधावनुबन्धनिर्देशेन यङ्लुकि पूङोऽपोडभावात्। यत्तु यङ्लुक्याधधातुकस्येडितीडस्त्येव। न च "श्र्युकः किति" (अष्टा०सू०७-४-११) इतीण्निषेधः। तत्रैकाच इत्यनुवर्तनात्। उक्तं हि यङ्विधौ वार्तिककृता, एकाचश्चेदुपग्रहादिति। एवं यङ्लुङ्निवृत्त्यर्थमनुबन्धोच्चारणम् इति मतम्। अस्मिन् पक्षे पोपुवितः, पोपुवितवान् इति निष्ठायां भवति क्त्वायां तु गुणे 'पोपवित्वा' इत्येव। "न क्त्वासेट्" (अष्टा०सू०१-२-१८) इति कित्त्वप्रतिषेधः। न च क्त्वाग्रहणसामर्थ्यात्तस्यापि यङ्लुकि प्रतिषेधः। तस्योत्तरार्थत्वात्। अनुबन्धनिर्देशस्य च निष्ठायां चरितार्थत्वात्। अत एव "क्त्वा च विग्रहात्' (का०वा०) इति वार्तिकं सङ्गच्छते। इह किञ्चित् श्रणो इतीति न्यायेन प्रकृतप्युपयोगे हि तद्विरुध्येत। अत एव "क्त्वाग्रहणमुत्तरार्थम्" इति भारद्वाजीयोक्तिरपि सङ्गच्छते इति दिक्।

नोपधात्थफान्ताद्वा [अष्टा०सू०१-२-२३]। निष्ठेति निवृत्तं चानुकृष्टत्वात्। नकारोपधात् थान्तात् फान्ताच्च परः सेट् क्त्वा किन्न स्याद्वा। श्रथित्वा, श्रन्थित्वा। गुफित्वा, गुम्फित्वा। नोपधात् किम्? "रिफ कत्थनादौ" (तु०प०१३०७) रेफित्वा। इह "रलो व्युपधात्' (अष्टा० सू०१-२-२६) इति विकल्पोऽपि न प्रवर्तते। नोपधग्रहणसामर्थ्यात्। ननु "तृफ तृम्फ हिं(१)सायाम्"। (तु०प०१३०८-९) अत्राद्य ऋकारोपधत्वात्

(१) हिंसायामिति चिन्त्यम्. तृप्तावित्यस्य धातुपाठदर्शनात्। हिंसायामिति तु तुफ तुम्फ धात्वोर्वर्ततेऽर्थ इति तावेवात्र वा बोध्यौ।

नोपधग्रहणस्य व्यावर्त्योऽस्त्विति चेत्, मैवम्, अर्फित्वा, तृफित्वा, तृम्फित्वा, इति त्रैशब्द्यस्य नोपधग्रहणसत्त्वासत्त्वयोरविशिष्टत्वात्। सति हि तस्मिन् "न क्त्वा सेट्" (अष्टा०सू०१-२-१८) इति प्रवृत्ते ऋदुपधस्य 'अर्फित्वा' इति भवति। नोपधस्य त्वस्मिन् विकल्पे तृफित्वा, तृम्फित्वा, इति। असत्यपि नोपधग्रहणे सर्वत्र प्रकृतविकल्पप्रवृत्तौ सत्यां तदेव रूपत्रयम्।

वञ्चिलुञ्च्यृतश्च [अष्टा०सू०१-२-२४]। एभ्यः सेट् क्त्वा न कित् स्याद्वा। "वञ्चु गतौ" (भ्वा०प०१८९) भ्वादिः। 'वञ्चु प्रलम्भने' (चु०आ०१७०४) चुरादिः सोऽपि गृह्यते चुरादीनामनित्यण्यन्तत्वात्। वचित्वा, वञ्चित्वा। "उदितो वा" (अष्टा०सू०७-२-५६) इति वेट्। इडभावे तु कित्त्वमस्त्येव। वक्त्वा। "लुञ्च अपनयने" (भ्वा०प०१८७)। लुचित्वा, लुञ्चित्वा। "ऋतेरीयङ्" [अष्टा०सू०३-१-२९] आर्धधातुके विकल्पितः। तदभावे ऋतित्वा, अर्तित्वा। सूत्रे उच्चारणार्थ इकारो वञ्चिलुञ्चीति न त्विक्, नलोपप्रसङ्गात् ऋदिति धातुरेव गृह्यते। न तु ऋदन्ताः पूर्वसूत्रेन्तग्रहणेनेह प्रकरणे यत्नं विना तदन्तविधिर्नेति ज्ञापितत्वात्।

तृषिमृषिकृषेः काश्यपस्य। (अष्टा०सू०१-२-२५) एभ्यः सेट् क्त्वा किद्वा स्यात्। काश्यपग्रहणं पूजार्थं, वेतिपक्षमात्। "न क्त्वा सेट्" (अष्टा०सू०१-२-१८) इति निषेधे प्राप्ते विकल्पोयम्। "तृष पिपासायाम्" (दि०प०१२२९) तृषित्वा, तर्षित्वा। "मृष तितिक्षायाम्" (दि०उ०११६४) मृषित्वा, मर्षित्वा। "कृश तनूकरणे" (दि०प०१२२८) कृशित्वा, कर्शित्वा। न्यासग्रन्थे तु "कृष विलेखने" (भ्वा०प०९९०) इति क्वाचित्कः प्रमादपाठः। अनिट्त्वात्।

रलो व्युपधाद्धलादेः सश्च (अष्टा०सू०१-२-२६) उश्च इश्च वी ते उपधे यस्य तस्माद्धलादेरलन्तात् परा क्त्वासनौ सेटौ वा कितौ स्तः। द्युतित्वा, द्योतित्वा, दिद्युतिषते, दिद्योतिषते। "द्युतिस्वाप्योः" (अष्टा० सू०७-४-६७) इति सम्प्रसारणम्। रलः किम्? देवित्वा, दिदेविषति। व्युपधात् किम्? वर्तित्वा, विवर्तिषते। हलादेः किम्? एषित्वा, एषिषिषति। इह नित्यमपि द्वित्वं गुणेन बाध्यते ओणेर्ऋदित्करणेन सामान्यत उपधाकार्यस्य द्वित्वात्प्राबल्यज्ञापनात्। सेट् किम्? भुक्त्वा, बुभुक्षते। आदिग्रहणं स्पष्टार्थम्। व्युपधस्य हलन्तत्वाव्यभिचारात्।

ऊकालोऽज्झ्रस्वदीर्घप्लुतः। [अष्टा०सू०१-२-२७] ह्रस्वदीर्घप्लुत इति समाहारद्वन्द्वः। सौत्रं पुंस्त्वम्। ऊ इति त्रयाणां प्रश्लेषेण निर्देशः।

तत्र न तावदन्ते मात्रिकः । "विभाषा पृष्टप्रतिवचनेहेः" (अष्टा०सू०८-२-९३) इति हेः प्लुतविधानात् । नापि मध्ये "सुपि च" [अष्टा०सू० ७-३-१०२] इति दीर्घविधानात् । द्विमात्रिकस्तु नान्ते । "ओमभ्यादाने" [अष्टा०सू०८-२-८७] इति प्लुतविधानात् परिशेषादेकमात्रद्विमात्रत्रिमात्राणां क्रमः सिद्धः । यत्तु—

"घित्वात्पूर्वम्भवेद् ह्रस्वः प्लुतोन्ते सन्धितो मतः" ।

इति मैत्रेयः । तद्भाष्यादर्शनप्रयुक्तम् । यतः व्यत्यासे एकमात्रस्य ह्रस्वत्वं त्रिमात्रस्य प्लुतत्वमित्येव दुर्लभमिति भगवतैव दूषितम् । "ईचाक्रवर्मणस्य" (अष्टा०सू०६-१-१३१) इत्यत्रेवेहापि सूत्रे केचिद् ई इति प्लुतद्योतिकां लिपिं लिखन्ति । तत्प्रामादिकं, दीर्घस्यैवौचित्यात् । तदयमर्थः—उश्च ऊश्च ऊ ३ श्च वः कालः परिच्छेदको यस्य सोऽचक्रमाद्ध्रस्वादिसंज्ञः स्यात् । संज्ञाप्रदेशः—"ह्रस्वस्य गुणः" (अष्टा०सू०७-३-१०८) हे हरे "दीर्घोऽकितः" (अष्टा०सू०७-४-८३) पापच्यते । "वाक्यस्य टेः प्लुतः" (अष्टा०सू०८-२-८२) एहि कृष्ण ३ । स्यादेतत्—उकालोऽज्झ्रस्व इति वाक्यार्थे ह्रस्वेनोकारेणाण्त्वात्सवर्णग्रहः स्यात्, मैवम्, एवं सति ह्रस्वसंज्ञां न विदध्यात्, अच्संज्ञयैव सिद्धेः । तस्मात्संज्ञारम्भसामर्थ्यान्नेह सवर्णग्रहः । महासंज्ञाया अन्वर्थत्वाच्च कालशब्दसामर्थ्याच्च । "उरन्" इत्युक्तेऽपि यथा—श्रुतेऽज्ग्रहणं व्यर्थम्, उकारस्याच्त्वाव्यभिचारात् । तेन सामर्थ्यादुसदृश इत्यर्थः । सादृश्यं च न स्थानतः, असम्भवात् । न यत्नतः, अव्यभिचारात् । परिशेषात्कालत एवेति सिद्धे कालग्रहणं गृह्यमाणेनैव परिच्छेदलाभार्थम् । "ह्रस्वनद्यापः" (अष्टा०सू०७-१-५४) इत्यादिलिङ्गाच्च । यदि हि लुमत्संज्ञानां लोपसंज्ञेव दीर्घप्लुतसंज्ञयोर्ह्रस्वसंज्ञा व्यापिका तर्हि किं नद्याब्ग्रहणेन । न च नियमार्थः सः । विध्यर्थत्वे लाघवादिति दिक् । यद्वा 'अशब्दसंज्ञा' इत्यनुवर्त्य सप्तम्या विपरीणमय्य शब्दसंज्ञायां सवर्णग्रहणं नेति व्याख्येयम् । न चैवमुदात्तादिसंज्ञाविधावच्शब्दो न सवर्णं गृह्णीयादिति वाच्यम् । "वाक्यस्य टेः प्लुत उदात्तः" (अष्टा०सू०८-२-८२) इति लिङ्गेनाशब्दसंज्ञायामित्यस्यानित्यत्वात् ।

अचश्च (अष्टा०सू०१-२-२८) । यत्र ह्रस्वो दीर्घः प्लुत इति शब्दैर्विधीयते तत्राच इति पदं पूरणीयम् । "इको गुणवृद्धी" (अष्टा०सू०१-१-३) इत्यनेन तुल्यमेतत् । न त्वलोऽन्त्यस्य शेषोपवादो वा । तेन "शमामष्टानां दीर्घः" (अष्टा०सू०७-३-७४) इत्यत्र शमादिभिरचो विशेषणात् 'शाम्यति' इत्यादि सिद्धम् । "ह्रस्वो नपुंसके" (अष्टा०सू०१-२-४७)

इत्यत्र त्वजन्तस्य प्रातिपदिकस्येति व्याख्यानात्, अलोऽन्त्यस्य ह्रस्वः। अतिरि, अतिनु। नेह-सुवाक् ब्राह्मणकुलम् । "वाक्यस्य टेः प्लुत उदात्तः" (अष्टा०सू०८-२-८२) अत्र टेरच इति व्याख्यानात्। अग्निचित्, सोमसुत् । अजित्यनुवृत्तिसामर्थ्यात्स्वसंज्ञया विधाने इति लभ्यते । नेह-द्यौः, पन्थाः, सः ।

उच्चैरुदात्तः [अष्टा०सू०१-२-२९] ताल्वादिषु भागवत्सु स्थानेषु वर्णा निष्पद्यन्ते तत्र ऊर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् । प्रदेशाः "आद्युदात्तश्च" (अष्टा०सू०३-१-३) इत्येवमादयः ।

नीचैरनुदात्तः (अष्टा०सू०१-२-३०) । स्पष्टम् । प्रदेशा "अनुदात्तौ सुप्पितौ" (अष्टा०सू०३-१-४) इत्यादयः ।

समाहारः स्वरितः [अष्टाःसू०१-२-३१]। समाहृतिः समाहारः। उदात्तत्वानुदात्तत्वयोरज्धर्मयोर्मेलनम्, तद्वान् स्वरितसंज्ञः स्यात् । सूत्रे अर्शआद्यच् ।

तस्यादित उदात्तमर्धह्रस्वम् [अष्टा०सू०१-२-३२] । अर्द्धह्रस्वशब्देनार्द्धमात्रा लक्ष्यते । प्रकृतत्वादेव सिद्धे तस्येति वचनेन दीर्घस्यापि स्वरितस्य ग्रहणात् । यद्वा-ह्रस्वग्रहणमविवक्षितम् । तेन स्वरितस्यादौ अर्द्धमात्रा अर्द्धं वा उदात्तं बोध्यम् । शिष्टं तु अनुदात्तं परिशेषात् । क्वचित्तु तस्य वाचनिकी एकश्रुतिः । तथा च बह्वृचप्रातिशाख्यम् ।

एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः ।
तस्योदात्ततरोदात्तादर्धमात्रार्द्धमेव वा ॥
अनुदात्तः परः शेषः स उदात्तश्रुतिर्न चेत् ।
उदात्तं वोच्यते किञ्चित् स्वरितं वाक्षरं परम् ॥ इति ।

पूर्वयोः उदात्तानुदात्तयोः । तस्य स्वरितस्य । अर्द्धमात्रा, उदात्तादुदात्ततरा स्वतन्त्रोदात्तादुच्चतरेत्यर्थः । अर्द्धमेव वेति द्वितीयव्याख्याभिप्रायम् । दीर्घप्लुतयोरनुरोधेनेदम् । सः शेषः । उदात्तश्रुतिः स्यात् । किमविशेषेण ? नेत्याह-नचेदिति । उदात्तस्वरितपरं विहायेत्यर्थः । अत्रायं निष्कर्षः—स्वरितो द्विधा-प्राकृतोऽप्राकृतश्च । तत्राद्यः"उदात्तादनुदात्तस्य" (अष्टा०सू०८-४-६६) इति विहितः । तच्छेषस्यैकश्रुतिर्नियता । अग्निमीळे, प्रत्यग्ने, इत्यादि । गार्ग्यादिमते तु अत्राप्यनुदात्तः शेषः । द्वितीयस्तु सूत्रान्तरैर्विहितः । तस्याप्युत्सर्गत एकश्रुतिः शेषः । व्यचक्षयत्स्वः, ते वर्धन्ते, इति यथा । उदात्तस्वरितपरत्वे तु शेषोनुदात्तः-क्व वोऽश्वाः३न्यघ्न्यस्य । उदात्तपूर्वस्याप्राकृतस्य पूर्वरूपनिष्पन्नस्य दीर्घस्याप्येवम् । न ये राः । उदात्तपूर्वस्य किम् ? पुन-

स्तेमैषाम्। अत्र विशेषमनुपदं वक्ष्यामः। पूर्वरूपनिष्पन्नस्य किम्? अस्मिन्सूत्रे एतत्। अप्राकृतदीर्घान्तरे तु, "मध्ये तु कम्पयेत्कम्पम्" (पा० शि०३०) इत्यादिवचनात् पूर्वोत्तरभागौ नीचौ मध्ये तूदात्तः। रथीश्चेति। पुनस्तेरमास्त्रे एरतत्। सर्वत्र च "समाहारः स्वरितः" (अष्टा०सू० १-२-३१) इति पाणिनीयं लक्षणं निर्बाधम्। "तस्यादितः" अष्टा०सू० १-२-३२) इति विषयविवेकस्तु प्रायो वादो विशेषे शिक्षादिभिर्बाध्यत इति दिक्। एवं स्थिते अर्धह्रस्वमित्यर्द्धमात्रोपलक्ष्यते। ह्रस्वग्रहणमतन्त्रमिति वृत्तिग्रन्थः पूर्वापरितोषेणोत्तरवाक्यमवतार्य व्याख्येयः। अर्द्धमात्रादित उदात्ता अर्द्धमात्रा तु अनुदात्ता एकश्रुतिर्वेति वृत्तिग्रन्थोऽपि विषयभेदेन व्यवस्थया बोध्यः। उभयत्रापि हरदत्तग्रन्थो मूलापर्यालोचननिबन्धन इति सुधीभिराकलनीयम्। इत आरभ्य नवसूत्री इत उत्कृष्य "उदात्तादनुदात्तस्य स्वरितः" (अष्टा०सू०८-४-६६) इत्यस्मादुत्तरत्र पाठ्येति प्राञ्चः। तत्राव्यवधानपर्यन्तं नार्थः किं तूत्तरत्वमात्रम्। "नोदात्तस्वरितोदयम्" (अष्टा०सू०८-४-६७) इत्यत्र निषेध्यलाभानुरोधेन तदुत्तरत्र "अ अ" (अष्टा०सू०८-४-६८) इत्यतः प्रागियं नवसूत्रीति फलितोर्थः। तेनाष्टमिकस्यापि स्वरितस्येदं विभागकथनम्। न्यश्ङ्गि, येऽराः। उत्तरत्राप्युत्कर्षस्य प्रयोजनं तत्तत्सूत्रे वक्ष्यामः। उत्कर्षे लिङ्गं तु "देवब्रह्मणोः" (अष्टा०सू०१-२-३८) इतिसूत्रम्। नह्युत्कर्षं विना देवब्रह्मणोः स्वरितो लभ्यते त्रिपादीस्थत्वेनासिद्धत्वात्। ततः स्वरितात्परमिदङ्काण्डमिति स्थितम्।

एकश्रुतिदूरात्संबुद्धौ (अष्टा०सू०१-२-३३)। सम्बुद्धिःसम्बोधनम् अन्तर्भावितण्यर्थाद् बुधेः क्तिन्। दूरत्वं च प्राकृतप्रयत्नाधिकयत्नसापेक्षोच्चारणवत्त्वम्। दूरादनुष्ठेयतया बोधनायां करणीभूतं वाक्यमेकश्रुतिः स्यात् आगच्छ भो माणवक देवदत्ता ३। स्वराणामविभागेनावस्थानमेकश्रुतिः। अन्त्यस्य तु "वाक्यस्य टेः" (अष्टा०सू०८-२-८२) इति प्लुतेनापवादत्वादेकश्रुतिर्बाध्यते। एकश्रुतिप्लुताभ्यामवयवभेदेन वाक्ये समुच्चिताभ्यां दूरात्सम्बोधना द्योत्यते। दूरात्किम्?। त्रैस्वर्यमेव। तत्र आङुदात्तः "उपसर्गाश्चाभिवर्जम्" (फि०सू०८१) इति फिट्सूत्रात्। गच्छेति तिङ्निघातः। भोशब्दो निपातत्वादाद्युदात्तः शेषयोरामन्त्रितनिघातः। "एकवचनं सम्बुद्धिः" (अष्टा०सू०२-३-४९) इति कृत्रिमा सम्बुद्धिर्नेह गृह्यते। दूरादित्यपादानकारकान्वयाय क्रियाया एवाकाङ्क्षितत्वात्। तेन 'आगच्छत ब्राह्मणाः' इत्यादावपि भवति।

यज्ञकर्मण्यजपन्यूङ्खसामसु। (अष्टा०सू०१-२-३४) यज्ञक्रियायां मंत्र एकश्रुतिः स्यात् जपादीन्वर्जयित्वा।

अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वतोम्।

यज्ञकर्मणीत्युक्तेः स्वाध्यायकाले त्रैस्वर्यमेव। अजपेत्यादि किम्? ममाग्नेवर्चो विहवेष्वस्तु। जपो नाम उपांशुप्रयोगो यथा जले निमग्नस्येत्याहुः। युक्तं चैतत्। "जप मानसे च" (भ्वा०प०३९७) इति धातोः "व्यधजपोरनुपसर्गे" (अष्टा०सू०३-३-६१) इत्यपि जपशब्दनिष्पत्तेः। रूढश्चायमकरणमन्त्रेषु यत्र जपतीति कल्पसूत्रकृतां व्यवहारः। अत एव याजुषत्वादुपांशुप्रयुज्यमानानामपि "इषेत्वा" इत्यादीनां जपत्वाभावादेकश्रुतिर्भवत्येव। शाखाछेदनादिकं प्रति तेषां करणत्वात्। अकरणीभूतो मन्त्र इत्यन्ये। न्यूङ्खानाम षोडश ओकाराः तेषु प्रथमसप्तमत्रयोदशास्त्रय उदात्ताः त्रिमात्राश्च। इतरे त्रयोदशानुदात्ता अर्धोकाराः। एतच्चाश्वलायनेन "चतुर्थेऽहनि" (ऋ०ब्रा०) इति खण्डे स्फुटीकृतम्। वृत्तौ तु षडोङ्कारा इति प्रायिकः पाठः तत्र षट्त्वे मान्तरत्वे च मूलान्तरं मृग्यम्। गीतिषु सामाख्येति जैमिनिः। एविश्वं समत्रिणं दह। विश्वमत्रिणं पाप्मानं सन्दहेति सम्बन्धः। एशब्दो गीतिपूरणः। निपात इत्यन्ये।

उच्चैस्तरां वा वषट्कारः (अष्टा०सू०१-२-३५)। यज्ञकर्मणि वषट्कार उच्चैस्तरां वा स्यादेकश्रुतिर्वा। वषट्शब्देनात्र वौषट्शब्दो लक्ष्यते। तुल्यार्थत्वात्। द्वावपि हि देवतासम्प्रदानस्य दानस्य द्योतकौ। वौषडित्येव तु नोक्तम्। प्रतिपत्तिलाघवेऽपि मात्रागौरवात्। कारग्रहणं ज्ञापकं समुदायादपि कारप्रत्ययो भवतीति तेन एवकार इत्यादि सिद्धम्। उच्चैःशब्दोऽधिकरणप्रधानोऽपि तद्विशिष्टभवनक्रियायां वर्त्तते। तेन क्रियाप्रकर्षादामुप्रत्ययः। उदात्ततरो भवतीति फलितोर्थः। ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः" (अष्टा०सू०८-२-९१) इति सूत्रेण वौषट्शब्दस्यादेः प्लुत उदात्तो विहितस्तदपेक्षया अयमुदात्ततरोन्त्यस्य विधीयते। द्वयोरप्ययमुदात्ततर इत्येके। तदा याज्यान्तापेक्षः प्रकर्षः। अन्ये तु स्वार्थिकस्तरबित्याहुः। तत्रोदात्तमात्रं प्रथमस्य सिद्धं द्वितीयस्यानेन विधीयते। अत्र प्रकर्षाविवक्षापक्ष एव प्रबलः। वषट्कारोन्त्यः। "सर्वत्रोच्चैस्तराम्बलीयान् याज्यायाः" इति सूत्रितत्वात्। सोमस्याग्ने विही वौषट्।

विभाषा छन्दसि (अष्टा०सू०१-२-३६)। छन्दसि एकश्रुतिर्वा स्यात्। पक्षे त्रैस्वर्यम्। सम्प्रदायाद्व्यवस्थितो विकल्पस्तेन बह्वृचानां स्वाध्यायकाले संहितायान्त्रैस्वर्यमेव। ब्राह्मणे त्वेकश्रुतिः। शाखान्तरेष्वपि यथासम्प्रदायं व्यवस्था। अत्र तन्त्रावृत्त्यादिना अछन्दसीति नञ्प्रश्लेषाद्भाषायामपि ऐच्छिको विकल्पो बोध्यः। तथा च "दाण्डिनायन" (अष्टा०सू०

६-४-१७४) आदिसूत्रे भाष्यम्-"एकश्रुतिर्हि स्वरसर्वनामेत्यादि"। अत एवाभियुक्तानां च विरुद्धस्वरकतत्पुरुषबहुव्रीह्याद्याश्रयणेन श्लिष्टकाव्यादिनिर्माणं सङ्गच्छते। "अलं बुसानां यात" इति "श्वेतो धावति" इति च द्व्यर्थवाक्यम् इति पस्पशान्ते भाष्यमपि। काव्यप्रकाशेऽपि वेद इव लोके स्वरो न विशेषाध्यवसायहेतुरिति। किमर्थं तर्हि "ञ्नित्युपोत्तमम्" (अष्टा० सू०६-१-१८०) "विभाषा भाषायाम्" (अष्टा०सू०६-१-१८१) इति सूत्रमिति चेत्, त्रैस्वर्येण प्रक्रमे पाक्षिकानुदात्तलाभायेति गृहाण। वेति प्रकृते विभाषाग्रहणं कुर्वन् सूत्रकारोऽपि तन्त्रादिकमभिप्रैति। यत्तु वृत्तिकृन्मतं विभाषाग्रहणं "यज्ञकर्मणि" (अष्टा०सू०१-२-३४) इत्यस्य निवृत्त्यर्थमिति, तच्चिन्त्यम्। "छन्दसि" इत्युक्तेऽपि तन्निवृत्तिसिद्धेः। अन्यथा पूर्वसूत्रस्य निर्विषयत्वापत्तेः। न च जपादिषु सावकाशस्य परस्य पूर्वोऽपवाद इति वाच्यम्। एवं हि सति परत्रैव जपादिग्रहणं कुर्यात् किं नञा किञ्च छन्दोग्रहणेन। एतेन ऊहितानामच्छन्दस्त्वात्तत्र सावकाशस्य मन्त्रेषु परेण बाधः स्यादिति हरदत्तोक्तं प्रत्युक्तम्। सिद्धान्तेऽपि अनूहितेषु परत्वादस्य प्राप्तिमाशङ्क्य यज्ञकर्मणीति कर्मग्रहणसामर्थ्यात्पूर्वस्यैव प्रवृत्तिरिति स्वोक्तिविरोधात्। यदपि हरदत्तेनोक्तम्, जपादिपर्युदासेन मन्त्राणामेव ग्रहणमिति पक्षे विभाषाग्रहणं व्यर्थं स्यादिति। तदपि इन्द्रशत्रुप्रस्तावे दूषितमस्माभिः। यदपीह वृत्तिकृता 'अग्निमीळे' इत्याद्यप्येकश्रुतावुदाहृतं तत्सकलाध्यापकसम्प्रदायविरुद्धम्। छन्दोग्रहणवैयर्थ्यापादकञ्च। छन्दसि व्यवस्थितोऽन्यत्रैच्छिक इति विकल्पयोर्वैषम्यं सूचयितुं हि तत्। न च लोके विकल्पस्य वृत्तिकृतानुक्तत्वादसाम्प्रदायिकत्वं वाच्यम्। भाष्यादिसम्मतेरुक्तत्वात् "श्वेतः" इत्यादेर्वृत्तिकृतापि तत्र तत्रोदाहृतत्वाच्च। इत इत्यस्य हि "उडिदम्" (अष्टा०सू० ६-१-१७१) इत्यन्तोदात्तता 'श्वेतः' इति तु एकोदात्तमिति कथं स्वरानुसरणे तन्त्रं स्यादिति दिक्।

न सुब्रह्मण्यायां स्वरितस्य तूदात्तः (अष्टा०सू०१-२-३७)। सुब्रह्मण्याख्ये निगदे "यज्ञकर्मणि" (अष्टा०सू०१-२-३४) इति 'विभाषा छन्दसि' (अष्टा०सू०१-२-३६) इति च प्राप्ता एकश्रुतिर्न स्यात्स्वरितस्योदात्तश्च स्यात्। नितराङ्गद्यत इति निगदः। परप्रत्यायनार्थमुच्चैः पठ्यमानः पादबन्धरहितो यजुर्मन्त्रविशेषः। अपादबन्धे हि गदिर्वर्त्तते यथा गद्यमिति "नौगदनद" (अष्टा०सू०३-३-६४) इति कर्मण्यप्। सुब्रह्मण्याशब्दो परित्यक्तस्वलिङ्ग एव तद्वति निगदे निरूढः। "सुब्रह्मण्योम् ३ इन्द्रागच्छ हरिव आगच्छ मेधातिथेमेर्ष वृषणश्वस्य मेने गौरावस्क-

न्द्रिमहल्यायै जार कौशिक ब्राह्मण गौतमब्रुवाण श्वः सुत्यामागच्छ मघवन् सुब्रह्मणि साधुरिति यत् । तित्वात् स्वरितः तस्य टापा सहैकादेशः स्वरितानुदात्तयोरान्तर्यात्स्वरितः । ततो निपातेन ओंशब्देन "ओमाङोश्च" (अष्टा०सू०६-१-९५) इत्युदात्तस्वरितयोरेकादेशः स्वरित एव । "एकादेश उदात्तेनोदात्तः" (अष्टा०सू०८-२-५) इत्युदात्तविधिस्तु नेह प्रवर्त्तते अनुदात्तस्येत्यनुवृत्तेः । ततः "स्वरितस्य तूदात्तः" (अष्टा०सू०१-२-३७) इति प्रकृतसूत्रेणैवोदात्तः इति वृत्तिकारकैयटहरदत्तादयः । वस्तुतस्तु नेदं युक्तम् । "एकादेश उदात्तेन" (अष्टा०सू०८-२-५) इत्यत्रानुदात्तानुवृत्तौ प्रमाणाभावात् । 'कावरम्मरुतः' इत्यत्रोदात्तपाठाच्च । अत एव प्रातिशाख्ये "उदात्तवत्येकीभावे उदात्तं सन्ध्यमक्षरमनुदात्तोदये पुनः स्वरितं स्वरितोपधे" इत्युक्तम् । इह हि पूर्वार्द्धे अनुदात्तग्रहणमकुर्वत उत्तरत्र च कुर्वतः पुनःशब्देन पूर्वान्वयभ्रमं वारयतः स्पष्ट एवोक्त आशयः । यत्तु "तस्यादित" (अष्टा०सू०१-२-३२) इति सूत्रे "स्वरितोदात्तार्थञ्च" (का०वा०) इति वार्त्तिके "यः सिद्धः स्वरितः सुब्रह्मण्योम्" इति भाष्यम्, तत्प्रौढिवादमात्रं निष्कर्षे तु "देवब्रह्मणोः" (अष्टा०सू०१-२-३८) इतिवत् "स्वरितस्य तूदात्त" (अष्टा०सू०१-२-३७) इत्यपि नवसूत्र्युत्कर्षज्ञापकमेवेत्यवधेयम् । 'इन्द्र' इत्यामन्त्रितमाद्युदात्तम् । आष्टमिको निघातस्तु भिन्नवाक्यत्वान्न भवति । द्वितीयो वर्णोऽनुदात्तः । "उदात्तादनुदात्तस्य स्वरितः" (अष्टा०सू०८-४-६६) तस्यानेनोदात्तः । न चास्मिन् कर्त्तव्ये स्वरितस्यासिद्धत्वम्, "एतत्काण्डमुत्कृष्यते" इत्युक्तत्वात् । अत एवास्मिन्नुदात्ते कृते शेषनिघातोपि न । यथोद्देशपक्षेप्यनुदात्तपरिभाषायां कर्तव्यायामसिद्धत्वेन वर्ज्यमानाभावात् । तेन द्वावप्युदात्तौ । आङुदात्तः ततः परस्य "उदात्तादनुदात्तस्य स्वरितः" (अष्टा०सू०८-४-६६) इति स्वरितस्यानेनोदात्तः । छकाराकारोऽनुदात्तः । न च तस्य "उदात्तादनुदात्तस्य" (अष्टा०सू०८-४-६६) इति स्वरितः शङ्क्यः । प्रकरणोत्कर्षेणास्यासिद्धत्वात् । 'हरिव आगच्छ' इत्यत्रोक्तप्रक्रियया चत्वार उदात्ताः । वकारच्छकारावनुदात्तौ । मेधातिथेरिति षष्ठ्यन्तस्य पराङ्गवद्भावः । आमन्त्रिताद्युदात्तः । धाशब्दस्य "उदात्तात्" (अष्टा०सू०८-४-६६) इति स्वरितत्वे ऽनेनोदात्तः । ततश्चत्वारोऽनुदात्ताः । वृषेति पूर्ववद् द्वावुदात्तौ पञ्चानुदात्ताः । "इस्याधीवतम्" (ऋ०वे०) इति "अददा अर्भाम्" (ऋ०वे०) इति च ऋङ्मन्त्रावत्रानुसन्धेयौ । तेन पराङ्गवद्भावे उपजीव्यं सामर्थ्यं स्फुटीभवति । 'गौरा' इत्यत्र गौरवदवस्कन्दतीति विग्रहः । "सरो गौरो

यथा पिब" इति मन्त्रवर्णात् । पूर्ववद् द्वावुदात्तौ ततस्त्रयोनुदात्ताः। अहेत्युदात्तौ। चत्वारोऽनुदात्ताः । कौशीत्युदात्तौ । चत्वारोऽनुदात्ताः। गौतेत्युदात्तौ। चत्वारोऽनुदात्ताः । श्व इत्युदात्तम् । सुत्यामित्यन्तोदात्तम्। "संज्ञायां समज" (अष्टा०सू०३-३-९९) इति क्यपो विधाने उदात्त इत्यनुवृत्तेः। आगेति द्वावुदात्तौ चत्वारोऽनुदात्ताः ।

अत्र वार्त्तिकानि—

असावित्यन्तः ( का०वा० ) । तस्मिन्नेव निगदे प्रथमान्तस्यान्त उदात्तः स्यात् । गार्ग्यो यजते । ञित्स्वरेण प्राप्त आद्युदात्तोऽनेन बाध्यते।

अमुष्येत्यन्तः (का०वा०) । षष्ठ्यन्तस्यापि प्राग्वत् । दाक्षेः पिता यजते।

स्यान्तस्योपोत्तमं च (का०वा०) । चादन्तः । तेन द्वावुदात्तौ । गार्ग्यस्य पिता यजते।

वा नामधेयस्य (का०वा०) । स्यान्तस्य नामधेयस्य उपोत्तममुदात्तं वा स्यात्। देवदत्तस्य पिता यजते।

देवब्रह्मणोरनुदात्तः [अष्टा०सू०१-२-३८]। "स्वरितस्य तूदात्तः" (अष्टा०सू०१-२-३७) इति पूर्वसूत्रशेषस्यायमपवादः । देवब्रह्मणोः स्वरितस्यानुदात्तः स्यात् सुब्रह्मण्यायाम् । देवा ब्रह्माण आगच्छत । द्वयोरप्यामन्त्रितायुदात्तत्वे शेषनिघाते च "उदात्तादनुदात्तस्य स्वरितः" (अष्टा० सू०८-४-६६) तस्यानेनानुदात्तः । द्वितीयस्य आष्टमिको निघातस्तु न भवति "आमन्त्रितं पूर्वमविद्यमानवत्" [अष्टा०सू०८-१-७२] इति पदात्परत्वाभावात् । ततः प्राचीनपदस्य तु भिन्नवाक्यस्थत्वात्। ये तु देवा ब्रह्माण इति सामानाधिकरण्येन व्याचक्षते । तन्मते "विभाषितं विशेषवचने" [अष्टा०सू०८-१-७४] बहुवचनमिति पक्षे विद्यमानतया द्वितीयस्य निघातः। प्रकृतसूत्रेण स्वरितनिघातस्तु वकारस्यैव । तथा च भाष्यम्-"देवब्रह्मणोरनुदात्तत्वमेके इच्छन्ति। देवा ब्रह्माणः इति द्विः पाठः। उदात्तौ द्वावेको वेति विकल्पाभिप्रायेण। तत्र द्वितीयपक्षे प्रकृतसूत्रे ब्रह्मग्रहणं न कर्तव्यम्" ।

स्वरितात्संहितायामनुदात्तानाम् [अष्टा०सू०१-२-३९] । स्वरितात्परेषामनुदात्तानामेकश्रुतिः स्यात्संहितायाम् । इमं मे गङ्गे यमुने सरस्वति । अनुदात्तानामिति जातौ बहुवचनम् । तेनैकस्य द्वयोश्च भवत्येव । संहिताग्रहणं ज्ञापकम्-"अन्यत्र पञ्चमीनिर्देशे कालो न व्यवधायकः" इति तेन "तिङ्ङतिङः" (अष्टा०सू०८-१-२८) इति निघातः पदपाठेऽपि

भवति । अग्निमीळे, पुरोहितमित्यादौ त्ववग्रहेऽपि भवत्येकश्रुतिः । यथा सन्धीयमानानामित्यतिदेशात् । इति शब्दात्परस्य तु "पुरुहूत इति पुरुहूतः" इत्यादौ न भवति परिग्रहे त्वनार्षान्तादिति प्रातिशाख्ये विशेषवचनात् । एवमन्वेतवा इत्यादावपि । "पद्यार्धैस्तु द्व्युदात्तानाम्" [ऋ०प्रा०] इतिनिषेधादिति दिक् ।

उदात्तस्वरितपरस्य सन्नतरः (अष्टा०सू०१-२-४०) । उदात्तस्वरितौ परौ यस्मात्तथाभूतस्यानुदात्तस्य अनुदात्ततरः स्यात् । अग्निम् । कन्या । स्यादेतत् । "इमं मे" इति मन्त्रे शुतुद्रिशब्दस्य पादादित्वेन निघाताभावादाद्युत्ततया तस्मिन्परे सरस्वतीतीकारस्य सन्नतर इष्यते एकश्रुतिरेव तु प्राप्नोति। नवसूत्र्या उत्कर्षेणासिद्धतया सन्नतरायोगात् । उक्तं हि-"पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य" इति । सत्यम् । "नमुने" (अष्टा०सू०८-२-३) इत्यत्र नेति योगविभागान्न दोषः । 'देवदत्तन्यङ्' इत्यत्र तु "न्यधिच" (अष्टा०सू०६-२-५३) इति पूर्वपदप्रकृतिस्वरे "उदात्तस्वरितयोर्यणः" (अष्टा०सू०८-२-४) इत्यञ्चत्यकारस्य स्वरितः पूर्वस्य सन्नतरं प्रति नासिद्धः । प्रकरणे उत्कर्षात् ।

स्वरसूत्रप्रसङ्गात्फिट्सूत्राणि व्याख्यायन्ते—

फिषोन्त उदात्तः (फि०सू०१) । फिष् इति प्रातिपदिकस्य प्राचां संज्ञा । फिषोन्त उदात्तः स्यात् । उच्चैः ।

पाटलापालङ्काम्बासागरार्थानाम् (फि०सू०२) । एतदर्थानामन्त उदात्तः स्यात् । पाटला । "लघावन्ते" (फि०सू०४२) इति प्राप्ते । अपालङ्कः वृक्षविशेषः । इहापि प्राग्वत् । अम्बार्थः-माता । "उनर्वन्नन्तानाम्" (फि०सू०३२) इत्याद्युदात्ते प्राप्ते । सागरः-समुद्रः, "लघावन्ते" (फि०सू०४२) इति प्राप्ते ।

गेहार्थानामस्त्रियाम् (फि०सू०३) । गेहं-गृहम् । "नब्विषयस्य" फि० सू०२६) इति प्राप्ते । अस्त्रियां किम् ? शाला । अत एव पर्युदासाज्ज्ञापकाच्छालाशब्द आद्युदात्तः ।

गुदस्य च (फि०सू०४) । अन्त उदात्तः स्यान्न तु स्त्रियाम् । गुदम् । अस्त्रियां किम् ? आन्त्रेभ्यस्ते गुदाभ्यः । "स्वाङ्गशिटामदन्तानाम्" (फि० सू०२९) इत्यन्तरङ्गमाद्युदात्तत्वम् । ततष्टाप् ।

ध्यपूर्वस्य स्त्रीविषयस्य (फि०सू०५) । नित्यस्त्रीलिङ्गस्य धकारयकारपूर्वो योऽन्त्योऽच् स उदात्तः । अन्तर्धा । "स्त्रीविषयवर्णनाम्नाम्" इति प्राप्ते । छाया, माया, जाया । "यान्तस्यान्त्यात्पूर्वम्" ( फि०सू०६२ ) इत्याद्युदात्तत्वे प्राप्ते । स्त्रीति किम् ? बाह्यम् । "बहिषष्टिलोपो यञ्

च" (का०वा०) इति यञन्तत्वादाद्युदात्तत्वम्। विषयग्रहणं किम्? इभ्या क्षत्रिया। "यतोऽनावः" (अष्टा०सू०६-१-२१३) इत्याद्युदात्त इभ्यशब्दः। क्षत्रियशब्दस्तु "यान्तस्यान्त्यात्पूर्वम्" (फि०सू०६२) इति मध्योदात्तः।

खान्तस्याश्मादेः (फि०सू०६)। नखम्, उखा, सुखम्, दुःखम्। नखस्य "स्वाङ्गशिटाम्" (फि०सू०२९) इत्याद्युदात्ते प्राप्ते। उखानाम यवाग्वादि पाकार्थं याज्ञिकैर्निर्मितो भाण्डविशेषः। तस्य कृत्रिमत्वात् "खय्युवर्णं कृत्रिमाख्याचेत्" (फि०सू०३१) इत्युवर्णस्योदात्तत्वे प्राप्ते। सुखदुःखयोः "नब्विषयस्य" (फि०सू०२६) इति प्राप्ते। अश्मादेः किम्? शिखा, मुखम्। मुखस्य "स्वाङ्गशिटाम्" (फि०सू०२९) इति "नब्विषयस्य" (फि०सू०२६) इति वा आद्युदात्तत्वं शिखायास्तु दीर्घान्ततया "स्वाङ्गशिटाम्" (फि०सू०२९) इत्यस्याप्राप्तावपि अश्मादेरिति पर्युदासेनाद्युदात्तत्वं ज्ञाप्यते। तथा च (१) "शीङः खो निद्‍घ्रस्वश्च" इति उणादिषु नित्त्वमुक्तम्। वस्तुतस्तु तदेव शरणम्। "शङ्खो निधौ ललाटास्थ्नि" (अ०को०३-३-१८) इति कोशादस्थिवाचकस्य "स्वाङ्गशिटाम्" (फि०सू०२९) इत्याद्युदात्तस्याव्यावृत्त्या चरितार्थस्याश्मादेरित्यस्य ज्ञापकत्वायोगात्।

हिष्ठवत्सरतिशत्थान्तानाम् (फि०सू०७)। एषामन्त उदात्तः स्यात्। अतिशयेन बहुलो बंहिष्ठः। नित्त्वा(२)दाद्युदात्ते प्राप्ते। बंहिष्ठैरश्वैः सुवृता रथेन, यद्बंहिष्ठं नातिविदे इत्यादौ व्यत्ययादाद्युदात्तः। संवत्सरः। अव्ययपूर्वपदप्रकृतिस्वरो बाध्यते। सप्ततिः। अशीतिः। "लघावन्ते" (फि०सू०४२) इति प्राप्ते। चत्वारिंशत्। इहापि प्राग्वत्। अभ्यूर्णर्वानाप्रभृथस्यायोः। अव्ययपूर्वपदप्रकृतिस्वरोऽत्र बाध्यते।

दक्षिणस्य साधौ (फि०सू०८)। अन्त उदात्तः स्यात्। साधौ किम्? व्यवस्थायां सर्वनामतया "स्वाङ्गशिटाम्" (फि०सू०२९) इत्याद्युदात्तो यथा स्यात्। अर्थान्तरे तु "लघावन्ते" (फि०सू०४२) इति गुरुरुदात्तः। "दक्षिणः सरलोदारपरच्छन्दानुवर्त्तिषु" इति कोशः।

स्वाङ्गाख्यायामादिर्वा (फि०सू०९)। इह दक्षिणस्याद्यन्तौ पर्यायेणोदात्तौ स्तः। दक्षिणो बाहुः। आख्याग्रहणं किम्? प्रत्यङ्मुखमासीनस्य वामपाणिर्दक्षिणो भवति।

---

(१) ननु बहुषूणादिपुस्तकेषु "शीङो ह्रस्वश्च" (उ०सू०७१२) इत्येव पाठः "शीङः खो निद्‍घ्रस्वश्च" इति नास्ति इत्यरुचेराह—वस्तुतस्त्विति।

(२) "ञ्नित्यादिर्नित्यम्" (अष्टा०सू०६-१-१९७) इत्यनेनेत्यर्थः।

छन्दसि च (फि०सू०१०]। अस्वाङ्गार्थमिदम्। दक्षिणः। इह पर्यायेणाद्यन्तावुदात्तौ।

कृष्णस्यामृगाख्या चेत् [फि०सू०११]। "वर्णानान्तण" (फि०सू०३३) इत्याद्युदात्ते प्राप्तेऽन्तोदात्तो विधीयते। कृष्णानां व्रीहीणाम्। कृष्णो नोनाव वृषभः। मृगाख्यायान्तु। कृष्णो रात्र्यै।

वा नामधेयस्य [फि०सू०१२]। कृष्णस्येत्येव। अयं वा कृष्णो अश्विना। कृष्ण ऋषिः।

शुक्लगौरयोरादिः [फि०सू०१३]। नित्यमुदात्तः स्यादित्येके। वेत्यनुवर्त्तत इति तु युक्तम्। "सरो गौरो यथा पिब" इत्यत्रान्तोदात्तदर्शनात्।

अङ्गुष्ठोदकबकवशानां छन्दस्यन्तः [फि०सू०१४]। अङ्गुष्ठस्य "स्वाङ्गानामकुर्वादीनाम्" (फिसू०५२) इति द्वितीयस्योदात्तत्वे प्राप्तेऽन्तोदात्तार्थ आरम्भः। वशाग्रहणं नियमार्थम्। छन्दस्येवेति। तेन लोके आद्युदात्ततेत्याहुः।

पृष्ठस्य च [फि०सू०१५]। छन्दस्यन्त उदात्तः स्यात् वा भाषायाम्। भाषामात्रविषयं सूत्रमिदं "प्रागेकादशभ्योऽछन्दसि" (अष्टा०सू०५-३-४९) "झल्युपोत्तमम्" (अष्टा०सू०६-१-१८०) "विभाषा भाषायाम्" (अष्टा०सू०६-१-१८१) इत्यादिवत्। पृष्ठम्।

अर्जुनस्य तृणाख्या चेत् [फि०सू०१६]। "उनर्वन्नन्तानाम्" (फि० सू०३२) इत्याद्युदात्तस्यापवादः।

अर्यस्य स्वाम्याख्या चेत् [फि०सू०१७]। "यान्तस्यान्त्यात्पूर्वम्" (फि०सू०६२) इति "यतोऽनावः" (अष्टा०सू०६-१-२१३) इति वाद्युदात्ते प्राप्ते वचनम्।

आशाया अदिगाख्या चेत् [फि०सू०१८]। दिगाख्याव्यावृत्त्यर्थमिदम्। अत एव ज्ञापकाद्दिक्पर्यायस्याद्युदात्तता। इन्द्र आशाभ्यस्परि।

नक्षत्राणामाब्विषयाणाम् [फि०सू०१९]। अन्त उदात्तः स्यात्। आश्लेषानुराधादीनां "लघावन्ते" (फि०सू०४२) इति प्राप्ते ज्येष्ठाश्रविष्ठाधनिष्ठानां इष्ठन्नन्तत्वेनाद्युदात्ते प्राप्ते वचनम्।

न कुपूर्वस्य कृत्तिकाख्या चेत् [फि०सू०२०]। अन्त उदात्तो न। कृत्तिका नक्षत्रम्। केचित्तु कुपूर्वो य आप् तद्विषयाणामिति व्याख्याय 'आर्यिका' 'बहुलिका' इत्यत्राप्यन्तोदात्तो नेत्याहुः।

घृतादीनाञ्च [फि०सू०२१]। अन्त उदात्तः। घृतं मिमिक्षे। आकृतिगणोयम्।

ज्येष्ठकनिष्ठयोर्वयसि [फि०सू०२२]। अन्त उदात्तः स्यात्। ज्येष्ठ आह चमसा। कनिष्ठ आह चतुरः। वयसि किम्? ज्येष्ठः, श्रेष्ठः।

कनिष्ठोऽलिपिष्ठः। इह नित्त्वादाद्युदात्त एव।

बिल्वतिष्ययोः स्वरितो वा [फि०सू०२३]। अनयोरन्तः स्वरितो वा स्यात्। पक्षे उदात्तः।

॥ इति फिट्सूत्रेषु प्रथमः पादः ॥

अथादिः प्राक् शकटेः [फि०सू०२४]। अधिकारोऽयम्। "शकटिशकट्योः" (फि०सू०६०) इति यावत्।

ह्रस्वान्तस्य स्त्रीविषयस्य [फि०सू०२५]। आदिरुदात्तः स्यात्। बलिः, तनुः।

नब्विषयस्यानिसन्तस्य [फि०सू०२६]। वनेन वा पः। इसन्तस्य तु सापः। नप् नपुंसकम्।

तृणधान्यानाञ्च द्व्यषाम् [फि०सू०२७]। द्व्यचामित्यर्थः। कुशाः, काशाः, माषाः, तिलाः। बह्वृचान्तु गोधूमाः।

त्रः सङ्ख्यायाः (फि०सू०२८)। पञ्च, चतस्रः।

स्वाङ्गशिटामदन्तानाम् (फि०सू०२९)। शिट् सर्वनाम। कर्णः, ओष्ठः, विश्वः।

प्राणिनां कुपूर्वम् (फि०सू०३०)। कवर्गात् पूर्वमादिरुदात्तः। काकः, वृकः। शुकेषु मे। प्राणिनां किम्? उदकम्।

खय्युवर्णं कृत्रिमाख्या चेत् (फि०सू०३१)। खयि परे पूर्वमादि उवर्णमुदात्तं स्यात्। कन्दुकः।

उनर्वन्नन्तानाम् (फि०सू०३२)। उन-वरुणं वोरिशादसम्। स्ववसारं त्वा कृणवे। वन्-पीवानं मेषम्।

वर्णानान्तणतिनितान्तानाम् (फि०सू०३३)। आदिरुदात्तः। एतः, हरिणः, शितिः, पृश्निः, हरित्।

ह्रस्वान्तस्य ह्रस्वमनृत्ताच्छील्ये (फि०सू०३४)। ऋद्वर्जं ह्रस्वान्तस्यादिभूतं ह्रस्वमुदात्तं स्यात्। मुनिः।

अक्षस्यादेवनस्य (फि०सू०३५)। आदिरुदात्तः। तस्य नाक्षः। देवने तु अक्षैर्मा दीव्यः।

अर्धस्यासमद्योतने (फि०सू०३६)। अर्द्धो ग्रामस्य। समेंऽशके तु अर्द्धं पिप्पल्याः।

पीतद्र्वर्थानाम् (फि०सू०३७)। आदिरुदात्तः। पीतद्रुः सरलः।

ग्रामादीनाञ्च (फि०सू०३८)। ग्रामः, सोमः, यामः।

लुबन्तस्योपमेयनामधेयस्य (फि०सू०३९)। स्फिगन्तस्येति पाठान्तरम्। स्फिगिति लुपः प्राचां संज्ञा। चञ्चेव चञ्चा।

न वृक्षपर्वतविशेषव्याघ्रसिंहमहिषाणाम् (फि०सू०४०)। एषामुपमेयनाम्नां नादिरुदात्तः। ताल इव तालः, मेरुरिव मेरुः, व्याघ्रः, सिंहः, महिषः।

राजविशेषस्य यमन्वा चेत् (फि०सू०४१)। यमन्वा वृद्धः। 'आङ्गः' उदाहरणम्। 'अङ्गाः' प्रत्युदाहरणम्।

लघावन्ते द्वयोश्च बह्वषो गुरुः (फि०सू०४२)। अन्ते लघौ द्वयोश्च लघ्वोः सतोः बह्वच्कस्य गुरुरुदात्तः। कल्याणः, कोलाहलः। इह गुरूणां मध्ये य आदिरित्यर्थोऽभिप्रेतः। तेन 'वृषाकपिः' इत्यत्र व्यपदेशिद्भावेनादिभूते सिद्धम्। तेन "वृषाकप्यग्नि" (अष्टा०सू०४-१-३७) इत्यादिसूत्रस्था वृत्त्यादिग्रन्था न विरुध्यन्ते। "क्रीतवत्परिमाणात्" (अष्टा०सू०४-३-१४६) इत्यादिसूत्रस्थभाष्यादिग्रन्थाश्च सङ्गच्छन्ते। नन्वेवमपि "अन्यतो ङीष्" (अष्टा०सू०४-१-४०) इति सूत्रे सारङ्गकल्माषशब्दौ "लघावन्ते" (फि०सू०४३) इत्यादिना मध्योदात्ताविति हरदत्तग्रन्थो विरुध्यत इति चेत्, सत्यम्। आदिशब्द इह नान्वेतीत्येव सारम्।

स्त्रीविषयवर्णाक्षुपूर्वाणाम् (फि०सू०४३)। एषां त्रयाणामादिरुदात्तः। स्त्रीविषयः-मल्लिका। वर्णः-श्येनी, हरिणी। अक्षुशब्दात् पूर्वोऽस्त्येषान्तेऽक्षुपूर्वाः। तरक्षुः।

शकुनीनाञ्च लघुपूर्वम् (फि०सू०४४)। पूर्वं लघूदात्तं स्यात्। कुक्कुटः तित्तिरिः।

नर्तुप्राण्याख्यायाम् [फि०सू०४५]। यथालक्षणं प्राप्तमुदात्तत्वं न। वसन्तः, कृकलासः।

धान्यानां च वृद्धक्षान्तानाम् (फि०सू०४६)। आदेरुदात्तः। कान्तः-श्यामाकाः। षान्तः-माषाः।

जनपदशब्दानामषान्तानाम् (फि०सू०४७)। केकयः।

हयादीनामसंयुक्तलान्तानामन्तः पूर्वं वा (फि०सू०४८)। हयिति हलः संज्ञा। पललम्, शललम्। हयादीनां किम्? एकलः। असंयुक्तेति किम्? मल्लः।

इगन्तानाञ्च द्व्यषाम् (फि०सू०४९)। आदिरुदात्तः। कृषिः।

॥ इति द्वितीयः पादः॥

अथ द्वितीयं प्रागीषात् (फि०सू०५०)। "ईषान्तस्य हयादेः" (फि०सू०६६) इत्यतः प्राक् द्वितीयाधिकारः।

त्र्यचां प्राङ् मकरात् (फि०सू०५१)। "मकरवरूढ" (फि०सू.५७)

इत्यतः प्राक् द्यच मित्यधिक

स्वाङ्गानामकुर्वादीनाम् ( .२)। कवर्गरेफवकारादीन्वर्जयित्वा द्यचां स्वाङ्गानां द्वितीयमु । ललाटम् । कुर्वादीनान्तु-कपोलः, रसना, वदनम् ।

मादीनाञ्च (फि०सू०५३)। द्यचां द्वितीयमुदात्तम् । मलयः, मकरः ।

शादीनां शाकानाम् (फि०सू०५४)। शीतन्या, शतपुष्पा ।

पान्तानां गुर्वादीनाम (फि०सू०५५)। पादपः, आतपः । लघ्वादीनान्तु-अनूपम । द्व्यचान्तु-नीपम ।

युतान्यण्यन्तानाम् (फि०सु०५६) । युतादित्रितयान्तानां द्वितीयमुदात्तम् । युत-अयुतम् । अनि-धमनिः । अणि-विपणिः ।

मकरवरूढपारेवतवितस्तेक्ष्वार्जिद्राक्षाकलोमाकाष्ठापेष्ठाकाशीनामादिर्वा (फि०सू०५७)। एषामादिर्द्वितीयो वोदात्तः। मकरः, वरूढ इत्यादि ।

छन्दसि च (फि०सू०५८)। अमकराद्यर्थ आरम्भः। लक्ष्यानुसारादादिर्द्वितीयं वोदात्तं ज्ञेयम् ।

कर्दमादीनाञ्च (फि०सू०५९)। आदिर्द्वितीयं वोदात्तम् । कर्दमः ।

-न्धितेजनस्य ते वा (फि०सू०६०) । आदिर्द्वितीयन्तेशब्दश्चेति येणोदात्ताः । सुगन्धितेजनाः ।

फलान्तानाम् (फि०सू०६१) आदिर्द्वितीयं वोदात्तम् । राजादन- ।

यान्तस्यान्त्यात् पूर्वम् (फि०सू०६२) । कुलायः ।

थान्तस्य च नालघुनी (फि०सू०६३)। नाशब्दो लघु च उदात्ते स्तः । सनाथा सभा ।

शिशुमारोदुंबरबलीवर्दोष्ट्रारपुरूरवसाञ्च (फि०सू०६४)। अन्त्यात् पूर्वमुदात्तं द्वितीयं वा ।

साङ्काश्यकापिल्यनासिक्यदार्वाघाटानाम् [फि०सू०६५]। द्वितीयमुदात्तं वा । साङ्काश्यमित्यादि ।

ईषान्तस्य हयादेरादिर्वा [फि०सू०६६] । हयादेः-हलादेः । हलीषा । लाङ्गलीषा ।

उशीरदाशेरकपालपलालशैवालश्यामाकशारीरशरावहृदयहिरण्यारण्यापत्यदेवराणाम (फि०सू०६७) । एषामादिरुदात्तः स्यात् ।

महिष्यषाढयोर्जायेष्टकाख्या चेत् (फि०सू०६८)। आदिरुदात्तः। महिषी जाया । अषाढा उपदधाति ।

॥ इति तृतीयः पादः ॥

शकटिशकट्योरक्षरमक्षरं पर्यायेण [फि०सू०६९]। उदात्तम्। शकटिः। शकटी।

गोष्ठजस्य ब्राह्मणनामधेयस्य [फि०सू०७०]। अक्षरमक्षरं क्रमेणोदात्तम्। गोष्ठजो ब्राह्मणः। अन्यत्र गोष्ठजः पशुः। कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः।

पारावतस्योपोत्तमवर्जम् [फि०सू०७१]। शेषं क्रमेणोदात्तम्। पारावतः।

धूम्रजानुमुञ्जकेशकालवालस्थालीपाकानामधूजलस्थानाम् [फि०सू० ७२]। एषाञ्चतुर्णां धूप्रभृतींश्चतुरो वर्जयित्वा शिष्टानि क्रमेणोदात्तानि। धूम्रजानुः, मुञ्जकेशः, कालवालः, स्थालीपाकः।

कपिकेशहरिकेशयोश्छन्दसि [फि०सू०७३]। कपिकेशः, हरिकेशः।

न्यङ्स्वरौ स्वरितौ [फि०सू०७४]। स्पष्टम्। न्यङ्ङुत्तानः। व्यचक्षयत्स्वः।

न्यर्बुदव्यल्कशयोरादिः (फि०सू०७५)। स्वरितः स्यात्।

तिल्यशिक्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः [फि०सू०७६) स्वरितः स्यात्। तिलानां भवनं क्षेत्रं तिल्यम्। "यतोऽनावः" (अष्टा० सू०६-१-२१३) इति प्राप्ते।

बिल्वभक्ष्यवीर्याणि च्छन्दसि [फि०सू०७७]। अन्तस्वरितानि।

त्वत्त्वसमसिमेत्यनुच्चानि [फि०सू०७८]। स्तरीरुत्वत्। उत त्वः पश्यन्। नभन्तामन्यके समे। सिमस्मै।

सिमस्याथर्वणेऽन्त उदात्तः [फि०सू०७९]। अथर्वण इति प्रायिकम्। तत्र दृष्टस्येत्येवंपरं वा। तेन "वासस्तनुते सिमस्मै" इत्यृग्वेदेऽपि भवत्येव।

निपाता आद्युदात्ताः (फि०सू०८०)। स्वाहा।

उपसर्गाश्चाभिवर्जम् [फि०सू०८१]।

एवादीनामन्तः [फि०सू०८२]। एवमादीनामिति पाठान्तरम्। एव, एवम्, नूनम्। सह ते पुत्र सूरिभिः सह। षष्ठस्य तृतीये "सहस्य सः" (अष्टा०सू०६-३-७८) इति प्रकरणे सहशब्द आद्युदात्त इति तु प्राञ्चः। तच्चिन्त्यम्।

वाचादीनामुभावुदात्तौ [फि०सू०८३]। उभौग्रहणं "अनुदात्तं पदमेकवर्जम्" [अष्टा०सू०६-१-१५८] इत्यस्य बाधाय।

चादयोऽनुदात्ताः [फि०सू-८४]। स्पष्टम्।

यथेति पादान्ते [फि०सू०८५]। तन्नेमिमृभवो यथा। पादान्ते किम्?

यथा नो अदितिः करत् ।

प्रकारादिद्विरुक्तौ परस्यान्त उदात्तः [फि०सू०८६] । पटुपटुः ।

शेषं सर्वमनुदात्तम् [फि०सू०८७] । शेषं नित्यादिद्विरुक्तस्य परमित्यर्थः । प्रप्रायम् । दिवे दिवे ।

॥ इति शान्तनवाचार्यप्रणीतेषु फिट्सूत्रेषु तुरीयः पादः ॥

प्रासङ्गिकं समाप्य प्रकृतमनुसरामः—

अपृक्त एकाल् प्रत्ययः (अष्टा०सू०१-२-४१) । एकाल् प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात् । संज्ञाप्रदेशा "वेरपृक्तस्य' (अष्टा०सू०६-१-६७) इत्यादयः । एकेति व्यर्थम् । 'निपात एकाच्' (अष्टा०सू १-१-१४) इत्येकग्रहणेन "वर्णग्रहणे जातिग्रहणम्" इति ज्ञापनेऽपि अल्ग्रहणसामर्थ्यादेवेह व्यक्तिपरत्वात् । किञ्च सूत्रमेवेदं व्यर्थम् । अपृक्तप्रदेशेष्वल्ग्रहणेनैव सिद्धेः । न च सुरां सुनोतीति सुरासुत् तमाचक्षाण सुरा इत्यत्र धात्ववयवस्य सस्य लोपः स्यादिति वाच्यम् । प्रत्ययाप्रत्ययपरिभाषया गतार्थत्वात् , विभक्तिसाहचर्याच्च । यथासूत्रारम्भेऽपि तिसाहचर्यात्सेरपि तिङ एव ग्रहणात् 'अभैत्सीत्' इति सिचो न भवति । "वेरपृक्तस्य" (अष्टा०सू०६-१-६७) इत्यत्र तु वकारेकारयोरन्यतरमनुनासिकमाश्रित्यापृक्तग्रहणं प्रत्याख्यास्यत एव ।

तत्पुरुषः समानाधिकरणः कर्मधारयः (अष्टा०सू०१-२-४२) । समानाधिकरणावयवस्तत्पुरुषः कर्मधारयसंज्ञः स्यात् । संज्ञाप्रदेशाः "पुंवत्कर्मधारय" (अष्टा०सू०६-३-४२) इत्यादयः । समानाधिकरणे पदे आश्रयत्वेन स्तोऽस्येति अर्शआद्यच् । यदि तु "पूर्वकालैक" (अष्टा०सू० २-१-४९) इति प्रकरणस्यान्ते कर्मधारयश्चेति कृत्वा तत्पुरुषानुवृत्त्या पर्याये लब्धे चकारात् "गतिश्च" (अष्टा०सू०१-४-६०) इत्यादाविव समुच्चयः साध्यते तदेदं सूत्रं शक्यमकर्तुम् ।

प्रथमानिर्दिष्टं समास उपसर्जनम् (अष्टा०सू०१-२-४३) । समासविधायकं शास्त्रं समासः, तादर्थ्यात् । समस्यतेऽनेनेति व्युत्पत्त्या वा । तत्र प्रथमया यन्निर्दिश्यते तदुपसर्जनं स्यात् । द्वितीया श्रितादिभिः-कृष्णश्रितः । महासंज्ञाकरणमन्वर्थसंज्ञार्थम् । लोके ह्यप्रधानमुपसर्जनमाहुः । तेन राज्ञः कुमार्या राजकुमार्या इत्यत्रोभयोः "षष्ठी" (अष्टा० सू०२-२-८) इति सूत्रे प्रथमानिर्दिष्टत्वाविशेषेऽपि राजैवोपसर्जनं न तु कुमारी । तेन कुमारीशब्दस्य न पूर्वनिपातो न वा "गोस्त्रियोः" (अष्टा० सू०१-२-४८) इति ह्रस्वः । न च राज्ञः कुमारीति प्रथमान्तेनैव विग्रह इति भ्रमितव्यम् । मूलाभावात् तथा च "तत्पुरुषे तुल्यार्थतृतीयासप्तमी"

(अष्टा०सू०६-२-२) इति सूत्रे परमे कारके परमेण कारकेणेत्यादावतिप्रसङ्गमाशङ्क्य लक्षणप्रतिपदोक्तपरिभाषाबलेन समाहितं भाष्ये। "अनेकमन्यपदार्थे" (अष्टा०सू०२-२-२४) इति सूत्रेऽपि भाष्यकैयटयोः स्पष्टमेतत्। प्रथमान्तेनैव विग्रह इति नियमो नास्तीति परिनिष्ठितविभक्त्यैव विग्रहस्योचितत्वाच्च। अत एव "पूरणगुण" (अष्टा०सू०२-२-११) इति समानाधिकरणेन षष्ठीसमासनिषेधोऽपि सङ्गच्छते। अत एव च "एकविभक्तिचापूर्वनिपाते" [अष्टा०सू०१-२-४४] इत्यस्य विषयलाभः। स्यादेतत्-उक्तरीत्या सूत्रभाष्यादिस्वरसान्न्यायाच्च द्वितीयाद्यन्ततया परिनिष्ठितस्य प्रथमान्तेन विग्रहो नास्तीत्येवोच्यताम्, तत्किमुच्यते नियमो नास्तीति? सत्यम्। अस्ति तत्राप्यालम्बनम्। तथाहि-राजकुमार्या इत्यादेः परिनिष्ठितस्यार्थप्रदर्शनपरे लौकिके विग्रहवाक्ये प्रकृतिभागमात्रं व्याख्येयं न तु समासोत्तरविभक्तिरपि। नहि षष्ठी षष्ठ्या व्याख्येया किन्त्वनुवादमात्रं तत्। तत्र प्रातिपदिकार्थमात्रव्याचिख्यासायां प्रथमया विग्रहः केन वार्यते। अत एव—

"हरीतकीं भुङ्क्ष्व राजन् मातेव हितकारिणीम्"।

इत्यादिप्रयोगाः सङ्गच्छन्ते। मातेति प्रथमान्तेन समासे बाधकाभावात्। अत एव पचतीति पाकचक्रस्तं पात्रकमित्याद्यपि सम्यगेवेति दिक्। तस्माद् द्वितीयाद्यन्तस्य परिनिष्ठितस्य प्रथमया परिनिष्ठितया वा विग्रहो न तु तदुभयभिन्नयेति निष्कर्षः। स्यादेतत्-यद्यन्वर्थसंज्ञेयं 'याचकवृन्दारकः' 'गोगर्भिणी' इत्यादिषु विशेष्यस्य पूर्वनिपातो न स्यादिति चेत्। "वृन्दारकनागकुञ्जरैः पूज्यमानम्" (अष्टा०सू०२-१-६२) "चतुष्पादो गर्भिण्या" (अष्टा०सू०२-१-७१) इत्यादौ विधिवाक्ये प्रथमानिर्दिष्टस्यानन्यार्थत्वाददोषः। तस्मात्सति सम्भवे व्यवस्थापकमन्वर्थत्वमिति स्थितम्।

एकविभक्ति चापूर्वनिपाते (अष्टा०सू०१-२-४४)। अर्थाधिकारादिह समासार्थमलौकिकं विग्रहवाक्यं समासः। तत्र विशेष्यसमर्पके पदे प्रयोगभेदादनेकविभक्तियुक्तेऽपि यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यात्पूर्वनिपातेतरस्मिन्कार्ये। अतिक्रान्तो मालामतिमालः। इहातिक्रान्तमतिक्रान्तेनेत्यादिक्रमेण सकलविभक्तियोगेपि मालाशब्दस्य द्वितीयानियमात् संज्ञायां सत्यां "गोस्त्रियोः" [अष्टा०सू०१-२-४८] इति ह्रस्वः। एवं निष्कौशाम्बिरित्यादि। एकविभक्तावषष्ठ्यन्तवचनम् [का०वा०] नेह-अर्द्धं पिप्पल्याः अर्द्धपिप्पली। नन्वेवं 'पञ्चखट्वी' न सिध्येत्। सत्यम्। अत एव संज्ञापूर्वकतया व्यवस्थितविभाषाश्रयणेन वार्द्धपिप्पलीं

साधयित्वा "षष्ठ्यन्त" [का० वा०] इति वार्त्तिकं नारब्धव्यमिति प्रामाणिकाः। वस्तुतस्तु एकदेशिसमासविषयकोऽयं निषेधः । न चात्र प्रमाणाभावः। 'पञ्चखट्वी' इति द्वितीयभाष्यस्य प्रमाणत्वात्।

इति शब्दकौस्तुभे प्रथमस्याध्यायस्य द्वितीये पादे
प्रथममाह्निकम्।

अर्थवदधातुरप्रत्ययः प्रातिपदिकम् (अष्टा० सू०१-२-४५)। डित्थादीन्यव्युत्पन्नान्युदाहरणम्। अव्युत्पत्तिपक्षस्य चेदमेव ज्ञापकम्। यत्तु व्युत्पत्तिपक्षेऽपि निपातार्थमनुकरणार्थं चेदमिति हरदत्तेनोक्तम्, तन्न। तत्राऽपि प्रकृत्यादिकल्पनसम्भवादिति बोध्यम्। वस्तुतस्तु 'बहुपटवः' इत्याद्यर्थमिदम्। न च तद्धितग्रहणे मत्वर्थलक्षणया निर्वाहः। 'पचतकि' इत्यादावतिव्याप्तेः। अव्युत्पत्तिपक्षस्तु कमिग्रहणेन सिद्धे कंसग्रहणेनैव ज्ञाप्यः। ज्ञापिते च तत्राप्यनेनैव संज्ञा सिध्यति। नन्वेतदेव ज्ञापकम्। बहुच्पूर्वे कृतार्थत्वादित्यवधेयम्। अर्थवत्किम्? घनं वनमित्यादौ प्रतिवर्णं संज्ञा मा भूत्। स्यादेतत्-विशिष्टरूपोपादानविषयतया अर्थवत्परिभाषाया इहाप्रवृत्तावपि अधातुरप्रत्यय इति पर्युदासादेव सिद्धम्। न च "अधीते' 'यावकः' इत्यादौ इकुनौ निरर्थकावपि धातुप्रत्ययौ स्त इति वाच्यम्। अडादिव्यवस्थायै इङ एवार्थवत्त्वस्वीकारात्। स्वार्थिकानाञ्च प्रकृत्यर्थेनार्थवत्त्वात्। न चेदं कल्पनामात्रमिति वाच्यम्। डित्थादावपि तथात्वात्। उक्तं हि—"अर्थवत्ता नोपपद्यते केवलेनावचनात् सिद्धं त्वन्वयव्यतिरेकाभ्याम्" इति। कल्पिताभ्यामिति हि तदर्थः। वस्तुतः पदस्फोटवाक्यस्फोटयोरेवार्थवत्त्वात्। सत्यम्। उत्तरार्थमर्थवद्ग्रहणं इह तु स्पष्टार्थम्। अधातुः किम्? अहन्। नलोपो मा भूत्। न च "सुपो धातु" (अष्टा०सू०२-४-७१) इति धातुग्रहणात् धातोर्नेयं संज्ञेति वाच्यम्। 'श्येनायते' इत्यादौ प्रत्ययान्ते धातुग्रहणस्य चरितार्थत्वात्। अप्रत्ययः किम्? 'पचति' इति तिपो माभूत्। सुपोऽप्येवम्। न चैवन्तदन्तेषु अतिव्याप्तितादवस्थ्यम्। उत्तरसूत्रे तद्धितग्रहणस्य नियमार्थत्वात्। तद्धितान्तानामेव नत्वन्यप्रत्ययान्तानामिति। न च तत्रापि संज्ञाविधित्वेन तदन्तग्रहणं दुर्लभमिति वाच्यम्। अर्थवदित्यनुवृत्तिसामर्थ्यात्तत्सिद्धेः। प्रशंसायां हि मतुप्। एकार्थीभावेन लौकिकप्रयोगे प्रसिद्धत्वञ्च प्रशंसार्थः। अधातुप्रत्ययाविति सिद्धे नञ्द्वयोपादानं स्पष्टार्थम्। महासंज्ञाकरणं प्राचामनुरोधात्।

कृत्तद्धितसमासाश्च (अष्टा०सू०१-२-४६)। अर्थवन्त एते प्रातिपदि-

कसंज्ञाः स्युः। विशेषणसामर्थ्यात्तदन्तविधिः। न हि अहत्स्वार्थायां वृत्तौ कृतान्तद्धितानां चार्थोऽस्ति। भूतपूर्वगतिलभ्यस्तु न प्रशस्तः सः। भित्, छित्। अत्राधातुरिति पर्युदासे प्राप्ते कर्त्ता, हर्त्ता, अत्र तद्धितान्तानामेवेति नियमेन निरासे प्राप्ते. सन्निहितत्वाच्च कृद्ग्रहणेन प्रागुक्तमेव बाध्यते न तु समासग्रहणकृतो नियमोऽपि। तेन कृद्ग्रहण-परिभाषानुपस्थानात् 'मूलकेनोपदंशम'इति वाक्यस्य न भवति। ननु बाध्यसामान्यचिन्तायां समासनियमोऽपि बाध्येत। विशेषचिन्तायां तु मध्येपवादन्यायावतारात्तद्धितनियमोऽपि न बाध्येतेति चेत्, सत्यम्। आद्ये एवेह पक्षः। न च वाक्येऽतिप्रसङ्गः। शब्दाधिकारमाश्रित्येहार्थ-वच्छब्देनैकार्थीभावविवक्षणात्। अतिशये मतुप्स्मरणात्। वक्ष्यमाण-रीत्या "अप्रत्यय" इति निषेधः प्रत्ययान्तपर इति पक्षे तु मध्येपवाद-न्यायात् सर्वेष्टसिद्धिः। अप्रत्यय इत्यस्य प्रत्याख्यानपक्षेऽपि पुरस्ताद-पवादन्यायादिष्टसिद्धिरिति दिक्। तद्धितः—औपगवः। अत्राऽनेन पूर्वेण वा संज्ञा नियमविध्योर्नां विधिरूपेण निषेधरूपेण वा प्रवृत्तिरिति मत-भेदस्योक्तत्वात्। एवं समासेऽपि। न चासमर्थसमासेषु विध्यर्थं समा-सग्रहणमिति वाच्यम्। अर्थवद्ग्रहणानुवृत्तेरुक्तत्वात्। असमर्थानां तर्हि कथं संज्ञेति चेत, धर्मिग्राहकमानादेवेति गृहाण। "असूर्यललाटयोः" (अष्टा०सू०३–२–३६) इत्यादिना हि समास उपपदे कृद्विधीयते। उपप-दश्च महासंज्ञाकरणबलाद्विभक्त्यन्तमेव। न चैवमपि स्त्रीप्रत्यये तदादि-नियमाभावात् 'राजकुमारी'इत्यादौ प्रत्ययान्ते विध्यर्थं तदिति वा-च्यम्। अन्तरङ्गस्याऽपि हल्ङ्यादिलोपस्य लुग्विषये प्रवृत्त्या श्रूयमाण एव सुपि समासप्रवृत्तेः। अत एव 'गोमत्प्रियः' इत्यादौ नुमाद्यो नेति वक्ष्यते। तस्मात्प्रकृते समासग्रहणं नियमार्थं सद्वाक्यस्य सज्ञां निवर्त-यतीति स्थितम। नियमश्च सजातीयाऽपेक्षः। यत्र पूर्वो भागः पदमुत्त-रश्च प्रत्ययभिन्नः तादृशस्य समुदायस्य चेत्स्यात्तर्हि समासस्यैवेति। बह्वविधेऽपि समासे पूर्वभागस्य पदत्वाव्यभिचारात्। तेन बहुच्पूर्व-स्यास्त्येव संज्ञेति 'बहुपटवः' इति टकारस्योदात्तता लभ्यते। प्रथमस्य जसो लुकि"चितः सप्रकृतेर्बह्वकजर्थम्" (का०वा०) इति चित्स्वरे कृते पुनर्विभक्त्युत्पत्तेः। अन्यथा तु जसेवोदात्तः स्यात्। उत्तरश्चेत्यादि किम्? 'हरिषु' इत्यादेरनेन व्यावृत्तिर्मा भूत्। एवमस्तु, को दोष इति चेत्? शृणु। तथासति 'जन्मवान्'इत्यादौ तद्धितान्ते विध्यर्थं तद्धित-ग्रहणं स्यात् 'राजानौ' इत्यादेस्तु प्रातिपदिकत्वं केन वार्यताम्। न ता-वदनेन नियमेन, पूर्वभागस्यापदत्वात्। नापि तद्धितग्रहणेन, तस्योक्त-

रीत्या नियमार्थत्वायोगात्। न च "सुपोधातुप्रातिपदिकयोः" (अष्टा०सू० २-४ ७१) इति धातुग्रहणं प्रत्ययान्तानां प्रातिपदिकसंज्ञा नेति ज्ञापकमिति वाच्यम्। तस्य 'प्रासादीयति'इत्यादौ 'हरिषु'इतिवदप्रातिपदिके चरितार्थत्वात्। नापि ङ्याब्ग्रहणं ज्ञापकम्। लिङ्गविशिष्टपरिभाषया सिद्धौ तस्यान्यार्थताया एव सिद्धान्तयिष्यमाणत्वात्। तस्मादुक्तमेव साधु। यद्यपि प्रकृतिप्रत्ययभावानापन्नसंघातविषयको नियम इत्यपि सुवचं तथापि "सरूप" (अष्टा०सू०१-२-६४) सूत्रे समुदायाद्विभक्त्युत्पत्तिरिति ग्रन्थं योजयितुमिदं गौरवमादृतम्। निष्कर्षे तु तथैवास्तु। तथा च तद्धितग्रहणं नियमार्थमेव। भेदसंसर्गद्वारकमर्थवत्त्वमिति कैयटस्याप्ययमेव भावः। भेदे परस्परपरिहारेण प्रयोगे सति यः संसर्गस्तद्द्वारकमित्यर्थात् न तु भेदः संसर्गो वा द्वयं वा वाक्यार्थ इत्याशयेन तद्ग्रन्थः। बहुच्समासयोर्वैरूप्यालाभात्। यद्वा-"सातपदाद्योः" (अष्टा०सू०८-३-१११) इतिसातिग्रहणात्प्रत्ययो न प्रातिपदिकमिति सिद्धे पूर्वसूत्रस्थं प्रत्ययग्रहणं सामर्थ्यात्तदन्तपरम्। तद्धितग्रहणन्तु विध्यर्थमेव। स्यादेतत्-पक्षत्रयेऽपि 'राजपुरुषौ" इत्यादौ 'पुरुषौ'इत्यादेः संज्ञा दुर्वारेति प्रातिपदिकावयवत्वात्सुपो लुक् स्यादिति चेन्नैवम्। जहत्स्वार्थायामानर्थक्यात्। अजहत्स्वार्थायामपि पूर्वपदविनिर्मुक्तस्य विशिष्टार्थविरहेण तत्सहितस्यैव विशिष्टार्थगमकत्वात्। प्रशंसायां हि मतुबित्युक्तम्। एवं 'घटपटौ' इत्यादावपि मिलितयोरेव पदयोः सहभूतार्थता। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वाच्च। "घटौ'इत्यंशो नार्थवानिति। एतेनासमर्थसमासे दशदाडिमादिवदनर्थके विध्यर्थं समासग्रहणं किं न स्यादिति चोक्तं प्रत्युक्तम्। अर्थवद्ग्रहणस्येहार्थताया एवोक्तत्वादिति दिक्। यदि तु नैयायिकरीत्या अर्थवत्त्वं वृत्तिमत्त्वं तच्च समासस्य नास्तीत्याश्रित्य समासग्रहणं विध्यर्थम्। तद्धितग्रहणमपि तथा। अप्रत्यय इति तु प्रत्ययवारणार्थमित्याश्रीयते तथापि न क्षतिः। तद्धितग्रहणस्य तद्विशिष्टपरतामाश्रित्य 'बहुपटवः' इत्यस्य सुसाधत्वात्। किन्त्वस्मिन्पक्षे सिद्धान्तविरोधः 'मूलकेनोपदंशं''पचतकि'इत्यत्रातिप्रसङ्गश्चेति यथास्थितमेवास्तु। इह प्रकरणे यथाश्रुताः प्राचां ग्रन्था दुष्टा एवेत्यवधेयम्। निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या येषां द्योत्योऽप्यर्थो नास्ति तदर्थमिदम्। 'अवद्यति'। अनुक्तसमुच्चयार्थाच्चकारात्सिद्धमिदम्। अनुकरणेषु तु अनुकरणेन सहाभेदविवक्षायामर्थवत्त्वाभावान्न प्रातिपदिकत्वं, "भू सत्तायाम्(भ्वा०प०१) इति यथा। भेदविवक्षायां तु संज्ञा स्यादेव। "भुवो वुग्" [अष्टा०सू०६-४-

८८] इति यथा। न चाधातुरिति पर्युदासाऽपत्तिः। प्रकृतिवदनुकरण-मित्यतिदेशस्यानित्यतयोवंऽशे प्रवृत्तावपि संज्ञांशे अप्रवृत्तिसम्भवात्। एतच्च "ऋलक्" [मा०सू०२] सूत्रे उपपादितम्।

ह्रस्वो नपुंसके प्रातिपदिकस्य [अष्टा०सू०१-२-४७]। क्लीबे प्रातिपदिकस्याजन्तस्य ह्रस्वः स्यात्। श्रीपं कुलम्। प्रातिपदिकग्रहणसामर्थ्यान्नेह—काण्डे, कुड्ये। इह तु "अन्तादिवच्च" (अष्टा०सू०६-१-८५) इत्यतिदेशेनाऽस्ति प्राप्तिः। न च द्विकपक्षे 'वारिणी' इति व्यावर्त्यं कृतार्थेति वाच्यम्। तत्रापि प्रातिपदिकमित्यस्यानुवृत्त्या सिद्धे सामर्थ्यस्य सुवचत्वात्। लक्ष्यानुरोधेन पक्षान्तरस्यैव सुग्रहत्वाच्च। यद्वा-कार्यकालपक्षं प्रत्ययान्तस्य नेति प्रसज्यप्रतिषेधं चाश्रित्य समाधेयम्। न चैवं 'ब्रह्मबन्धुः' इत्यत्र स्वादयो न स्युरिति वाच्यम्। लिङ्गविशिष्ट-परिभाषया 'श्वश्रूः' इत्यत्रेव तत्सिद्धेः।

गोस्त्रियोरुपसर्जनस्य (अष्टा०सू०१-२-४८)। उपसर्जनं यो गोशब्द-स्तादृगेव च यत्स्त्रीप्रत्ययान्तन्तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात्। चित्रगुः, निष्कौशाम्बिः। उपसर्जनस्य किम्? सुगौः, राजकुमारी, स्त्रीशब्दः स्वर्यते। तेन स्त्र्यधिकारोक्तप्रत्ययग्रहणान्नेह—अतिलक्ष्मीः, अतिश्रीः। कथं 'गोकुलं' 'राजकुमारीपुत्रः' इति चेत्, शृणु। उपसर्जनस्य सम्बन्धिकतया यस्य प्रातिपदिकस्य ह्रस्वो विधीयते तदर्थं प्रति यद्युत्तरपदभूतयोर्गोस्त्रियोर्गुणभावस्तदेदं ह्रस्वत्वम्। न चेह तदस्ति। गोः कुलं प्रति गुणीभावेऽपि गां प्रत्यतथात्वात्। कुमार्यश्च पुत्रं प्रति गुणीभावेऽपि राजानं प्रत्यनथात्वात्। शास्त्रीयं चेहोपसर्जनं गृह्यते। कृत्रिमत्वात्। अत एव प्रत्ययमात्रस्य तथात्वासम्भवात्तदन्तलाभः। यदि तु लौकिकमुपसर्जनत्वं गृहीत्वा प्रत्यय एव विशेष्येत तदा हरीतक्याः फलानि 'हरीतक्यः' इत्यत्रातिव्याप्तिः स्यात्। स्पष्टञ्चेदं "उपमानानि सामान्यवचनैः" (अष्टा०सू०२-१-५५) इति सूत्रे भाष्ये। अथ कथं राजकुमारीमतिक्रान्तः 'अतिराजकुमारिः' इति "अनुपसर्जने स्त्रीप्रत्यये तदादिनियमो न" इत्युक्ततया राजकुमारीशब्दस्य स्त्रीप्रत्ययान्तत्वादित्यवेहि। अतिक्रान्तम्प्रति ह्यसावुपसर्जनं न तु राजानम्प्रतीति विवेकः। अन्यः कैयटस्त्वापातत इत्यवधेयम्। अत्र वार्त्तिकम्—"ईयसो बहुव्रीहौ पुंवद्वचनम्" (का०वा०) इति। ईयसन्ताद्यः स्त्रीप्रत्ययस्तदन्तान्तो यो बहुव्रीहिस्तत्र ह्रस्वो नेत्यर्थः। "गोस्त्रियोः" (अष्टा०सू०१-२-४८) इति ह्रस्वो विहितः। तत्र पुंसि यथा स्त्रीप्रत्ययान्तता नास्ति तथेह बोध्यमित्येवं वचनव्यक्त्या ह्रस्वाभावः पर्यवस्यति।

बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी। "ईयसश्च" (अष्टा०सू०५-४-१५६) इति कब्निषेधः। बहुव्रीहौ किम्? अतिश्रेयसि।

लुक्तद्धितलुकि (अष्टा०सू०१-२-४९)। तद्धितलुकि सति उपसर्जनस्त्रीप्रत्ययस्य लुक् स्यात्। लुक् तावत्प्रत्ययस्यैव सम्भवति, न तु तदन्तस्य। अत एवोपसर्जनमिह लौकिकम् न तु पूर्ववच्छास्त्रीयम्, असम्भवात्। नहि प्रत्ययमात्रं शास्त्रीयमुपसर्जनम्। आमलक्याः फलमामलकम्। "नित्यं वृद्धशरादिभ्यः" (अष्टा०सू०४-३-१४) इति मयटः फले लुक्। ततोऽनेन गौरादिङीषो लुक्। इह पूर्वसूत्रस्यावकाशो 'निष्कौशाम्बिः'। अस्यावकाशः 'आमलकम्'। पञ्च इन्द्राण्यो देवता अस्य 'पञ्चेन्द्रः' इत्यत्र तु परत्वाल्लुगेव।

इद्गोण्याः [अष्टा०सू०१-२-५०]। गोण्या इत्स्यात्तद्धितलुकि। लुकोऽपवादः। पञ्चभिर्गोणीभिः क्रीतः पटः पञ्चगोणिः। दशगोणिः। गोणीशब्दः परिमाणवचन आवपनवचनश्च। तत्राद्यात् "प्राग्वतेष्ठञ् (अष्टा० सू०५-१-१८) द्वितीयादार्हीयष्ठक्। तयोरध्यर्धेति लुक्।

लुपि युक्तवद्व्यक्तिवचने [अष्टा०सू०१-२-५१]। प्राचामिदं सूत्रं दूषणार्थं पाणिनिरनुवदति। लुपि सति प्रकृतिवल्लिङ्गवचने स्तः। पञ्चालाः, क्षत्रियाः, पुल्लिङ्गबहुवचनविषयाः। तेषां निवासो जनपदः पञ्चालाः। पञ्चालस्यापत्यानि बहूनि। "जनपदशब्दात् क्षत्रियादञ्" [अष्टा०सू० ४-१-१६८] 'ते तद्राजाः' [अष्टा०सू०४-१-१७४] "तद्राजस्य बहुषु" [अष्टा०सू०२-४-६२] ततः "तस्य निवासः" [अष्टा०सू०४-२-६९] इत्यणो "जनपदे लुप्" [अष्टा०सू०४-२-८१] लुपि किम्? लवणस्सूपः। "संसृष्टे" [अष्टा०सू०४-४-२२] "लवणाल्लुक्" [अष्टा०सू०४-४-२४] व्यक्तिवचने किम्? हरीतकी पञ्चाला इत्यादिषु षष्ठ्या अतिदेशो मा भूत्। समासे उत्तरपदस्य बहुवचनस्य लुपः नियमार्थमिदम्। मथुरा पञ्चालाः। उत्तरपदस्यैवेति नियमाभेद। पञ्चालमथुरे। बहुवचनस्य किम्? गोदौ ग्रामौ मथुरा च गोदमथुराः। पूर्वपदस्य द्वित्वातिदेशः स्यादेव।

विशेषणानाञ्चाजातेः (अष्टा०सू०१-२-५२)। लुबर्थस्य विशेषणानामपि तद्वल्लिङ्गवचने स्तो जातिं वर्जयित्वा। पञ्चाला रमणीयाः। गोदौ रमणीयौ। अजातेः किम्? पञ्चाला जनपदः। गोदौ ग्रामः। कथं तर्हि पञ्चाला जनपदो रमणीय इति। जातिविशेषणत्वादिति गृहाण। पञ्चालविशेषकत्वे तु रमणीया इति भवत्येव। स्यादेतत्-लुपोऽन्यत्रापीदं तुल्यम्, 'बदरीवृक्षः' इत्यत्र सूक्ष्मकण्टका सूक्ष्मकण्टक इति प्रयोगयो-

विशेष्यभेदेन व्यवस्थास्वीकारात् । तत्किं सूत्रेण ? सत्यम् । गुणवचनानामाश्रयतो लिङ्गवचनानीति सूत्रार्थः । तथाहि-जातिभिन्नानि यानि विशेषणानि तेषां युक्तवत्, विशेष्यवदित्यर्थः । गुणवचनानामित्युद्घोषेऽपि जातिभिन्नं गुणशब्दार्थः । तदुक्तममरेण—

"स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः ।
गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः" [अ०को०३-१-२] इति ।

सामान्ये नपुंसकस्य न्यायप्राप्तस्यापवादोऽयम् । तेन शुक्लं पटा इति न भवति । अनित्यश्चायमतिदेशः । "संस्कृतं भक्षाः" (अष्टा०सू४-२-१६) इत्यादिलिङ्गात् । लक्ष्यानुरोधाद्व्यवस्था । हरीतक्यादिषु व्यक्तिः । नियमार्थमिदम् । तेन वचनं न युक्तवत् । हरीतक्याः फलानि हरीतक्यः । गौरादिङीषन्तात् "अनुदात्तादेश्च" [अष्टा०सू०४-३-१४०] इति लुप् । खलतिकादिषु वचनम् । अयमपि नियम एव । खलतिकस्य पर्वतस्यादूरभवानि वनानि खलतिकं वनानि । खलतिको वरणादिः । मनुष्यलुपि प्रतिषेधः (का०वा०) मनुष्यलक्षणे लुबर्थे विशेषणानां प्रतिषेधः । लुबन्तस्य तु भवत्येव । चञ्चा तृणमयः पुमान् । स इव चञ्चाऽभिरूपः । "संज्ञायाम्" [अष्टा०सू०५-३-८७] इति कन् "लुम्मनुष्ये" [अष्टा०सू०५-३-९८] इति लुप् । चर्मविकारविशेषो वध्रिका । स इव वध्रिका दर्शनीयः । तदिह द्वे वार्त्तिके आद्यस्य तृतीयन्तु द्वितीयस्यापवाद इति स्थितम् । इदं त्ववधेयम् । इहाभिरूपदर्शनीयपदयोर्विशेष्यलिङ्गे प्रतिषिद्धे नपुंसकत्वं प्राप्नोति । भाष्यकारीयोदाहरणसामर्थ्यान्न भवतीति ।

तदशिष्यं संज्ञाप्रमाणत्वात् [अष्टा०सू० १-२-५३] । तत्-युक्तवद्वचनम् । अशिष्यम्-अकर्तव्यम् । कुतः ? संज्ञानां प्रमाणत्वात् । अयं भावः-पञ्चाला वरणा इत्यादयो न यौगिकाः । तन्निवासेऽपि देशान्तरे अप्रयोगात् । "देशे तन्नाम्नि" [अष्टा०सू०ए० ४-२-६७] इत्यधिकृत्यादूरभवे प्रत्ययविधानाच्च । किन्तु संज्ञाशब्दा एते । ते च यल्लिङ्गसङ्ख्यतया लोके प्रसिद्धास्तत्र प्रमाणभूता एव । तदर्थप्रमाणका इत्यर्थः । यथा आपो दारा वनं गृहाः सिकता वर्षा इत्यादौ । नेह शास्त्रेणानुशासनमारब्धं तदर्थमपि मास्तु । किञ्च—

लुब्योगाप्रख्यानात् [अष्टा०सू० १-२-५४] लुबप्यशिष्यः । "जनपदे लुप्" (अष्टा०सू० ४-२-८१) "वरणादिभ्यश्च" (अष्टा०सू०४-२-८२) इति । कुतः ? योगस्यावयवार्थस्येह अप्रख्यानात् अप्रतीतेः । तथा चात्र "तस्य निवासः" (अष्टा०सू०४-२-६९) "अदूरभवश्च" (अष्टा०सू०

४-२-७०) इति तद्धितो नैवोत्पद्यते किं लुपो विधानेनेत्यर्थः।

योगप्रमाणे च तदभावेऽदर्शनं स्यात् [अष्टा०सू०१-२-५५]। चकारो ह्यर्थे। यदि हि योगस्यावयवार्थस्येदं प्रमाणं बोधकं स्यात्तदा तदभावे न दृश्येत। दृश्यते च सम्प्रति। विनैव क्षत्रिययोगं जनपदे पञ्चालशब्दः। न च भूतपूर्वगतिः। क्षत्रिययोगाद्देशे देशयोगाद्वा क्षत्रिये शब्द इत्यत्र विनिगमकाभावेन वैपरीत्यस्यापि सुवचत्वापत्तेरिति भावः। अतोऽक्षादिवन्नानार्था एवैते इति तत्त्वम्।

प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् [अष्टा०सू०१-२-५६]। प्रत्ययार्थः प्रधानमित्येवंरूपं वचनमपि अशिष्यं कुतः? अर्थस्य लोकत एव सिद्धेः। आख्यातस्य क्रियाप्रधानतया व्यभिचाराच्चेत्यर्थः।

कालोपसर्जने च तुल्यम् [अष्टा०सू० १-२-५७]। अतीताया रात्रेः पश्चार्द्धेन आगामिन्याः पूर्वार्द्धेन च सहितो दिवसोऽद्यतनः। विशेषणमुपसर्जनमित्यादिक्रमेण काल उपसर्जनं च पूर्वाचार्यैः परिभाषितं तत्रापि तुल्यम्। अशिष्यत्वं समानमित्यर्थः। लोकप्रसिद्धत्वादेवेति भावः।

जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् [अष्टाऽसू० १-२-५८] ब्राह्मणाः पूज्याः। ब्राह्मणः पूज्यः। एकोऽप्यर्थो वा बहुवदित्यतिदेशाद्विशेषणादपि सिद्धम्। बहूनां वचनं बहुवचनं प्रतिपादनमिति व्याख्यानाच्चातिदेशः फलितः।

अस्मदो द्वयोश्च [अष्टा०सू० १-२-५९]। एकत्वे द्वित्वे च विवक्षितेऽस्मदो बहुवचनं वा स्यात्। वयं ब्रूमः। पक्षे अहं ब्रवीमि। आवां ब्रूव इति वा। सविशेषणस्य प्रतिषेधः [का० वा०]। पटुरहं ब्रवीमि। कथं तर्हि "त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः" (वै०श० २३) इति भर्तृहरिः। अत्रोन्नतत्वस्य विधेयत्वाद्भवत्येव। अनुवाद्यविशेषणपरत्वात्प्रतिषेधस्येति हरदत्तः। भाष्ये त्वेतत्सूत्रं प्रत्याख्यातम्। तथाहि-अहङ्कारावच्छिन्नेष्वस्तानाश्चक्षुरादीन्द्रियाणां तत्तादात्म्यादहमुल्लेखगोचरता भेदाभेदप्रतीतिश्च। अहं शृणोमीति वन्मम श्रोत्रं शृणोतीत्यपि व्यवहारात् तत्र चक्षुरादीनां बहुत्वाद्भेदस्वातन्त्र्ययोर्विवक्षायां 'वयं ब्रूमः' इति सिद्धम्। अभेदमात्रविवक्षायां तु एकवचनम्। न च गौणता। 'गौरोऽहम्' इत्यादीनां यावद्व्यवहारं बाधाभावात्। एतेन "पुष्यादिगुरावेकेषाम्" इति वृत्तिकारेण पठितमपि गतार्थम्। त्वं गुरुर्यूयं गुरव इत्यस्योक्तरीत्या सिद्धेः। अत एव "आचार्याः कथयन्ति" इत्यादिलौकिकप्रयोगोऽपि सङ्गच्छते।

फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे [अष्टा०सू०१-२-६०] । द्वयोरित्यनुकर्षाद् द्वित्वं बहुत्वप्रयुक्तं कार्यं वा विधीयते । तेन विशेषणेऽपि सिद्धम् । पूर्वे फल्गुन्यौ पूर्वाः फल्गुन्यः । पूर्वे प्रोष्ठपदे पूर्वाः प्रोष्ठपदाः । नक्षत्रे किम् ? फल्गुन्यौ माणविके । फल्गुन्योर्जाते इत्यर्थः । "फल्गुन्यषाढाभ्यां टानौ" (का०वा०) इति टः । टित्त्वान् ङीप् । एकस्यान्तु तारायां नेमौ शब्दौ प्रयुज्येते । उद्भूतावयवभेदे समुदाय एव निरूढत्वात् । सूत्रे तु नक्षत्रे इति प्रथमाद्विवचनं नक्षत्रे यद्यभिधीयेते इत्यर्थात् ।

छन्दसि पुनर्वस्वोरेकवचनम् [अष्टा०सू० १-२-६१] । द्वयोरेकवचनं वा स्यात् । पुनर्वसुर्नक्षत्रमदितिर्देवता । पुनर्वसू वा । लोके तूद्भूतावयवसमुदाये निरूढत्वाद् द्विवचनमेव । गाङ्गताविव दिवः पुनर्वसू ।

विशाखयोश्च [अष्टा०सू०१-२-६२] । प्राग्वत् । विशाखा नक्षत्रमिन्द्राग्नी देवता । पक्षे विशाखे । छन्दसीत्यनुवृत्तेर्लोके 'विशाखे' इत्येव । अमरस्तु–"राधाविशाखा" (अ०को० १-३-२२) इति प्रयुञ्जानो द्विवचननियमं नेच्छति । सूत्रे तूदासीनम् ।

तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् [अष्टा० सू० १-२-६३] । छन्दसीति न सम्बध्यते पूर्वत्र चकारेणानुकृष्टत्वात् । एतदर्थ एव हि पूर्वत्र योगविभागः । तिष्य एकः । पुनर्वसू द्वौ । तेषां द्वन्द्वो बह्वर्थः । तत्र बहुत्वं द्वित्ववद्भवतीत्यतिदेशोऽयम् । तिष्यपुनर्वसू उदितौ । तिष्यपुनर्वसू इति किम् ? विशाखानुराधाः । नक्षत्रेति किम् ? तिष्यपुनर्वसवो माणवकाः । तिष्यपुनर्वसुशब्दाभ्यां "नक्षत्रेण युक्तः कालः" (अष्टा०सू० ४-२-३) इत्यण् "लुबविशेषे" (अष्टा०सू० ४-२-४) ततो जातार्थे "सन्धिवेलादि" (अष्टा०सू० ४-३-१६) सूत्रेणाण् । तस्य "श्रविष्ठाफल्गुन्यनुराधा" (अष्टा०सू० ४-२-३४) इत्यादिना लुक् माणवकवृत्तिरयं द्वन्द्वो न तु नक्षत्रवृत्तिः । न चायं गौणः । यौगिकत्वात् । ननु नक्षत्रे इत्यनुवृत्त्या सिद्धमेतत् । किं पुनर्नक्षत्रग्रहणेन । अत्र भाष्यम्–"पर्यायाणामपि यथा स्यात्" इति । तस्यायं भावः–तिष्यपुनर्वस्वोः शब्दयोरभिधेये नक्षत्रे वर्त्तमानो यो नक्षत्रशब्दानां द्वन्द्व इति व्याख्यानात् । पुष्यपुनर्वसू सिध्यपुनर्वसू इत्यपि सिध्यतीति । स्यादेतत्–यथा "भावे चाकर्मकेभ्यः" (अष्टा०सू० ३-४-६९) इत्यकर्मकश्रुत्यान्तरङ्गं द्रव्यकर्म निषिध्यते न तु बहिरङ्गं कालादि कर्म तथान्तरङ्गस्य कालस्य व्यावृत्त्या बहवस्तिष्यपुनर्वसवोऽतिक्रान्ता इत्यादेः सिद्धावपि माणवकस्य बहिरङ्गस्य व्यावृत्तये पुनर्नक्षत्रग्रहणमस्तु । यद्वा–तिष्यपुनर्वस्वोरिति योगं विभज्य देशान्तरस्थमपि

तिष्यस्य कार्यं नक्षत्र एवेति व्याख्यास्यते। तेन "तिष्यपुष्ययोर्नक्षत्राणि यलोपः" (का वा०) इति सिद्धम्। तस्माद्बहिरङ्गव्यावृत्त्या योगविभागेन वा कृतार्थं नक्षत्रग्रहणं कथं पर्यायग्रहणार्थं स्यात्। उच्यते-अकर्मकशब्दः श्रुत्यैव कर्म व्यावर्त्तयन् मुख्यमन्तरङ्गमेव व्यावर्त्तयतीति युक्तम्। नक्षत्रशब्दस्तु स्वार्थार्पणप्रनाड्या अर्थान्तरं व्यावर्त्तयन्नविशेषादुभौ व्यावर्त्तयतीति नाद्यं फलम्। नापि द्वितीयम्। पुष्यार्थवचनस्यावश्यकत्वात्। अत एव पक्षद्वयेऽप्यपरितोषाद्भाष्ये पक्षान्तरमुक्तम्। द्वन्द्व इति किम्? यस्तिष्यस्तौ पुनर्वसू येषान्ते तिष्यपुनर्वसवः। तिष्यादय एव विपर्ययविषया इह बहुव्रीहिणोच्यन्ते। अतो भवत्ययं नक्षत्रसमासः न तु द्वन्द्वः। बहुवचनस्य किम्? इदं तिष्यपुनर्वसु। सर्वो द्वन्द्वो विभाषयैकवत्। न्यायसिद्धं चेदम्। प्राण्यङ्गादीनां समाहार एवेति हि नियमः। न तु विपरीतः। "चार्थे द्वन्द्वः" (अष्टा०सू० २-२-२९) इति पृथग्विधानात्। प्रकृतसूत्रे बहुवचनग्रहणाच्चेति दिक्।

इति श्रीशब्दकौस्तुभे प्रथमस्याध्यायस्य द्वितीये पादे द्वितीयमान्हिकम्।

सरूपाणामेकशेष एकविभक्तौ [अष्टा०सू०१-२-६४]। समानायां विभक्तौ यानि सरूपाण्येव दृष्टानि तेषां मध्ये एक एव शिष्यते। अनैमित्तिकत्वेनान्तरङ्गोऽयमेकशेषः सुबुत्पत्तेः प्रागेव ङ्यन्ताबन्तप्रातिपदिकानां प्रवर्त्तते। हरिणी मृगी हरितवर्णा च, तयोः सह विवक्षायां हरिण्यौ हरिण्यः। क्षितिक्षान्त्योः क्षमा। "वासोन सम्यक् क्षमयोश्च तस्मिन्" इति श्रीहर्षः, "श्रियौ नरेन्द्रस्य निरीक्ष्य तस्य" इति च। "सकृच्छ्रुतात्सकृदर्थः प्रत्ययः" इति मते शब्दसारूप्येऽपि द्वन्द्वः स्यात्। अथाऽपि तन्त्रेणानेकार्थताभ्युपगम्यते एवमपि सर्वत्र तन्त्रेणैव बोधनीयमिति नियमाभावात् पाक्षिको द्वन्द्वो दुर्वारः। आरब्धे त्वेकशेषे सुबन्तद्वयविरहात् द्वन्द्वस्याप्राप्तिरेव फलिता भवति। अत एव एकशेषस्य द्वन्द्वापवादकतेत्युद्घोषः। "इको गुणवृद्धी" (अष्टा०सू०१-१-३) इत्यस्य "अलोन्त्य" (अष्टा०सू० १-१-५२) अपवादकतेति पक्षेऽपवादशब्दस्येत्थमेव व्याख्यातत्वात्। अत एव 'घटौ' 'घटाः' इत्यादीन्यपीहोदाहरणानि। तत्रापि ऐच्छिकस्यानेकव्यक्तिबोधोद्देश्यकस्यानेकविशकलितशब्दप्रयोगस्य घटोऽयं घटोऽयमिति बहुशो दर्शनेन तद्वदेव सहविवक्षायां 'घटौ' इत्यादिद्वन्द्वस्य दुर्वारत्वात्। एतेन "व्यर्थेषु

च मुक्तसंशयम्" (का०वा०) इति वार्त्तिकं दृष्ट्वा नानार्था एवेहोदाहरणमिति भ्राम्यन्तः परास्ताः। न च पदार्थतावच्छेदकभेदाभावाद् 'घटौ' इत्यादौ द्वन्द्वप्रसक्तिर्नेति वाच्यम्। "चार्थे द्वन्द्वः" (अष्टा०सू० २-२-२९) इति सूत्रेण साहित्यमात्रे तद्विधानात्। तस्य चेतरेतरयोगद्वन्द्वे एकशेषे च विशेषणत्वं प्रयोगोपाधित्वं वा। समाहारद्वन्द्वे तु प्राधान्येन भानमित्यन्यदेतत्। न चैवमपि 'घटकलशौ' इत्यादिद्वन्द्वापत्तिः। "विरूपाणामपि समानार्थानाम्" (का० वा०) इति वार्त्तिकेन एकशेषात्। वस्तुतस्तु सौत्र एवायमर्थः। रूप्यते बोध्यते इति रूपम्, अर्थः समानं रूपं येषामिति सरूपाः। "ज्योतिर्जनपद" (अष्टा०सू० ६-३-८५) इति समानस्य सभावः। सरूपाश्च सरूपाश्च तेषामिति एकशेषेण व्याख्यानात्। न च स्वाङ्के स्वव्यापारायोगः वाक्यापरिसमाप्तिन्यायादिति वाच्यम्। उद्देश्यतावच्छेदकरूपाक्रान्ततया "तुल्यास्यप्रयत्नम्" [अष्टा०सू० १-१-९] इतिवत्स्वस्मिन्नपि प्रवृत्तेः। एतद्विषयविवेचनं तु "अइउण्" (मा०सू० १) इत्यत्रैव कृतम्। अत एव जननीवाचिनो मातृशब्दस्य धान्यमापवाचिनस्तृजन्तस्य च एकशेषं निषेद्धुं प्रवृत्ते "मातृमात्रोः प्रतिषेधः सरूपत्वात्" (का० वा०) इति वार्त्तिके स्वान्तर्गते मातृमात्रोरित्यत्रापि निषेधप्रवृत्तिः। नन्वर्थविशेषोपहितयोरेव तत्राऽनुवादः। अन्यथा जननीवाचिनोरपि निषेधापत्तेः। तत्कथं शब्दरूपपरे स्वान्तर्गते निषेधप्रवृत्तिरिति चेत्, "प्रकृतिवदनुकरणम्" इत्यतिदेशादिति गृहाण। सूत्रमेतदुत्तरसूत्रादेवकारोऽत्राऽनुकृष्यते। तेन एकविभक्तौ यानि सरूपाण्येवेति व्याख्यानात्परिच्छेतृवाचिनश्च "अप्तृन्"(अष्टा०सू०६-४-११)इति सर्वनामस्थाने दीर्घविधानादसारूप्यादेकशेषाभावः। न च वाचनिकैकशेषविरहेऽपि श्लिष्टरूपकस्थल इव तन्त्रन्यायाश्रयेण पाक्षिक एकशेषो मातृमात्रोः स्यादेवेति वाच्यम्। यान्येकविभक्तौ सरूपाण्येव तेषामेवैकशेष इति नियमात्। न चैवं 'घटघटौ' इति पाक्षिकं दुर्वारमिति वाच्यम्। तन्त्रावृत्त्याद्याश्रयणेन सरूपाणामेकशेष एवेत्यपरनियमाश्रयणात्। तस्मात 'घटकुम्भौ' 'कुम्भकुम्भौ' 'मातृभ्यां' चेति पाक्षिकमनिष्टत्रितयं प्राप्तं सूत्रेणाऽनेन वार्यते। 'घटौ' इत्यादिसिद्धिस्तु स्यादेवैतद्विनापि हि। जातिपक्षे व्यक्तिपक्षेऽपीति निष्कर्षसंग्रहः। स्यादेतत्—देवदेव इत्यादावपि तर्ह्येकशेषः प्राप्नोति। न च 'एकविभक्तौ' इत्यनेन तद्वारणम्। तस्य सारूप्योपलक्षणत्वादेकशेषस्य चानैमित्तिकत्वात्। अथ वक्ष्यमाणरीत्या एकशेषविशेषणतां ब्रूषे, तथाप्यनिस्तारः। देवदेव इत्यत्रापि

षष्ठीसमासादुपरि एकविभक्तेः सत्वात् । अन्तर्वर्तिन्योस्तु लुका लुप्तत्वेन प्रत्ययलक्षणाभावात् । अत्राहुः--सहविवक्षायामेव एकशेषः । इतरेतरयोगद्वन्द्वस्य विषये इति यावत् । अत्र ह्यनेकस्यार्थस्य मिलितस्येतरान्वयः स तथाभूतो विषयः । उक्तञ्च--

"अनुस्यूतेव भिन्नानामेका प्रख्योपजायते ।
यदा सहविवक्षान्तामाहुर्द्वन्द्वैकशेषयोः" इति ।

अयञ्च विषयनियमोऽभिधानबलाल्लभ्यते "वृद्धोयूना" [अष्टा०सू० १-२-६५] इत्यादिसूत्रेषु सहयोगे तृतीयायाः प्रयोगाच्च । यद्वा--पूर्वसूत्रात् 'द्वन्द्वे' इत्यनुवर्त्तते । अर्थाधिकाराच्चेतरेतरयोगद्वन्द्वावगमः । तेन द्वन्द्वे प्रसक्ते सतीति व्याख्यानादुक्तविषयनियमसिद्धिः । न च द्वन्द्वे कृते इत्येव व्याख्यायतामिति वाच्यम् । स्वरसमासान्तादिदोषप्रसङ्गेन "कृतद्वन्द्वानामेकशेषः" इति पक्षस्य दूषयिष्यमाणत्वात् । एतेन "सारवसारवोर्मिजः" इति श्रीहर्षप्रयोगोऽपि व्याख्यातः । सरव्यां भवाः सारवाः । ते च ते आरवसहिताश्चेति कर्मधारये सहविवक्षाविरहात् । "विद्वन्मानसराजहंस" इत्यादिश्लिष्टरूपके तु मानसमेव मानसमिति तन्त्रेण प्रयोगो न तु सौत्र एकशेषः । सहविवक्षाविरहात् । 'सारवः' इत्यत्राऽपि तथा स्यादिति चेत्, पक्षे एवमेव । तावताऽपि उभयप्रयोगस्य निर्वाह्यत्वात् । न चैवं समाहारद्वन्द्वविषये एकशेषानुशासनात्पाक्षिकं 'घटघटम्' इत्यादि दुर्वारमेवेति वाच्यम् । तत्राऽनभिधानस्यैव शरणीकरणीयत्वात् । अस्तु वा तत्राप्येकशेषप्रवृत्तिः । न चैवं नपुंसकतापत्तिः । समाहारद्वन्द्व एव तदनुशासनात् । तथा च प्रत्यर्थं शब्दनिवेश इति पक्षे "न ब्राह्मणं हन्यात्" इत्यादौ सकलव्यक्तिसङ्ग्रहो भविष्यतीति प्रतिव्यक्तिलक्षणं नावर्तनीयम् । "एकवच्चास्यान्यतरस्याम्" [अष्टा०सू०१-२-६९] इति ज्ञापकादेकशेषे कृते एकवद्भावो नेति तु तत्त्वम् । एकश्च एकश्च द्वौ च द्वौ चेत्यादौ तु द्वन्द्वैकशेषौ उभावपि अनभिधानेनैव वारणीयौ । उत्सर्गतः संख्याशब्देऽप्येवमेवेति बोध्यम । 'विंशति' इत्यादौ त्वेकशेष इष्ट एवेति दिक् । एवं स्थिते सूत्रारंभपक्षेऽपि बहुशोऽनभिधानस्यैवाश्रयणाद् 'घटघटौ" इत्यादावपि तथैवास्तु किं तन्निरासार्थं सूत्रारम्भेणेत्याशयेन भगवता एकशेषप्रकरणं प्रत्याख्यातम् । न चैवं 'पितरौ' इत्यत्र मातुः, 'श्वशुरौ' इत्यादौ श्वश्र्वादेश्च प्रतीतिः कथं स्यादिति वाच्यम । एकशेषारम्भेऽपि तौल्यात् । यः शिष्यते स लुप्यमानार्थाभिधायीति चेत् तर्हि द्विवचनाद्युपाधिविशेषपुरस्कारेण पित्रादिशब्दानामेव मात्रादौ शक्तिर्निरूढल-

क्षणा चेति फलितोऽर्थः। तथा च लोकव्यवहारादेव तद्ग्रहसम्भवे न किञ्चिदनुपपन्नम्। न चैवं 'अग्निचित्' इत्यादौ क्विबादयोऽपि प्रत्याख्यायतामिति वाच्यम्। प्रत्ययलक्षणेन तुगागमप्रातिपदिकसंज्ञाद्यर्थं तदारम्भात्। तदेवं सरूपाणां विरूपाणां च सर्वमेकशेषं प्रत्याचक्षाणेनापि भगवता सरूपसूत्रमात्रं तु शास्त्रीये व्यवहारे संज्ञापरिभाषादिवद्धिनापि सहविवक्षामेकशेषं विधातुं भविष्यतीत्याशयेन "द्विर्वचनेचि" (अष्टा० सू०१-१-५९) इत्यत्र एकशेष इति भाष्येऽभिहितमिति दिक्। आरभ्यमाणे तु सूत्रे यद्यपि षट् पक्षाः सम्भवन्ति तथापि तत्र त्रयो दुष्टा एव त्रयस्तु निर्दोषा इत्यवधेयम्। तथाहि—"पृथक् सर्वेभ्यो विभक्तौ परत एकशेषः"। "एकवचनान्तानां" च "अकृतद्वन्द्वानां वा" "समुदायादेकविभक्तौ वा" "युगपदधिकरणवचने वा" "अनैमित्तिको वा" इति षट् पक्षाः। तत्राद्ये एकशब्दः समानपर्यायस्तथा च वृक्ष स् वृक्ष स् इति स्थिते आद्ययोर्निवृत्तौ स् स् वृक्ष स् इति स्थिते संयोगान्तस्य पदान्तस्य लोप इति व्याख्याने मध्यमस्य सोर्लोपः। संयोगान्तं यत्पदं तदन्तस्येति व्याख्याने तु हल्ङ्यादिलोपः तत्रापि सुतिसीति प्रत्ययैः प्रकृतेराक्षेप इति पक्षे तु न कस्य चिल्लोपः। सर्वथाऽपीष्टरूपं न सिध्यत्येव। आद्यन्तयोर्निवृत्तौ तु स् वृक्ष स् स् इति स्यात्। परयोर्निवृत्तौ तु वृक्ष स् स् इति स्यात्। तथा वृक्षा अनित्या इत्यादावन्तसुप्रत्ययश्रवणं स्यादिति दुष्ट एव प्रथमः पक्षः। द्वितीये तु वृक्ष स् इति सविभक्तिकस्यावस्थानात्, द्विवचनबहुवचनयोरनुत्पत्तिरेकवचनश्रवणञ्च स्यात्। तृतीये तु द्वन्द्वे इति अनुवर्त्य अभिमतवाक्यार्थो यद्यपि लब्धुं शक्यते तथापि अश्व अश्व औ इति स्थिते विभक्त्यपेक्षाच्छेषात्पूर्वमन्तरङ्गत्वात्समासान्तोदात्ते कृते यदि पूर्वशेषस्तर्हि सर्वानुदात्तं पदं स्यात्। परशेषे त्वन्तोदात्तं स्यात्। इष्यते त्वाद्युदात्तम्। अशेः क्वनिव्युत्पादनात्। "यो अश्वेभिर्वहते विभवोह्यश्वाः" इत्यादौ तथैव प्रयोगाच्च। किञ्च ऋक्च ऋक्च ऋचावित्यत्रान्तरङ्गत्वात "ऋक्पूः" (अष्टा०सू०५-४-७४) इति समासान्ते कृते विभक्तेरकारेण व्यवधानादेकशेषो न स्यात्। समासान्तो हि समासभक्तस्तमेव न व्यवदध्यात्। स्वरूपं तु व्यवदध्यात्येव। "समासार्थोत्तरपदस्यावयवः" इति भाष्यमतेऽपि विरूपत्वादेकशेषो दुर्लभः। "विरूपाणामपि समानार्थानाम्" (का० वा०) इति तु यद्यपि प्राप्नोति तथापि पक्षे ऋच इत्यस्य शेषे टापि 'ऋचे' 'ऋचा' इत्याद्यपि स्यात्। एवं पथा पथौ इत्याद्यपि पक्षे स्यात्। अपि च 'करौ' 'कराः' इत्यादि न सिध्येत्। प्राण्यङ्गानां समा-

हार एवेति नियमात्। अपि च 'सर्वेषाम्' इत्यादौ "द्वन्द्वे च" (अष्टा० सू०१-१-३१) "विभाषाजसि" (अष्टा०सू०१-१-३२) इति प्रवर्त्तेत। अत एव विरूपैकशेषो न कृतद्वन्द्वानां तेषामित्यादौ "त्यदादीनि सर्वैः" (अष्टा०सू०१-२-७२) इत्येकशेषे सर्वनामत्वाभावप्रसङ्गात्तदेवं त्रयः पक्षा दुष्टा इति स्थितम्। सिद्धान्तस्तु त्रेधा। तथाहि-राम राम राम इत्यवयवानामिव समुदायस्याप्येका प्रातिपदिकसंज्ञा तावदस्ति। मिलितेनार्थवत्त्वात्। न चार्थवत्समुदायानां समासग्रहणं नियमार्थमित्युक्तेः कथमेतदिति वाच्यम्? नियमस्य सजातीयविषयकत्वेन यत्र समुदाये पूर्वो भागः पदं तत्रैव प्रवृत्तेः। अत एव 'बहुपटवः' इत्यत्र प्रातिपदिकत्वं भवत्येवेत्युक्तं "अर्थवत्" (अष्टा०सू०१-२-४५) सूत्रे। तथा चैकाज्द्विर्वचनन्यायेन समुदायप्रातिपदिकादेव द्विवचनबहुवचनयोरुत्पत्तिः। तावताप्यवयवानां संख्यान्वयेनानुग्रहसम्भवात्। तथा च समुदायादेकविभक्तौ परत एकशेषः। 'रामकृष्णौ' इत्यादौ तु यद्यप्युक्तरीत्या समुदायादेकविभक्तिः प्राप्ता तथापि द्वन्द्वविधावनेकं सुबन्तमित्यस्यानुवृत्त्या बाध्यते। अस्मिन्पक्षे मातृमात्रोरपि एकशेषः प्राप्तः। एकविभक्तावित्यस्यावृत्त्या एवकारस्य चानुकर्षणेन एकविभक्तौ यानि सरूपाण्येवेति व्याख्यानान्न भवति। यद्वा-युगपदधिकरणवचनतायां द्विवचनबहुवचनान्तानामेकशेषः। द्वन्द्वोऽप्येवम्। अजहत्स्वार्थायां हि वृत्तौ "रामकृष्णौ" इत्यादौ पूर्वपदमप्युभावभिधत्ते तावेवोत्तरपदमपि। न चान्यतरवैयर्थ्यम्। परस्परसमभिव्याहारेणैवोभयार्थताध्यवसायात्। तथा च द्वन्द्ववृत्तेः प्रागेकैकार्थतावगमेऽपि वृत्तावुभयाभिधानात्प्रत्येकं द्विवचनाद्युत्पत्तिः। एतमेकशेषवृत्तावपि परार्थाभिधानं वृत्तिरिति सिद्धान्तात्। तथा च रामश्च कृष्णश्चेति लौकिकवाक्यस्यादूरविप्रकर्षेण विग्रहतया प्रदर्शनेऽपि अलौकिकद्वन्द्वैकशेषयोः प्रक्रियावाक्ये राम औ कृष्ण औ इति प्रविशति। तथा च विभक्त्यन्तानामेकशेषोऽपि निर्बाध एव। अथ वा उपक्रम एव यथा व्याख्यातं तद्रीत्या अनैमित्तिक एवैकशेषः। तथा च पक्षत्रयं स्थितं सिद्धान्ते। अत्रेदमवधेयम्-उक्तपक्षत्रयमध्येऽपि समुदायादेकविभक्ताविति पक्षस्तावत् दुष्ट एव मातृमातरावित्यत्रातिप्रसङ्गं वारयितुं एकविभक्तावित्यस्य सरूपाण्येवेत्येतद्विशेषणतया आवश्यकत्वे स्थिते एकशेषविशेषविशेषणत्वायोगात्। आवृत्तौ मानाभावात् फलाभावाच्च। न च 'पयः पयो जरयति' इत्यादिव्यावृत्तिः फलम्। सहविवक्षायामित्यस्य द्वन्द्वग्रहणबलेनावश्यवाच्यत्वात्। अन्यथा 'पयः पयो नयति' इत्यत्र गौणमुख्यक-

र्मणोरेकशेषापत्तेः । 'देवदेवः' इत्यादावतिप्रसङ्गाच्च । प्रत्युत आवृत्त्यो-भयविशेषणत्वे 'भैक्षम्' इति न सिध्येत् । तथा हि भिक्षा ३ आम् अ इति स्थिते "अन्तरङ्गानपि विधीन्बाहिरङ्गोऽपि" इति लुकि कृते लुका लुप्ते प्रत्ययलक्षणविरहादेकशेषो न स्यात् तथा युगपदधिकरणवचन-तापक्षोऽपि दुर्बलः । जहत्स्वार्थायां वृत्तौ तदयोगात् । तथा च द्वितीये भाष्यम् । सेयं युगपदधिकरणवचनता दुःखा च दुरुपपादा चेति । तच्च तत्रैव स्फुटीकरिष्यामः । तस्मात्प्रागुक्तषट्पक्षीमध्येऽनैमित्तिकत्वपक्ष एव प्रबलः । इतरे पञ्चापि हेया इति तदभिप्रायकतयैव सूत्रं व्याख्यात-म् । 'पचति' इत्यादौ तु धातोर्द्वन्द्वादिप्रसक्तिरेव नास्ति यद्वाक्यशेषो मृग्येत । न च मिलिताल्लडादिप्रसङ्गः । धातोरित्येकत्वस्य विवक्षितत्वा-त् । न चैकस्मादेव कर्तृद्वये लद्वयं कर्तृबहुत्वे लकारबहुत्वञ्च स्यादिति वाच्यम् । इष्टापत्तेः । "लस्य" (अष्टा०सू०३-४-७७) इत्यत्र जातिवि-वक्षया लद्वयस्य तसादयः बहूनान्तु झिथादय इति सुवचत्वात् । वस्तु-तस्तु "वर्तमाने लट्" (अष्टा०सू०३-२-१२३) इत्यादौ व्यक्तिनिष्ठैकत्वस्य विवक्षणान्न कश्चिद्दोषः । अत एव 'वृक्षं वृक्षं सिञ्चति' इत्यादौ नानैक-त्वाभिधानार्थं विभक्तिपरम्परा नेति दिक् । 'गर्गौ' इत्यादावपि पितुरे-कत्वात्प्रकृतिरेकाप्रत्ययास्तु बहवः । सर्वेषां प्रकृत्यर्थान्विताभिधायित-या "विरूपाणामपि समानार्थानाम्" (का०वा०) इति गर्गयशब्दस्य शेषः । न च पक्षे यशब्दमात्रस्यापि तदापत्तिः । विकल्पस्याष्टदोषदुष्ट-त्वात् । न च विनिगमकाभावः । "अणुरपि" इति न्यायेन स्पष्टप्रतिपत्ति-सामर्थ्यस्यैव विनिगमकत्वात् । यद्वा—यञ इत्यपि व्यक्त्यैक्यं विवक्षि-तम् । प्रतिप्रधानञ्च गुणावृत्तिः । गार्ग्यशब्दत्रयस्य चैकशेषः । उभयथा यञन्तं यद्बहुष्विति लुक् । न चैवं काश्यपस्य प्रतिकृतिः काश्यपः । ततः प्रतिकृतीनां सहविवक्षायां 'काश्यपाः' इत्यत्राऽपि अजन्तं बहुषु वर्त्तत इति लुक् स्यादिति वाच्यम् । "यस्कादिभ्यो गोत्रे" (अष्टा०सू० २-४-६३) इत्यतो गोत्र इत्यनुवृत्तेः । यद्यप्यपत्याधिकारादन्यत्र लौकिकं गोत्रं तथा हि "ऋषिप्रजन एव गोत्रं विवक्षितम्" इति "स्त्रीपुंसाभ्यां नञ्स्नञौ" (अष्टा०सू०४-१-८७) इति सूत्रे कैयटः । तेन 'पौत्राः' 'दौहित्राः' इत्यत्र न लुगित्यवधेयम् । एतेन संख्य-या कर्मभेद इत्यस्य व्युत्पादनाय प्रवृत्ते पृथक्त्वनिवेशात्संख्यया कर्मभे-दः स्यादित्यधिकरणे "सप्तदश प्राजापत्यान्" इत्युदाहृत्य

"किं त्वयं ताद्धितान्तानामेकशेषः कृतो भवेत् ।
किं वा कृतैकशेषाणां पश्चात्तद्धितसङ्गतिः ॥"

इति वदतां भट्टानां ग्रन्थोऽपि व्याख्यातः। ण्यप्रत्ययान्तानामेकशेषः। ण्यप्रत्ययान्तानामेव वेति तदाशयात्। कृतैकशेषाणां प्रजापतिर्देवता येषामिति कृतैकशेषयच्छब्देनोपस्थापितानां तद्धितसङ्गतिस्तद्धितवाच्यता। तथा च मिलितानां देवतासम्बन्धं बोधयितुं लौकिकविग्रहे येषामिति निर्देशः। वृत्तौ तु देवतावद्वाचकस्य तद्धितस्यैकशेष इति मिलितेषु पशुषु देवतान्वयादेको यागः। अग्नीषोमीय इत्यादौ मिलितयोर्देवतायामभेदान्वये यथेत्युदाहृतवार्त्तिकस्योत्तरार्धेऽर्थोऽध्यवसेयः। युक्तं चैतत्। प्रत्ययार्थबहुत्वं हि प्रत्यक्षमुपलभ्यते। तत्कृतं चैकशेषत्वमिति न प्रकृतौ भवेदित्युत्तरवार्त्तिकस्यानुगुण्यात्। स्यादेतत्-प्रत्ययार्थस्यैकदेशे प्रकृत्यर्थो विशेषणम्। अभेदश्चेह सम्बन्ध आग्नेयादावियं स्थितिरिति पक्षे देवतावतां साहित्यं लभ्यते न तु सहितानां देवतात्वं देवतायां प्रदेये च खण्डशः शक्तिरिष्यत इति पक्षेऽपि एकप्रत्ययोपात्तदेवतान्वयस्यान्तरङ्गत्वादेवमेवेति चेत्, सत्यम्। प्रदेये एव शक्तिः प्रकृतेस्तु प्रत्ययसमभिव्याहाराद्देवतायां निरूढलक्षणेत्याशयेनाऽयं ग्रन्थो नेयः। केवलाद्देवतावाची तद्धितोऽग्नेः समुच्चरन्नित्यादिग्रन्थास्तु मतान्तराभिप्रायेण नेयाः। न चैवमपि विरूपैकशेषपक्षे समानार्थतालाभार्थं प्रकृत्यर्थान्वयस्य प्राथमिकत्वं स्वीकार्यमेवेति वाच्यम्। यथ्य इत्येषामेकविभक्तिं प्रति प्रकृतित्वाभावेऽपि विभक्तौ परतः सारूप्यसम्भवेन सरूपैकशेष एवेत्याशयात्। प्रकृतमनुसरामः। स्वरभिन्नानां यस्योत्तरः स्वरविधिः स शिष्यत इति वक्तव्यम्। तेन पूर्वोदाहृते 'हरिण्यौ' इत्यत्र ङीबन्तस्य पित्त्वादनुदात्तप्रत्ययकस्य शेषः। न तु जातौ पुंयोगे वा यो ङीष् तदन्तस्य प्रत्ययस्वरेणान्तोदात्तस्य। ननु "वर्णादनुदात्तात्" [अष्टा०सू०४-१-३९] इति ङीषन्तस्यापि उदात्तनिवृत्तिस्वरेणान्तोदात्तता स्यादेवेति चेत्, भ्रान्तोसि। उदात्तनिवृत्तेरेवाभावात्। "वर्णानान्तणतिनितान्तानाम्" (फि०सू०-३३) इति फिट्सूत्रेण प्रकृतेरनुदात्तत्वात्। तदुक्तं वर्णादनुदात्तादिति। तथा मीमांसते इति 'मीमांसकः' लित्स्वरेण मध्योदात्तः। मीमांसामधीते मीमांसकः। "क्रमादिभ्यो वुन्" (अष्टा०सू०४-२-६१)। नित्स्वरेणाद्युदात्तः। उभयोः सहविवक्षायामाद्युदात्तः। उभयोः सहविवक्षायामाद्युदात्तः शिष्यते नित्स्वरस्य परत्वात्। अक्षौ अक्षाः। "अक्षस्यादेवनस्य" (फि०सू०३५) इति फिट्सूत्रेण शकटाक्षे आद्युदात्तः। देवनाक्षे तु "फिषः"(फि०सू०१) इत्यन्तोदात्तः। यद्वा-अशेर्देवने इति प्रत्ययान्तत्वादन्तोदात्तः। शकटावयवबिभीतकयोस्तु घञन्तत्वादाद्युदात्तः। अत एव "प्राचेयाम" इति

सूक्ते अक्षकितवनिन्दाप्रस्तावअक्षस्याहमेकपरस्येत्यादयाऽक्षेशब्दा ब-हवोन्तोदात्ता एव प्रयुज्यन्ते । 'तस्य नाक्षः' इत्यादौ तु रथावयवपर-त्वादाद्युदात्तः । उभयोः सहविवक्षायान्तु आद्युदात्तस्य शेषः । इन्द्रिय-वाचिना क्लीबेन सहविवक्षायान्तु "नपुंसकमनपुंसकेन" (अष्टा०सू०१-२-६९) इति अक्षमक्षाणीत्याद्यूह्यम् । नन्वचेतनानां देवतानां कथं पुंन-पुंसकादिव्यवस्थेति चेत्, उच्यते । लोकप्रसिद्धमवयवसंस्थानविशेषा-त्मकलिङ्गं तावन्न व्याकरणे आश्रीयते । दारान् इत्यादौ नत्वाभावप्रस-ङ्गात् । तटस्तटीतटमित्यादौ यथायथं लिङ्गात् त्रितयनिबन्धनकार्याणा-मसिद्धिप्रसङ्गाच्च । किन्तु पारिभाषिकमेव लिङ्गत्रयम् । तच्च केवला-न्वयि । अयमर्थः इयं व्यक्तिरिदं वस्त्वितिशब्दानां सर्वत्राप्रतिबद्धप्रस-रत्वात् । तत्र कश्चिच्छब्दः एकस्मिन्नेव लिङ्गे शक्तः कश्चित्तु द्वयोः क-श्चित् त्रिष्विति लिङ्गानुशासनादिभ्यो निर्णेयम् । कुमारब्राह्मणा-दिशब्दास्तु लौकिकपुंस्त्वविशिष्टे शास्त्रीये पुंस्त्वे शक्ताः लौकिकस्त्री-त्वविशिष्टे च शास्त्रीयस्त्रीत्वे । कथमन्यथा "कुमारी' 'कुमारः' इत्यादयः प्रयोगा व्यवतिष्ठेरन् । "करेणुरिभ्यां स्त्रीनेभे" (अको०३-३-५२) इत्यम-रस्याप्ययमेवार्थः । नन्वेवं पशुनेतिपुंस्त्वं विवक्षितमिति मीमांसको-द्घोषः कथं योज्यः । पारिभाषिकस्याऽव्यावर्त्तकतया तद्विवक्षाया अकि-ञ्चित्करत्वात् । लौकिकस्य तु पशुशब्दादप्रतीतेरिति चेत्, सत्यम् । "छागो वा मन्त्रवर्णात्" इति षष्ठान्त्याधिकरणन्यायेन पुंस्त्वस्य नियमो बोध्यः । छागशब्दस्य लौकिकपुंस्त्वविशिष्टपारिभाषिके शक्तत्वादिति दिक् । तच्च जातित्र-[illegible]त्येके । उक्तं च हरिणा--

"तिस्रो जातय एवैताः केषां चित्समवस्थिताः ।
अविरुद्धा विरुद्धाभिर्गोमनुष्यादिजातिभिः" ॥ इति ।

भाष्ये तु "स्त्रियाम्' (अष्टा०सू०४-१-३) इतिसूत्रे प्रकारान्तर-मुक्तम् ।

"संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः ।
संस्त्याने स्त्यायतेर्ड्ट् स्त्रीसूतेः सप्रसवे पुमान् ॥
उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥" इति ।

अयमर्थः-संस्त्यानं-स्त्री । सत्वरजस्तमोलक्षणानां गुणानामपचयः । प्रसवो गुणानामुपचयः । स एव पुमान् । सूतेर्धातोः सप्सकारस्य प-कारादेश इत्यर्थः । सूङो डुमसुन्निति माधवः । यत्तु उज्ज्वलदत्तेन या-तेर्डुमसुन्नित्युक्तम् । यच्च "पुंसोसुङ्" (अष्टा०सू०७-१-८९) इति सूत्रे न्यासरक्षिताभ्यां "पुनातेर्मकसुन् ह्रस्वश्च" इति सूत्रं पठितं तदुभयमपि

आख्यानानुगुणन्तयोरुपचयापचययोरभावे सति यदुभयोरन्तरसदृशं तन्नपुंसकम्। "नभ्राणनपात्" (अष्टा०सू०६-३-७५) इति निपातनादिति भावः। तथा च स्थितिमात्रं नपुंसकम्। अत एवाविर्भावतिरोभावयोरपि स्थितिसामान्यविवक्षासम्भवान्नपुंसकलिङ्गसर्वनामेति सिद्धान्तः। स्त्रीपुमान्नपुंसकमितिशब्दाश्च शुक्लादिशब्दवद्धर्मे धर्मिणि वर्त्तन्त इत्यवधेयम्। स्वकृतान्त इति। "कृतान्तौ यमसिद्धान्तौ" (अ०को०३-३-६४) इत्यमरः। वैय्याकरणसिद्धान्ते इत्यर्थः।

वृद्धोयूनातल्लक्षणश्चेदेव विशेषः (अष्टा०सू०१-२-६५)। वृद्धो-गोत्रम्। "अपत्यमन्तर्हितं वृद्धम्" इति पूर्वाचार्यैः सूत्रितत्वात्। यूना सहोक्तौ वृद्धः शिष्यते गोत्रयुवप्रत्ययमात्रकृतञ्चेतयोर्वैरूप्यं कृत्स्नं स्यात्। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। तल्लक्षणं किम्? भागवित्तिभागवित्तिकौ। कृत्स्नं किम्?। गार्ग्यवात्स्यायनौ।

स्त्री पुंवच्च (अष्टा०सू०१-२-६६)। यूना सह विवक्षायां वृद्धा स्त्री शिष्यते तदर्थश्च पुंवद्भवति। स्त्रीत्वस्य वैरूप्यकारणस्याधिक्यात्पूर्वेणाप्राप्तौ वाच्यम्, पुंवदिति विधातुञ्च। गार्गी च गार्ग्यायणौ च गर्गाः। अस्त्रियामित्यनुवर्त्तमाने "यञञोश्च" (अष्टा०सू०२-४-६४) इति लुक्। दाक्षी च दाक्षायणश्च दाक्षी।

पुमान् स्त्रिया (अष्टा०सू०१-२-६७)। सरूपाणां मध्ये स्त्रिया सहोक्तौ पुमान् शिष्यते स च पुंवदेव स्यात्तल्लक्षण एव विशेषश्चेत्। सम्पृक्ता च संपृक्तं च सम्पृक्तौ। "यः शिष्यते स लुप्यमानार्थाभिधायि" इति सिद्धान्तात्स्त्रीत्वस्यापि सत्वेन टाप् प्राप्तः पुंवदेवेत्यनुवृत्तेर्न भवति। हंसश्च वरटा चेत्यादौ हंसजातिसाम्येऽपि शब्दवैलक्षण्यस्य स्त्रीत्वपुंस्त्वमात्रप्रयुक्तत्वादेकशेषः प्राप्तः रूपग्रहणानुवृत्त्या वार्यते तदनुवृत्तौ च "भ्रातृपुत्रौ स्वसृदुहितृभ्याम्" (अष्टा०सू०१-२-६८) इति सूत्रं ज्ञापकम्। अन्यथा एकापत्यत्वस्य अपत्यत्वस्य वा साम्यात्तत्राऽपि "पुमान् स्त्रिया" (अष्टा० सू०१-२-६७) इत्येव सिध्येत्। नन्वेवमपि गौरीयं गौश्चायं तयोः सहोक्तौ एतौ गावौ इति नियमतो न स्यात्। नैष दोषः। इयमयमिति पदान्तरगम्येऽपि तल्लक्षणविशेषे "पुमान् स्त्रिया" (अष्टा०सू०१-२-६७) इत्यस्य प्रवृत्तिसम्भवादिति कैयटः। स्यादेतत्—तल्लक्षणविशेषरूपो विशिष्टाभावोऽत्र हेतुः। स च किन्नरैरप्सरोभिश्च क्रीडद्भिरित्यादौ विशेषणाभावात्। 'गावौ' इत्यत्र तु विशेष्याभावादित्यन्यदेतत्। तथा च किमर्थं पदान्तरगम्यत्वपर्यन्तमुक्तमिति चेत्, उच्यते। नेह विशिष्टाभावः प्रयोजकः किन्तु तन्मात्रप्रयुक्तो विशेषः प्रयोजकः। अन्यथा 'भागवि-

त्तिभागवित्तिकौ' इत्यत्र "वृद्धोयूना" (अष्टा सू०१-२-६५) इति स्यात्। इह हि कुत्सासौवीरत्वाभ्यां प्रयुक्तेऽपि ठकि युवप्रयुक्ततास्त्येवेति विशिष्टाऽभावो निर्बाधः। एवमिन्द्रेन्द्राण्यावित्यत्र प्रकृतसूत्रं प्रवर्त्तेत। 'हिमहिमान्यौ' इत्यादौ चोत्तरसूत्रमिति दिक्। नन्वेवं गार्ग्यवात्स्यायनयोरतिप्रसङ्ग इति चेत्, योसौ विशेषः स तल्लक्षणश्चेदिति वचनव्यक्त्या पाठादुद्देश्यविधेयान्वयलाभात्। एवञ्च कृत्स्नस्य विशेषस्य तन्मात्रप्रयुक्तत्वं फलितम्। तेन पदान्तरपर्यन्तानुसरणं कैयटादीनां युक्तमेवेति दिक्। तदितरप्रयुक्तविशेषविरहरूपविशिष्टाभावविवक्षायान्तु सर्वं सुस्थम्। एतेन सा च स च ताविति व्याख्यातम्। अनैमित्तिकस्यैकशेषस्य तद् तद् इत्यवस्थायां प्रवृत्तावपि पुंस्त्वनियमस्यैतेन लभ्यत्वात्। ब्राह्मणवत्सश्च ब्राह्मणीवत्सा चेत्यत्र तु न भवति। स्त्रीपुंसयोः सहविवक्षायामेकशेषः। सहविवक्षा च प्रधानयोरेव। तेन यत्र प्रधानयोरेव स्त्रीपुंसयोर्विशेषप्रयोजकता तत्रैव एकशेषप्रवृत्तेः इह वा प्रधानकृतस्याऽपि विशेषस्य सत्त्वात्। एवकारानुवृत्तेर्नेह-"इन्द्रेन्द्राण्यौ'। इह हि पुंयोगकृतोऽपि विशेषः। 'आरण्यारण्यान्यौ'। इह महत्वकृतोऽपि विशेषः। पुमानिति किम्? प्राक् च प्रतीची च प्राक्प्रतीच्यौ स्तः। प्रपूर्वादञ्चेः क्विन्नन्तादस्तातेरञ्चेलुगिति "तद्धितश्चासर्वविभक्तिः" (अष्टा०सू०१-१-३८) इत्यव्ययत्वादलिङ्गः प्राक्शब्दः।

भ्रातृपुत्रौ स्वसृदुहितृभ्याम् (अष्टा०सू०१-२-६८)। यथासंख्यं शिष्येते। भ्राता च स्वसा च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ।

नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् (अष्टा०सू०१-२-६९)। अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च वा एकवत् स्यात्। तल्लक्षण एव चेद्विशेषः। शुक्लः कम्बलः, शुक्ला बृहतिका, शुक्लं वस्त्रं, तदिदं शुक्लम्। तानीमानि शुक्लानि। अनपुंसकेनेति किम्? शुक्लं शुक्लञ्च शुक्ले। एकवच्चेति न भवति। अस्येति किम्? उत्तरसूत्रे एकवद्भावानुवृत्तिर्मा भूत्।

पिता मात्रा (अष्टा०सू०१-२-७०)। मात्रा सहोक्तौ पिता वा शिष्यते। पितरौ। मातापितरौ। अयं योगः शक्योऽकर्त्तुम। तथाहि-"यः शिष्यते स लुप्यमानार्थाभिधायि" इतिन्यायेनास्मिन् विषये पितृशब्द एव मातरमपि वक्तीति निर्विवादम्। तत्र च निरूढलक्षणा वा शक्तिरेवेत्यन्यदेतत्। न च द्वन्द्वनिवृत्त्यर्थं सूत्रम। तस्याऽपि पक्षे इष्टत्वात्। एवं "श्वशुरः श्वश्र्वा"(अष्टा०सू०१-२-७१)इत्यत्रापि बोध्यम्। एतेन

"पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा' (या०स्मृ०१३५)।

इत्यस्य व्याख्यावसरे विग्रहे क्रमप्रतीतेः "प्रथमं माता धनभाक् तदभावे तु पिता" इति विज्ञानेश्वरग्रन्थश्चिन्त्यः। एकपदजन्ये बोधे क्रमाभावात्। सूत्रारम्भेऽप्येवमेव। प्रत्युत मुख्यार्थस्य प्रथमप्रतीतिरुचिता। न तु लक्ष्याया मातुः। यत्तु विग्रहे क्रमप्रतीतिरिति, तन्न। वृत्तिविग्रहयोः सहाप्रयोगात्। वृत्तेरेवेह व्याख्येयश्लोके प्रयोगात्। किं च वृत्तावपि प्रयुक्तायां विग्रहोऽपि स्मर्यतां कथञ्चित्। न तु तत्रापि पूर्वापरिभावे किञ्चिन्नियामकमस्ति तस्मात्क्रमनिर्णये प्रमाणान्तरं मृग्यम्।

श्वशुरः श्वश्र्वा (अष्टा०सू०१-२-७१) श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते। श्वशुरौ। श्वश्रूश्वशुरौ। श्वश्वेति सौत्रनिर्देशादेव प्रत्ययान्तस्याऽपि प्रातिपदिकत्वम्। अन्यथा हि "प्रकृतिवदनुकरणम्" इति ऊडन्ततृतीया न स्यात्।

त्यदादीनि सर्वैर्नित्यम् (पा०सू०१-२-७२)। सर्वैस्त्यदादिभिरन्यैश्च सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते। प्रत्यासत्तेस्त्यदादिभिरेव सहोक्तावित्यर्थो मा भूदिति सर्वग्रहणम्। स च देवदत्तश्च तौ। द्वन्द्वनिवृत्त्यर्थं वचनम्। 'तौ' इति तु 'सरूप' (अष्टा०सू०१-२-६४) सूत्रेणैव सिद्धं देवदत्तस्यापि तच्छब्देनैव निर्देष्टुं शक्यत्वात्। त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते शब्दपरविप्रतिषेधात्। स च यश्च यौ। "पूर्वशेषोऽपि दृश्यते" इति भाष्यम्। स च यश्च तौ। अहं च भवांश्चावाम्। त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि (का०वा०)। आद्यादित्वात्तसिः। त्यदादीनां शेषे सहविवक्षितो योऽर्थः पुमान् यश्च नपुंसकं तद्वशेन लिङ्गवचनानि भवन्तीत्यर्थः। सा च देवदत्तश्च तौ। तच्च देवदत्ता च यज्ञदत्ता च तानि। पुंनपुंसकयोस्तु सहविवक्षायां नपुंसकवशेन व्यवस्थापरत्वात्। तच्च देवदत्तश्च ते। अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम् [का० वा०]। कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। अर्द्धं पिप्पल्यास्तत्। अर्धपिप्पली च सा अर्धपिप्पल्यौ ते। इह "परवल्लिङ्गम्" (अष्टा० सू०२-४-२६) इति समासार्थस्य लिङ्गाऽतिदेशे कृते तद्विशेषणस्य सर्वनाम्नस्तदेव लिङ्गम्। भाष्ये तु एतत्सूत्रं प्रत्याख्यातम्। यदाह- सामान्यविशेषवाचिनोश्च द्वन्द्वाभावात्सिद्धमिति। विशेषसन्निधौ हि प्रयुक्तः सामान्यशब्दो विशेषान्तरे वर्त्तते। ब्राह्मणा आगता वसिष्ठश्चेति यथा। तथाविधे विषये वाचनिकोऽयं द्वन्द्वनिषेधः। तेनैव तद्देवदत्ताविल्यादिनिवृत्तेः सिद्धत्वादयमेकशेषो न वक्तव्य इत्यर्थ इति कैयटः। कथं तर्हि 'शूद्राभीरं' 'गोबलीवर्दं' 'तृणोपलम्' इति, अत्राहुः-आभीरा जात्यन्तराणि।

"ब्राह्मणादुग्रकन्यायामाभीरो नाम जायते ।
माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात्" ॥ इति स्मृतेः ॥

गोशब्दस्तु स्त्रीगवीपरोऽयं स्त्रीलिङ्गः । अपामुलप इति नामधेयमिति । अनित्योयं निषेधः । "प्राच्यभरतेषु (अष्टा०सू०प०२-४-६६) इतिसूत्रनिर्देशादलिङ्गात् । तेन "प्रमाणप्रमेय" इत्यादिषु द्वन्द्वः सिद्धः । एतेन—

"अविद्या तच्चितो योगः षडस्माकमनादयः ।

मत्स्यादौ तद्विशेषयोः" इत्यादिप्रयोगा व्याख्याताः । सूत्रारम्भे त्वेतेन सिद्धयेयुरेवेति सहृदयैराकलनीयम् ।

ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री (अष्टा०सू०१-२-७३) । एषु सहविवक्षायां स्त्रीशिष्यते । "पुमान् स्त्रिया" (अष्टा०सू०१-२-६७) इत्यस्यापवादः । गाव इमाः । ग्राम्यग्रहणं किम् ? रुरव इमे । पशुग्रहणं किम् ? ब्राह्मणाः । सङ्घेषु किम् ? एतौ गावौ चरतः । एकशेषस्यानेकविषयत्वे लब्धे सङ्घग्रहणसामर्थ्याद् बहूनां सङ्घो गृह्यते । अतरुणेषु किम् ? वत्सा इमे । बर्करा इमे । अनेकशफेष्विति वक्तव्यम् ( का० वा० ) अश्वा इमे । गर्दभा इमे । एकशफत्वात्पुंशेष एव । "शफं क्लीबे खुरः पुमान्" ( अ० को० २-८-४९ ) इत्यमरः । हरदत्तस्तु "शफाः खुराः" इति प्रायुङ्क । तत्र शफशब्दस्य पुंस्त्वे मूलान्तरं मृग्यम् । उष्ट्राणां त्वारण्यत्वात् स्त्रीशेषाभावः ।

॥ इति श्रीशब्दकौस्तुभे प्रथमाध्यायस्य द्वितीये पादे
तृतीयमाह्निकं पादश्च समाप्तः ॥

भूवादयो धातवः (अष्टा०सू०१-३-१) । क्रियावाचिनो गणपठिता धातुसंज्ञाः स्युः । धातुत्वाल्लडादयः । भवति, एधते । क्रियावाचिनः किम् ? 'याः पश्य' इत्यादौ धातुत्वं मा भूत । सति हि तस्मिन् "आतो धातो": (अष्टा०सू०६-४-१४०) इत्यालोपः स्यात । न च "या प्रापणे" (धा०सू०१०४९) इत्याद्यर्थनिर्देशो नियामकः । तस्यापाणिनीयत्वात् । भीमसेनादयो ह्यर्थं निर्दिदिशुरिति स्मर्यते । पाणिनिस्तु "भ्वेध" इत्याद्यपाठीदिति भाष्यवार्त्तिकयोः स्पष्टम् । किञ्च अभियुक्तैरपि कृतोर्थनिर्देशो नार्थान्तरनिवृत्तिपरः सुखमनुभवतीत्यादावधातुत्वप्रसङ्गात् । उक्तञ्च--

"क्रियावाचित्वमाख्यातुमेकैकोर्थः प्रदर्शितः ।
प्रयोगतोऽनुसर्त्तव्या अनेकार्था हि धातवः" ॥ इति ।

अत एव "कुर्द खुर्द गुर्द गुद क्रीडायामेव" (धा०सू०२१-२२-२३-२४)इत्येवकारः पठ्यते "श्लिष आलिङ्गने" (अष्टा०सू०३-१-४६) इत्यादिसूत्राण्यपीह ज्ञापकानि। तस्मात् 'याः पश्य'इत्यादिव्यावृत्तये क्रियावाचिन इति विशेषणं स्थितम्। गणपठिता इति किम्? हिरुक्, पृथक्, ऋते, इत्याद्यव्ययानां 'शिश्ये' इति भावार्थतिङन्तस्य च मा भूत्। न चैवं सौत्रेष्वव्याप्तिः। स्तम्भ्वादीनामुदित्करणेन धात्वधिकारीयकार्यविधानेन च धातुत्वानुमानात्। न चैवमपि लौकिकानां चुलुम्पादीनामसङ्ग्रहापत्तिः। भ्वाद्यन्ते यजादिसमाप्त्यर्थं वृत्करणेऽपि भ्वादीनामसमाप्तेः। धातुवृत्तिषु तथैव व्याख्यातत्वात्। "कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम्" (का०वा०) इति कात्यायनवचनेनाप्येतल्लभ्यते। एवं भ्वाद्यन्ते वृत्करणस्य पुषादिसमाप्त्यर्थतया दिवादीनामपरिसमाप्तेः 'भृश्यति'इत्यादिसिद्धिः। वस्तुतस्तु चुरादीनामन्ते "बहुलमेतन्निदर्शनम्" इति गणसूत्रेण सकलेष्टसिद्धिः। तद्धि धातुवृत्तिषु द्वेधा व्याख्यातम्। भ्वादिगणपठितेभ्योऽपि णिच् प्रयोगानुसाराज्ज्ञेय इति। दशगणीपाठो दिङ्मात्रप्रदर्शनार्थस्तेनान्येऽपि शिष्टप्रयुक्ता धातवः सङ्ग्राह्या इति च। स्यादेतत्-भूरादिर्येषामिति विग्रहे यणि सति भ्वादय इति स्यात्। क्रियावाचित्वञ्च सूत्रानारूढमेवेति। उच्यते-"भवनं भूः क्रियासामान्यम्। वदन्तीति वादयः वदेरौणादिक इञ्" इति भाष्यम्। यद्यपि "वसि वपि यजि राजि व्रजि सदि हनि वाशि वादि वारिभ्य इञ्" [उ०सू०५७४] इत्यौणादिकसूत्रेण वदेर्ण्यन्तादिञ् विहितस्तथापि बहुलग्रहणात् केवलादपि भविष्यतीति न्यासकारादयः। वस्तुतस्तु "वदन्तीति वादयः" इति भाष्यमर्थकथनपरम्। ण्यन्तादेव त्विञ्। न चेह ण्यर्थानन्वयः। पचतिपाचयत्योस्तुल्यार्थत्वात्। भुवो वादय इति विग्रहः। तथाच क्रियावाचित्वं तावत्सूत्रारूढम्। निरनुबन्धानां शब्दिकरणानां भूप्रभृतीनां पाठसामर्थ्यात्पठितानामेव संज्ञेत्यनुमीयते। "सनाद्यन्ता धातवः" (अष्टा०सू०३-१-३२)इति सूत्रारम्भाच्च। अथ वा भूरादिर्येषामिति विग्रहः। निपातनाद् वुगागमः महासंज्ञाकरणं तु "दधाति क्रियाम्" इति धातवः इत्यन्वर्थसंज्ञाविज्ञानार्थम्। यद्वा-भूश्च वाश्चेति द्वन्द्वः। आदिशब्दयोस्तु व्यवस्थाप्रकारवाचिनोरेकशेषः। ततो भूवौ आदी येषामिति बहुव्रीहिः। भूप्रभृतयो वासदृशाः क्रियावाचिन इति यावत्। अथ वा वाङ्त्ययमादिर्येषामिति बहुव्रीहिः वाङ्त्यस्यादय इति तत्पुरुषः। तयोरेकशेषे स्वरभिन्नानामिति बहुव्रीहिशेषः। भुवो वादय इति षष्ठीतत्पुरुषः। वाच्यवाचकभावश्च षष्ठ्यर्थः। "द्विर्वचनेचि"

(अष्टा०सू०१-१-५९) इतिवत्तन्त्रावृत्त्यादिना वा उभयलाभः। सर्वथापि क्रियावाचिनो भ्वादय एव धातव इति स्थितम्। का पुनः क्रिया? उच्यते, करोत्यर्थभूता उत्पादनापरपर्याया उत्पत्त्यनुकूलव्यापाररूपा भावनैव क्रिया। तथाहि—अभवतो गगनादेरक्रियमाणतया भवतश्च घटादेः क्रियमाणतया भवत्यर्थकर्त्तुः करोतिकर्मत्वम्। तथा च करोत्यर्थकर्त्तुर्भवितृप्रयोजकतया भवतेरुत्पत्त्यर्थाप्रयोजकव्यापारे णिजुत्पद्यमानः करोत्यर्थमवलम्बते। उक्तञ्च—

"करोतिक्रियमाणेन न कश्चित्कर्मणा विना।
भवत्यर्थस्य कर्त्ता च करोतेः कर्म जायते॥
करोत्यर्थस्य यः कर्ता भवितुः स प्रयोजकः।
भविता तमपेक्ष्याथ प्रयोज्यत्वं प्रपद्यते॥
प्रयोज्यकर्तृकैकान्तव्यापारप्रतिपादकाः।
ण्यन्ता एव प्रयुज्यन्ते तत्प्रयोजककर्मसु॥
तेन भूतिषु कर्तृत्वं प्रतिपन्नस्य वस्तुनः।
प्रयोजकक्रियामाहुर्भाविनां भावनाविदः॥" इति॥

सा च सकलधातूनां वाच्या। अत एव 'किं करोति'? इति प्रश्ने 'पचति' 'पठति' इत्याद्युत्तरं सङ्गच्छते। न चासौ मीमांसकोक्तरीत्या प्रत्ययवाच्यैवास्तामिति वाच्यम्। भोक्तव्यमित्यादावाख्यातं विनापि तत्प्रतीतेः। तथा च तत्रापि कारकापेक्षा दृश्यते। अस्ति च तत्रापि करोतिसामानाधिकरण्यं, किं कर्त्तव्यं, भोक्तव्यम्, किं कृतवान्भुक्तवानिति। किञ्च, 'भावयति घटम्' इति वत् त्वन्मते 'भवति घटम्' इत्यपि स्यात्' तुल्यार्थत्वात्। दृष्टान्ते कर्त्तुः कुम्भकारस्य व्यापारं णिजाचष्टे, दार्ष्टान्तिके त्वाख्यातप्रत्ययः। ननु प्रयोजकव्यापारो णिजर्थः, कर्तृव्यापारस्त्वाख्यातार्थः। इति वैषम्यमिति चेत्, कारकचक्रप्रयोक्तुः कर्तृत्वे घटस्यातथात्वात्। यदि तु—

"धातुप्रोक्तक्रिये नित्यं कारके कर्तृतेष्यते"

इतिभर्तृहरिप्रतिपादितरीत्या प्राधान्येन धातूपात्तव्यापारत्वरूपं कर्तृत्वं तवापि सम्मतं कस्तर्हीदानीमाख्यातार्थः। व्यापारस्य धातुनैवाभिहितत्वात्। अपि च, धातोः सकर्मकाकर्मकत्वविभाग उच्छिद्येत। 'अकर्मकाच्च' (अष्टा०सू०१-३-२६) इत्यादिसूत्राणि च विरुध्येरन्। ननु सिद्धान्तेऽपि क्रियायाः कर्मापेक्षानियमात्कथमकर्मकतेति चेत्, न, फलव्यापारयोः सामानाधिकरण्यवैयधिकरण्याभ्यां सकर्मकाकर्मकाविभागस्य वक्ष्यमाणत्वात्। किञ्च, 'ज्योतिष्टोमयाजी' इत्यादौ "कर-

णे यजः" (अष्टा०सू०३-२-८५) इति णिनिरस्मत्पक्षे सङ्गच्छते। धातुत्वेन धातूपात्तां भावनां प्रति यजित्वेन तदुपात्तस्यांशान्तरस्य करणत्वात्। पच्यादयो हि धातुत्वेन भावनामाहुः। विक्लित्याद्यंशान्तरे तु पाचत्वादिना प्रातिस्विकरूपेणाहुः। तच्चांशान्तरभावनां प्रति प्रायेण भाव्यतया सम्बध्यते। 'ज्योतिष्टोमयाजी' इत्यादौ तु करणतया 'ज्योतिष्टोमाख्येन यागेन स्वर्गं भावितवान्" इत्यर्थप्रतीतेः। स्पष्टं चेदं णिनिविधौ हरदत्तग्रन्थे। एतेन "द्व्यर्थः पचिः" इति भाष्यं व्याख्यातम्। भट्टिश्चाह—

विभज्यसेनां परमार्थकर्मा सेनापतींश्चापि पुरन्दरोऽथ।
नियोजयामास स शत्रुसैन्ये करोतिरर्थेष्विव सर्वधातून्" इति।

ननु क्रियाया धात्वर्थत्वे 'पचति' इत्यादौ एककर्तृका वर्तमाना पचिक्रियेति क्रियाविशेष्यको बोधो न स्यात्। प्रत्ययार्थं प्रति प्रकृत्यर्थस्य विशेषणताया औपगवादौ क्लृप्तत्वादिति चेन्न, "प्रत्ययार्थः प्रधानम्" इति ह्युत्सर्गः स चेह त्यज्यते। "क्रियाप्रधानमाख्यातम्" इति स्मरणात्। "पाचिका" इत्यादौ स्त्रीत्वस्य विशेषणत्वाभ्युपगमाच्च। प्रत्युत तवैव 'पचति' इत्यादावनुपपत्तिः। 'पचन्तं तं पश्य' इत्यादौ शतृशानचोः कर्तृप्राधान्यस्य सर्वसम्मततया तिङ्क्ष्वपि तथात्वापत्तेः, शत्रादीनां तिङाञ्च लादेशत्वस्याविशिष्टत्वात्, आदेशानाञ्च स्थानिस्मारकत्वे स्थान्यर्थाभिधायित्वे वार्थैक्यध्रौव्यात्। अत एव हि युष्मदि समानाधिकरणे मध्यमः, अस्मद्युत्तमः, इत्यादिपुरुषव्यवस्था सङ्गच्छते। अभिहिते कर्तरि प्रथमा, इत्यादि च। न च 'समानाधिकरणे' इत्यनेन स्वाभिधेयसंख्यान्वयित्वम्, अभिहितशब्देन चाभिहितसङ्ख्याकत्वं विवक्षितमिति वाच्यम्। सूत्राननुगुणत्वात्। कृत्तद्धितसमासैः संख्याया अनभिधानात्तदभिहितेऽपि तृतीयाप्रसङ्गाच्च। न च कृत्यनभिधानमेव कर्त्तुरनभिधानमिति वाच्यम्। भावार्थलकारेऽपि कर्त्तरि प्रथमापत्तेरिति दिक्। स्यादेतत्—अस्तिभवतिविद्यतिषु क्रियावाचित्वमव्यापम्। न हि तत्रोत्पादः प्रतीयते। एवन्तिष्ठतावपि तथा जायत उत्पद्यते इत्यत्राप्यव्याप्तिः उत्पत्तिर्हि आद्यक्षणसम्बन्धः। तदनुकूलव्यापारश्चोत्पादना। तदनुभवश्चास्त्यादिभ्यो नास्त्येवः। अत एव 'किं करोति' इति प्रश्ने 'पचति' इत्यादिवत् 'अस्ति' इति न प्रतिब्रुवते इति चेत्, उच्यते, 'अस्ति' इत्यादेः स्वरूपधारणं 'करोति' इत्यर्थः। धारणञ्चोत्तरकालसम्बन्धः। तथा सत्यपि करोत्यर्थे धात्वर्थान्तर्गतेन धारणेनैव भाव्याकाङ्क्षायाः पूरणात् 'जीवति' 'नृत्यति' आदिवदकर्मकता क्रिया हि

व्यापारव्यधिकरणैनोत्पत्तिरुच्यते । अत एव तत्र घटादीनां कर्मता । परसमवेतव्यापारफलीभूतोत्पत्तिशालित्वात् । जनिप्रभृतिभिस्तु व्यापारसमानाधिकरणैवोच्यते । अत एवाकर्मकता तेषाम् । सोत्पत्त्यनुकूलव्यापारभाजामपि सूक्ष्मरूपापन्नघटादीनां परसमवेतत्वघटितकर्मताविरहात् । उक्तञ्च हरिणा—

"आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते ।" इति ।

अन्येत्वाहुः—

"अस्त्यादावपि धर्म्यंशे भाव्येऽस्त्येव हि भावना ।
अन्यत्राशेषभावात्तु सा तथा न प्रकाशते" इति ॥

तथा पचौ विक्लित्तौ च विक्लित्तिर्यद्यपि साधारणी तथाऽपि पचौ व्यापारव्यधिकरणा विक्लित्तौ तु तत्समानाधिकरणा सेति सकर्मकाकर्मकविभागः । न हि धात्वर्थभूतफलशालित्वमात्रं कर्मत्वं किन्तु व्यापारवैयधिकरण्यमपि फलेऽपेक्ष्यते । यत्तूक्तं 'किं करोति' इति प्रश्ने इत्यादि । तदसिद्धम् । आसन्नविनाशं कञ्चिदुद्दिश्य 'किं करोति' इति प्रश्ने 'अस्ति' इत्युत्तरस्य सर्वसम्मतत्वात् । इतरत्र तु सुस्थतया निश्चिते 'किं करोति' इति प्रश्नः पाकादिविशेषगोचर एवेत्यवधारणात् 'अस्ति' इति नोत्तरम् । एतेन—

"यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते" ॥

इत्यपि व्याख्यातम् । पूर्वापरीभावापन्नानेकक्षणविशिष्टस्योत्पत्तिः "आत्मास्ति" इत्यादावपि सुलभैवेति भावः । पचत्यादावपि हि अधिश्रयणादिरधःश्रयणान्तो व्यापारकलापः क्रिया । अत एव तस्य युगपदसन्निकर्षान्न प्रत्यक्षता । किन्तु एकैकस्याधिश्रयणादिव्यापारस्य क्रमेणानुभवे सति मनसा सङ्कलना क्रियते । तदुक्तं भाष्ये—"क्रिया नामेयमत्यन्तापरिदृष्टा अशक्या पिण्डीभूता निदर्शयितुम्" इति । ऐक्यमपि पारिभाषिकम् । एकफलावच्छिन्नत्वात् । उक्तं च—

"गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥" इति ॥

तदेवं भवत्यादौ क्रियावाचकत्वं सुवचम् । अत एव 'अभूत्' 'अस्ति' 'भविष्यति' इति कालयोगः । न हि क्रियात्वं विनाऽसौ सम्भवति । तदुक्तम्—

"क्रियाभेदाय कालस्तु सङ्ख्या सर्वस्य भेदिका" । इति ।
"कालानुपाति यद्रूपन्तदस्तीति प्रतीयते ।" इति च ।

भाष्ये तूक्तार्थसाधनाय निरुक्तकारवचनमुदाहृतम्-"षड्भावविकारा इति ह स्माह भगवान्वार्ष्यायणिरिति। भावस्य क्रियायाः षट् प्रकारा इत्यर्थः। तेषु च जायतेऽस्तीति पाठात्सर्वक्रियान्वयः सिद्ध इत्यर्थः। कैयटस्तु प्रकारान्तरेणापि व्याचख्यौ। भावस्य सत्ताया एते प्रकाराः सत्तैवानेकक्रियात्मिका साधनसम्बन्धादवसीयमानसाध्यस्वरूपा जन्मादिरूपतयावभासते" इति। तथा च-"जातिसमुद्देशेऽपि सम्बन्धिभेदात्सत्तैवेत्युपक्रम्योक्तम्--

"प्राप्तक्रमविशेषेषु क्रिया सैवाभिधीयते।
क्रमरूपस्य संहारे तत्सत्त्वमिति कथ्यते"॥ इति॥

व्यापारविशेषाणां साध्यत्वात् क्रमिकत्वाच्च तदुपहिताधास्ते भवत इत्यर्थः। 'पाकः' इत्यादौ तु प्रकृत्या साध्यावस्थाया असत्त्वरूपाया उपस्थितिः। घञा तु सिद्धरूपायाः। उक्तञ्च--

"क्रियायाः सिद्धतावस्था साध्यावस्था च कीर्त्तिता।
सिद्धतां द्रव्यमिच्छन्ति तत्रैवेच्छन्ति घञ्विधिम्॥
आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता।
प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः॥
साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना।
सत्त्वभावस्तु यस्तस्याः स घञादि निबन्धने"॥ इति।

लिङ्गसङ्ख्याकारकाद्यन्वययोग्येनावस्थाविशेषेण घञादिभ्य उपस्थितिरित्यर्थः। एतेन "कृदभिहितो भावो द्रव्यवत्प्रकाशते" इति तृतीयाध्याये भाष्यमपि व्याख्यातम्। प्रकल्पितेत्यनेन पदस्फोटस्यैव वास्तवतां ध्वनयति-साध्यत्वेनेति। अत एव तत्प्रतिकारकतया ओदनादेरन्वय इति भावः। अत एव 'भोक्तुं पाकः' 'भुक्त्वा गमनम्' इत्यादौ तुमुनादयः सिद्धाः। क्त्वोर्थास्त्वनभिधानमित्येव शरणम्। अत एव क्वचिद्दृश्यतेऽपि द्विर्वचनम्। 'द्विरणविधिः' इति सूत्रवार्त्तिकयोः प्रयोगात्। सत्त्वभावस्त्विति। अत एव 'पाकं करोति' इत्यादौ कारकत्वेन साऽन्वेतीत्यर्थः। नन्वेवं "पश्य मृगो धावति" इत्यादौ मृगकर्तृकशीघ्रगतेर्दर्शनम्प्रतिकर्मता न स्यात्। न च संसर्गमर्यादयेह कर्मताभानेऽपि प्रकारत्वेनाभानान्नोक्तदोष इति वाच्यम्। एवमपि 'पचति' भवति' इत्यावाप्रसङ्गतेः। एककर्तृका वर्त्तमाना पचिक्रिया एककर्तृका वर्तमाना भवनक्रियेति हि तत्र वाक्यार्थः। तत्र च 'भवति' इति लकारार्थस्य कर्तुर्देवदत्तकर्तृकपाचिक्रियां प्रत्यभेदेन संसर्गेण विशेष्यत्वस्यावश्यकत्वात्। तथा च देवदत्तवत्पचिक्रियायाः सत्त्वधर्मो दुर्वारः। अत्राहुः-"कर्तृत्व-

कर्मत्वयोरनुभवबलाद्भानं स्वीक्रियते । कारकान्तराभावमात्रे तु तात्पर्यम्" इति । "आख्यातशब्दे भागाभ्याम्" इत्युदाहृतश्लोकोऽप्येतदभिप्रायक एव । तत्र "यं प्रति" इत्युत्तरश्लोकानुरोधादिति तृतीये स्फुटीकरिष्यामः । एतेन 'अपाक्षीत्' 'अपाक्षीः' 'पचतः' पचन्ति' 'पक्ष्यति' 'पक्ष्यतः' इत्यादावपि 'भवति' इत्यनेन कर्तृत्वेनान्वयो व्याख्यातः । 'भावी वर्त्तते' 'ध्वस्तोऽस्ति' इत्यादाविव सूक्ष्मावस्थस्य वर्त्तमानसत्तासम्भवात् ।

उपदेशेऽजनुनासिक इत् (अष्टा०सू०१-३-२) उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् । उपदिश्यतेऽनेनेत्युपदेशः । "कृत्यल्युटो बहुलम्" (अष्टा०सू० ३-३-११३) इति बाहुलकात्करणे घञ् । अन्यथा ल्युट् स्यात् । स च धातुपाठप्रातिपदिकपाठौ सूत्रवार्त्तिके च । एतैर्हि शब्दा उपदिश्यन्ते । तत्र शास्त्रकृता पठितस्याप्यनुनासिकस्य पाठ इदानीमपभ्रष्टः । अत एवाहुर्वृत्तिकाराः—"प्रतिज्ञानुनासिक्याः पाणिनीयाः" इति । तत्र एध, स्पर्ध, इत्यादावनुदात्तेत्वादात्मनेपदम् । एधते, स्पर्धते । 'भवति' इत्यत्रोगित्वान्नुम् । भवान् । "लण्" (मा०सू०६) सूत्रे अकारस्येत्वाद्रप्रत्याहारसिद्धिः । "आचारेऽवगल्भक्लीबहोडेभ्यः" (का० वा० ) इति वार्त्तिकेऽवगल्भादेरनुनासिकत्वेनानुदात्तेत्वात्तङ् । अवगल्भते इत्यादि । उपदेशे इति किम् ? अभ्र आँ अपः । "आङोनुनासिकश्छन्दसि" (अष्टा०सू० ६-१-१२६) इत्यनुनासिकः । नाऽसौ शास्त्रे पठितः । नन्वेवं "उञः" (अष्टा०सू०१-१-१७) "ऊँ"(अष्टा०सू०१-१-१८) इत्यत्रातिप्रसङ्गः । विधानसामर्थ्यान्नेति तु प्रकृतेऽपि तुल्यम् । अथ "अनुबन्धा अनेकान्ताः" इति पक्षे 'अभ्र आँ अदितः' इत्यादौ "आदितश्च" (अष्टा०सू०७-२-१६) इतीण्निषेधार्थमित्संज्ञाकिन्न स्यादिति चेन्न । एवमपि "आङ इत्" इति वक्तव्ये अनुनासिकविधानस्य वैयर्थ्यापत्तेः । एतेन दधि इच्छतीति दधि ब्राह्मणकुलं दधीयतेः क्विप्यल्लोपयलोपयोर्हस्वत्वे च "अणोऽप्रगृह्यस्य" (अष्टा०सू०८-४-५७) इत्यनुनासिकः । अत्र "इदितो नुम् धातोः" (अष्टा०सू० ७-१-५८) इति नुम् स्यात् । 'दधि 'मधु' इत्यादिषु प्रातिपदिकेषु 'भवति' 'पचति' इत्यादिषु च इत्कार्यं लोप एव स्यात् । तस्मादुपदेशग्रहणं कर्त्तव्यमिति परास्तम् । "अणोऽप्रगृह्य इत्" इति वक्तव्येऽनुनासिकविधानसामर्थ्यादित्संज्ञाविरहोपपत्तेः । सत्यम् । उत्तरार्थमुपदेशग्रहणम् । अजिति किम् ? मनिन्प्रत्यये मकारस्य मा भूत् । सत्यां हि तस्यां "अन्येभ्योऽपि दृश्यन्ते" (अष्टा०सू०३-२-७५) इति हलन्तेष्वन्त्यादचः परः स्यात् । अनुनासिकः किम् ? चिरिणोति, जिरिणोति ।

हलन्त्यम् [अष्टा०सू०१-३-३]। उपदेशेऽन्त्यं हलित्स्यात्। यद्यपि सर्वो हल् तन्तमवधिं प्रत्यन्त्यो भवति तथाऽपि धातुप्रातिपदिकत्वाद्युपाधिपरिच्छिन्नसमुदायं प्रत्यन्त्य इह गृह्यते, अन्त्यग्रहणसामर्थ्यात्। "शीङ् स्वप्ने" (अदा०आ०) ङित्त्वात्तङ्। शेते। उपदेशे किम्? अग्निचित्। "श्रोत्रियश्छन्दोऽधीते" (अष्टा०सू०५-२-८४) "क्षेत्रियच् परक्षेत्रे चिकित्स्यः" [अष्टा०सू०५-२-९२] इत्यादौ तु वाक्यार्थे पदवचनमिति पक्षेऽविद्यमानप्रकृतिप्रत्ययविभागेऽप्युपदेशेऽन्त्यत्वाद्भवत्येवेत्संज्ञा। 'सनुतः' इत्यस्य स्वरादिपाठादित्संज्ञा प्राप्ता उच्चारणसामर्थ्यान्न भवति। न च रित्स्वरः प्रयोजनम्, अन्तोदात्तनिपातनवैयर्थ्यापत्तेः। स्यादेतत्-हल्प्रत्याहारसिद्धेरेतत्सूत्रसापेक्षत्वादन्योन्याश्रयः। पदार्थबोधं विना वाक्यार्थज्ञानासम्भवात्। अत्राहुः-हल् च ल् चेति समाहारद्वन्द्वे संयोगान्तलोपेन लकारोऽप्यत्र निर्दिश्यते। तेन लस्येत्संज्ञायां सत्यां "आदिरन्त्येन" [अष्टा०सू०१-१-७१] इति हल्संज्ञा। ततोऽन्त्यं हलिदिति वाक्यार्थबोधः। यद्वा-हल् इति तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणाद्धस्य समीपवर्त्ती लकारो हल् स इदिति। सम्पूर्णसूत्रावृत्त्या हल्सूत्रस्यान्त्यं हलन्त्यमिति वा। इह पक्षत्रये "पूर्वः पूर्वः प्रबलः, लाघवात्" इति तत्त्वम्। यद्वा-हल्सूत्रे लकारस्यैव 'तवल्कारः' इतिवद् गुणभूतस्य निर्देशः। तस्य च "पुषादिद्युताद्य्लृदितः [अष्टा०सू०३-१-५५] इति ज्ञापकादित्संज्ञा। न तु "उपदेशेऽजनुनासिकः" [अष्टा०सू १-३-२]इति, अच्संज्ञाया अद्याप्यनिष्पादात्। यत्तु णलो लित्करणं ज्ञापकमिति, तच्चिन्त्यम्, लित्त्वस्याद्याप्यसिद्धेः। न च 'बिभेद' इत्यत्र लोपाभावार्थं हल्ङ्यादिसूत्रेऽपृक्तं हलिति द्वितीयहल्ग्रहणं तत्र ज्ञापकमिति वाच्यम्। 'भविता' इत्यादौ डानिवृत्त्यर्थं हल्ग्रहणोपपत्तेः। न च सुतिसीतिप्रत्ययैः प्रकृतेराक्षेपान्नैवमिति वाच्यम्, 'या' 'सा' इत्यादौ सुलोपानापत्तेः। न चैकदेशविकृतस्यानन्यत्वादेकादेशस्य च पूर्वान्ततया ग्रहणाद्धलन्तायाः प्रकृतेः परत्वेनेष्टसिद्धिः। 'यः' 'सः' इत्यत्रातिप्रसङ्गात्। तस्माल्लोपप्रवृत्तिकाले हलन्तत्वं वाच्यम्। तच्च 'या' 'सा' इत्यत्रापि नास्ति किं त्वाबन्तात्परत्वमाश्रित्य लोपः कार्यः। न च तत्राबन्ता प्रकृतिः। उभयत आश्रयणेऽन्तादिवद्भावायोगात्। अथ "तदस्यां प्रहरणम्" (अष्टा० सू०४-२-६२) इति निर्देशादाबन्तस्थले उभयत आश्रयेऽप्यन्तादिवद्भावं ब्रूषे तथापि हल्शब्दस्यैवाद्यापि शक्त्यग्रहे कथं हल्ग्रहणसामर्थ्याण्णलो लित्त्वं निश्चेयम्। न च "लिति" [अष्टा०सू०६-१-१९३] इति ज्ञापकम्, ल्युडादौ चरितार्थत्वात्। तस्मादुक्तप्रकारचतुष्टयमेव शरणम्। स्यादे-

तत्-आद्ये हल्संज्ञातः पूर्वं कथं संयोगान्तलोपः, संयोगसंज्ञाया अनिष्पत्तेः। द्वितीये हस्य ल् इति कथं समासः, सुप्संज्ञाया अनिष्पादात्। एवं तृतीये हलोऽन्त्यमिति तत्पुरुषः कथम्। चतुर्थे च लृदित इति बहुव्रीहिः कथम्? उच्यते। साधुत्वज्ञानोपयोगिनः शास्त्रस्याप्यर्थबोधो यदि तद्बोध्यसाधुत्वानां पदानां स्वार्थानुभावकतायामुपयुज्येत तदैष दोषः स्यात्। स च नोपयुज्यते प्रमाणाभावात्, शतशो व्यभिचाराच्च। यथा चैतत्तथा "अइउण्" (मा०सू०१) इत्यत्रैव प्रतिपादितम्।

न विभक्तौ तुस्माः (अष्टा०सू०१-३-४)। विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः। रामान्, पचेरन्, ब्राह्मणाः, पचतः, रामम्, अद्राक्षम्, विभक्तौ किम? "अचो यत्" (अष्टा०सू०३-१-९७) "ऊर्णाया युस्" (अष्टा०सू०५-२-१२३) "रुधादिभ्यः श्नम्" (अष्टा०सू०३-१-७८) "प्राग्दिशोविभक्तिः" (अष्टा०सू०५-३-१) इति यत्र विभक्तिसंज्ञा तत्रायं निषेधो न भवति। "इदमस्थमुः" (अष्टा०सू०५-३-२४) इति मकारपरित्राणार्थमुकारानुबन्धासञ्जनाज्ज्ञापकात्। तेन "किमोत्" (अष्टा०सू० ५-३-१२) 'क्व' इति सिद्धम्। स्यादेतत्-'तदानीम्' इत्यादौ दानीमोऽपि तर्हि मित्त्वं स्यादिति चेन्न, यान्तत्वात्तस्य। यकारो ह्यन्त्यत्वमनुभवन्मकारस्येत्संज्ञां प्रतिबध्नाति। "संयोगान्तस्य लोपः" (अष्टा०सू०८-२-२३) इति यलोपस्येत्संज्ञां प्रत्यसिद्धतया मकारस्यान्त्यत्वाभावात्। यद्वा-"इदमस्थमुः" (अष्टा०सू०५-३-२४) इत्यनेनानित्यत्वमात्रं ज्ञाप्यते, न तु प्राग्दिशीयेष्वप्रवृत्तिः। "औत्" (अष्टा०सू०७-३-१२८) "इटोऽत्" (अष्टा०सू०३-४-१०६) इत्यत्र तु मुखसुखार्थस्तकारः न त्वित्संज्ञकः, तित्स्वरापत्तेः। न चेष्टापत्तिः, 'उरौ वाये' 'भक्षीय तवराधारां' इत्यादौ 'उरौ भक्षीय' इत्यनयोरन्तोदात्ततादर्शनात्। "आद्युदात्तश्च" (अष्टा० सू०३-१-३) इति सूत्रे 'भविषीय' इत्यत्र भाष्यकारैरेवान्तोदात्तत्वस्य सिद्धान्तितत्वाच्च। यत्त्विह वृत्तिकृतोक्तम्, "किमोत्, (अष्टा०सू०५-३-१२) "इटोऽत्" (अष्टा०सू०३-४-१०६) इत्यत्रोऽयं निषेधो न भवति अनित्यत्वादस्य विधेरिति, तत्स्वोक्तिविरुद्धम्। "इटोत्" (अष्टा०सू०३-४-१०६) इति तेनैवोक्तत्वात्। तस्मादभ्युपेत्यवादमात्रम्। यद्वा-"इटोत्" (अष्टा०सू०३-४-१०६) इत्यत्रास्य अकारमात्रस्य विधेः। अनित्यत्वादिति तु "किमोत्" (अष्टा०सू०५-३-१२) इत्येतत्परमिति व्याख्येयम्।

आदिर्ञिटुडवः (अष्टा०सू०१-३-५)। उपदेशे आदिभूताः ञि टु डु एते इतः स्युः। "ञिइन्धी" (रुधा०आ०१४४९) इद्धः। "टुवेपृ" (भ्वा०आ०३६७) वेपथुः। "डुवप्" (भ्वा०उ०१००३) उप्त्रिमम्। उपदेश इति किम्? ञि-

च

कारीयति। आदिः किम्? पटूयति। अस्ति हि पृथ्वादिषु पटुशब्दस्योपदेशः। अत्रेत्संज्ञायां सत्यामथुच् स्यात्। अवयवे ह्यचरितार्थं द्वित्वं समुदायस्य विशेषकं स्यात्।

षः प्रत्ययस्य (अष्टा०सू०१-३-६)। प्रत्ययस्यादिः ष इत्स्यात्। "शिल्पिनि ष्वुन्"(अष्टा०सू०३-१-१४५)नर्त्तकी। प्रत्ययस्येति किम्? षोडश। "षष उत्वम्"(का०वा०)इत्यत्रोपदेशस्थोऽयं षकारः। आदिः किम्? अविषः, महिषः। "अविमहिभ्यां टिषच्" (उ०सू०४८)। नन्वत्र प्रयोजनाभावादेव षकारस्येत्संज्ञा न भविष्यति ईकारस्य टित्वादेव सिद्धेः। न च पक्षे ङीषर्थः षकारः। ङीषोऽपि चितः परस्योदात्तनिवृत्तिस्वरेणोदात्तत्वात्, सत्यम, विनिगमकाभावेन पक्षे टकारस्यापि श्रवणं स्यात्।

चुटू (अष्टा०सू०१-३-७)। प्रत्ययाद्यौ चुटू इतौ स्तः। "गोत्रे कुञ्जादिभ्यश्च्फञ्" (अष्टा०सू०४-१-९८) कौञ्जायन्यः। छस्य ईयादेशं वक्ष्यति। जस् ब्राह्मणाः। झस्यान्तादेशो वक्ष्यति। सो(१)स्याभिजनः इत्यधिकारे "शण्डिकादिभ्यो ञ्यः" (अष्टा०सू०४-३-९२) शाण्डिक्यः। "चरेष्टः" (अष्टा०सू०३-२-१६) कुरुचरी। ठस्येकादेशं वक्ष्यति। "सप्तम्यां जनेर्डः" (अष्टा०सू०३-२-९७) उपसरजः। ढस्यैकादेशं वक्ष्यति। "धनगणं लब्धा" (अष्टा०सू०४-४-८४) इत्यतो 'लब्धा' इत्यनुवर्तमाने "अन्नाण्णः" (अष्टा०सू०४-४-८५) अन्नं लब्धा आन्नः। "चुटुषाः प्रत्ययस्य" इति कर्त्तव्ये योगविभागादनित्यमिदम्। तेन 'केशचुञ्चुः' 'केशचणः' इत्यत्र चकारस्येत्संज्ञा न। सत्यां हि तस्यां "चितः" (अष्टा०सू०६-१-१६३) इत्यन्तोदात्तः स्यात्। चित्करणं तु पर्यायार्थं स्यात्। "अवात्कुटारच्च" (अष्टा०सू०५-२-३०) इत्यतोऽवादित्यनुवर्त्तमाने "नते नासिकायाः" (अष्टा०सू०५-२-३१) इति टीटच्-अवटीटः। यद्वा चुञ्चुप्चणपष्टीटचो यादयः, "लोपो व्योः" (अष्टा०सू०६-१-६६) इति यलोपे इति व्याख्येयम्।

लशक्वतद्धिते (अष्टा०सू०१-३-८)। तद्धितभिन्ने प्रत्यये आदिभूता लशकवर्गा इतः स्युः। "ल्युट् च" [अष्टा०सू०३-३-११५] भवनम्। "कर्त्तरि शप्" [अष्टा०सू०३-१-६८] भवति। "क्तक्तवतू निष्ठा" (अष्टा०सू०१-१-२६) भूतः, भूतवान्। "प्रियवशेवदः खच्" (अष्टा०सू०३-२-३८) प्रियंवदः, वशंवदः। "ग्लाजिस्थश्च ग्स्नुः" (अष्टा०सू०३-२-१३९)

---

[१] "सोऽस्य निवासः" [अष्टा०सू०४-३-८९] इत्यतः सोऽस्य इत्यनुवर्त्तमाने "अभिजनश्च" (अष्टा०सू०४-३-९०) इत्यधिकारे इत्यर्थः।

जिष्णुः। "भञ्जभासमिदो घुरच्" [अष्टा०सू०३-२-१६१] भङ्गुरम्। डे-हरये। अतद्धिते किम्? चूडालः। "प्राणिस्थादातो लजन्यतरस्याम्" (अष्टा०सू०५-२-९६) लोमशः। अत्र प्रयोजनाभावान्नेत्संज्ञेत्यपि सुव-चम्। 'कर्णिका' "कर्णललाटात्कनलङ्कारे" (अष्टा०सू०४-३-६५) इति भवार्थे कन्। अत्र "किति च" [अष्टा०सू०७-२-११८] इति वृद्धिः स्यात् रूपञ्च न सिध्येत्। "इर उपसङ्ख्यानम्" [का०वा०] रुणद्धि। अयं वा रेफो "हलन्त्यम्" (अष्टा०सू०१-३-३) इतीत्संज्ञः। इकारस्तु "उपदे-शेऽजनुनासिकः" (अष्टा०सू०१-३-२) इति। स्यादेतत्-एवं सतीदि-त्वान्नुम् स्यात्। न च तक्रकुम्भीधान्यन्याय आश्रयितुं शक्यः, 'नन्दति' इत्याद्यव्याप्तेः, सत्यम्, स्कन्दिर्प्रभृतीनां नकारपाठो ज्ञापकः अन्तेदितामेव नुमिति। यद्वा—"गोः पदान्ते" (अष्टा०सू०७-१-५७) इति सूत्रादन्तग्रहणमनुवर्त्तयिष्यते। तच्चावश्यमनुवर्त्यम्। चक्षिङो नुम् मा भूदिति। अथवा "न दृशः" (अष्टा०सू०३-१-४७) इति ज्ञाप-कान्न भविष्यति सति हि नुमि इगुपधत्वाभावादेव क्सस्याप्राप्तेः किं तन्निषेधेन। यद्वा—"इरितो वा" (अष्टा०सू०३-१-५७) इति ज्ञापकात्स-मुदायस्येत्संज्ञा। अवयवे अचरितार्थस्य स्वरितत्वस्य समुदायविशेष-कत्वात्स्वरितेत्त्वप्रयुक्तमात्मनेपदम्। तेन 'रुन्धे' इत्यादि सिद्धम्।

तस्य लोपः [अष्टा०सू०१-३-९]। तस्येतो लोपः स्यात्। तस्यग्रहणं सर्वलोपार्थम। जिटुडूनामलोन्त्यस्य मा भूत्। "नानर्थकेऽलोन्त्यविधिः" (प०भा०) इति तु नास्ति। "अलोन्त्यात्पूर्व उपधा" (अष्टा०सू०१-१-६५) इति सूत्रे तस्य प्रत्याख्यानात्।

यथासङ्ख्यमनुदेशः समानाम (अष्टा०सू०१-३-१०)। समसङ्-ख्यानां सम्बन्धो यथाक्रमं स्यात्। "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" (अष्टा०सू०३-१-१३४) नन्दनः, ग्राही, पचः। "समूलाकृतजीवेषु हन्-कृञ्ग्रहः" (अष्टा०सू०३-४-३६) 'समूलघातं हन्ति' इत्यादि। अत्रानुवा-द्ययोरपि धातूपपदयोर्यथाक्रमं बोध्यम्। स्यादेतत्-"विदिभिदिछिदेः कुरच्" (अष्टा०सू०३-२-१६२) इत्यादौ तच्छीलाद्यर्थत्रयेण यथासङ्ख्यं प्राप्नोति। एवं "ख्यत्यात्" (अष्टा०सू०६-१-११२) ङसिङसोः इत्यादा-वपीति चेत्। अत्र भाष्यम्-"स्वरितेनेत्यपकृष्यते। तेन स्वरितत्वाभावा-न्नेह यथासङ्ख्यम्" इति। प्रतिज्ञास्वरिताः पाणिनीयाः। स्वरितत्वा भावा-देव "कर्तृकर्मणोश्च भूकृञोः" (अष्टा०सू०३-३-१२७) इति सूत्रे न यथासंख्यं "नाडीमुष्ट्योश्च" (अष्टा०सू०३-२-३०) इति सूत्रे यथासंख्यं च भवत्ये-वेति भाष्यम्। वृत्तिकारस्तु "कर्तृकर्मणोश्च" (अष्टा०सू०३-३-१२७) "ना-

डीमुष्ट्योश्च"(अष्टा०सू०३-२-३०) इति सूत्रद्वयंऽपि भाष्य विपरीतं वद-न्नुपेक्ष्यः। "नाडीमुष्ट्योश्च" (अष्टा०सू०३-३-३०) इति सूत्रे यथा सङ्ख्या-भावपरं भाष्यमपि पूर्वापरविरोधाच्चिन्त्यम्। एतदेव वा मतान्तरपरं स-त्त्वत्रत्यवृत्तेरालम्बनमस्तु। "कर्तृकर्मणोः" (अष्टा०सू०३-३-१२७) इत्यत्र तु वृत्तिश्चिन्त्यैव। "वैशोयशआदेर्भगाद्यल्खौ" (अष्टा०सू०४-४-१३१) इ-त्यत्राप्यस्वरितत्वादेव न यथासङ्ख्यम्। इह भाष्ये वृत्तौ चेत्थं स्थि-तम्। चतुर्थे तु वृत्तिकारो योगं व्यभजत्। "भगाद्यल्" इति "खच" इति च।

स्वरितेनाधिकारः (अष्टा०सू०१-३-११)। "इत्थंभूतलक्षणे" (अ-ष्टा०सू०२-३-२१) तृतीया। अधिकारविनियोगः स्वरितत्वयुक्तशब्द-स्वरूपमधिकृतं बोध्यम्। "प्रत्ययः" (अष्टा०सू०३-१-१) "परश्च" (अष्टा०सू०३-१-२) इत्यादि। यथा प्रायेणोत्तरत्रोपस्थितिः। क्वचित्तु पूर्वत्रापि। तदुक्तम्-"अतिङित्युभयोर्योगायोः शेषः" इति। कियद्दूर-मधिकार इत्यत्र व्याख्यानं शरणम्। यथा आतृतीयाध्यायान्तं धात्व-धिकारो न तु प्राग्लादेशेभ्य एव। तथा आसप्तमाध्यायपरिसमाप्तेरङ्गा-धिकारो न तु प्रागभ्यासविकारेभ्य एवेत्यादि। यद्वा-'स्वरिते' इति सप्तम्यन्तम्। तेन तस्मिन्दृष्टे अधिकारो निवर्त्तत इत्यर्थः। कः स्वरि-ताधिकारार्थः कश्च तन्निवृत्त्यर्थ इत्यत्र तु व्याख्यानमेव शरणम्। नन्वेवं व्याख्यानादेवानुवृत्त्यननुवृत्ती स्तां किमनेन सूत्रेण, सत्यम्, अर्थान्तराणि सङ्गृहीतुं सूत्रं कृतम्। तथाहि-स्वरितेनाधिकाररूपोऽर्थो ग्राह्यः। "गो-स्त्रियोः" (अष्टा०सू०१-२-४८) इत्यत्र च स्त्रीशब्दः स्वर्यते। तेन गोटा-ड्ग्रहणं कृन्निवृत्त्यर्थमिति न वक्तव्यम्। किञ्च अधिकं कार्यमधिकारः। गौणेऽपि शास्त्रप्रवृत्तिरित्यर्थः। तथा च गौणमुख्यन्यायो यत्र नेष्यते (अपादानाधिकरणादौ) तत्र स्वरितः पाठ्यः। अपि च अधिकः कारः कृतिरियम्। यत्पूर्वः सन् परं बाधते। तथा च पूर्वविप्रतिषेधा संगृहीता भवन्ति। तत्र तत्र स्वरितपाठेनैव गतार्थत्वादिति दिक्।

॥ इति श्रीशब्दकौस्तुभे प्रथमस्याध्यायस्य तृतीये पादे प्रथमान्हिकम् ॥

अनुदात्तङित आत्मनेपदम् (अष्टा०सू०१-३-१२)। अनुदात्तेत उप-देशे यो ङित्तदन्ताद्धातोर्लस्थाने आत्मनेपदमेव स्यात्। एधते, स्पर्धते, बोभूयते, ऋतीयते, कथं तर्हि 'शेते' इत्यादि, ङिदेव त्वयमिति चेत्, सत्यम्। व्यपदेशिवद्भावो बोध्यः। उपदेशे किम्? 'चुकुटिषति-"गाङ्कु-टादिभ्यः" (अष्टा०सू०१-२-१) इति सन आतिदेशिकं ङित्वम्। धातो-

रिति किम् ? अत्युतत्, अदुद्रुवत्, इति ङिद्भ्यामङ्चङ्भ्यां मा भूत् । कथं पुनः "धातोः" इति लभ्यते इति चेत्, "भूवादि" (अष्टा०सू०१-३-१) सूत्रान्मण्डूकप्लुत्याऽनुवृत्तस्य "धातवः" इत्यस्य विभक्तिविपरिणामात् । "सादृश्यमात्रेण परिणामव्यवहारो वस्तुगत्या तु योग्यशब्दान्तरमेव सन्निहितं भवति" इति कैयटः । यद्वा–आत्मनेपदेनैव लकारस्य धातोश्चाक्षेपः । "इको झल्" (अष्टा०सू०१-२-९) इत्यत्र सना धातोराक्षेपवत् । अत एव ङिता तस्य विशेषणात्तदन्तविधिर्व्याख्यातः । 'चिक्रीयते' इत्यादौ तु अवयवेऽचरितार्थेन ङकारेण क्यजन्तस्य विशेषणं ततो व्यपदेशिवद्भावान्ङिदन्ततेति दिक् । एतेन 'चिनुतः' 'सुनुतः' इति व्याख्यातम् । यत्तु तत्र ङितीव ङिद्वदिति व्याख्यानमाश्रित्य समाधानं, तदापाततः । 'पचेते' इत्यादौ "आतो ङितः" (अष्टा०सू०७-२-८१) इति इयादेशाभावप्रसङ्गात् । ननु "वृद्भ्यः स्यसनोः" (अष्टा०सू०१-३-९२) इति सूत्रे स्यग्रहणेन 'विकरणेभ्यो नियमो बलीयान्' इति ज्ञापितत्वाच्चङङोः 'चिनुतः' इत्यादौ चानुपपत्तिरेव नास्तीति चेत्, उपजनिष्यमाणेनापि ङिता उपसञ्जातनिमित्तस्याऽपि परस्मैपदस्य बाधापत्तेः । "नियमो बलीयान्" इत्यस्यापि पाक्षिकत्वाच्च । "वृद्भ्यः स्यसनोः" (अष्टा०सू०१-३-९२) इत्यस्य विकरणव्यवधानेऽपि नियमप्रवृत्तिरिति ज्ञापकतया अपि सुवचत्वात् । "शदेः शितः" (अष्टा०सू०१-३-६०) इति सूत्रे भाष्यकैयटयोरिदं स्पष्टम् । तस्माद्यथाव्याख्यानमेव मनोरमम् । हरदत्तस्तु ङित इत्येव व्याख्यत् । "धातोः" इति नापेक्ष्यते । "नियमो बलीयान्" इत्याश्रयणाच्चङादौ न दोषः । न च भाविना ङिता बाधः । परत्वात्परस्मैपदस्यैवोचितत्वात्" इति तस्याशयः । उभयथापि यङीयङोङित्वस्य गुणनिषेधे चरितार्थतामाशङ्क्य यङः प्रागनुदात्तमकारं प्रश्लिष्य "जुचङ्क्रम्यदन्द्रम्य" (अष्टा०सू०३-२-१५०) इति ज्ञापकाद्युजभावं वदन्तः ईयङः प्रागिकारमीकारं वा प्रश्लिष्य आद्ये अन्तेदित्त्वाभावान्न नुम्, द्वितीये एकाच इत्यनुवृत्तेः "श्वीदितो निष्ठायाम्" (अष्टा०सू०७-२-१४) इति नेण्निषेध इति कल्पयन्तः परास्ताः । स्यादेत्–यङ्लुक्यपि सर्वत्रातिव्याप्तिः, प्रत्ययलक्षणेन ङिदन्तत्वात् । सत्यम्, ङित्त्वस्य प्रत्ययाप्रत्ययसाधारणतया 'सुहृषत्' इत्यत्र "सौमनसि" (अष्टा०सू०६-२-११७) इतिस्वरस्येव "अत्वसन्तस्य" (अष्टा०सू०६-४-१४) इति दीर्घस्येव चेहात्मनेपदस्याप्रवृत्तेरिति निष्कर्षः । प्राञ्चस्तु 'बोभूतु तेतिक्ते" इत्यत्र तिजेर्यङ्लुगन्तादात्मनेपदविधानं ज्ञापकं यङ्लुगन्तात्प्रत्ययलक्षणेनात्म-

नेपदं नोतं। अत एव "चर्करीतं च" इत्यदादौ पठितस्य चकारात्परस्मैपदमिति व्याख्यानं ज्ञापकसिद्धार्थानुवाद इति सिद्धान्तः । नन्वेवमपि 'पास्पर्धीति' इत्यादावात्मनेपदं दुर्वारम्, स्पर्द्धेरनुदात्तेत्त्वात् । न चेदं प्रकृत्यन्तरमिति वाच्यम्, द्विःप्रयोगो द्विर्वचनं षाष्ठमिति वक्ष्यमाणत्वात्। सत्यम्, "श्तिपा शपा" (का०वा०) इत्यादिना निषेधो बोध्यः। अनुबन्धेन निर्देशो हि द्विधा । क चित्साक्षात्-"शीङः सार्वधातुके गुणः" (अष्टा०सू०७-४-२१)। "दीङो युट्" (अष्टा०सू०६-४-६३) इति यथा। "अनुनादात्तेतः" (अष्टा०सू०३-२-१४९) इत्यादौ त्वनुबन्धत्वेनः। यत्र तु नोभयथापि निर्देशस्तद्भवत्येव । "आङो यमहनः" (अष्टा०सू० १-३-२८) "भावकर्मणोः" (अष्टा०सू०१-३-१३) इत्यादि यथा । ननु "आङः" इति कथं नानुबन्धनिर्देश इति चेत्, न । प्रकृतिग्रहणे यङ्लुगन्तस्य ग्रहणमित्यस्य ह्ययमपवादः। तेन प्रकृतेर्यत्रानुबन्धेन निर्देशः स एवास्य विषयः। अत एव 'चेचितः' 'मरीमृष्टे' इत्यादौ 'क्ङिति च" (अष्टा०सू०१-१-५) इति प्रवर्तत एवेति दिक् । अथ कथं "स पवायं नागः सहति कलभेभ्यः परिभवम्" इति। अत्राहुः। "आधृषाद्वा" (ग०सू०) इति विकल्पितणिचः सहेरिदं रूपम् । यद्वा—चक्षिङो ङित्करणमनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यतां ज्ञापयति । स हि अनुदात्तेत । "विचक्षणः प्रथयन्" इत्यादौ "अनुदात्तेतश्च हलादेः" (अष्टा०सू०३-२-१४९) इतियुचो दर्शनात् । न चायं ल्युट् । लित्स्वरापत्तेः। अन्तोदात्तस्य च पाठ्यमानत्वादिति । एतेन "स्फायन्निर्मोकसन्धि" इति मुरारिप्रयोगो व्याख्यातः । स्यादेतत्—लस्य तिबादयः । लटः शतृशानचौ । लिटः कानज्वा । क्वसुश्च । "लृटः सद्वा" [अष्टा० सु०३-३-१४) इत्यात्मनेपदपरस्मैपदयोर्विहितत्वादित आरभ्यापादपरिसमाप्तेः प्रकरणं किमर्थमिति चेत्, नियमार्थमित्यवेहि। अत एवानुदात्तङित आत्मनेपदमेवेति व्याख्यातम्। सोयं प्रकृतिनियमः । उत्तरसूत्रे च भावकर्मणोरात्मनेपदमेवेति अर्थनियमः। यत्रैवकारस्ततोऽन्यत्रावधारणमिति सिद्धान्तात्। तथाहि—

"तदसम्बन्धसम्बन्धो व्याप्तिः सैवावधारणम् ।
व्यापकत्वद्योतकैव शब्दसम्बद्धभिन्नजम् ॥

न चास्मिन्पक्षे अनुदात्तेत्प्रभृतिभ्यः परस्मैपदं मा भूत् आत्मनेपदं त्वनियतत्वात् 'अत्ति' इत्यादावपि स्यादिति वाच्यम्। शेषात्परस्मैपदमेवेति नियमात्। ननु तत्र कर्त्तरीत्युक्तेः कर्त्तरि परस्मैपदमेवास्तु। भावकर्मणोऽस्तु। 'जागर्यते' 'अद्यते' इत्यादौ परस्मैपदं दुर्वारमेवेति चेन्न। भाव-

कर्मणोरात्मनेपदमेवेति नियतत्वात्। अस्तु वा प्रत्ययनियमः। आत्मनेपदमनुदात्तङित एवेति। भावकर्मणोरेवेति। न चैवमनुदात्तेत्प्रभृतिभ्यः परस्मैपदप्रसङ्गः। परस्मैपदस्यापि "शेषात्कर्त्तरि" (अष्टा०सू०१-३-७८१) इति नियतत्वात्। ननु कीदृशस्तत्र नियमः कर्त्तरि यदि परस्मैपदं भवति शेषादेवेति, शेषाद्यदि भवति कर्त्तर्येवेति वा, आद्ये अशेषात्कर्त्तरि मा भूत्। भावकर्मणोस्तु शेषादशेषाच्च परस्मैपदं दुर्वारम्। अन्त्ये शेषाद्भावकर्मणोर्मा भूत्, अशेषात्तु भावकर्मकर्तृषु त्रिष्वपि प्राप्नोति। सत्यम्, योगविभागेन नियमद्वयं बोध्यम्। शेषादेव तत्रापि कर्त्तर्यैवेति। तस्मादिह प्रकरणे प्रकृत्यर्थनियमः प्रत्ययनियमो वेति पक्षद्वयमपि स्थितम्। स्यादेतत्–विकरणव्यवधाने नियमो न प्राप्नोति। तथाहि–विकरणानामवकाशो लादेशभिन्नाः। "इक्श्तिपौ धातुनिर्देशे" (का०वा० ) इति श्तिप्। "पाघ्राध्माधेट्दृशः शः (अष्टा०सू०३-१-१३७)। ताच्छील्यादिषु चानश्। नियमस्यावकाशः लिट्लिङो लुक्श्लुश्नमश्च। पस्पर्धे, स्पर्धिषीष्ट, आस्ते, शेते, अत्ति, जुहोति, भिनत्ति, भूयात्, इत्यादि। एधते, स्पर्धते, कुरुते, निविशते, इत्यादावुभयप्रसङ्गे परत्वान्नित्यत्वाच्च विकरणेषु तैर्व्यवधानान्नियमो न स्यात्। ततश्च प्रकृतिनियमपक्षे विकरणान्तादुभयप्रसङ्गः। प्रत्ययनियमेऽपि तुल्यजातीयस्यैव नियमेन व्यावृत्तिः धातोरनन्तरस्य लस्य यद्यात्मनेपदम् "अनुदात्तङित एव" यदि तु परस्मैपदं, "शेषादेव" इत्यादि। तथा च धात्वन्तरात्तद्व्यावृत्तावपि विकरणव्यवधाने नियमाप्रवृत्तेः पदद्वयमपि स्यादेव। सत्यम्, विकरणेभ्यो नियमो बलियान्" इति "वृद्भ्यः स्यसनोः" (अष्टा०सू०१-३-९२) इतिस्यग्रहणेन ज्ञाप्यते। अतो नियमद्वयेऽप्यदोषः। तत्रापि प्रकृत्यर्थनियमपक्षो बलीयानित्यवधेयम्। तत्र हि शेषात्कर्त्तरीति न वाच्यम्, किन्तु परस्मैपदमित्येव यत्र तच्चान्यच्च प्राप्तं तत्र परस्मैपदमेव स्यात्। प्रत्ययनियमपक्षे तु शेषादिति कर्त्तरीति वाच्यम्, योगश्च विभजनीय इति दोषत्रयमधिकं स्यात्। तिबादिवाक्येन सह वाक्यभेदः परिसङ्ख्याप्रयुक्तत्रिदोषता चेति दोषचतुष्कन्तु पक्षद्वयेऽप्यस्त्येव। यदि तु तदपि किमर्थं सोढव्यमिति बुद्धिस्तर्हि लस्य तिबादय इत्यनेन सहेदं प्रकरणमेकवाक्यतया विधायकमिति व्याख्येयम्। अस्मिन्पक्षे शेषात्कर्त्तरीति कर्त्तव्यमेव। परस्मैपदमात्मनेपदमिति च सूत्रशाटकवद्भाविनी संज्ञाश्रयणीया। अन्यथा विहितानां संज्ञा संज्ञया च विधानमित्यन्योन्याश्रयः स्यात्। अस्मिंश्च पक्षे विकरणेषु न कश्चिद्दोषः। लादेशेषु कृतेषु सार्वधातुकमाश्रित्य विकरणप्रवृत्तेः। न च स्यादिषु दोषस्तदवस्थ एवेति

वाच्यम्, लमात्रापेक्षयान्तरङ्गेषु तिबादिषु कृतेषु लकारविशेषापेक्षतया बहिरङ्गाणां स्यादीनां प्रवृत्तेः।

भावकर्मणोः (अष्टा०सू०१-३-१३)। अनयोर्विहितस्य लस्यात्मनेपदं स्यात्। सुप्यते, क्रियते। प्राग्वेदकवाक्यतया विधिः भिन्नवाक्यतया नियमो वेति बोध्यम्। नियमोऽपि द्विधा, प्रत्ययनियमोऽर्थनियमश्चेति। न चान्त्यपक्षे कर्मणि घञ् न स्यात् 'को भवता लाभो लब्धः' इति, "अकर्त्तरि च" (अष्टा०सू०३-३-१९) इत्यस्य स्वपादानादिरवकाश इति वाच्यम्। तुल्यजातीयस्य परस्मैपदस्यैव नियमेन व्यावर्त्तनात्। स्यादेतत्-"लूयते केदारः स्वयमेव" इत्यत्र परस्मैपदं प्राप्नोति। "कर्मवत्कर्मणा" (अष्टा०सू०३-१-८७) इत्यनेन हि शास्त्रं व्यपदेशो वाऽतिदिश्यते। तथा च तेन तेन शास्त्रेण तत्तत्कार्यं कर्त्तव्यम्। तत्र कर्मण्यात्मनेपदमित्यस्यावकाशः शुद्धं कर्म, कर्त्तरि परस्मैपदमित्यस्य शुद्धः कर्त्ता। कर्मकर्त्तर्युभयप्रसङ्गे परत्वात्परस्मैपदमिति। सत्यम्, प्राधान्यात्कार्यातिदेश एवेत्यात्मनेपदमेव परं बोध्यम्। पक्षान्तरे तु "शेषात्कर्त्तरि" (अष्टा० सू०१-३-७८) इत्यत्र "कर्त्तरि कर्म" (अष्टा०सू०१-३-१४) इत्यतः कर्त्तरीत्यनुवर्त्य कर्त्तैव यः कर्त्ता तत्र परस्मैपदं न तु कर्मकर्तरीति व्याख्यातम्।

कर्त्तरि कर्मव्यतिहारे (अष्टा०सू०१-३-१४)। विनिमयविषयीभूतायां क्रियायां वर्त्तमानाद्धातोः कर्तर्यात्मनेपदं स्यात्। व्यतिलुनीते। अन्यस्य योग्यं लवनं करोतीत्यर्थः। परस्परकरणमपि कर्मव्यतिहारः। सम्प्रहरन्ते राजानः। "व्यात्युक्षीमभिसरणग्लहामदीव्यन्" कर्तृग्रहणमुत्तरार्थम्।

न गतिहिंसार्थेभ्यः (अष्टा०सू०१-३-१५)। एभ्यः कर्मव्यतिहारे आत्मनेपदं न स्यात्। व्यतिगच्छन्ति, व्यतिसर्पन्ति, व्यतिघ्नन्ति। प्रतिषेधे हसादीनामुपसङ्ख्यानम् (का०वा०)। हसादयो हसप्रकाराः शब्दक्रियाः। व्यतिहसन्ति, व्यतिजल्पन्ति। हरतेरप्रतिषेधः (का०वा०) सम्प्रहरन्ते राजानः। अर्थग्रहणसामर्थ्याद्धि शब्दान्तरनिरपेक्षा गतिहिंसयोर्वर्तन्ते त इह गृह्यन्ते। हरतिस्तूपसर्गवशाद्धिंसायां वर्त्तत इति न तस्यायम्प्रतिषेध इत्याहुः।

"ततः सम्प्रहरिष्यन्तौ दृष्ट्वा कर्णधनञ्जयौ"

इत्यत्र तु 'योत्स्यमानौ' इति विवक्षितं न तु कर्मव्यतिहारः। वहेस्तु नायं प्रतिषेधः। अगत्यर्थत्वात्। प्रापणं हि वहेरर्थः। गतिप्रतीतिस्त्वाक्षेपात्।

इतरेतरान्योन्योपपदाच्च (अष्टा०सू०१-३-१६)। आत्मनेपदं न स्यात् । परस्परोपपदाच्चेति वक्तव्यम् (का०वा०) । इतरेतरस्यान्योन्यस्य परस्परस्य वा 'व्यतिलुनन्ति' । लौकिके शब्दव्यवहारे लाघवं प्रत्यनादरादितरेतरादिशब्दा व्यतीत्युपसर्गौ च कर्मव्यतिहारद्योतनाय समुच्चीयन्ते । तथात्मनेपदमपि समुच्चीयेतेति निषेधोऽयमारभ्यते । नन्वेवं-

"सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम" ।

इत्यत्र तङ् कथं नेति चेत् ? करणविनिमये सत्यपि क्रियाविनिमयस्याविवक्षितत्वात् ।

नेर्विशः (अष्टा०सू०१-३-१७) । निपूर्वाद्विश आत्मनेपदं स्यात् । निविशते । नेः किम् ? प्रविशति । कथं तर्हि 'न्यविशत' न्यविक्षत' इति, अटा व्यवधानात् । न च स्वाङ्गमव्यवधायकमिति वाच्यम् । अङ्गभक्तस्याटो विकरणानां प्रत्ययवयवत्वेपि धातुम्प्रत्यनवयवत्वेन व्यवधायकत्वादिति । अत्राहुः-तिबादिविधेः प्राग्लावस्थायां धातोरेवाडागमः । "लुङ्लङ्" (अष्टा०सू६-४-७१) इत्यत्र ङ्लिकारकनिर्देशस्य भाष्यकृता "असिद्धवत्" (अष्टा०सू०६-४-२२) सूत्रप्रत्याख्यानावसरे वक्ष्यमाणत्वात् । मतान्तरेऽपि लकारविशेषापेक्षत्वाद्बहिरङ्गमडागमं बाधित्वा लमात्रापेक्षत्वादन्तरङ्गेषु तिबादिषु कृतेषु नियमो भविष्यति । "विकरणेभ्यो नियमो बलीयान्" इति सिद्धान्तात् । अत्र च "वृद्भ्यः स्यसनोः" (अष्टा० सू०१-३-९२) इति स्यग्रहणं ज्ञापकमिति बोध्यम् । अथेदं ज्ञापकं विकरणव्यवधानेपि नियमः प्रवर्त्तते इत्येवंपरतयानीयेत तथाप्यदोषः, अन्तरङ्गत्वात्तिबादिषु सत्सु शब्दान्तरप्राप्त्याऽनित्ययोरड्विकरणयोर्मध्ये परत्वादट्प्रवृत्तेः ! ननु विकरणः शब्दान्तरात्प्राप्तो न तु शब्दान्तरस्येति चेत् , किन्ततः ? न हि "शब्दान्तरस्य" इति वाचनिकम् , किन्तु न्यायोऽयम । तथा च शब्दान्तरस्य प्राप्नुवत इव तस्मात्प्राप्नुवतोऽप्यनित्यत्वम् । यद्व्यक्तिसम्बधितया पूर्वं प्राप्नोति तद्व्यक्तिसम्बन्धितया पुनरप्राप्तेस्तुल्यत्वात् । अत एवोपसर्गनियमे "अड्व्यवाय उपसङ्ख्यानम्" (का०वा०) इति वार्त्तिकं प्रत्याख्यातम् "शदेः शितः" (अष्टा०सू०१-३-६०) इति सूत्रे भगवता भाष्यकारेणेति दिक् । अर्थवद्ग्रहणपरिभाषया नेरुपसर्गस्य ग्रहणं तेनेह न-मधूनि विशन्ति भ्रमराः । कथं तर्हि—

"इत्युक्त्वा मैथिलीं भर्त्तुरङ्के निविशतीं भयात्" । (र०१२-३८) इति कालिदास इति चेत् , अङ्गानि विशतीमिति पाठ इति प्रामाणिकाः । यत्तु पदसंस्कारपक्षेण समाधानं दुर्घटवृत्तौ कृतम्, तन्न । अपवादाविषयपरिहारेणोत्सर्गप्रवृत्तेः । अन्यथाऽतिप्रसङ्गात् । "वा लिप्सायाम्"

(का०वा०) इत्यादेर्वैयर्थ्यापत्तेश्चेति दिक्।

परिव्यवेभ्यः क्रियः (अष्टा०सू०१-३-१८)। एभ्यः क्रीणातेरात्मनेपदं स्यात्। ञित्त्वादेव सिद्धे सत्यकर्त्रभिप्रायार्थोयमारम्भः। परिक्रीणीते, विक्रीणीते, अवक्रीणीते। पर्यादय उपसर्गा इह गृह्यन्ते। तन्त्रावृत्त्याद्याश्रयणेन क्रीणातेर्ये पर्यादयस्तेभ्यः क्रिय इति व्याख्यानात्। परस्परसाहचर्याद्वा। तेनेह न-'विक्रीणासि' इति। अत्र त्वेकदेशविकृतस्यानन्यत्वात्प्राप्नोति। न चायं विभक्तिविशिष्टस्य विरित्यस्य विकारो न तु विशब्दस्येत्युत्तरसूत्रस्थकैयटवाक्याद् भ्रमितव्यम्, विभक्तेर्लोपात्। प्रकृतिभागस्यैव विकारात्। कैयटस्याप्ययमपरितोषोस्त्येव। अत एव वक्ष्यति-"पक्षिवाचिनो विशब्दस्य सम्भवे तु साहचर्यादुपसर्गग्रहणं व्याख्येयम्" इति।

विपराभ्याञ्जेः (अष्टा०सू०१-३-१९)। स्पष्टोर्थः। विजयते, पराजयते। प्राग्वदुपसर्गग्रहान्नेह-विजयति, पराजयति, सेना। परा उत्कृष्टा। ननु 'जेः' इति कथं निर्देशः। "प्रकृतिवदनुकरणम" इत्यतिदेशेन धातुतया इयङि 'जियः' इति वक्तव्यत्वात्। न च 'नियः' क्रियः' इति दीर्घे सावकाशमियङं परत्वाद् "घेर्ङिति" (अष्टा०सू७-३-१११) इति गुणो बाधत इति युक्तम्। ह्रस्वेष्वपि पूर्वविप्रतिषेधेनेयङ् इष्टत्वात्। अत एव 'क्षियः' इति निर्दिश्यते। किञ्च "क्षियो दीर्घात्" (अष्टा०सू०८-२-४६) इति सूत्रे दीर्घग्रहणमपीह ज्ञापकम्। अन्यथा "क्षियः" इति निर्देशादेव दीर्घस्य निर्णये किं तेन? उच्यत-अनित्योयमतिदेशः। अतो नेयङ्। अनित्यतायां प्रमाणन्तु "ऋलृक्" (मा०सू०२) सूत्र एवोक्तम्। अविवक्षितार्थरूपमात्रानुकरणाद्वा। यत्तु "पराजेरसोढः" (अष्टा०सू०१-४-२६) इति सूत्रे इयङः परत्वाद् "घेः" (अष्टा०सू०७-३-१११) इति गुण इति हरदत्तेनोक्तम्, तच्चिन्त्यम्। "क्षियो दीर्घात्" (अष्टा०सू०८-२-४६) इत्येतत्सूत्रस्थभाष्यकैयटवृत्तिग्रन्थैस्तत्रत्यैहत्यस्वग्रन्थाभ्याञ्च सह विरोधात्।

आङो दोनास्यविहरणे (अष्टा०सू०१-३-२०)। आङ्पूर्वाद्ददातेर्मुखविकसनादन्यत्रार्थे वर्त्तमानादात्मनेपदं स्यात्। विद्यामादत्ते। अनास्यविहरणे किम्? मुखं 'व्याददाति'। आस्यग्रहणमविवक्षितम्। "उपेयिवाननाश्वान्" (अष्टा०सू०३-२-१०९) इत्यत्रोपशब्दवत्। तेनेहापि न-'विपादिकां व्याददाति'। पादस्फोटो विपादिका। नदीकूलं व्याददाति। पराङ्गकर्मकादनास्यइति निषेधो नेष्यते। तथा च वार्त्तिकम-स्वाङ्गकर्मकाच्चेति (का०वा०) स्वमङ्गमिह स्वाङ्गं न तु "अद्रवं मूर्त्तिम-

त्" इति परिभाषितम् । व्याददते पिपीलिकाः पतङ्गस्य मुखम् । कथन्तर्हि–"व्याददत्ते विहगपतिर्मुखं स्वकीयम्" । कर्त्रभिप्राये भविष्यति । अकर्त्रभिप्रायार्थो ह्ययमारम्भः । एतेन 'मुखं व्यादाय स्वपिति'इत्यत्र 'सुप्त्वा व्याद्त्ते' इति व्यत्यासेन प्रयोग इति प्रेत्य भावपरीक्षायां वाचस्पतिग्रन्थोपि व्याख्यातः । आङो ङिद्विशिष्टस्य ग्रहणान्नेह,—'भिक्षामाददाति' । अत्र स्मृताकार इति हरदत्तः ।

क्रीडोऽनुसम्परिभ्यश्च (अष्टा०सू०१-३-२१) । "क्रीडृ विहारे" (भ्वा० प०३५०) अस्मादात्मनेपदं स्यात् अनुसम्परिभ्यः । चकारादाङः । अनुक्रीडते, सङ्क्रीडते, परिक्रीडते, आक्रीडते । उपसर्गेण समा साहचर्यादनोः कर्मप्रवचनीयान्न । माणवकमनुक्रीडति । माणवकेन सहेत्यर्थः । "तृतीयार्थे" (अष्टा०सू०१-४-८५) इत्यनोः कर्मप्रवचनीयसंज्ञा । समोऽकूजने (का०वा०) सङ्क्रीडति शकटम् । "मयास्य सङ्क्रीडति चक्रिचक्रः" इति श्रीहर्षः । कथं तर्हि–"क्रीडते नागराजः" इति । अपप्रयोग एवायमित्याहुः । आगमेः क्षमायाम् (का०वा०) ण्यन्तस्येदं ग्रहणम् । आगमयस्व तावत् सहस्व कञ्चित्कालम्, मा त्वरिष्ठा इत्यर्थः । एतेन "यावदागमयतेऽथ नरेन्द्रान्" इति श्रीहर्षप्रयोगो व्याख्यातः । यावत्प्रतीक्षते इत्यर्थात् । शिक्षेर्जिज्ञासायाम् (का०वा०) धनुषि शिक्षते । "शिक्ष विद्योपादाने" (भ्वा०आ०५०६) इत्यस्य नेह ग्रहणम् । अनुदात्तेत्त्वादेव सिद्धत्वात् किन्तु शकेः सन्नन्तस्य । "सनिमीम" (अष्टा०सू०७-४-५४) इतीस् । धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः । क्रियैव हि शकेरर्थं प्रति विषयतयैवान्वेति । भोक्तुं शक्नोतीत्यादिदर्शनात् । भोजनविषयकशक्तिमानिति हि तदर्थः । "शकधृषज्ञाग्लाघटरभ" (अष्टा० सू०३-४-६५) इति तुमुन् । इह तु ज्ञानं विषयः । ज्ञातुमिति तु न प्रयुज्यते आत्मनेपदेनैव ज्ञानविषयकताया गमितत्वात् । न चैवं 'जिज्ञासायाम्' इत्यसङ्गतम् । ज्ञानेच्छा हि तदर्थः । लक्ष्ये तु ज्ञानं शक्तो विषयः । शक्तिस्तु सनर्थभूतायामिच्छायामिति व्याख्यानात्, सत्यम्, ज्ञानविशिष्टायाः शक्तेरिच्छाविषयतया ज्ञातस्यापि विषयतानपायात् । एतावानेव परम्भेदः । इच्छा सन्वाच्या शक्तिस्तु प्रकृत्यर्थः । तस्यास्तु ज्ञानविषयकत्वमात्मनेपदेन द्योत्यत इति । आशिषि नाथः (का०वा०) अनुदात्तेत्त्वादेव सिद्धे नियमार्थं वार्तिकम्–"आशिष्येव" इति । न चैवमनुदात्तत्वं व्यर्थमिति वाच्यम् । तस्य 'नाथने' इति युजर्थत्वात् । 'सर्पिषो नाथते' । "आशिषि नाथः" (अष्टा०सू०२-३-५५) इति कर्मणि षष्ठी । 'सर्पिर्मे भूयादित्याशास्ते' इत्यर्थः। कथं तर्हि–"नाथसे किमु पतिं

न भूभृताम्" (कि०१३-५९) इति भारविः। उच्यते-नाधसे इति पाठः। तवर्गचतुर्थस्थाने लिपिप्रमादाद् द्वितीयः पठ्यते। अत एव काव्यप्रकाशे च्युतसंस्कृतेरुदाहरणम्--

"तत्पल्लीपतिपुत्रि कुञ्जरकुलं कुम्भाभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः'।

(का०प्र०७-५) इति।

"अनुनाथति स्तनयुगम्" इति तु पठनीयमिति तत्रैवोक्तम्। अत्रापि धकारो वा पाठ्यः। हरतेर्गतताच्छील्ये (का०वा०) गतं प्रकारः। पैतृकमश्वा अनुहरन्ते। मातृकं गावोऽनुहरन्ते। पितुर्मातुश्चागतं प्रकारं सततं परिशीलयन्तीत्यर्थः। "ऋतष्ठञ्" (अष्टा०सू०४-३-७८) "इसुसुक्तान्तात्कः" (अष्टा०सू०७-३-५१)। गतताच्छील्ये किम्? मातुरनुहरति। सादृश्यमात्रमिह विवक्षितं न तु प्रकारताच्छील्यम्। किरतेर्हर्षजीविकाकुलायकरणेषु (का०वा०) विक्षेपार्थः किरतिः। हर्षादयस्तु विषयत्वेनोपात्ताः। तत्र हर्षो विक्षेपस्य कारणं जीविकाकुलायकरणे तु फलम्। एष्वेवार्थेषु "अपाच्चतुष्पात्" (अष्टा०सू०६-१-१४२) इति सुड्विधीयते। अपस्किरते वृषो हृष्टः, कुक्कुटो भक्षार्थी, श्वा आश्रयार्थी च। हर्षादिष्विति किम्? 'अपकिरति कुसुमम्'। इहात्मनेपदसुडागमौ न भवतः। हर्षादिमात्रसत्वे तु यद्यपि तङ् प्राप्नोति, तद्विधौ चतुष्पाच्छकुनिकर्तृकत्वस्य निमित्तत्वेनानुपादानात्, तथापि शब्दशक्तिस्वाभाव्यात्सुटा सह समानविषयोऽयं तङ्। तेन गजोऽपाकिरति इत्येव भवतीत्याहुः। आङि नुप्रच्छ्योः (का०वा०) आनुते। उत्कण्ठापूर्वं शब्दं करोतीत्यर्थः। "णु स्तुतौ" (भ्वा०प० १०३५) अदादिः। आपृच्छते। "प्रच्छ ज्ञीप्सायाम्" (तु०प०१४१४) तुदादिः। "ग्रहिज्या" (अष्टा०सू०६-१-१६) इति सम्प्रसारणम्। "शप उपालम्भने" "शप आक्रोशे" (भ्वा०उ०१०००) इति स्वरितेत्। तस्मात्मनेपदमकर्तृगेऽपि फलं वक्तव्यं शपथरूपेऽर्थे। 'देवदत्ताय शपते' त्वत्पादौ स्पृशामि नैतन्मया कृतमित्येकं रूपं शपथं करोतीत्यर्थः। "श्लाघह्नुङ्स्थाशपाम्" (अष्टा०सू०१-४-३४) इति सम्प्रदानसंज्ञा। क्रीप्स्यमाने-विवदन्ते। तद्यथा-"यस्मै आख्यायते स सम्प्रदानम्' इत्येके। "य आख्यायते सः" इत्यन्ये। कथं तर्हि-

"नीवीस्प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किञ्चिदपि स्मरामि"। इति॥

अत्राहुः-'स्वाशयं प्रकाशयामि' इत्येतावदिह विवक्षितं न तु श-

पथ इति ।

समवप्रविभ्यः स्थः (अष्टा०सू०१-३-२२) । एभ्यस्तिष्ठतेः प्राग्वत्। सन्तिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते । आङः प्रतिज्ञायामुपसंख्यानम् (का०वा०) 'शब्दं नित्यमातिष्ठते' नित्यत्वेन प्रतिजानीते इत्यर्थः। वृत्तौ तु 'अस्ति सकारमातिष्ठते' 'गुणवृद्धी आगमा वा तिष्ठते' इत्युदाहृतम्। अस्यार्थः—आपिशलिर्हि "अस भुवि" (अ०प०१०६५) इति न पठति किं तु सकारमात्रम् । स्तः सन्तीत्युदाहरणम् । 'अस्ति' 'आसीत्' इत्यादिसिद्धये तु अडाटावागमौ प्रतिजानीते । तावेव गुणवृद्धीति ।

प्रकाशनस्थेयाख्ययोश्च (अष्टा०सू०१-३-२३) । तिष्ठतेरेतयोरर्थयोरात्मनेपदं स्यात् । गोपी कृष्णाय तिष्ठते । स्वाभिप्रायं प्रकाशयतीत्यर्थः। "श्लाघह्नुङ्" (अष्टा०सू०१-४-३४) इति सम्प्रदानत्वम् । "संशय्य कर्णादिषु तिष्ठते यः" (कि०३-१४) कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः । स्थेयो विवादपदनिर्णेता तिष्ठतेऽस्मिन्निति व्युत्पत्तेः । वृत्तौ तु 'तिष्ठन्त्यस्मिन्' इति प्रयुक्तम् । तत्र प्रकरणाच्छिदिना विवादपदनिर्णेतुः प्रतीतिर्न तु शाब्दीत्यभिप्रायेण परस्मैपदं बोध्यम् । "कृत्यल्युटोबहुलम्" (अष्टा०सू०३-३-११३) इति अधिकरणे "अचो यत्" (अष्टा०सू०३-१-९७)।

उदोऽनूर्ध्वकर्मणि (अष्टा०सू०१-३-२४) । उत्पूर्वात्तिष्ठतेरनूर्ध्वत्वविशिष्टे परिस्पन्दे वर्त्तमानादात्मनेपदं स्यात् ।

"उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता" । (शि०२-१०)

अनूर्ध्वेति किम् ? "जवेन पीठादुदतिष्ठदच्युतः" (शि०१-१२) । इह क्रियाया अनूर्ध्वत्वं नाम उपरिदेशसंयोगफलकत्वाभावः । यद्यपि "उदोऽनूर्ध्वे" इत्युक्तेरनूर्ध्वताविशिष्टक्रियावाचकत्वं लभ्यत एव धातोः क्रियावाचित्वाव्यभिचारात्तथापि लोकप्रसिद्धपरिस्पन्दात्मककर्मपरिग्रहार्थं कर्मपदम् । तेनेह न—'अस्माद् ग्रामाच्छतमुत्तिष्ठति' । उत्पद्यत इत्यर्थः । तथा च "उद ईहायाम्" (का०वा०) इति वार्त्तिकं सौत्रकर्मपदसिद्धार्थकथनपरम् ।

उपान्मन्त्रकरणे (अष्टा०सू०१-३-२५) । मन्त्रकरणं कारकविशेषः तस्मिन्नर्थे वर्त्तमानादुपपूर्वकात्तिष्ठतेरात्मनेपदं स्यात् । आग्नेय्याऽग्नीध्रमुपतिष्ठते, ऐन्द्रया गार्हपत्यमुपतिष्ठते । मन्त्रकरणे किम् ? भर्तारमुपतिष्ठति यौवनेन । उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम् (का०वा०) देवपूजायां आदित्यमुपतिष्ठते । कथं तर्हि—

"स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती" (र०४-६) इति ।

देवतात्वारोपाद्धविष्यति । महीपतेर्देवतांशत्वाद्वा । सङ्गतकरणे रथिकानुपतिष्ठते । उपश्लिष्यतीत्यर्थः । एवं गङ्गा यमुनामुपतिष्ठते इति । मित्रकरणन्तूपश्लेषं विनाऽपि भवति । रथिकानुपतिष्ठते । अयं पन्थाः स्रुघ्नमुपतिष्ठते । प्राप्नोतीत्यर्थः । वा लिप्सायामिति वक्तव्यम् । (का० वा०) भिक्षुको ब्राह्मणमुपतिष्ठते, उपतिष्ठति वा । लिप्सया हेतुभूतया उपगच्छतीत्यर्थः ।

अकर्मकाच्च (अष्टा०सू०१-३-२६) । उपपूर्वकात्तिष्ठतेरकर्मकादात्मनेपदं स्यात् । भोजनकाले उपतिष्ठते । सन्निधत्ते इत्यर्थः ।

उद्विभ्यां तपः (अष्टा०सू०१-३-२७) । आभ्यां तपतेरकर्मकादात्मनेपदं स्यात् । उत्तपते, वितपते । दीप्यत इत्यर्थः । स्वाङ्गकर्मकाच्चेति वक्तव्यम् (का०वा०) । स्वमङ्गं स्वाङ्गम् । नतु "अद्रवम्" इति परिभाषितम् । उत्तपते, वितपते पाणिम् । अकर्मकात्स्वाङ्गकर्मकादित्युक्तेः स्वमङ्गं स्वाङ्गमिति व्याख्यानाच्च नेह—'देवदत्तो यज्ञदत्तस्य पाणिमुत्तपति' । सन्तापयतीत्यर्थः । सुवर्णमुत्तपति । सन्तापयति विलापयति वेत्यर्थः । उद्विभ्यां किम् ? निष्टपति । "निसस्तपतावनासेवने" (अष्टा० सू०८-३-१०२) इति मूर्धन्यः ।

आङो यमहनः (अष्टा०सू०१-३-२८) । आङ्पूर्वाभ्यामकर्मकाभ्यां स्वाङ्गकर्मकाभ्याञ्च यमिहनिभ्यामात्मनेपदं स्यात् । आयच्छते, आहते । आयच्छते पाणिम् । आहते शिरः । नेह—परस्य शिर आहन्ति । कथं तर्हि "आजघ्ने विषमविलोचनस्य वक्षः" (कि०१७-६३) इति भारविः । अत्र केचित्—'आज' इति पदं छित्वा 'घ्ने' इति भावे क्विपि चतुर्थ्येकवचनान्तमुक्त्वा घ्ने हन्तुं आज जगामेति व्याचख्युः, तन्न । अजेर्लिटि वीभावेन 'विवाय' इति सिद्धान्तात् । अन्ये तु विषमविलोचनस्य समीपमेत्य स्वं वक्षमास्फालितवानित्यर्थः । मल्लो ह्युत्साहाविष्करणाय स्वं वक्षमास्फालयतीत्याहुः । भागवृत्तौ तु प्रमाद एवायमित्युक्तम् । एवञ्च "मोहादाहध्वं मा रघूत्तमम्" इति भट्टिप्रयोगोपि चिन्त्यः ।

समो गम्यृच्छिभ्याम् (अष्टा०सू०१-३-२९) । सम्पूर्वाभ्यामकर्मकाभ्यां गम्यृच्छिभ्यामात्मनेपदं स्यात् । सङ्गच्छते, समृच्छिष्यते । अकर्मकाभ्यां किम् ? ग्रामं सङ्गच्छति । कथन्तर्हि "तच्चैकयं समगच्छत" इति आर्षत्वात् । यद्वा—चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । एकं समपद्यतेत्यर्थः । विदिपृच्छिस्वरतीनामुपसङ्ख्यानम् (का०वा०) विदेर्ज्ञानार्थस्येह ग्रहणम् । परस्मैपादिभ्यां साहचर्यात् न लाभार्थस्य । स हि स्वरितेत्वादुभयपदी । सत्ताविचारणार्थयोस्त्वनुदात्तेत्वादात्मनेपदं सिद्धमेव ।

संविते, संविदाते, संविदते। सम्पृच्छते, संस्वरते। अर्त्तिश्रुदृशिभ्य-श्चेति वक्तव्यम् (का०वा०)। 'अर्त्ति' इतिभ्वादिजुहोत्यादी द्वावपि गृह्येते। "सर्त्तिशास्ति" (अष्टा०सू०३-१-५६) इत्यङ्विधौ तु शास्तिना लुप्तविकरणेन साहचर्याज्जुहोत्यादेरेव ग्रहणम्। परस्मैपदेषु इति तूत्तरार्थमनुवर्त्तमानमपि योगविभागसामर्थ्यादङ्विधौ न सम्बध्यते। तेन 'मासमृत' 'मासमृषातां' 'मासमृषत' इति भाष्यं-भ्वाद्यभिप्रायेण। 'समारत' 'समारेतां' 'समारन्त' इति वृत्तिस्तु जुहोत्याद्यभिप्रायेण योज्या। संशृणुते सम्पश्यते। "रक्षांसीति पुराऽपि संशृणुमहे" इति मुरारिप्रयोगस्तु चिन्त्यः। अकर्मकादित्यनुवृत्तेः। वृत्तिकारस्तु "समो गम्यृच्छिप्रच्छिस्वरत्यर्त्तिश्रुविदिभ्यः" इति पठित्वा "दृशेश्च" इति वक्तव्यरूपेण पपाठ। तत्र वार्त्तिकानुपूर्वीभङ्गे केषाञ्चिदेव सूत्रे प्रक्षेपे दृशेश्च तद्बहिष्कारे बीजं न पश्यामः। अथास्मिन्नकर्मकाधिकारे ये सकर्मका हनिगमिप्रभृतयस्तेषां कथमकर्मकता। उच्यते—

"धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात्।
प्रसिद्धेराविवक्षातः कर्मणोकर्मिका क्रिया"॥

'वहति भारम्' इति प्रापणे सकर्मको वहिः। स्पन्दने त्वकर्मकः। 'वहन्ति नद्यः' इति। प्राणविशिष्टं धारणं जीवतिराह। गात्रविशिष्टं विक्षेपञ्च नृत्यतिः। अतो द्वावप्यकर्मकौ। प्रसिद्धेर्यथा-'मेघो वर्षति' इति। कर्मणोऽविवक्षातो यथा-"हितान्न यः संशृणुते स किं प्रभुः" (किं०१-५)। "उपसर्गादस्यत्यूह्योर्वा" (का०वा०) इति वक्तव्यम्। इति आरभ्याकर्मकादिति न सम्बध्यते। निरस्यति, निरस्यते। समूहति, समूहते। उपसर्गात्किम्? अस्यति, ऊहते। अनुदात्तेत्वादात्मनेपदी। कथन्तर्हि "अनुक्तमप्यूहति पण्डितो जनः" इत्यादि। चाक्षिङो ङित्करणेनानुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यताज्ञापनात्समाधेयम्।

निसमुपविभ्यो ह्वः (अष्टा०सू०१-३-३०)। स्पष्टोर्थः। निह्वयते। अकर्त्रभिप्रायार्थं सूत्रम्। स्यादेतत्--'निह्वास्यते' इत्याद्युदाहरणमस्तु न तु 'निह्वयते' इति। आकारान्तस्य सूत्रे उपादानात्। एकारान्तस्य ग्रहणाभावात्। नहि विकृतिः प्रकृतिं गृह्णातीति चेत्? उच्यते--आकारान्तादपि कथमभ्युपैषि। नहि 'ह्वः' इति सूत्रे आकारविशिष्टः पठितः। प्रयोगसमवायिनां वाचकतेति सिद्धान्तरीत्या 'ह्व' इति वान्तस्य आकारान्तमर्थः। 'दध्ना' इत्यत्र नान्तस्य दधी वेति यदि तर्हि वान्तस्यैव एकारान्तमर्थं इत्यपि तुल्यम्। प्रक्रियादशायां हि एकारान्तानुकरणे लक्षणवशाद्यात्वं मे न आकारान्त इहानुकार्यः। तस्मान्न कि-

श्चिदिहानुपपन्नम्। यत्तु न्यासकृतोक्तं "नव्यो लिटि" (अष्टा०सू०६-१-४६) इत्यात्वनिषेधके सूत्रे कृतात्वस्य 'व्य' इत्यस्य निर्देशाज्ज्ञापकाद्विकृतिरपि प्रकृतिं गृह्णातीति। सोयमस्थाने संरम्भः। उक्तरीत्या पूर्वपक्षस्य शिथिलत्वात्। "एरनेकाचः" (अष्टा०सू०६-४-८२) "ओः सुपि" (अष्टा०सू०६-४-८३) इत्यादावपि विकृतिग्रहणे 'शिशयिषत' इत्यादावपि यणापत्तेः। विकृतेः प्रकृतिग्राहकत्वे 'विश्वराजौ' इत्यत्रापि "विश्वस्य वसुराटोः" (अष्टा०सू०६-३-१२८) इति दीर्घप्रसङ्गात्। 'तुरासाहम्' इत्यादौ मूर्धन्यप्रसङ्गाच्चेति दिक्।

स्पर्धायामाङः (अष्टा०सू०१-३-३१)। आङ्पूर्वात् ह्वयतेरात्मनेपदं स्यात्स्पर्धाया विषये। मल्लमाह्वयते। स्पर्धमानस्तस्याह्वानङ्करोतीत्यर्थः। स्पर्धायां किम्? पुत्रमाह्वयति। यद्यपि स्पर्धायामप्ययं धातुः पठ्यते तथापि आङ्पूर्वकस्तत्र न वर्त्तते किं तु शब्दने। अत एव स्पर्धायां विषये अयं विधिरिति व्याख्यातम्।

गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः (अष्टा०सू०१-३-३२)। सप्तस्वर्थेषु कृञ आत्मनेपदं स्यादकर्तृगेपि फले। गन्धनमिह सूचनम्। तथाहि-"गन्ध अर्दने" (चु०आ०१६८५) अर्द हिंसायाम्" (चु०उ०१८२९) इति च चुरादौ पाठाद्गन्धनं हिंसा। सूचनमपि वधबन्धादिकरणत्वाद्धिंसेति स एवेह गन्धनशब्दार्थः। उत्कुरुते सूचयतीत्यर्थः। अवक्षेपणं भर्त्सनम्। श्येनो वर्तिकामुदाकुरुते भर्त्सयते इत्यर्थः। हरिमुपकुरुते सेवत इत्यर्थः। सहसा वर्त्तते साहसिकः। "ओजः सहोम्भसा वर्त्तते(अष्टा०सू०४-४-२७) इति ठक्। तस्य कर्म साहसिक्यम्। ष्यञ्। परदारान्प्रकुरुते तेषु सहसा प्रवर्त्तत इत्यर्थः। प्रतियत्ने-एधो दकस्योपस्कुरुते। "अवोदैधौद्म" (अष्टा० सू०६-४-२९) इति निपातः। समाहारद्वन्द्वः। कृञः प्रतियत्ने" (अष्टा० २-३-५३) इति षष्ठी। "उपात्प्रतियत्न" (अष्टा०सू०६-१-१३९) इत्यादिना सुट्। तस्य गुणान्तराधानं करोत्यर्थः। गाथाः प्रकुरुते। प्रकर्षेण कथयतीत्यर्थः। उपयोगः समीचीनो विनियोगः। शतं प्रकुरुते। धर्मार्थं विनियुङ्क्त इत्यर्थः। एषु किम्? कटं करोति।

अधेः प्रसहने (अष्टा०सू०१-३-३३)। अधिपूर्वात्कृञः प्राग्वदभिभवे क्षमायाञ्च। "षह मर्षणे" (भ्वा०आ०८५२) अभिभवे चेति पाठात्। ये तु "अभिभवे छन्दसि" इति पठन्ति तेषामपि छन्दसीति प्रायोवाद इति हरदत्तः। तमधिचक्रे। अभिभूतवान् सोढवानित्यर्थः। अनेन

"भ(१)वादृशाश्चेदधिकुर्वते परान्" (कि०१-४३) इति भारविप्रयोगोऽपि व्याख्यातः । क्षमन्ते इत्यर्थात् ।

वेः शब्दकर्मणः (अष्टा०सू०१-३-३४) । विपूर्वात्कृञ आत्मनेपदं स्यात् शब्दश्चेत्कर्म कारकं भवति । स्वरान्विकुरुते । उच्चारयतीत्यर्थः । शब्दकर्मणः किम् ? चित्तं विकरोति कामः ।

अकर्मकाच्च (अष्टा०सू०१-३-३५) । वेः कृञोऽकर्मकात्प्राग्वत् ।

"हीनान्यनुपकर्तॄणि प्रवृद्धानि विकुर्वते" ।

सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः (अष्टा० सू०१-३-३६) । एषु बोधनीयेषु नयतेरात्मनेपदं स्यात् । तत्रोत्सञ्जनज्ञानविगणनव्यया नयतेर्वाच्याः । इतरे प्रयोगोपाधयः । तथाहि आचार्यः शास्त्रे नयते । शास्त्रीयसिद्धान्तानुपपत्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रापयतीत्यर्थः । ते च शिष्या युक्तिभिर्निश्चाय्यमानाः सम्मानिता भवन्ति तदीयाभिलाषितार्थसम्पादनात् । तथा चात्र नयतेः प्रापणमेवार्थः । शिष्यसम्मानन्तु तदीयं फलं सत्प्रयोगोपाधिः । उत्सञ्जने-दण्डमुन्नयते । उत्क्षिपतीत्यर्थः । आचार्यकरणे-माणवकमुपनयते । विधिना आत्मसमीपप्रापणमिह नयतेरर्थः । तत्फलं माणवकसंस्कारः । तस्य कर्तृगामित्वाभावादप्राप्तमात्मनेपदं आचार्यकरणे विधीयते उपनयनपूर्वकेणाध्यापनेन हि कश्चिदतिशयोऽध्यापके जन्यते । स एवाचार्यशब्दप्रवृत्तिनिमित्तम् ।

"उपनीय ददद्वेदमाचार्यः स उदाहृतः" (या०स्मृ०१-३४)

इत्यपि अतिशयविशेषपरिचायकपरम् । तथा चाचार्यकरणं फलीभूतं प्रयोगोपाधिः । न च तस्य कर्तृगामित्वादात्मनेपदं सिद्धमेवेति वाच्यम् । नहि तदुपनयनक्रियायाः साक्षात्फलं किन्तूपनयनपूर्विकाया अध्यापनक्रियायाः । प्रयोगोपाधित्वं तु परम्परया फलीभूतस्याप्यस्तीति दिक् । "विनिन्युरेनं गुरवो गुरुप्रियम्" इत्यत्र तु आचार्यकरणस्याविवक्षितत्वान्न तङ् । विवक्षा हि स्वायत्तेति "उपज्ञोपक्रमं तदा-

(१) "भवादृशाश्चेदधिकुर्वते रतिं" (कि०१-४३) इति पाठः । स च मल्लिनाथेन रतिं सन्तोषं अधिकुर्वते स्वीकुर्वते चेत इति व्याख्यातः । तेनैव च "अत्र प्रसहनस्यासङ्गतेरधिपूर्वात् करोतेः "अधेः प्रसहने" (अष्टा०सू०१-३-३३) इत्यात्मनेपदं न भवति । प्रसहनं परिभवः इति काशिका । तथाऽप्यस्याः कर्त्रभिप्रायविवक्षायामेव प्रयोजकत्वात् । कर्त्रभिप्राये "स्वरितञितः" (अष्टा०सू०१-३-७२) इत्यात्मनेपदं प्रसिद्धम्" इत्युक्तम् ।

धाचिख्यासायाम्" (अष्टा०सू०२-४-२१) इतीच्छासना ज्ञापितम् । ज्ञाने-तत्त्वं नयते । निश्चिनोतीत्यर्थः । भृतिर्वेतनम् । कर्मकरानुपनयते । भृति-दानेनात्मसमीपं प्रापयतीत्यर्थः । विगणनमृणादेर्निर्यातनम् । करं विनय-ते । राजदेयं भागं शोधयति । निर्यातयतीत्यर्थः । व्ययो धर्मादौ विनियो-गः । शतं विनयते । धर्मार्थं विनियुङ्क्त इत्यर्थः । एषु किम् ? घटं नयति ।

कर्तृस्थे चाशरीरे कर्मणि (अष्टा०सू०१-३-२३) । नियः कर्तृस्थे कर्मणि यदात्मनेपदं प्राप्तं तच्छरीरावयवभिन्न एव स्यात् । शरीरश-ब्देन तदवयवो लक्ष्यते । शरीरतादात्म्यापन्नस्य कर्तृतया शरीरस्थ तत्स्थत्वासम्भवात् । अवयवानान्तु सम्बन्धविशेषेण तत्स्थत्वस्यानुभ-वात् । अत एव हि "करादि पुरुषत्वव्याप्यम" इत्युद्घोषः । क्रोधं विन-यते । स्वकीयं क्रोधमपगमयतीत्यर्थः । क्रोधापनयनफलस्य चित्तप्रसा-दादेः कर्तृगतत्वात् "स्वरितञितः" (अष्टा०सू०१-३-७२) इति सूत्रेण सिद्धे नियमार्थमिदम् । तेनेह न-गडुं विनयति । कथन्तर्हि "विगणय्य नयन्ति पौरुषं विजितक्रोधरया जिगीषवः" (कि०२-३५) इति भारविः । कर्त्रभिप्रायत्वाविवक्षायां भविष्यति । केचित्तु अपनयने वर्त्तमानादने-नात्मनेपदं विधीयते । इह तु करोत्यर्थे प्राप्त्यर्थे वा वर्त्तते । धातूना-मनेकार्थत्वादित्याहुः ।

वृत्तिसर्गतायनेषु क्रमः (अष्टा०सू०१-३-३८) । क्रम आत्मनेपदं स्यादप्र-तिबन्धोत्साहस्फीततासु । वृत्तौ-ऋच्यस्य क्रमते बुद्धिः । न प्रतिहन्यत इत्यर्थः । सर्गे-व्याकरणाध्ययनाय क्रमते । उत्सहत इत्यर्थः । "सृजतेरु-त्साहार्थता येनेन्द्रलोकावजयाय सृष्टः' इत्यादौ प्रसिद्धा । तायने क्रम-न्तेऽस्मिन् शास्त्राणि । स्फीतीभवन्तीत्यर्थः । "तायृसन्तानपालनयोः" (भ्वा०आ०४८९) इत्यस्माल्ल्युटि 'तायनम्' इति रूपम् ।

उपपराभ्याम् (अष्टा०सू०१-३-३९) । वृत्त्यादिषूपपराभ्यामेव क्रमेरा-त्मनेपदं स्यान्न तूपसर्गान्तरपूर्वात् । उपक्रमते । आभ्यामेवेति नियमा-न्नेह-सङ्क्रामति । वृत्त्यादिष्वित्येव । नेह-उपक्रामति पराक्रामति ।

आङ उद्गमने (अष्टा०सू०१-३-४०) । आङ्पूर्वात्क्रमेरुद्गमने वर्त्तमा-नादात्मनेपदं स्यात् । आक्रमते आदित्यः । उदयत इत्यर्थः । ज्योति-रुद्गमन इति वाच्यम् (का०वा) । नेह-आक्रामति धूमो हर्म्यतलात् । भा-ष्ये तु 'हर्म्यतलम्' इति पठ्यते । तत्रोद्गमनपूर्विकायां व्याप्तौ क्रमिर्द्रष्टव्यः न तूद्गमनमात्रे अकर्मकतापत्तेः । कथन्तर्हि "नभः समाक्रामति चन्द्रमाः क्रमात्" इति । उच्यते-व्याप्ताविह क्रमिर्वर्त्तते न तूद्गमने ।

वेः पादविहरणे (अष्टा०सू०१-३-४१) । विपूर्वात्क्रमेः पादविहरणे

वर्त्तमानादात्मनेपदं स्यात्। साधु विक्रमते वाजी। पादविहरणं पादविक्षेपः। यद्यपि क्रमिस्तत्रैवार्थे पठ्यते तथापि धातूनामनेकार्थत्वात्सूत्रेऽर्थोपादानम्। तेनेह न—विक्रामत्यजिनसन्धिः द्विधाभवति स्फुटतीत्यर्थः।

प्रोपाभ्यां समर्थाभ्याम् (अष्टा०सू०१-३-४२)। तुल्यार्थाभ्यां प्रोपाभ्यां क्रमेरात्मनेपदं स्यात्। समस्तुल्योऽर्थो ययोरिति विग्रहे शकन्ध्वादित्वात्पररूपं सशब्द एव वा तुल्योऽर्थो बोध्यः। प्रारम्भेऽनयोस्तुल्यार्थता। प्रक्रमते, उपक्रमते। आरभते इत्यर्थः। समर्थाभ्यां किम्? प्रक्रामति गच्छतीत्यर्थः। उपक्रामति। आगच्छतीत्यर्थः। "उपपराभ्याम्" (अष्टा०सू०१-३-३९) इति तु नेह प्रवर्त्तते। तत्र वृत्त्यादिग्रहणानुवृत्तेरुक्तत्वात्। इह च वृत्त्यादेरविवक्षणात्।

अनुपसर्गाद्वा (अष्टा०सू०१-३-४३)। अनुपसर्गात्क्रमेरात्मनेपदं वा स्यात्। क्रामति, क्रमते। 'उपपराभ्याम्' (अष्टा०सू०१-३-३९) इत्यस्य नियमार्थत्वाद्वृत्त्यादिसूत्रमनुपसर्गविषयकमेव। तेन वृत्त्यादौ नायं विकल्पः। तस्मादप्राप्तविभाषैवेयम्।

अपन्हवे ज्ञः (अष्टा०सू०१-३-४४)। अपलापे वर्त्तमानाज्ज्ञानातेरात्मनेपदं स्यात्। शतमपजानीते अपलपतीत्यर्थः।

अकर्मकाच्च (अष्टा०सू०१-३-४५)। अकर्मकाज्ज्ञानातेरात्मनेपदं स्यात्। सर्पिषो जानीते। सर्पिषा उपायेन प्रवर्त्तत इत्यर्थः। "ज्ञोविदर्थस्य" (अष्टा०सू०२-३-५१) इति करणे षष्ठी। 'अकर्मकात्' इत्यस्य स्थाने 'सकरणात्' इत्येव तु नोक्तम्। "स्वरेण पुत्रं जानाति" इत्यत्रातिव्याप्तेः।

सम्प्रतिभ्यामनाध्याने (अष्टा०सू०१-३-४६)। आभ्यां जानातेरात्मनेपदं स्यादनाध्याने। शतं सञ्जानीते। अवेक्षत इत्यर्थः। शतम्प्रतिजानीते। अङ्गीकरोतीत्यर्थः। अनाध्याने किम्? मातुः सञ्जानाति। उत्कण्ठापूर्वं स्मरतीत्यर्थः। "अधीगर्थ" (अष्टा०सू०२-३-५२) इति कर्मणि षष्ठी। ननु तत्र "शेषे" इत्यनुवर्त्तते तेनात्र कर्मणः शेषत्वेन विवक्षितत्वात् "अकर्मकाच्च" (अष्टा०सू०१-३-४५) इति पूर्वेण प्राप्नोति, अत्राहुः—'अनाध्याने' इति विभज्यते। स चोभयोर्योगयोः शेषः तेनाध्याने पूर्वेणापि न भवतीति।

भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः (अष्टा०सू०१-३-४७)। एष्वर्थेषु वदेरात्मनेपदं स्यात्। अत्रोपसम्भाषोपमन्त्रणे धातोर्वाच्ये। इतरे प्रयोगोपाधयः। भासनन्दीप्तिः। शास्त्रे वदते। भासमानो ब्रवीतीत्यर्थः। भासनं हेतुभूतं सद्विशेषणं शिष्यैः स्तूयमानो हि भासते।

तथा चोपर्युपरि शास्त्रार्थप्रतिभासात्सुष्ठूक्तिर्निर्वहति । तेजोभङ्गे तु न शक्नुयाद्वदितुमिति भावः । उपसम्भाषो उपसान्त्वनम् । कर्म्मकरानुपवदते । उपसान्त्वयतीत्यर्थः । ज्ञाने-शास्त्रे वदते । उक्तिविषयकज्ञानवानिति फलितोऽर्थः । यत्नः उत्साहः । क्षेत्रे वदते । तद्विषयकमुत्साहमाविष्करोतीत्यर्थः । अत्राविष्करणरूपस्य वदत्यर्थस्य यत्नः कर्मेत्याहुः । विशिष्टोऽत्र वदतेरर्थ इत्यपि सुवचम् । विमतौ-क्षेत्रे विवदन्ते । विमत्या हेतुभूतया नानाविधं भाषन्त इत्यर्थः । उपमन्त्रणम् उपच्छन्दनम् । कुलभार्यामुपवदते । स्वाभिलषिते प्रवर्त्तयितुं प्रार्थयत इत्यर्थः । एष्विति किम् ? यत्किञ्चिद्वदति ।

व्यक्तवाचां समुच्चारणे (अष्टा०सू०१-३-४८) । मनुष्यादीनां सम्भूयोच्चारणे वदेरात्मनेपदं स्यात् । सम्प्रवदन्ते ब्राह्मणाः देवा वा । यद्यपि वद धातुर्व्यक्तायामेव पठ्यते, तथापि "व्यक्तवाचाम्" इत्युपादानसामर्थ्याद्येषां प्रसिद्धतरं व्यक्तवाक्यन्तदेवेह गृह्यते । तेन शुकसारिकादीनां समुच्चारणे न भवति । "वरतनु सम्प्रवदन्ति कुक्कुटाः" । नन्विह तनुशब्दस्य ह्रस्वान्तत्वे सम्बुद्धौ चेति गुणेन भाव्यं दीर्घान्तत्वे नदीलक्षणः कप् प्राप्नोति ? सत्यम्, तनुशब्दः स्त्रीजातौ कविभिः प्रयुज्यते । तस्मात् "ऊङुतः" (अष्टा०सू०४-१-६६) इत्यूङि कृते कर्मधारयोऽयमिति हरदत्तः ।

अनोरकर्मकात् (अष्टा०सू०१-३-४९) । अनुपूर्वाद्वदेरकर्म्मकाद्व्यक्तवाग्विषयकादात्मनेपदं स्यात् । अनुवदते कठः कलापस्य । अनुः सादृश्ये । तेन 'कलापस्य' इति तुल्यार्थयोगे शेषलक्षणा षष्ठी । अकर्मकादिति किम् ? पूर्वोक्तमनुवदति । व्यक्तवाचामित्येव । अनुवदति वीणा ।

विभाषा विप्रलापे (अष्टा०सू०१-३-५०) । विप्रलापात्मके व्यक्तवाचां समुच्चारणे वर्त्तमानाद्वदेरात्मनेपदं वा स्यात् । विप्रवदन्ते विप्रवदन्ति वा वैद्याः । युगपत्परस्परविरोधेन वदन्तीत्यर्थः । विप्रलापे किम् ? सम्प्रवदन्ते ब्राह्मणाः । व्यक्तवाचामित्येव । विप्रवदन्ति शकुनयः । समुच्चारण इत्येव । क्रमेण विप्रवदन्ति ।

अवाद्ग्रः (अष्टा०सू०१-३-५१) । अवपूर्वाद्गिरतेरात्मनेपदं स्यात् । अवगिरते । अवात्किम् ? गिरति । "गृणातेस्त्ववपूर्वस्य प्रयोगो नास्ति अनभिधानात्" इति भाष्यम् ।

समः प्रतिज्ञाने (अष्टा०सू०१-३-५२) । सम्पूर्वाद्गिरतेः प्रतिज्ञाने वर्त्तमानादात्मनेपदं स्यात् । शब्दं नित्यं सङ्गिरते । प्रतिजानीत इत्यर्थः । प्रतिज्ञाने किम् ? सङ्गिरति ग्रासम् ।

उदश्चरः सकर्मकात् (अष्टा०सू०१-३-५३) । उत्पूर्वात्सकर्म्मकाच्चरतेरात्मनेपदं स्यात् । धर्म्ममुच्चरते । उल्लङ्घ्य गच्छतीत्यर्थः । सकर्मकात्किम् ? बाष्पमुच्चरति । उपरिष्टाद्गच्छतीत्यर्थः ।

समस्तृतीयायुक्तात् (अष्टा०सू०१-३-५४) । सम्पूर्वाच्चरतेस्तृतीयान्तेन युक्तादात्मनेपदं स्यात् । रथेन सञ्चरते । तृतीयायुक्तात्किम् ?

"उभौ लोकौ सञ्चरसि इमं चामुञ्च देवल" ।

दाणश्च सा चेच्चतुर्थ्यर्थे(अष्टा०सू०१-३-५५) । सम्पूर्वाद्दाणस्तृतीयान्तेन युक्तादात्मनेपदं स्यात्सा चेत्तृतीया चतुर्थ्यर्थे । दास्या संयच्छते । कामुकः संस्तये ददातीत्यर्थः । अशिष्टव्यवहारे चतुर्थ्यर्थे तृतीया वक्तव्या (का०वा०) । एतच्चानेनैव ज्ञाप्यते । यद्वा—इह सूत्रे चेच्छब्दश्चशब्दार्थे । निपातानामनेकार्थत्वात् । सा च चतुर्थ्यर्थे भवतीत्यर्थः । "अशिष्टव्यवहार" इति तु वक्तव्यमेव । भाष्ये त्विदं सूत्रमपि प्रत्याख्यातम् । तथाहि—"यो दास्या सह भुञ्जानस्तया दत्तं स्वयं भुङ्क्ते स्वयञ्च तस्यै ददाति तद्विषयेऽयं प्रयोग इष्यते । तत्र "सहयुक्ते" (अष्टा०सू० २-३-१९) इत्येव तृतीया । कर्मव्यतिहारे च तङ् । दानपूर्वके भोगे दाणधातुर्बोध्यः" इति । नन्वारभ्यमाणे सूत्रे 'सम्प्रयच्छत' इत्यत्र कथं तङ् 'समः' इति पञ्चम्या आनन्तर्यलाभात् । अत्राहुः—'समः' इति विशेषणषष्ठी तेन पूर्वसूत्रमपि 'अश्वेन समुदाचरते' इत्यादौ प्रवर्त्तत इति दास्या सम्प्रयच्छते इत्युदाहृत्य शिष्टव्यवहारे तु 'ब्राह्मणीभ्यः सम्प्रयच्छति' इति प्रत्युदाहरन् भाष्यकारश्चेह व्याख्याने प्रमाणम् ।

उपाद्यमः स्वकरणे (अष्टा०सू०१-३-५६) । उपपूर्वाद्यमः प्राग्वत् स्वीकारेऽर्थे । भार्यामुपयच्छते । यत्स्वस्य सतो रूपान्तरेण करणं तदिह न गृह्यते किन्त्वस्वस्य सतो यत्स्वत्वसम्पादनं तदेव । च्विप्रत्ययस्तु सूत्रे न कृतः "समर्थानां प्रथमाद्वा" (अष्टा०सू०४-१-८२) इति विकल्पितत्वात् । तेनेह न—स्वं शाटकमुपयच्छतीति । अत्र वृत्तिकारः पाणिग्रहण एवेष्यते । तेनेह न-देवदत्तो यज्ञदत्तस्य भार्यामुपयच्छति । दासीत्वेन रूपेण स्वीकरोतीत्यर्थ इति । एतच्च भाष्यविरुद्धम् । तत्र स्वीकारमात्रे आत्मनेपदस्योक्तत्वात् । तथा च भट्टिः प्रायुङ्क्त—

"उपायंस्त महास्त्राणि शस्त्राण्यपायंसत जित्वराणि" ।

"नोपायंस्त दशाननः" । "उपायंसत नालवम्" इत्यादि ।

ज्ञाश्रुस्मृदृशां सनः (अष्टा०सू०१-३-५७) । सन्नन्तानामेषामात्मनेपदं स्यात् । "अपन्हवे ज्ञः" (अष्टा०सू०१-३-४४) इत्यादिभिः सूत्रैर्जानातेरात्मनेपदं विहितं श्रुदृशोरपि "समोगम्यृच्छिभ्याम्" (अष्टा०सू०१-३-

२९) इत्यत्रोपसङ्ख्यानम् । तस्मिंश्च विषये "पूर्ववत्सनः" (अष्टा०सू०१-३-६२) इत्येव सिद्धम्। विषयान्तरेऽनेन विधीयते स्मरतेस्तु अप्राप्त एव विधानम् । धर्मं जिज्ञासते, शुश्रूषते, सुस्मूर्षते, दिदृक्षते ।

नानोर्ज्ञः (अष्टा०सू०१-३-५८)। अनुपूर्वाज्जानातेः सन्नन्तादात्मनेपदं न स्यात्। पुत्रमनुजिज्ञासति। अनोः किम्? धर्मं जिज्ञासते। पूर्वसूत्रेण प्राप्तस्यायं निषेधः। "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति न्यायात्। तथा च सकर्मकस्यैव प्रतिषेध इति फलितम्। पूर्वसूत्रस्य सकर्मकविषयत्वादकर्मकात्तु "पूर्ववत्सनः" (अष्टा०सू० १-३-६२) इत्यात्मनेपदं भवत्येव। "अकर्मकाच्च" (अष्टा०सू०१-३-४५) इति सूत्रेण केवलाद्विधानात् । (१)औषधस्यानुजिज्ञासते औषधेन प्रवर्त्तितुमिच्छतीत्यर्थः।

प्रत्याङ्भ्यां श्रुवः (अष्टा०सू०१-३-५९)। आभ्यां श्रुवः सन्नन्तादात्मनेपदं न स्यात्। प्रतिशुश्रूषति, आशुश्रूषति। उपसर्गग्रहणं चेदम्, परस्परसाहचर्यात्। तेनेह न—देवदत्तं शुश्रूषते । "लक्षणेत्थम्भूत" (अष्टा०सू०१-४-९४) इत्यादिना प्रतिः कर्मप्रवचनीयो नोपसर्गः।

शदेः शितः (अष्टा०सू०१-३-६०)। शितः प्रकृतिभूतो यः शदिस्तस्मादात्मनेपदं स्यात्। शीयते, शीयेते, शीयन्ते। शितः किम्? शत्स्यति, अशत्स्यत् । "शेषात्कर्त्तरि" (अष्टा०सू०१-३-७८) इति परस्मैपदम्।

म्रियतेर्लुङ्लिङोश्च (अष्टा०सू०१-३-६१)। शितो लुङ्लिङोश्च प्रकृतिभूतो यो म्रियतिस्तत एवात्मनेपदं स्यान्नान्यस्मात्। तत्र शित्प्रकृतित्वं पूर्ववच्छिदुत्पत्तेः प्रागेव योग्यतया बोध्यम्। लुङ्लिङोस्तु सत्यामेवोत्पत्तौ बोध्यम। म्रियते, म्रियताम्, अम्रियत, अमृत, मृषीष्ट। नियमः किम्? ममार, मर्त्तासि, मरिष्यति, अमरिष्यत्। ङित्वं तु स्वरार्थम्। मा हि मृत। लुङि "तास्यनुदात्तेत्" (अष्टा०सू०६-१-१८६) इति ङिल्लक्षणः सार्वधातुकनिघातः। "हि च" (अष्टा०सू०८-१-३४) इति तिङि निघातप्रतिषेधः।

पूर्ववत्सनः (अष्टा०सू०१-३-६२)। सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात्। येन निमित्तेन सनः प्रकृतेरात्मनेपदं विधीयते तदेव निमित्तं सना व्यवहितं सदप्यात्मनेपदं प्रवर्त्तयतीत्यर्थः। इह सूत्रे "तेन तुल्यम्" (अष्टा०सू०५-१-११५) इति तृतीयान्ताद्वतिर्न तु पञ्चम्यन्तात्, लक्षणाभावात्। यथा च 'ब्राह्मणेन तुल्यं वैश्यादधीते'

(१) "ज्ञोविदर्थस्यकरणे" (अष्टा०सू०२-३-५१) इत्यनेन षष्ठी।

इत्यत्र ब्राह्मणादिवेति गम्यते तथेहापि पूर्वस्मादिवेति गम्यते । ब्राह्मणापादानकेऽध्ययने ब्राह्मणशब्दस्य लक्षणया ब्राह्मणापादानकाध्ययनसादृश्यं वैश्यापादानकाध्यापनमिति क्रियासाम्यं दृष्टान्ते निर्वाह्यम् । अन्यथा वतिप्रत्ययायोगात् । यदाह–"तेन तुल्यं क्रिया चेत्" (अष्टा०सू०५-१-११५) इति । एवञ्च प्रकृतेऽपि आत्मनेपदभावनस्य तुल्यत्वं बोध्यम् । तदपि निमित्तस्य तुल्यत्वात्तद्द्वारकमिति फलितोऽर्थः । एतेन 'शब्दोऽनित्यः, कृतकत्वात् । घटवत्' इत्यादि व्याख्यातम् । तत्रापि भवनक्रियायाः साम्यात् । अन्यथा वत्प्रत्ययासाधुतापत्तेः । अत एवानित्यो भवितुमर्हतीति प्राञ्चः प्रयुञ्जते । साध्यपदस्य ज्ञाने लक्षणया ज्ञानयोः साम्यं वाक्यार्थ इति वास्तु । सर्वथापि शब्दघटयोः साम्यार्थं न तु शाब्दमिति दिक् । आसिसिषते, शिशयिषते, निविविक्षते, बुभुक्षते, इत्यादि । इह तु न भवति-शिशत्सति, मुमूर्षति । न ह्येषा शदिम्रियतिव्यक्तिः शितः प्रकृतिः अतो नात्मनेपदनिमित्तम् । कृते हि सनि सन्नन्तमेव शितः प्रकृतिः । 'शिशयिषते' इत्यादौ तु प्रकृतौ ङित्त्वानपायान्निमित्तातिदेशः सम्भवत्येवेति वैषम्यात् । नन्वेवं 'अनुचिकीर्षति' इत्यत्रातिप्रसङ्गः । गन्धनादेरर्थस्य ञित्वस्य चात्मनेपदनिमित्तस्यातिदेशापत्तेरिति चेन्न । "अनुपराभ्यां कृञः" (अष्टा०सू०१-३-७९) इति वचनपर्यालोचनया अनुपूर्वकत्वाभावविशिष्टस्यैवात्मनेपदनिमित्तताध्यवसायात् । अस्तु वा प्राधान्यात्कार्यस्यैवातिदेशः प्राक्सनो येभ्य आत्मनेपदं दृष्टं तेभ्यः सन्नन्तेभ्योऽपि भवतीति । न चैवं 'शिशत्सति' 'मुमूर्षति' इत्यत्रातिप्रसङ्गः "शदेःशितः" (अष्टा०सू०१-३-६०) "म्रियतेर्लुङ्लिङोश्च" (अष्टा०सू०१-३-६१) इति सूत्रद्वयेऽपि सनो नेत्यनुवर्त्य वाक्यभेदेन सन्नन्तान्निषेधात् । 'जुगुप्सते' इत्यादौ तु यद्यप्ययमतिदेशो न प्राप्नोति । नित्यसन्नन्ततया प्राक् सन आत्मनेपदादर्शनात् । तथापि "अनुदात्तङितः" (अष्टा०सू०१-३-१२) इत्यनेनैवात्मनेपदम् । अवयवे ह्यचारितार्थं लिङ्गं समुदायं विशिनष्टि सामर्थ्यात् । न चैवं 'जुगुप्सति' इत्यादावतिप्रसङ्गः । सनूपर्यन्तविशेषणेन चारितार्थ्ये सति ततोऽप्यधिकविशेषणे प्रमाणाभावात् । नन्वेवं 'गोपयति' 'तेजयति' इत्यादावतिप्रसङ्गः । सन्णिचोर्मध्ये कतरद्विशेषणीयं कतरन्नेत्यत्र विनियामकाभावादिति । अत्राहुः-यत्र निन्दादौ सन्निष्यते तदर्थका एवानुदात्तेतः नित्यसन्नन्ताश्चेति । अर्थान्तरे त्वननुबन्धका एव चुरादौ पाठ्याः । अन्यथा निन्दाक्षमादिभ्योऽन्यत्र यथा णिज् भवति तथा लङादिरपि स्यात् ।

आम्प्रत्ययवत्कृञोनुप्रयोगस्य। (अष्टा०सू०१-३-६३) आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः। आम्प्रकृतिभूतस्य धातोरिवा-नुप्रयुज्यमानात्करोतेरात्मनेपदं स्यात्। ञित्त्वादेव सिद्धेऽकर्त्रभिप्रायार्थं सूत्रम्। ईहाञ्चक्रे। नन्वस्य विध्यर्थत्वात 'इन्दाञ्चकार' इत्यादावपि क-र्त्रभिप्राये तङ् प्राप्नोति, सत्यम्, पूर्ववदित्यनुवर्त्तते, तत्सामर्थ्याद्वाक्य-भेदेन नियमोऽपि क्रियते पूर्ववदेवात्मनेपदं न तु पूर्वविपरीतमपीति। कृञः किम्? ईहामास, ईहाम्बभूव। इह कृञ्ग्रहणसामर्थ्यान्न प्रत्याहा-रग्रहणम्। अतएव च ज्ञापकादनुप्रयोगविधौ प्रत्याहारग्रहणम्।

प्रोपाभ्यां युजेरयज्ञपात्रेषु (अष्टा०सू०१-३-६४)। प्रोपाभ्यां युजेरयो-ग इत्यस्मादात्मनेपदं स्यादयज्ञपात्रेषु। प्रयुङ्क्ते, उपयुङ्क्ते। युजिरः स्व-रितेतो रुधादेरकर्त्रभिप्रायार्थोऽयं विधिः। "युज समाधौ (रु०उ०१४४५) इति दिवादेस्तु नेह ग्रहणम्। अनुदात्तेत्वादेव सिद्धेः। सूत्रे युजेरिती-कारस्य विवक्षितत्वाच्च। यज्ञपात्रविषयतायास्तत्रासम्भवाच्च। स्व-राद्यन्तोपसृष्टादिति वक्तव्यम् [ का० वा० ] स्वरोऽच्आदिरन्तो वा यस्य तादृशेनोपसर्गेण सम्बद्धादित्यर्थः। सम् निस् निर् दुस् दुर् एत-द्भिन्नाः सर्वेप्युपसर्गाः सङ्गृहीताः। उद्युङ्क्ते, नियुङ्क्ते। अयज्ञपात्रेषु-किम्? द्वन्द्वं न्यञ्चिपात्राणि प्रयुनक्ति।

समः क्ष्णुवः (अष्टा०सू०१-३-६५)। सम्पूर्वात्क्ष्णुधातोः प्राग्वत्। "समोगम्यृच्छिभ्याम्" (अष्टा०सू०१-३-२९)इत्यतो विच्छिद्य पाठः स-कर्मकादपि विधानार्थः। संक्ष्णुते शस्त्रम्।

भुजोऽनवने(अष्टा०सू०१-३-६६)। रक्षणातिरिक्तेऽर्थे वर्त्तमानाद् भु-जेः प्राग्वत्। "भुजोऽभक्षणे" इति वक्तव्येऽनवन इति वचनमर्थान्तरेष्व-पि यथा स्यात्। भुजेर्हि पालनाभ्यवहारादिवोपभोग आत्मसात्करणं चार्थः। ओदनम्भुङ्क्ते अभ्यवहरतीत्यर्थः।

'बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्'।

"दि(१)वं मरुत्वानिव भोक्ष्यते महीम्"। (र०३-४)।

नेह पालनमर्थः किन्तूपभोग आत्मसात्करणं वा। एतेन "वृद्धो जनो दुःखशतानि भुङ्क्ते" इति व्याख्यातम्। अनवने किम्? महीं भुनक्ति। रुधादेरेवेह ग्रहणम्। अवनप्रतिषेधात्। पठन्ति हि-"संयोगो विप्रयो-गश्च" इत्युपक्रम्य "विशेषस्मृतिहेतवः" इति। यथा दोग्ध्रीपर्यायो धेनु-शब्दः संसर्गिभिर्विशेषेऽवस्थाप्यते। 'सवत्सा धेनुरानीयतां' 'सकिशो-राः' 'सवर्करा' इति, तथाऽवत्साऽकिशोराऽवर्करेति गौर्धेनुर्वडवा अजा।

---

(१) 'भुवम्' इति पाठः मल्लिनाथकृतसञ्जीविन्याम्।

च क्रमेणानीयते नान्या तथेहापि । तेन "भुज कौटिल्ये" (तु०धा०१४५५) इत्यस्य तुदादेरग्रहणान्नेह—विभुजति पाणिमिति ।

णेरणौ यत्कर्म णौ चेत्स कर्त्ताऽनाध्याने (अष्टा०सू०१-३-६७) । ण्यन्तादात्मनेपदं स्यादनाध्याने । अणौ यत्कर्म णौ चेदिति द्वितीयं वाक्यम् । कर्मेह क्रिया णिच्प्रकृत्युपात्ता या सैव चेण्ण्यन्तेनोच्यते-त्यर्थः । सकर्तेति तृतीयं वाक्यम् । अणावित्याद्यनुवर्तते कर्मेह कारकं शब्दाधिकाराश्रयणात् । णिच्प्रकृतेरर्थं प्रति यत्कर्म कारकं स चेण्ण्य-न्ते कर्तेत्यर्थः । "णिचश्च" (अष्टा०सू०१-३-७४) इत्यात्मनेपदं सिद्धे-ऽपि अकर्त्रभिप्रायार्थमिदं सूत्रम् । कर्त्रभिप्रायेऽपि "विभाषोपपदेन प्रतीयमाने" (अष्टा०सू०१-३-७७) इति विकल्पबाधनार्थञ्च । "अणाव-कर्मकात्" (अष्टा०सू०१-३-८८) इति परस्मैपदबाधनार्थञ्च । न चाकर्त्र-भिप्राये चरितार्थस्यास्य विकल्पपरस्मैपदाभ्यां पराभ्यां बाधः स्यादिति वाच्यम् । पूर्वविप्रतिषेधाश्रयणात् । अत्र च प्रमाणं 'दर्शयते राजा' इति भाष्योदाहरणमिति दिक् । उदाहरणन्तु कर्तृस्थभावकाः कर्तृस्थक्रि-याश्च । तत्र हि कर्मवद्भावो नास्तीति वक्ष्यते । प्रकृतसूत्रेणैव स्वात्मने-पदम् । तथा हि—विषयत्वापत्त्युपसर्जनविषयत्वापादानवचनो दृशिः सकर्मकाणामशब्दाभिधायितानियमात् । तत्र धातूपात्तव्यापाराश्रयः कर्त्ता धात्वर्थभूतव्यापारव्यधिकरणफलशालिकर्म तथा च 'पश्यन्ति भवं भक्ताः' इति प्रयोगः चाक्षुषज्ञानेन विषयीकुर्वन्तीत्यर्थः । यदा तु सौकर्यातिशयविवक्षया प्रेरणांशस्त्यज्यते तदा 'पश्यति भवः' इति प्रयोगः विषयीभवतीत्यर्थः । उक्तञ्च—

"निवृत्तप्रेषणं कर्म स्वक्रियावयवैः स्थितम् ।
निवर्त्तमाने कर्मत्वे स्वेकर्तृत्वेवतिष्ठते" इति ॥

ततः पश्यन्तं प्रेरयन्तीति णिचि 'दर्शयन्ति भवं भक्ताः' इति प्र-योगः । पश्यन्तीत्यर्थः । उक्तञ्च—

"निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते" इति ।

ततः पुनर्ण्यर्थस्य सौकर्यद्योतनार्थमविवक्षायां 'दर्शयते भवः' वि-षयीभवतीत्यर्थः । तदिह पश्यतिदर्शयत्योः समानार्थतया कर्तृस्थभाव-कत्वाच्च कर्मवद्भावविरहे प्रकृतसूत्रेणात्मनेपदम् । इह हि णिच्प्रकृतिभू-तेन दृशिना य एवार्थो द्वितीयकक्षायामुपात्तः स एवं चतुर्थ्यामिति सामानक्रियत्वमस्ति अणौ यत्कर्म प्रथमकक्षायां तदेव कर्तृ । एवं 'आरोह-यते हस्ती' इत्यप्युदाहरणम् । "आरोहन्ति हस्तिनं हस्तिपकाः' । न्य-ग्भावयन्तीत्यर्थः । 'आरोहति हस्ती' न्यग्भवतीत्यर्थः । ततो निवृत्तप्रे-

षणाण्णिचि 'आरोहयन्ति' आरोहन्तीत्यर्थः। ततः पुनर्ण्यर्थत्यागे 'आरो-हयते' न्यग्भवतीत्यर्थः। इहापि प्राग्वत्प्रथमतृतीययोर्द्वितीयचतुर्थ्योश्चार्थसाम्याच्चतुर्थी कक्षा उदाहरणम्। सोयं निवृत्तप्रेषणपक्षः। आह च-

"न्यग्भावनं न्यग्भवनं रुहौ शुद्धे प्रतीयते।
न्यग्भावनं न्यग्भवनं ण्यन्तेपि प्रतिपद्यते"॥
अवस्थां पञ्चमीमाह ण्यन्ततत्कर्मकर्त्तरि।
निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते" इति॥

इह विशिष्टवाचकयोः शुद्धण्यन्तयोर्वाच्यावंशौ वाचकभेदात् द्वेधा गणयित्वा पूर्वोक्तप्रथमतृतीयकक्षायामवस्थाचतुष्टयञ्चतुर्थकक्षायान्तु पञ्चमी अवस्थेति श्लोकार्थोऽभिप्रेतः। यद्वा-'पश्यन्ति भवं भक्ताः'। 'आ-रोहन्ति हस्तिनं हस्तिपकाः' इति प्राग्वदेव प्रथमकक्षा। ततः सौकर्यद्योतनार्थं कर्मणा एव प्रेषणमध्यारोप्य णिच् क्रियते। 'दर्शयति भवः' 'आरो-हयति हस्ती' इति पश्यत आरोहतश्च प्रेरयतीत्यर्थः। ततो णिच्प्रकृतिभ्यां णिज्भ्याञ्चोपात्तयोर्द्वयोरपि प्रेषणयोर्युगपत्त्यागे 'दर्शयते' 'आरोहयते' इत्युदाहरणम्। विषयीभवति न्यग्भवतीति च पूर्ववदेवार्थः। सोयम-ध्यारोपितप्रेषणपक्ष इहाध्यारोपितप्रेषणपक्षे 'दर्शयति भवः' 'आरोह-यति हस्ती' इति द्वितीयकक्षायामतिव्याप्तिं वारयितुं समानक्रियत्वपरं द्वितीयं वाक्यम्। तेन प्रेषणाधिक्यान्नातिव्याप्तिः। निवृत्तप्रेषणपक्षे'द-र्शयन्ति भवम्' 'आरोहयन्ति हस्तिनम्' इत्येवंरूपं तृतीयकक्षायामति-व्याप्तिं वारयितुमणौ यत्कर्म स चेण्णौ कर्त्तेत्येवंरूपं तृतीयं वाक्यम्। इह तु अणौ कर्मणोर्भवहस्तिनोः कर्मत्वमेव न तु कर्तृतेति नातिव्याप्तिः अत्र प्राञ्चः-अणौ यत्कर्मेति वाक्यं कर्मान्तरनिवृत्तिपरम्। तथा हि-यत्तदोर्नित्यसम्बन्धादिह यच्छब्देन तच्छब्द आक्षिप्यते। धर्मान्तरस्य चानिर्देशादुद्देश्यतयापि श्रुतं कर्मत्वमेव विधीयते। तच्च विधीयमानं सामर्थ्याण्णेरित्यस्य सन्निहितत्वाच्च ण्यन्तावस्थायामेव विधीयते। न ह्यणौ तद्विधानं सम्भवति अणौ यत्कर्मेत्यनुवादसामर्थ्यादेव तत्सिद्धेः। तदेवमणौ यत्कर्मेत्येतावत एवाणौ यत्कर्म णौ चेत्तत्कर्मेत्यर्थः फलितः। अनेन च कर्मान्तरनिवृत्तिः क्रियते। न ह्यणौ कर्मणो णौ कर्मत्वं प्रति-पाद्यते। स कर्मेत्युत्तरवाक्येन तस्य कर्तृत्वप्रतिपादनात्। एकस्य युग-पदेकस्यां क्रियायां कर्मकर्तृत्वयोरसम्भवात्तस्मात्,

"उद्देशप्रतिनिर्देशालब्धे यत्सङ्ग्रहे पुनः।
तद्ग्रहो वाक्यभेदेन कर्मान्तरनिवृत्तये"॥

ततो णौ चेदिति वाक्यान्तरम्। अणौ यदित्येव अणौ यत्प्राते-

पाद्यं वस्तु तदेव णौ प्रतिपाद्यञ्चेदित्यर्थः इति व्याचख्युः। अत्रेदं चिन्त्यम्-कर्मान्तरनिवृत्तिपरं व्याख्यानं यद्यपि कर्त्तुं शक्यं तथापि तस्य फलं दुर्लभम्। 'आरोहयमाणो हस्ती' 'स्थलमारोहयति मनुष्यान्' इत्यस्य व्यावृत्तिः फलमिति चेन्न, तत्र समानक्रियत्वाभावात्। "णौ चेत्" इति वाक्यं हि प्रतिपाद्यसाम्यार्थमिति वृत्तिपदमञ्जर्योः स्थितम्। न चेह तदस्ति। न चास्तु वृत्त्यादिमते दोषोऽयं भाष्यकैयटयोस्तु समानक्रियत्वस्यानुक्तत्वात्कर्मान्तरव्यावृत्तिफलकं वाक्यं सार्थकमेवेति चेत्, न, भाष्यमतेपि समानक्रियत्वस्य व्याख्येयत्वात्। तस्यानुक्तत्वेप्यप्रत्याख्याततया सम्मतत्वात्। अन्यथा अध्यारोपितप्रेषणे द्वितीयकक्षायामतिप्रसङ्गात्। भाष्यवार्त्तिकयोः कर्मशब्दस्य क्रियापरतयैव व्याख्यातुं शक्यत्वाच्च। अभ्युपेत्यापि ब्रूमः--मास्तु भाष्यमते समानक्रियत्वं तथापि 'दर्शयते भृत्यान् राजा' इत्युदाहरणं व्याचक्षाणेन कैयटेन अणौ ये कर्तृकर्मणी तद्भिन्नं कर्म व्यावर्त्यते इति तावत्स्पष्टीकृतम्। तथा च 'मनुष्यान्' इत्यस्याणौ कर्तृतया गत्यर्थादि द्रुहेर्णौ कर्मत्वेऽपि दुर्वारमात्मनेपदम्। मनुष्यस्थलयोरणौ कर्तृकर्मणोरेवेह कर्मतया तदितरकर्माभावात्। अपि च, सकर्त्तृत्वांशोऽपीह नास्ति। हस्तिन एव कर्तृत्वात्। स्यादेतत्-'आरोहयमाणः' इत्यत्राणौ कर्मणो हस्तिन एव कर्तृत्वं स एव च 'स्थलमारोहयति' इत्यत्रापि कर्त्तेति, तदपि न। प्रत्यासत्तिबलेनैवातिप्रसङ्गभङ्गात्। तथा हि-ण्यन्तादात्मनेपदं स्यादणौ यत्कर्म स चेत्कर्त्तेत्युक्ते प्रत्यासत्तेरेतल्लभ्यते। "येन णिचा ण्यन्तादात्मनेपदं विधित्सितं तत्प्रकृतौ यत्कर्म स चेत्कर्त्ता" इति। इह तु यत्रायमुपाधिः कृतमेव तत्रात्मनेपदम्। 'आरोहयमाणः' इति यत्र तु न कृतं 'स्थलमारोहयति' इति न तत्रायमुपाधिरस्ति, येनातिव्याप्तिः स्यात्। यत्तु हरदत्तेनोक्तम्-"हस्तिपकानारोहयति हस्ती इत्यत्र मा भूत्" इति। तत्रेदं वक्तव्यम्-किमिदमध्यारोपितप्रेषणपक्षे द्वितीयकक्षायामुदाहरणं किं वा निवृत्तप्रेषणपक्ष इति? नाद्यः, णिज्वाच्यव्यापारभेदेन समानक्रियत्वाभावात्। न द्वितीयः, तत्राद्ययोः कक्षयोरण्यन्तत्वात्। तृतीयस्यान्तु हस्तिनः कर्तृत्वायोगात्। हस्तिपकानां कर्मत्वासम्भवाच्च। तस्माच्चतुर्थी परिशिष्यते। तत्रापि स्वयंभवतीत्यर्थापर्यवसानेन कर्मणो नान्वयः स्पष्ट एव। स्यादेतत्-'दर्शयते भृत्यान् राजा' इति तावद्भाष्ये स्वीकृतं तत्समर्थनाय अणौ ये कर्तृकर्मणी तदितरकर्मव्यवच्छेदोऽभिप्रेत इत्याह कैयटः। तस्याप्ययमाशयः-अणौ यत्कर्मेत्यत्र "कर्त्तरि कर्म" (अष्टा०सू०१-३-१४) इत्यतोनुवृत्तं 'कर्त्तरि' इ-

स्येतत्प्रथमया विपरिणस्यते । यश्च यश्च यदिति "नपुंसकमनपुंसकेन" (अष्टा०सू०१-२-६९) इत्येकशेषः । तेन कर्मकर्त्रोर्णौ कर्मत्वेप्यदोषः। एवञ्च "करेणुरारोहयते निषादिनम्" इति माघप्रयोगोप्युपपद्यत इति । एवं स्थिते निवृत्तप्रेषणाध्यारोपितप्रेषणपक्षयोर्द्वयोरपि चरमकक्षायामकर्मकतया भाष्यकैयटादिग्रन्थाः सर्वएवानन्विताः स्युस्तत्किं हरदत्तं प्रत्येव पर्यनुयोगेन । एतावानेव हि भेदः भाष्यमतेऽणौ ये कर्तृकर्मणोरिति व्याख्यानादुदाहरणमिदं वृत्तिकारहरदत्तादिमते तु प्रत्युदाहरणम् । अणौ यत्कर्मेत्येव व्याख्यानादिति । अत्रोच्यते-अनन्वयस्तावदुरुद्धरः। बाधे दृढेऽन्यसाम्यात्किं दृढेन्यदपि बाध्यतामिति न्यायात् । 'गम्भीरायां नद्यां घोषः' इत्यत्र गम्भीरनदीपदार्थयोरभेदबोधानन्तरं तीरलक्षणायामपि प्राथमिकबोधमादाय गम्भीरपदसार्थक्यवदिहाप्यध्यारोपितप्रेषणपक्षे द्वितीयकक्षायां कर्मण्यन्विते ततो णिजर्थस्येव कर्मणोऽपि त्यागे णिचः कर्मपदस्य च प्राथमिकबोधमादाय कथं चित्सार्थक्यम् । स्वज्ञाप्यसम्बन्धो लक्षणेत्यभ्युपगमात् । एषैव "अर्थवादैः प्राशस्त्यलक्षणायां गतिः" इति कैयटस्योक्तिसम्भवो बोध्यः । निष्कर्षस्तु कर्मव्यवच्छेदवाक्यार्थो भाष्यवार्त्तिकयोरनभिमत एव, उक्तरीत्या प्रयोजनाभावात् । ग्रन्थस्तु कर्मपदस्य क्रियापरतायां सुस्थ एव । उदाहरणेषु तु भृत्यानित्यादेरविवक्षायां कर्मव्यापारमात्रे विवक्षिते सिद्धं भवतीत्येवाशयो बोध्यः । "स्मरयत्येनं वनगुल्मः स्वयमेव" इति भाष्यवृत्त्योर्व्याख्यावसरे एनमिति कर्मणो विवक्षायाः कैयटहरदत्ताभ्यामुभाभ्यामपि शरणीकृतत्वाच्च । यत्तु सूत्रशेषे कैयटेनैनमित्यस्य विवक्षेति पुनः प्रतिपादितं तदेव त्वापातत इति दिक् । तस्मात्--

"भृत्यादीनां परित्यागाच्छन्दभेदात्परिग्रहात ।
कर्मवाक्ये च तादर्थ्यवर्णनात्सर्वमुज्ज्वलम्" ॥

स्यादेतत्-सकर्मकाणां सर्वेषामंशद्वयाभिधायितया कर्मकर्त्तरि कर्मवद्भावातिदेशादेव सिद्धानीह मूलोदाहरणानि । न चाध्यारोपितप्रेषणपक्षे 'आरोहयतौ हस्तिनः' कर्मत्वाभावात्समानधातौ च कर्मत्वाभावेन 'पचत्योदनं देवदत्तः' 'राध्यत्योदनः स्वयमेव' इतिवत्कर्मवद्भावो न प्राप्नोतीति वाच्यम् । निवृत्तप्रेषणप्रक्रिययैव सकललक्ष्यसङ्ग्रहात । अध्यारोपितप्रेषणपक्षपरित्यागेऽपि क्षत्यभावात् । न च दृशेः कर्तृस्थभावकतया रुहेश्च कर्तृस्थक्रियतया कर्मवद्भावो न प्राप्नोतीति वाच्यम् । पचिभेद्यादिभ्यो वैलक्षण्यस्य दुरुपपादत्वात् । विक्लेदनाद्विधाभवनयो-

रपि कर्तृस्थतापत्तौ कर्मवद्भावातिदेशस्य निर्विषयतापत्तेः । तत्र व्यापारांशस्य कर्तृस्थत्वेऽपि विक्लित्तिद्विधाभवनरूपे फले कर्मस्थे इति । यदि तर्हि दृशिरुह्योरपि विषयत्वन्यग्भावौ कर्मस्थाविति तुल्यम् । तस्मादिह वैषम्ये बीजं वक्तव्यमिति चेत्, अत्राहुर्भर्तृहरिः-

"विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।
क्रियाव्यवस्थात्वन्येषां शब्दैरेव प्रकल्पिता" इति ॥

अस्यार्थः-यत्र क्रियाप्रयुक्तो विशेषो दृश्यते यथा-पक्वेषु तण्डुलेषु यथा वा छिन्नेषु काष्ठेषु तत्र क्रिया स्थिता । तेन 'पच्यते ओदनः "छिद्यते काष्ठम्' इति कर्मवद्भावः सिद्धः । अन्येषां मते-अन्येषां धातूनां वाशब्दैरेव क्रियाव्यवस्था । शब्देन कर्तृव्यापारस्यैव प्राधान्येनावगमात्कर्तृस्थतेत्यर्थः । उद्देशतापि क्वचित्कर्मस्थांशस्य क्वचित्तु व्यापारांशस्येति औत्सर्गिकं नियामकं बोध्यं तदिह दर्शनरोहणाभ्यां विषये न्यग्भूते च विशेषानुपलम्भात्कर्तृस्थ एवेह भावः क्रिया च । उद्देशानुरोधाच्च । 'अहं पश्येयम्' इति ह्युद्देशः न तु अयं विषयो भवत्वित्येवम् 'अहमुपरि गच्छेयम्' इत्युद्देशो न तु 'हस्तिनो न्यग्भावो भवतु' इति । उपरिगमनरूप एव च व्यापारविशेषो रुहेरर्थो न तु न्यग्भावनमात्रम् । भूमिष्ठ वृक्षस्य शाखां हस्ताभ्यामवनमयत्यपि आरोहतीत्यप्रयोगात् । अत एव "यद्धितुपरं छन्दसि" (अष्टा०सू०८-१-५६) इत्यत्र भाष्यं-"रुहिर्गत्यर्थः" इति । "अत एव चाणौ कर्त्तुर्णौ कर्मत्वम् । पचिच्छिद्योस्तु विक्लित्तिद्विधाभवनरूपो विशेषः कर्मणि दृष्टः तदुद्देशेनैव च कारकव्यापार इति महद्वैषम्यम् । एवञ्च 'आरुह्यते हस्ती' इति कर्मवद्भावं प्रदर्शयन्तो भाष्यन्यायविरोधादुपेक्ष्याः" इति कैयटः । एतेन--

"अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधाति च ।
यत्कृपावशतस्तस्मै नमोस्तु गुरवे सदा" ॥

इति प्रयोगो व्याख्यातः । न चैवं क्रियत इति न स्यादिति वाच्यम् । यत्नार्थतावादिनामेतद्दोषप्रसङ्गेऽपि भूवादिसूत्रस्थभाष्यानुसारेण करोतेरभूतप्रादुर्भावार्थतामभ्युपगच्छतामस्माकं सर्वसामञ्जस्यात् । एवञ्च कर्तृस्थभावक्रियेषु कर्मवद्भावाप्राप्तेर्विध्यर्थमिदं सूत्रमिति स्थितं भाष्ये । 'लावयते स्वयमेव' इत्यादौ तु कार्यातिदेशपक्षे परत्वात् "कर्मवत्कर्मणा" (अष्टा०सू०३-१-८७) इत्येवात्मनेपदम् । शास्त्रातिदेशे तु "भावकर्मणोः" (अष्टा०सू०१-३-१३) इत्येतदपेक्षया परत्वात् णेरणादिसूत्रेणेत्यवधेयम् । यदि त्वणौ ये कर्तृकर्मणी तद्भिन्नकर्मनिवृत्तिर्भाष्यकृतोभिप्रेता स्यात्तर्हि सकर्मकाणां मध्ये तत्सूत्रोदाहरणतापत्तौ कर्म-

स्थक्रिया अप्युदाहरणं स्युः। न हि तत्रातिदेशः सुलभः। "कर्मवदकर्मकाणाम्" इति वक्ष्यमाणत्वात्। तथा नियमार्थत्वपराणां यक्चिणोः प्रतिषेधार्थं त्वित्यादिभाष्यवार्त्तिकग्रन्थानामप्यसामञ्जस्यं स्यादिति दिक्। तस्मादिहास्मदुक्तमेव वाक्यार्थत्रयं मुनित्रयसम्मतम्। जयादित्यन्यासकारहरदत्तकैयटादिसकलग्रन्थकाराणामिह महानेव पूर्वापरविरोधो विपश्चिद्भिरुद्भर्त्तव्यः। अस्मदुक्तिस्तु मात्सर्यमुत्सार्य परिभावनीयेत्यलं बहुना। यत्तु "करेणुरारोहयते निषादिनम्" इति माघे प्रयुक्तं तण्णिचश्चेति सिद्धम्। एतेन--

"स सन्ततं दर्शयते गतस्मयः।
कृताधिपत्यामिव साधु बन्धुताम्"॥ (कि०१-१०)

इति व्याख्यातम्। बन्धुता तं पश्यति, तां दर्शयते। यद्वा-बन्धुतां कृताधिपत्यामिवलोकः पश्यति तां दर्शयते इत्यर्थः। आद्ये बन्धुता अणौ कर्त्री। द्वितीये त्वणौ सा कर्म। उभयथापि णौ कर्मत्वं निर्विवादमेवेति दिक्। णेरिति किम्? आरोहतीति निवृत्तप्रेषणान्मा भूत्। न च "णौ चेत्" इति वाक्यशेषे श्रुतत्वाण्णेरेव भविष्यतीति वाच्यम्। अणावित्यस्यापि श्रुतत्वात्। किं चोत्तरार्थमवश्यं णेरिति वाच्यमेव। तदिहैव स्पष्टार्थमुक्तम्। हेतुमण्णिज्ग्रहणार्थं च। भीस्म्योस्तस्यैव सम्भवात्। तेन गणयते गणः स्वयमेवेति सिद्धम्। गणयतिर्हि विभज्य भागशोऽवस्थापने वर्त्तते। तथा च कर्मस्थभावकादस्मान्निवृत्तप्रेषणाद्धेतुमण्णौ पुनः प्रेषणांशत्यागे सत्यात्मनेपदमिष्टम्। णेरिति हेतुमण्णिचः सन्निधानादणावित्यत्रापि तस्यैव ग्रहणाच्चुरादि णौ यत्कर्म तत्कर्तृकाद्धेतुमण्ण्यन्तादपि सिध्यतीति। यत्तु वृत्तिकृता गणयतीत्येव रूपमवस्थाचतुष्टयेऽप्युदाहियते। तत्र सङ्ख्यानिमित्तस्य परिच्छेदस्य ज्ञानविशेषात्मकतया कर्तृस्थस्य धातुवाच्यतामाश्रित्य कर्मवद्भावाप्रवृत्त्या द्वितीयावस्थायां परस्मैपदमुपपादनीयम्। चतुर्थावस्थायां तु परस्मैपदमशुद्धमेव। णेरणावित्यत्रापि "अणावकर्मकात्" (अष्टा०सू०१-३-८८) इत्यत्रेव हेतुमण्णिच एव ग्रहणस्य न्याय्यत्वात्। तथैव भाष्ये स्थितत्वाच्च। भागशोऽवस्थापनपरत्वे तु द्वितीयावस्थायामप्यात्मनेपदमिति विशेषः। कर्मवद्भावस्य दुर्वारत्वात्। यक्चिणौ तु "णिश्रन्थि" (का०वा०) इत्यादिनिषेधान्न स्त इति दिक्। णौ चेदिति किम्? निवृत्तप्रेषणाण्णौ 'आरोहयन्ति हस्तिपकाः' इति तृतीयकक्षायां मा भूत्। असति हि णौ चेद्ग्रहणे श्रुतत्वादणावेव कर्मत्वं कर्तृत्वञ्च लभ्येत। न चैकस्योभयरूपता बाधितेति वाच्यम्। प्रथमावस्थायां कर्मणो द्वितीयावस्थायां

कर्तृत्वस्य निर्विवादत्वात् । अनाध्याने किम् ? स्मरति वनगुल्मङ्कोकिलः। ततश्चतुर्थावस्थायां स्मरयति वनगुल्मः । उत्कण्ठापूर्वकस्मृतौ विषयो भवतीत्यर्थः । "स्मृ आध्याने," (भ्वा०प०८०७) घटादिः ।

भीस्म्योर्हेतुभये (अष्टा०सू०१-३-६८) । आभ्यां ण्यन्ताभ्यामात्मनेपदं स्यात्प्रयोजकादेव चेद्भयविस्मयौ स्तः । सूत्रे भयग्रहणं विस्मयस्याप्युपलक्षणम् । मुण्डो भीषयते । "भियो हेतुभये षुक्" (अष्टा०सू० ७-३-४०) इति षुक् । "बिभेतेर्हेतुभये" (अष्टा०सू०६-१-५६) इति वैकल्पिकात्वपक्षे तु 'भापयते' अत्र षुङ्न । तद्विधावीकारप्रश्लेषात् । जटिलो विस्मापयते । "नित्यं स्मयतेः" (अष्टा०सू०६-१-५७) इत्यात्वम् । "अर्त्तिह्री" (अष्टा०सू०७-३-३६) इति पुक् । हेतुभये किम् ? कुञ्चिकया भाययति । रूपेण विस्माययति । इह करणाद्भयविस्मयौ न तु हेतोः । यद्यपि हेतोर्व्यापारे णिज्विधानात्प्रयोजकसाध्यता दुर्वारा तथापि हेतुस्वरूपमेवान्यनिरपेक्षं धात्वर्थप्रयोजकञ्चेदितीत्यर्थः । विशेषणोपादानसामर्थ्यात् । अत एव 'मौण्ड्येन भापयति' इत्यत्र न मौण्ड्याख्यधर्मस्य भेदेन विवक्षणात् । उदाहरणे तु तादात्म्यस्य विवक्षणाद्धेतोरेव भयम । एतेन-

"मनुष्यवाचा मनुवंशकेतुं-विस्माययन्" । (२०२-३३)

इति व्याख्यातम् । इह हि न सिंहाद्विस्मयः किन्तु मनुष्यवाचेति करणात् । अत एवात्र "नित्यं स्मयतेः" (अष्टा०सू०६-१-५७) इत्यात्वं न । तद्विधाने "बिभेतेर्हेतुभये" (अष्टा०सू०६-१-५६) इत्यतो हेतुभयानुवृत्त्या भयग्रहणस्य च स्मयोपलक्षणतया व्याख्यानात् । क्वचित्तु 'विस्मापयन्' इति पुगागमपाठः प्रामादिकः । यद्वा—वाक् विस्मापयते सिंहस्तु विस्मापयमानां वाचं प्रयुङ्क्ते विस्मापयति । ण्यन्ताण्णिच् । वाचेति तु प्रयोज्ये कर्त्तरि तृतीया न तु करणे इति समाधेयम ।

गृधिवञ्च्योः प्रलम्भने (अष्टा०सू-१-३-६९) । प्रतारणार्थाभ्यामाभ्यां ण्यन्ताभ्यामात्मनेपदं स्यात् । माणवकं गर्धयते वञ्चयते वा । प्रलम्भने किम् ? श्वानङ्गर्धयति । अभिकांक्षामस्योत्पादयतीत्यर्थः । अहिं वञ्चयति । वर्जयतीत्यर्थः ।

लियः सम्माननशालिनीकरणयोश्च (अष्टा०सू०१-३-७०) । सम्माननशालिनीकरणयोश्चकारात्प्रलम्भने च वर्त्तमानाण्ण्यन्ताल्लीधातोरात्मनेपदं स्यात् । "लीङ् श्लेषणे" (दि०आ०११३९) दिवादिः, "ली श्लेषणे" (क्र्या०प०१५०२) क्र्यादिः, उभयोरपि ग्रहणम् । निरनुबन्धकपरिभाषा तु प्रत्ययविधिविषया । "वामदेवाड्ड्यड्ड्यौ" (अष्टा०सू०४-२-९) इति डित्कर-

णेन ज्ञापिता हि सा। ज्ञापकश्च सजातीयविषयकमेवेत्युत्सर्गः। सम्मानने--जटाभिरालापयते। पूजां समधिगच्छतीत्यर्थः। अकर्मकश्चायम्। धात्वर्थेन क्रोडीकृतकर्मत्वात् 'पुत्रीयति' इत्यादिवत्। शालिनीकरणे-श्येनो वर्त्तिकामुल्लापयते। न्यक्करोतीत्यर्थः। प्रलम्भने--बालमुल्लापयते। "विभाषा लीयतेः" (अष्टा०सू०६-१-५१) इति णात्वं विधीयते। तदस्मिन्विषये नित्यम्। अन्यत्र तु विकल्पः। व्यवस्थितविभाषा हि सा। न च "लीयतेः" (अष्टा०सू०६-१-५१) इति विहितमात्वं कथं लीनातेः स्यादिति वाच्यम्। लीनातिलीयत्योर्यका निर्देशोयमिति सिद्धान्तात्। सम्माननादिष्विति किम्? बालकमुल्लापयति। आश्लेषयतीत्यर्थः।

मिथ्योपपदात्कृञोऽभ्यासे (अष्टा०सू०१-३-७१)। ण्यन्तात्कृञो मिथ्योपपदादात्मनेपदं स्यात्पौनःपुन्ये। पदं मिथ्या कारयते। सापचारं स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः। "नित्यवीप्सयोः" (अष्टा०सू०८-१-४) इति द्वित्वं तु न भवति। आत्मनेपदेनैवाभ्यासस्य द्योतितत्वात्। करोतिश्चेहोच्चारणवृत्तिरकर्मकः। ण्यन्तस्तूच्चारणवृत्तिः सकर्मकश्च। मिथ्योपपदात्किम्? पदं सुष्ठु कारयति। कृञः किम्? पदं मिथ्या वाचयति। अभ्यासे किम्? सकृत्पदं मिथ्या कारयति।

स्वरितञितः कर्त्रभिप्राये क्रियाफले (अष्टा०सू०१-३-७२)। स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात्क्रियाफले कर्तृगामिनि सति। यजते, सुनुते। कर्त्रभिप्राये किम्? यजन्ति याजकाः, सुन्वन्ति दक्षिणादि तु न फलम्। उक्तं हि हरिणा--

"यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः।
तत्प्रधानफलं तेषां न लाभादि प्रयोजनम्"॥ इति।

पचा पाकः। षिद्भिदादिभ्योऽङ्। केचित्तु प्रयोजकव्यापारवृत्तिभ्यो धातुभ्यस्तद्द्योतकमात्मनेपदमनेन विधीयते। कुरुते। कारयतीत्यर्थः। 'कारयते' इत्यत्र तु प्रयोजकव्यापारद्वयमर्थः। णिजन्ताण्णिचि यथा "कर्त्रभिप्राये" इति सूत्रांशोपि कर्तृपदस्याहेतुकर्तृपरत्वादुक्तार्थतात्पर्यक एवेत्याहुः। उक्तञ्च हरिणा---

क्रियाप्रवृत्तावाख्याता कैश्चित्स्वार्थपरार्थता।
असती वा सती वापि विवक्षितनिबन्धना॥
येषाञ्चित्कर्त्रभिप्राये णिचा सह विकल्प्यते।
आत्मनेपदमन्येषां तदर्था प्रकृतिर्यथा॥

क्रीणीष्व, पचते, धत्ते, चिनोति, चिनुतेऽपि च ।
आप्तप्रयोगा दृश्यन्ते येषु ण्यर्थोऽभिधीयते" ॥ इति ।

असती चेत्यनेन "कमलवनोद्घाटनं कुर्वते ये"इत्यादयः प्रयोगाः समर्थिताः । तत्रापि स्वार्थताविवक्षायाः सम्भवात् । ण्यर्थस्य वाचकं द्योतकं वा आत्मनेपदमिति मतद्वयं सङ्गृहीतं केषांचिदित्यादिना श्लोकेन । चिनोति चिनुत इति, चिनोति चापयति चेति क्रमेणार्थः ।

अपाद्वदः (अष्टा०सू०१-३-७३) । अपपूर्वाद्वदतेरात्मनेपदं स्यात्कर्तृगामिनि फले संविधाने च । न्यायमपवदते । कर्त्रभिप्राये किम् ? अपवदति ।

णिचश्च (अष्टा०सू०१-३-७४) णिजन्तादात्मनेपदं कर्तृगे फले संविधाने च । कटं कारयते । कथं "कृतश्मश्रुरपि श्मश्रूणि कारयति" इति भाष्यम् । संविधाने इति व्याख्याने भविष्यति । आद्यपक्षे तु कर्तृगामित्वाविवक्षायां भविष्यति । अत्र कश्चित् लक्षयतेः स्वरितेत्करणाज्ज्ञापकाच्चुरादिणिजन्तादिदमात्मनेपदं न भवतीति । आह च—

स्वरितेत्स्याद्ग्रहिः क्र्यादौ लक्षिश्चैकश्चुरादिषु । इति ।

चन्द्रस्तु—"णिजभावपक्षे स्वरितेत्त्वस्य सार्थकत्वान्नोक्तार्थज्ञापकता अतश्चुरादेरप्ययं विधिर्भवत्येव"इत्याह । मैत्रेयस्तु स्वरितेत्त्वमस्यानाकरमित्याह । तदेतद्धरदत्तोऽपि सञ्जग्राह—

एष(१) विधिर्नचुरादिणिजन्तात्स्यादिति कश्चन निश्चिनुते स्म ।
आप्तवचोऽत्र न किंचन दृष्टं लक्षयतेः स्वरितत्त्वमनार्षम्"॥ इति ।

समुदाङ्भ्यो यमोऽग्रन्थे (अष्टा०सू०१-३-७५) । एभ्यो यमः प्राग्वत्कर्तृगे फले संविधाने च न तु ग्रन्थे विषये । आङ्पूर्वकस्य वचनं सकर्मकार्थम् । अकर्मके तु "आङो यमहनः" (अष्टा०सू०१-३-२८) इत्येव सिद्धम् । व्रीहीन्संयच्छते भारमुद्यच्छते वस्त्रमायच्छते । अग्रन्थे किम् ? उद्यच्छति चिकित्सां वैद्यः । इहाधिगमपूर्वकमुद्यमं यमेरर्थः । चिकित्साशास्त्रमधिगन्तुमुद्यमं करोतीत्यर्थः । कर्त्रभिप्राय इत्येव । संयच्छति, उद्यच्छति, आयच्छति ।

अनुपसर्गाज्ज्ञः (अष्टा०सू०१-३-७६) । अस्मात्प्राग्वत्कर्तृगे फले संविधाने च । "अकर्मकाच्च" (अष्टा०सू०१-३-४५) इत्येव सिद्धे वचनमिदं सकर्मकार्थम् । गाञ्जानीते । अनुपसर्गात्किम् ? स्वर्गं लोकं न प्रजानाति । कथं तर्हि भट्टिः—

(१) दोधकं नाम वृत्तमिदम्—"दोधकवृत्तमिदं भभभाद्गौ" (वृ०र० ३-३४) इति तल्लक्षणात् ।

इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्य। इति।

कर्मण्ययं लिट्। 'नृपेण' इति तृतीयान्तस्य विपरिणामादिति जयमङ्गला।

विभाषोपपदेन प्रतीयमाने (अष्टा०सू०१-३-७७)। स्वरितेत्प्रभृतिभ्य आत्मनेपदं वा स्यात् समीपोच्चारितपदेन क्रियाफलस्य कर्तृगत्वे प्रतीते। "स्वरितञितः" (अष्टा०सू०१-३-७२) इत्यादि पञ्चसूत्र्या यदात्मनेपदं विहितन्तत् क्रियाफलस्य कर्तृगत्त्वे उपपदे न द्योतिते न प्राप्नोति। उक्तार्थानामप्रयोगात्। तत्राप्राप्तविभाषेयम्। उपपदं चेह समीपे श्रूयमाणं पदं न तु पारिभाषिकम्। असम्भवात्। इह च पञ्चसूत्री अनुवर्त्तते। स्वं यज्ञं यजति यजते वा। स्वं कटं करोति कुरुते वा। स्वं पुत्रमपवदति अपवदते वा। स्वं व्रीहिं संयच्छति संयच्छते वा। स्वाङ्गां जानाति जानीते वा।

शेषात्कर्त्तरि परस्मैपदम् (अष्टा०सू०१-३-७८)। आत्मनेपदनिमित्तहीनाद्धातोः कर्त्तरि परस्मैपदं स्यात्। याति, वाति। कथं तर्हि—

स्मराग्नौ जुह्वानाः सुरभिघृतधाराहुतिशतैः। (श्लो०३३)

इति सौन्दर्यलहरी। सत्यम्। नायं शानच् किन्तु चानश्। एतेन "रसमानसारसेन (शि०६-७५) इति माघो व्याख्यातः।

अनुपराभ्यां कृञः (अष्टा०सू०१-३-७९)। आभ्यां कृञः परस्मैपदं स्यात् कर्तृगेऽपि फले गन्धनादावपि। अनुकरोति, पराकरोति। ननु कर्मकर्तर्यपि प्राप्नोति। 'अनुक्रियते स्वयमेव' इति। नैष दोषः। कार्यातिदेशपक्षे "कर्मवत्कर्मणा" (अष्टा०सू०३-१-८७) इत्यात्मनेपदेन परेणास्य बाधात्। शास्त्रातिदेशे तु "भावकर्मणोः" (अष्टा०सू०१-३-१३) इत्यस्य पूर्वत्वात्परेणानेन यद्यपि भाव्यं तथापीह "कर्त्तरि कर्म (अष्टा०सू०१-३-१४) इत्यतः "शेषात्कर्तरि" (अष्टा०सू०१-६-७८) इत्यतश्च कर्तृग्रहणद्वयमनुवर्त्तते तेन कर्तैव यः कर्ता तत्रायं विधिर्न तु कर्मकर्त्तरीति बोध्यम्।

अभिप्रत्यतिभ्यः क्षिपः (अष्टा०सू०१-३-८०)। 'क्षिप प्रेरणे" (तु०उ०१२८६) स्वरितत्। अभिक्षिपति, प्रतिक्षिपति, अतिक्षिपति। एभ्यः किम्! आक्षिपते। कर्त्तरीत्येव। नेह—आक्षिप्यते सूत्रम्। द्वितीयकर्तृग्रहणानुवृत्तेः कर्मकर्त्तर्यपि न।

प्राद्वहः (अष्टा०सू०१-३-८१)। "वह प्रापणे" (भा०उ०१००४) स्वरितत्। प्रवहति। प्रात्किम्? आवहते।

परेर्मृषः (अष्टा०सू०१-३-८२) "मृष तितिक्षायाम्" (दि०उ०११६४) स्वरितेत् । परिमृष्यति । परेः किम् ? आमृष्यते । इह परेरिति योगं विभज्य वह इत्यनुवर्त्तनात् परिवहति इति केचिदिच्छन्ति ।

व्याङ्परिभ्यो रमः (अष्टा०सू०१-३-८३) । "रम क्रीडायाम्" (भ्वा०आ०८५३) अनुदात्तेत् । विरमति, आरमति, परिरमति, एभ्यः किम् ? अभिरमते ।

उपाच्च (अष्टा०सू०१-३-८४) । उपपूर्वाद्रमेः प्राग्वत् । सकर्मकार्थोयमारम्भः । अकर्मकात्तु विभाषां वक्ष्यति । स्यादेतत्—उपपूर्वको रमिर्निर्वृत्तिविनाशयोर्वर्तते । उपरतोऽध्ययनात् । "उपरता निधनानि" इति यथा । न चानयोरर्थयोः सकर्मकता सम्भवति । सत्यम् । अन्तर्भावितण्यर्थोऽत्रोदाहार्यः । तद्यथा-'यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः।

विभाषाकर्मकात् (अष्टा०सू०१-३-८५) । उपाद्रमेरकर्मकात्परस्मैपदं वा स्यात् । उपरमति उपरमते वा । निवर्त्तत इत्यर्थः ।

बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः (अष्टा०सू०१-३-८६) । एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात् । "णिचश्च" (अष्टा०१-३-७४) इत्यस्यापवादः । बोधयति पद्मम् । योधयति काष्ठानि । नाशयति दुःखम् । जनयति सुखम् । इह "अणावकर्मकात्" (अष्टा०सू०१-३-८८) इति न सिध्यति । अचित्तवत्कर्तृकत्वात् । इङ्—अध्यापयति । प्रुद्रुस्रूणां "निगरणचलनार्थेभ्यश्च" (अष्टा०सू०१-३-८७) इत्येव सिद्धे यदा न चलनार्थस्तदर्थं वचनम् । प्रावयति-प्रापयतीत्यर्थः । द्रावयति-विलापयतीत्यर्थः । स्रावयति-स्यन्दयतीत्यर्थः । स्यन्दनं द्रवत्वजन्यचलनम् । न चैवं चलनार्थत्वात्सिद्धमिति वाच्यम् । द्रवत्वजन्यतावच्छेदकचलनत्वव्याप्यजातिविशेषे शक्ततयास्य विशेषशब्दत्वेप्यपर्यायत्वात् ।

निगरणचलनार्थेभ्यश्च (अष्टा०सू०१-३-८७) । अभ्यवहारार्थेभ्यः कम्पनार्थेभ्यश्च ण्यन्तेभ्यः परस्मैपदं स्यात् । निगारयति, आशयति, भोजयति, चलयति, चोपयति, कम्पयति । सकर्मकार्थोऽचित्तवत्कर्तृकार्थश्चायमारम्भः । "आदेः प्रतिषेधो वक्तव्यः" इति काशिका । भाष्यकारस्तु "गतिबुद्धि" (अष्टा०सू०१-४-५२) इति सूत्रे इममर्थं वक्ष्यति । आदयते देवदत्तेन । "गतिबुद्धि" (अष्टा०सू०१-४-५२) इत्यादिना णौ कर्त्तुः कर्मसंज्ञा प्राप्ता "आदिखाद्योः प्रतिषेधः" (का०वा०) इति वचनान्न भवति । कथं तर्हि "आदयत्वन्नं बटुना" इति । अकर्त्रभिप्राये भविष्यति । कर्त्रभिप्राये प्राप्तस्य "निगरणचलन" (अष्टा०सू०१-३-८७) इत्यस्य ह्ययं निषेधो न तु "शेषात्कर्त्तरि" (अष्टा०सू०१-३-७८) इत्यस्य । कथं

तर्हि श्रीहर्षः—

इमां किमाचामयसे न चक्षुषी
चिरं चकोरस्य भवन्मुखस्पृशि । इति ।

न च नायं भक्षणार्थः ।

न पीयतां नाम चकोरजिह्वया
कथं चिदेतन्मुखचन्द्रचन्द्रिका ॥ इति ।

पूर्वार्धानुरोधेन पानार्थत्वादिति वाच्यम् । पानस्यापि भक्षणविशेषात्मकत्वात् । सामान्यग्रहेण विशेषस्यापि ग्राह्यत्वात् । अन्यथैहैव सूत्रे 'चोपयति' इत्युदाहरणासङ्गतेः । चुपेर्मन्दगत्यर्थकत्वात् । इमामित्यस्याकर्मकत्वासङ्गतिप्रसङ्गाच्च । गत्यादिसूत्रेण ह्यस्य कर्मसंज्ञा सा च प्रत्यवसानार्थतां विना दुरुपपादेति । अत एव "नपादम्यि" (अष्टा०सू० १-३-८९) इति सूत्रे पाग्रहणं धेट उपलक्षणं व्याख्यानञ्च सङ्गच्छते । अन्यथा पाधेटोरप्याचमिवत्पानार्थत्वेन निषेधो व्यर्थः स्यात् । न चैवं बुधयुधादिसूत्रे द्रवतिग्रहणं व्यर्थं चलनविशेषवाचकस्यापि चलनवाचकतानपायादिति वाच्यम् । चलनत्वव्याप्याया अखण्डाया एव जातेः प्रवृत्तिनिमित्ततायां उक्तत्वात् । पानन्तु द्रवद्रव्यस्य गलादधः करणम् । तत्र द्रवद्रव्यांशस्याधःकरणे कर्मीभूतस्याधिकस्य भानेऽपि भक्षयतेरर्थस्य भानं निर्विवादम् । यथा मन्दगतौ भासमानायां गतेर्भानम् । अधिकं प्रविष्टं न तु तद्धानिरिति न्यायात् । न च पानत्वमप्यखण्डस्यन्दनत्ववदिति वाच्यम् । तत्साधकानिरुक्तेः । दृष्टान्ते तु कार्यतावच्छेदकतया तत्सिद्धेरिति । उच्यते—'आचामय' इति लोडन्तं छित्वा "किं नाचामयेः" इति व्याख्येयम् । 'से' इति तु सम्बोधनं दमयन्त्याः । तथा हि—अस्य स्त्री ई-लक्ष्मीः तया सह वर्तमाना सेः तस्याः सम्बोधनं से । सलक्ष्मीके इत्यर्थः ।

अणावकर्मकाच्चित्तवत्कर्तृकात् (अष्टा०सू०१-३-८८) । णेः पूर्वमकर्मकाच्चित्तवत्कर्तृकाण्ण्यन्तात्परस्मैपदं स्यात् । शेते कृष्णस्तं शाययति गोपी । अणौ किम् ! आरोहयमाणं प्रयुङ्क्ते आरोहयते । "णेरणौ" (अष्टा०सू०१-३-६७) इति सूत्रे उदाहरणत्वेन योऽकर्मको निर्णीतस्तस्माद् द्वितीये णौ मा भूत् । स हि णावकर्मकः निवृत्तप्रेषणाध्यारोपितप्रेषणयोरुभयोरपि न्यग्भवतीत्यर्थे पर्यवसानस्योक्तत्वात् । अकर्मकात्किम् ! कटं कुर्वाणं प्रयुङ्क्ते कारयते । चित्तवत्कर्तृकात्किम् ? व्रीहीन् शोषयते । अत्र केचित् । चुरादिण्यन्ताद्धेतुमण्णौ "अणौ" (अष्टा०सू०१-३-८८) इत्यस्य प्रत्युदाहरणमाहुः । तत्तु भाष्यादिविरुद्धम् । तथा हि—बुधादिसूत्रादिह

णेरित्यनुवर्तते । बुधादिभ्यश्च हेतुमण्णिरेव सम्भवतीति निषेधोऽपि प्रत्यासत्तेस्तस्यैव न्याय्यः । तेन चुरादिण्यन्तादपि हेतुमण्णौ भवत्येवेदं परस्मैपदमिति भाष्ये स्थितम् । यत्तु रूपयन्तं प्रयोजयति 'रूपयते' इति केनचित्प्रत्युदाहृतं तच्चुरादिण्यन्ताद्धेतुमण्णिचं विधाय तस्य च सौकर्यातिशयात्प्रयोजकव्यापाराविवक्षायां प्रयोज्यव्यापारमात्रवृत्त्या अकर्मकतामाश्रित्य ततो द्वितीये हेतुमण्णिचि बोद्धव्यम् । अत एव 'प्रयोजयति' इत्याह । इह हि युजिना णिचा च प्रयुक्तिद्वयं वदता हेतुमण्णिद्वयं सूच्यते । अन्यथा 'प्रयुङ्क्ते' इत्येवादर्शयिष्यत् । एवञ्च चेतयमानं प्रयुङ्क्ते 'चेतयते' इति केषां चित्प्रत्युदाहरणं यद्वृत्तिकृता दूषितं तत्समर्थितं भवति । स्वार्थण्यन्तादेकस्मिन्नेव हेतुमण्णौ तु 'रूपयति' 'चेतयति' इत्येव बोध्यम् ।

न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः (अष्टा०सू०१-३-८९) । एभ्यो ण्यन्तेभ्यः परस्मैपदं न स्यात् । तत्र पिबतिर्निगरणार्थः । इतरे चित्तवत्कर्तृकाः । नृतिश्चलनार्थोऽपि । तेन "अणावकर्मकात्" (अष्टा०सू०१-३-८८) इति "निगरणचलन" (अष्टा०सू०१-३-८७) इति प्राप्तमिह निषिध्यते । "पा पाने" (भ्वा०प०९२५) पाययते । "पा रक्षणे" (अ०प०१०५६) इत्ययन्तु न गृह्यते । "लुग्विकरणाऽलुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्" ( प० भा० ) इति परिभाषणात् । तेनाणावकर्मकत्वविवक्षायां परस्मैपदं भवत्येव । पालयति । "पातेर्लुग्वक्तव्यः" [का०वा०] इति लुगागमः । "दमु उपशमे" (दि०प०१२०३) दमयते । आङ्पूर्वो "यम उपरमे" (भ्वा०प०९८४) । आयामयते । "न कम्यमिचमाम्" ( ग० सू० ) इत्यतो नेत्यनुवर्तमाने "यमोऽपरिवेषणे" ( ग० सू० ) इत्यनेनामित्संज्ञाप्रतिषेधः । ङकारविशिष्टस्योपादानमुपसर्गप्रतिपत्त्यर्थम् । तेनान्यान्वितादाकारात्परस्य न । आङ्पूर्वो "यसु प्रयत्ने" [दि०प०१२११] । आयासयते । परिपूर्वो "मुह वैचित्त्ये" [दि०प०११९८] । परिमोहयते, रोचयते, नर्त्तयते, वादयते, वासयते । "वस आच्छादने" [भ्वा०प०१००५] इत्यस्य लुग्विकरणत्वादग्रहणम् । पादिषु धेट उपसङ्ख्यानम् (का०वा०) । "धापयेते शिशुमेकं समीची" प्रत्यवसानार्थत्वाच्छिशुमित्यस्य कर्मत्वम् । समीचीति प्रथमाद्विवचनम् । "वा छन्दसि" (अष्टा०सू०६-१-१०७) इति पूर्वसवर्णदीर्घः । स्यादेतत् , "वत्सान्पाययति पयः" । "दमयन्ती कमनीयतामदम्" । "अवीवदद्वीणां परिवादकेन" । "भिक्षा वासयति" इत्यादिप्रयोगास्तर्हि

कथमिति चेत्, अत्राहुः—कर्तृगे फले प्राप्तस्यात्मनेपदस्यापवादो यद्विहितं परस्मैपदं तस्यैवायं निषेधः। यत्त्वकर्त्रभिप्राये "शेषात्" [अष्टा० सू०१-२-७८) इति परस्मैपदं तन्निर्बाधमेवेति।

वा क्यषः (अष्टा०सू०१-३-९०)। क्यषन्तात् परस्मैपदं वा स्यात्। लोहितायति, लोहितायते। नन्विह परस्मैपदाभावपक्षे लकार एवाश्रयेत न त्वात्मनेपदम्। तस्य प्रकृतिविशेषेऽर्थविशेषे च नियतत्वात्। सत्यम्। पूर्वसूत्रे तावदपवादमपनयता प्रतिषेधेनात्मनेपदं प्रवर्त्यत इति निर्विवादम्। स एव च प्रतिषेध इहानुवर्त्यते। तदनुवृत्तिसामर्थ्याच्चेहात्मनेपदविकल्पः सिध्यति। आत्मनेपदप्रवृत्त्यविनाभूतेन निषेधेनात्मनेपदस्य लक्षणया उपस्थितौ तस्यैव विकल्पनात्। तेन मुक्ते "शेषात्कर्त्तरि परस्मैपदम्" (अष्टा०सू०१-३-७८) भविष्यति। प्रकृत्यर्थनियमपक्षे एकवाक्यताविधिश्चेति पक्षे च परस्मैपदविकल्पेपि न कश्चिद्दोष इत्यवधेयम्।

द्युभ्यो लुङि (अष्टा०सू०१-३-९१)। द्युतादिभ्यः परस्मैपदं वा स्याल्लुङि। अद्युतत्, अद्योतिष्ट। अलुठत्, अलोठिष्ट। लुङि किम्? द्योतते, लोठते। अनुदात्तेत्त्वान्नित्यं तङ्। नन्विह विकल्पानुवृत्तिर्व्यर्था। "अनुदात्तेतः" (अष्टा०सू०१-३-१२) इत्यनेन प्रतिषिद्धस्य परस्मैपदस्यानेन प्रतिप्रसवे कृते "लस्य" (अष्टा०सू०३-४-७७) इत्युत्सर्गेणैव पाक्षिकस्यात्मनेपदस्य सिद्धेः। सत्यम्। परस्मैपदे प्रतिप्रसुते आत्मनेपदं न भवतीति ज्ञापयितुं वानुवृत्तिः। तेन 'अनुकरोति" इत्यादौ पाक्षिकमात्मनेपदं न भवति। यदा तु "अनुदात्तङितः" (अष्टा०सू०१-३-१२) इत्यादिप्रकरणेनात्मनेपदमेव विधीयते "शेषात्" (अष्टा०सू०१-३-७८) इत्यादिना च परस्मैपदम्। तदा 'अनुकरोति' इत्यादौ परस्मैपदेनात्मनेपदं बाध्यते येन नाप्राप्तिन्यायात्। पक्षे आत्मनेपदप्रवृत्त्यर्थं चेह वाग्रहणमित्यवधेयम्। पक्षद्वयमपीदं "अनुपराभ्याम्"(अष्टा०सू०१-३-७९) इति सूत्रे भाष्ये स्थितम्। "प्रत्ययलोपे प्रत्ययलक्षणम्" (अष्टा०सू०१-१-६२) इति सूत्रे नियमसूत्राणां विधिरूपेण निषेधरूपेण वा प्रवृत्तिरिति पक्षद्वयस्यापि तत्त्वं निरूपितमस्माभिः। तदप्येतस्माद्भाष्यादुत्थितमित्यवधेयम्।

वृद्भ्यः स्यसनोः (अष्टा०सू०१-३-९२)। वृतुवृधुशृधुस्यन्दूभ्यः परस्मैपदं वा स्यात्स्ये सनि च। वर्त्स्यति, अवर्त्स्यत्। विवृत्सति, "न वृद्भ्यश्चतुर्भ्यः" (अष्टा०सू०७-२-५९) इतीण्निषेधः। पक्षे वर्तिष्यते, अवर्तिष्यत।

विवर्त्तिषते । स्यसनोः किम् ? वर्त्तते । ननु द्युतादिष्वेव वृतादयः पठ्यन्ते । तथा च तक्रकौण्डिन्यन्यायेनयं प्राप्तवृद्भ्यः पूर्वां प्राप्तिं बाधेत । ततश्च 'अवृतत्, अवर्तिष्ट' इति लुङि पूर्वेण विकल्पो न सिध्येत् । तथाचोत्तरसूत्रे चकारः क्रियते । लुटीति विशेषविधिना स्यसनोरियं प्राप्तिर्मा बाधीति (?)। अन्यथा कृपेरपि वृताद्यन्तर्भावादनेनैव सिद्धे किञ्चकारेणेति चेत् ? सत्यम्, द्युतादिपाठसामर्थ्याद्द्युतादिभ्यो लुङि भविष्यति । यद्वा लुङीति स्वरयिष्यते ।

लुटि च क्लृपः (अष्टा०सू१-३-९३) । लुटि स्यसनोश्च कृपेः परस्मैपदं वा स्यात् । कल्प्तासि, कल्प्स्यति, अकल्प्स्यत् । चिक्लृप्सति । "तासि च क्लृपः" (अष्टा०सू०७-२-३०) इतीट्प्रतिषेधः । पक्षे कल्पितासे । कल्पिष्यते, अकल्पिष्यत । चिकल्पिषते । इहणिषेधो नास्ति । तत्र हि "गमेरिट् परस्मैपदेषु" (अष्टा०सू०७-२-५८) इत्यतः परस्मैपदेष्वित्यनुवर्त्तते । ऊदित्वात्पाक्षिक इडभावस्त्वस्त्येव । स्यादेतत्, स्यसनोरित्यस्य स्वरितत्वमेवास्तु "वा क्यषः" (अष्टा०सू०१-३-९०) इति वाशब्दस्य यथा । तथा च "स्वरितेनाधिकारः" (अष्टा० सू०१-३-११) इत्येव सिद्धे किञ्चकारेण ? सत्यम्, स्पष्टार्थश्चकारः । अत एवानुकर्षणार्थाः सर्वे चकारा भाष्ये प्रत्याख्याताः ।

इति श्रीशब्दकौस्तुभे प्रथमस्याध्यायस्य तृतीये पादे
द्वितीयमाह्निकम् ॥ पादश्च समाप्तः ॥

आकडारादेका संज्ञा (अष्टा०सू०१-४-१) । इत ऊर्ध्वं कडाराः कर्मधारये (अष्टा०सू०२-२-३८) इत्यतः प्रागेकस्य एकैव संज्ञा स्यात् । तत्रोभयोः सावकाशत्वे "विप्रतिषेधे परम्" (अष्टा०सू०१-४-२) इति परैव । निरवकाशत्वे तु सैवेति विवेकः ।

तत्र परस्या उदाहरणं—'धनुषा विध्यति' इति । शराणामपायं प्रत्यवधिभूतस्यैव धनुषो व्यधनं प्रति साधकत्वमित्युभयप्रसङ्गे परत्वात्करणसंज्ञा अपादानसंज्ञां बाधते । तथा 'कांस्यपात्र्यां भुङ्क्ते' इत्यधिकरणसंज्ञा 'धनुर्विध्यति' इति कर्तृसंज्ञा (१)च । तदुक्तम्-"अपादानमुत्तराणि" इति ।

निरवकाशायास्तूदाहरणम्—'अततक्षत्' इति । अत्र हि "संयोगे गुरु" (अष्टा०सू०१-४-११) इति गुरुसंज्ञा लघुसंज्ञां बाधते । तेन "सन्वल्लघुनि" (अष्टा०सू०७-४-९३) इत्येतन्न प्रवर्त्तते ।

---

(१) अपादानसंज्ञां बाधते इत्यर्थः ।

स्यादेतत् । भपदसंज्ञाभ्यां तर्हि अङ्गसंज्ञा बाध्येत । तथा च 'गार्ग्यः' इत्यत्र "यस्येति च" (अष्टा०सू०६-४-१४८) इति लोपो न स्यात् । 'धानुष्कः' इत्यत्राङ्गस्योच्यमाना वृद्धिर्न स्यात् । अङ्गसंज्ञा तु 'कर्त्तव्यम्' इत्यादौ सावकाशा । नहि धातुप्रत्यये पूर्वस्य भपदसंज्ञे स्तः ।

अत्राहुः—"सुपि च" (अष्टा०सू०७-३-१०२) "बहुवचने झल्येत्" (अष्टा०सू०७-३-१०३) "तद्धितेष्वचामादेः" [अष्टा०सू०७-२-११७] इत्यादौ स्वादिषु तद्धितेषु चाङ्गस्य कार्यविधानं समावेशस्य ज्ञापकम् । द्विविधा हि स्वादयः—यजादयो वलादयश्च । तत्र यथाक्रमं भपदसंज्ञाभ्यां भाव्यम् । ताभ्यां चाङ्गसंज्ञाबाधे निर्विषया एव तत्तद्विधयः स्युः ।

गुरुलघुसंज्ञे वर्णमात्रस्य विधीयेते, नदीघिसंज्ञे तु तदन्तस्येति ताभ्यां समाविशतः । तेन 'वात्सीबन्धुः' इत्यत्र "नदी बन्धुनि" (अष्टा०सू०६-२-१०९) इति पूर्वपदान्तोदात्तत्वं, 'हे वात्सीबन्धो' इत्यत्र "गुरोरनृतः" (अष्टा०सू०८-२-८६) इति प्लुतश्च सिध्यति । तथा विश्वना च विनरौ "द्वन्द्वे घि" (अष्टा०सू०२-२-३२) इति पूर्वनिपातः । विनरावाचष्टे विनयति प्रविनय्य गतः । "ल्यपि लघुपूर्वात्" (अष्टा०सू०६-४-५६) इति णेरयादेशः । यथा चायादेशे कर्त्तव्ये टिलोपो न स्थानिवत्तथा "अचः परस्मिन्" (अष्टा०सू०१-१-५७) इत्यत्र व्युत्पादितम् । यत्तूक्तं विन्त्रोर्भावो वैन्त्रम् "इगन्ताच्च लघुपूर्वात्" [अष्टा०सू०५-१-१३१] इत्यणिति, तच्चिन्त्यम् ; "द्वन्द्वमनोज्ञादिभ्यश्च" [अष्टा०सू०५-१-१३३] इति वुञ्प्रसङ्गादिति कैयटः । पुरुषसंज्ञा तु परस्मैपदसंज्ञां न बाधते "णलुत्तमो वा" (अष्टा०सू०७-१-९१) इति ज्ञापकात् । अन्यत्रापि यत्र समावेश इष्टस्तत्र चकारादिना स्वस्थाने साधयिष्यते । भाष्ये तु पाठान्तरमप्युपन्यस्तम्—"प्राक्कडारात्परं कार्यम्" इति । अस्यार्थः-प्राक्कडारात्संज्ञाख्यं कार्यं परं स्यादिति । संज्ञाप्रकरणाद्धि संज्ञारूपमेवेह कार्यम् । परासंज्ञेत्येव तु न सूत्रितम् । "विप्रतिषेधे" (अष्टा०सू०१-४-२) इत्युत्तरसूत्रे परङ्कार्यमित्यस्यानुवृत्तिर्यथा स्यात् । तत्र यस्याः संज्ञायाः परस्याः पूर्वयाऽनवकाशया बाधः प्राप्तः सा पराऽनेन विधीयते । एतदेव च ज्ञापकमिह प्रकरणे संज्ञानां बाध्यबाधकभावस्य । तेन परयाऽनवकाशया सावकाशा पूर्वा बाध्यते । द्वयोस्तु-सावकाशयोर्विप्रतिषेधे परया पूर्वा बाध्यते इति । अस्मिन्पक्षे अङ्गसंज्ञा परा कर्त्तव्या भपदसंज्ञे तु पूर्वे, एवं यत्र यत्र समावेश इष्टस्तत्र सर्वत्र बोद्धव्यम् । अस्मिन्पक्षे ऋत्विय इति न सिध्यति ! तथाहि, "ऋतोरण्" (अष्टा०सु०५-१-१०५) "छन्दसि घस्" (अष्टा०सु०५-१-१०६)

"सिति च" (अष्टा०सू०१-४-१६) इति पदसंज्ञैवेष्टा। तेन तत्र परं कार्यमिति वचनाद्भसञ्ज्ञापि स्यात्। ततश्च "ओर्गुणः" [अष्टा०सू०६-४-१४६] प्रसज्येत। पदत्वप्रयुक्तेनावग्रहेण सित्करणं सार्थकं स्यात्। "शेषो बहुव्रीहिः" [अष्टा०सू०२-१-२३] "शेषो ध्यसखि" [अष्टा०सू०१-४-७] इति शेषग्रहणं चास्मिन्पक्षे कर्त्तव्यं स्यात्। अन्यथा हि 'उन्मत्तगङ्गम्' इत्यादौ "अन्यपदार्थे च सञ्ज्ञायाम्" (अष्टा०सू०२-१-२१) इति सत्यामव्ययीभावसञ्ज्ञायां परङ्कार्यमिति वचनाद्बहुव्रीहिसञ्ज्ञाऽपि स्यात्। 'मत्यै' इत्यत्र नदीसञ्ज्ञापर्याये घिसंज्ञाऽपि स्यात्। ततश्च गुणप्रसङ्गः। वस्तुतो बहुव्रीहौ शेषग्रहणं पाठद्वयेऽपि कर्तव्यं, घिसंज्ञायान्तु पाठद्वयेऽपि न कर्तव्यमिति तत्रैव वक्ष्यामः।

इदं त्ववधेयम्। एका संज्ञेति पाठेऽपि संज्ञाग्रहणं न कर्तव्यम्। एकेत्युक्तेऽपि सञ्ज्ञाधिकारादेव तल्लाभात्।

स्यादेतत्, "आद्वन्द्वात्" इत्येवोच्यताम्। न हि "चार्थे द्वन्द्वः" [अष्टा०सू०२-२-२९] इत्यतः परत्रेदमुपयुज्यते। सत्यम्, तथा सति "द्वन्द्वश्च प्राणितूर्य" [अष्टा०सू०२-४-२] इत्यस्याप्यवधित्वं सम्भाव्येत। ततश्च सम्बुद्धिसञ्ज्ञामन्त्रितसञ्ज्ञयोः समावेशो न स्यात्। ननु "आकडारात्" इत्युक्तेऽपि "प्राक्कडारात्समासः" [अष्टा०सू०२-१-३] इत्यस्यावधित्वं कुतो न स्यादिति चेत्? व्यासिन्यायाल्लिङ्गाच्च। यदयं "तत्पुरुषः" (अष्टा०सू२-१-२२) "द्विगुश्च" [अष्टा०सू०२-१-२३] इत्यारभते। समावेशार्थं हि च तत्। वस्तुतस्तु "संख्यापूर्वो द्विगुः" [अष्टा० सू०२-१-५२] इत्यत्रैव चकारः पाठ्यः। तावतैव "दिवः कर्म च" [अष्टा० सू०१-४-४३] "तत्प्रयोजको हेतुश्च" [अष्टा०सू०१-४-५३] इत्यादाविव समावेशसिद्धेः। "द्विगुश्च" (अष्टा०सू०२-१-२३)इति सूत्रान्तरं तु न कर्तव्यमेव। एवं समानाधिकरणसमासप्रकरणं समाप्य "कर्मधारयश्च" इत्येव पाठ्यम्। "तत्पुरुषः समानाधिकरणः कर्मधारयः" [अष्टा० सू०१-२-४२] इति सूत्रं तु मास्त्विति दिक्।

विप्रतिषेधे परङ्कार्यम् [अष्टा०सू०१-४-२]। विरोधे सति कृत्यर्हं यत्परं तत् स्यात्। विप्रतिपूर्वात्सेधतेर्घञ्, "उपसर्गात्सुनोति" (अष्टा० सू०८-३-६५)इति षत्वम्। उपसर्गवशाच्च विरोधार्थकत्वम्। 'कार्यम्' इत्यत्र "अर्हे कृत्यतृचश्च" (अष्टा०सू०३-३-१६९)इत्यर्हार्थे कृत्यप्रत्ययः। तेन तुल्यबलविरोध इति पर्यवस्यति। नह्यपवादादीनां सन्निधौ उत्सर्गादीनां कृत्यर्हत्वं, तैर्बाधितत्वात्। तत्र नित्यमावश्यकत्वाद्बाधकम्। अन्तरङ्गन्तु लाघवात्। अपवादस्तु वचनप्रामाण्यात्। तद्भिन्नस्तु प्र-

कृतसूत्रस्य विषयः। तदुक्तम्-"परनित्यान्तरङ्गापवादानामुत्तरोत्तरस्य बलवत्त्वम्" [प०भा०३८]इति। जातिपक्षे विध्यर्थं सूत्रम्। वृक्षेषु, वृक्षाभ्याम् इत्यत्र हि लब्धावकाशयोरेत्वदीर्घत्वशास्त्रयोर्वृक्षेभ्य इत्यत्र युगपत्प्रसङ्गे सति गमकाभावादप्रतिपत्तिरेव स्यात्। तदुक्तम्-"अप्रतिपत्तिर्वोभयोस्तुल्यबलत्वात्" इति। तत्रास्माद्वचनात्परस्मिन्कृते यदि पूर्वस्यापि निमित्तमस्ति तर्हि तदपि भवति। यथा 'भिन्धकि' इत्यत्र परत्वाद्द्विभावे कृतेऽप्यकच्। तदुक्तं-"पुनः प्रसङ्गविज्ञानात्सिद्धम्" (प०भा०३९)इति। व्यक्तिपक्षे तु तद्व्यक्तिविषयकयोर्लक्षणयोरन्यत्र चरितार्थत्वासम्भवात्तव्यत्तव्यानीयरामिव पर्याये प्राप्ते नियमार्थमिदं सूत्रम्-विप्रतिषेधे परमेव न तु पूर्वमिति। एतल्लक्षणारम्भाच्च तत्र पूर्वस्यानारम्भोऽनुमीयते। तथाच जुहुतात्त्वमित्यत्र परत्वात्तातङि कृते स्थानिवद्भावेन धित्वं न भवति। तदुक्तं-"सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव" (प०भा०४०)इति। जातिव्यक्तिपक्षयोश्च लक्ष्यानुरोधाद्व्यवस्थेत्युक्तं पस्पशायाम्। नित्यादिषु तु नास्य प्रवृत्तिरित्युक्तम्। तेन रधेर्णिचि "अत उपधायाः" (अष्टा०सू०७-२-११६) इति वृद्धिं परामप्यनित्यां बाधित्वा "रधिजभोः" (अष्टा०सू०७-१-६१)इति नुमेव। न च सोऽपि शब्दान्तरप्राप्त्याऽनित्य एवेति वाच्यम्, कृताकृतप्रसङ्गित्वमात्रेणापि क्वचिन्नित्यताभ्युपगमात। तेन 'रन्धयति' इति सिद्धम्। तथा 'अदुद्रुवत्' इत्यादावन्तरङ्ग उवङ् परमपि लघूपधगुणं बाधते। तथा 'शुनः' इत्यत्रान्तरङ्गत्वात् "सम्प्रसारणाच्च" (अष्टा०सू०६-१-१०८) इति पूर्वत्वम्। अल्लोपे तु सति तस्य स्थानिवत्त्वाद्यण् स्यात्। 'बहुश्वा नगरी' इत्यत्र "अन उपधालोपिनः" (अष्टा०सू०४-१-२८) इति ङीप् स्यात्। सिद्धान्ते गौरादिलक्षणो ङीष् तु न, उपसर्जनत्वात्। यत्त्विहत्यभाष्यं 'बहुशुनी' इति, तत्सिद्धान्तेन स्थितम्, अल्लोपाभ्युपगमपक्षे प्रवृत्तत्वात्। एतच्चेहैव कैयटे आभात्सूत्रीयभाष्यकैयटयोश्च स्पष्टं न्यायसिद्धञ्च। यत्तु "बहुश्वेत्येव भवितव्यम्" इति डाप्सूत्रे भाष्यम्, तदिह साधकतया न ग्राह्यम्। डाप्पक्षमेवोपक्रम्य 'बहुशुका' इति रूपं तिरस्कर्तुं तस्य प्रवृत्तत्वात्। 'वृक्ष इह' इत्यादौ त्वन्तरङ्गेण गुणेन दीर्घो बाध्यते। न चासौ अपवादः कथं बाध्यतामिति वाच्यम्, समानाश्रये तस्य चरितार्थत्वात्। तथा च वार्त्तिकम्-"इण्ङिशीनामादुगुणः सवर्णदीर्घत्वात्" (का०वा०) इति। इह शीनामिति नदीत्वान्नुट्, विभक्तिपरतया नित्यस्त्रीत्वात्। अत एव "औङः श्याम्" (का०वा०) इति प्रयोगः। उदाहरणन्तु 'अयजे इन्द्रं, वृक्षे इन्द्रं, सर्वे इह' इति बोध्यम्। इहान्तरङ्गं

बलवदिति लाघवन्यायमूलकमिति कैयटः । "अचः परस्मिन्" [अष्टा० सू०१-१-५७]इतिसूत्रे भाष्यमप्येवम् । "असिद्धं बहिरङ्गम्" (प०भा०५०) इति तु "वाह ऊठ्" (अष्टा०सू०६-४-१३२) इत्यूठ्ग्रहणेन ज्ञापितम् "षत्वतुकोः" [अष्टा०सू०६-१-८६]इत्यनेन तु तदपवादभूतं "नाजानन्तर्ये" (प०भा०५१) इति । तत्र "असिद्धम्" (प०भा०५०)इत्यनया 'पचावेदम्' इत्यादावैत्वाभावार्थमवश्याश्रयणीयया गतार्थत्वाद् "अन्तरङ्गं बलीयः" इति न कर्तव्येतीहत्यं भाष्यं विरुद्धम् । न्यायसिद्धताया उक्तत्वात् । किञ्च सापवादयाऽसिद्धपरिभाषया कथं निरपवादाया गतार्थता ? अथ "षत्वतुकोः" (अष्टा०सू०६-१-८६)इत्यनेन "असिद्धं बहिरङ्गम्" (प०भा०५०)इत्यस्या अनित्यतैव ज्ञाप्यते, लाघवात्; न तु "नाजानन्तर्ये" (प०भा०५१) इति, गौरवात् । तर्हि प्रबलमिदं भाष्यम् । स्फुटीकृतं चेदम् "अचः परस्मिन्" (अष्टा०सू०१-१-५७)इति सूत्रेऽस्माभिः एवञ्चाचोरानन्तर्यमिति द्वित्वं विवक्षितम् । नचेत्यादयोऽपि प्राचाङ्कलहा मुधैव । एवञ्च "अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते" (प०भा०५२) इत्यपि गतार्थम् । "षत्वतुकोः" (अष्टा०सू०६-१-८६)इति वा कृतितुग्ग्रहणेन वाऽनित्यताज्ञापनात् "अश्विमानण्" (अष्टा०सू०४-४-१२६) "इवयुव" (अष्टा०सू०६-४-१३२)इत्यादिनिर्देशाच्च । तेन 'गोमत्प्रियः' इत्यादि सिद्धम् । आचारक्विपि तवममादिबाधे च क्रमेण प्रत्ययोत्तरपदग्रहणस्य कृतार्थत्वात्तदीयज्ञापकता प्रवादोऽपि यथाश्रुताभिप्रायेणैवेति दिक् ॥

॥ इति श्रीशब्दकौस्तुभे प्रथमस्याध्यायस्य
चतुर्थे पादे प्रथममाह्निकम् ॥

यूस्त्र्याख्यौ नदी [अष्टा०सू०१-४-३] । इवर्णोवर्णान्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः । दीर्घान्तयोरेषा संज्ञा व्यतिष्ठते, अन्त्वेन सवर्णग्रहणात् । ह्रस्वान्तयोस्तु प्राप्ताप्येषा परया घिसंज्ञया बाध्यते । तेन 'मते, धेनो' इत्यादौ "अम्बार्थनद्योः" [अष्टा०सू०७-३-१०७] इति ह्रस्वो न भवति । ननु शेषग्रहणाद् घिसंज्ञा कथं भवेदिति चेत् ? न, शेषग्रहणस्य प्रत्याख्यातत्वात् । तथाहि, एका संज्ञेति पाठे तावच्छेषस्य ग्रहणं व्यर्थमिति स्पष्टमेव । अपरङ्कार्यमिति पाठे तु दीर्घान्ते सावकाशां नदीसंज्ञां पुन्नपुंसकयोः सावकाशा घिसंज्ञा 'हे मते' इत्यादौ परत्वाद्बाधिष्यते । 'मत्यै, धेन्वै' इत्यादौ तु निरवकाशाऽपि "ङिति ह्रस्वश्च" (अष्टा०सू०१-४-६) इति नदीसंज्ञा घिसंज्ञां न बाधेत । अतः

शेषग्रहणं कृतम्। तदपि वस्तुतो व्यर्थमेव, नदीसंज्ञावचनसामर्थ्यादेव घिसंज्ञाबाधोपपत्तेः। ह्रस्वलक्षणा हि नदीसंज्ञा। सा च प्रत्ययापेक्षत्वा-द्बहिरङ्गा। तत्रान्तरङ्गायां घिसंज्ञायां "घेर्ङिति" (अष्टा०सू०७-३-१११) इति च गुणे कृते ह्रस्वाभावान्नदीसंज्ञा निर्विषया स्यात्। तदुक्तम्— "तत्र वचनप्रामाण्यान्नदीसंज्ञायां घिसंज्ञाभावः" इति। यद्वा, ईश्च ऊश्च यू "वा छन्दसि" [अष्टा०सू०६-१-१०७] इति पूर्वसवर्णः। तेन दीर्घ-योरेवेयं नदीसंज्ञा। न चैवं "ङिति ह्रस्वश्च" [अष्टा०सू०१-४-६] इति सूत्रे ह्रस्वांशेऽनन्वयः स्यादिति वाच्यम्, विभक्तिविपरिणामेन य्वोः सवर्णो यो ह्रस्व इति व्याख्यानात्। उदाहरणन्तु 'गौर्यै' 'वध्वै' इत्यादि। यू इति किम्? मात्रे, स्वस्रे। स्त्र्याख्यौ किम्? वातप्रम्ये।

स्यादेतत्। स्त्रियमाचक्षाते इति विग्रहे स्त्र्याख्यायाविति प्राप्नोति। "आतश्चोपसर्गे" [अष्टा०सू०३-१-१३६] इति कप्रत्ययस्य 'सुग्लः' इत्या-दौ सावकाशस्य परेण कर्मण्यणा बाधितत्वात्। सत्यम्, मूलविभु-जादित्वात्कः। यद्वा, विच्प्रत्ययो भविष्यति। एतेन "तत्प्रख्यञ्चान्य-शास्त्रम्" (जै०सू०१-४-४) इति जैमिनिसूत्रमपि व्याख्यातम्। नन्वे-मपि स्त्रियामित्येवास्तु किमधिकेन? मैवम्, आसमन्ताच्चक्षाते इति व्युत्पत्त्या नित्यस्त्रीत्वलाभार्थं तदुपादानात्। तेन 'ग्रामण्ये सेनान्ये स्त्रियै' इत्यत्र न भवति। ग्रामं सेनाञ्च नयतीति हि क्रियाशब्दावेतौ लिङ्गत्रयसाधारणौ। अत एव 'आध्यै ब्राह्मण्यै' इति भाष्योदाहरणं चिन्त्यमिति कैयटः, आध्यानकर्तृत्वस्यापि लिङ्गत्रयसाधारणत्वात्।

स्यादेतत्, आसमन्ताद्धीर्यस्या इति विग्रहे उत्तरपदस्य नित्यस्त्री-त्वात् नदीत्वमस्तु "प्रथमलिङ्गग्रहणं च" (का०वा०) इति वक्ष्यमाण-त्वात्। 'अतिलक्ष्म्यै ब्राह्मणाय' इतिवत्। तत्कुतो भाष्यस्य चिन्त्य-तेति चेत्? न, तथा सति यणो दुर्लभत्वात्। "गतिकारकपूर्वस्येष्यते" इत्यत्र हि गतिसाहचर्यात्कारकपूर्वस्यापि नित्यसमासस्य ग्रहणम्। गतिसमासश्च प्रतिपदोक्त एव गृह्यते। तेन 'दुर्धियः' 'निर्भियः' 'वृश्चि-कभिया पलायमानस्य' इत्यादावनित्यसमासत्वान्न यणिति पुरुषोत्तम-प्रभृतयः। अत एव "कृन्मेजन्तः" (अष्टा०सू०१-१-३९) इति सूत्रे "मानः समस्यदुध्य" इति मन्त्रव्याख्यायां 'दुर्धियः' इति कैयटेनेयङ् प्रयुक्तः। अदूरविप्रकर्षेण बहुव्रीहिणेदमर्थकथनम्। व्याख्येयमन्त्रे तु दुष्टं ध्या-यतीति विग्रहे नित्यसमास एव बोध्यः। ततो यण्। "दुरो नाशदाश-दभध्येषु" (का०वा०) इति पृषोदरादिसूत्रस्थवार्त्तिकेन उत्वष्टुत्वे। यत्तु तद्वार्त्तिकव्याख्यावसरे दुष्टं ध्यायतीति विगृह्य "आतश्चोपसर्गे"

(अष्टा०सू०३-१-१३६) इति कप्रत्यय इति कैयटहरदत्तादिभिरुक्तम्, तच्चिन्त्यम् । अन्तस्वरितानुरोधेन अर्थानुरोधेन च "ख्यत्यात्" (अष्टा० सू०६-१-११२) इतिवत्कृतयणादेशानुकरणतयैव वार्त्तिकस्य व्याख्येयत्वात् । "सर्वस्य दुर्वधेः अहंतिरुपद्रवः नोस्मान् मा वधीत्" इति तृतीयचरणस्थेन सहान्वयः । "अमेरतिः" [उ०सू०५०८] इत्यनुवर्तमाने "हन्तेरंहच" [उ०सू०५११] इत्यंहादेशोऽतिश्च प्रत्ययः । अंहतिशब्दस्य-

प्रादेशनं निर्वपणमपवर्जनमंहतिः (अ०को०२-७-३०)

इत्यमरकोशादिबलाद्दाने रूढौ तु प्रद्वेषयुक्तमाभिचारिकाद्यङ्गभूतमेव तदिह ग्राह्यम् । उणादीनामव्युत्पत्तिपक्षाश्रयणादन्तोदात्तता । "वहिवस्यर्तिभ्यश्चित्" (उ०सू०५०९) इति चिद्ग्रहणानुवृत्तेरिति तु तत्त्वम् । एतेन "मानो गर्वः" इति व्याचक्षाणा अपि प्रत्युक्ताः, पदद्वयत्वस्याध्यापकसम्प्रदायसिद्धत्वात् वाक्यशेषानुगुण्याच्च । तस्माद् 'आध्यै ब्राह्मण्यै' इति भाष्योदाहरणं चिन्त्यमिति स्थितम् । प्राक्सुबुत्पत्तेर्यत्र समासस्तत्रैव गतिकारकपूर्वस्यैष्यत इति यण् प्रवर्त्तत इति वदतां श्रीपतिदत्तादीनामपि मते कैयटोक्तं चिन्त्यं दृढमेव । वस्तुतस्तु आध्यानमाधीरिति व्युत्पाद्य गुणगुणिनोरभेदविवक्षयैव प्रयोगोऽयमिति चिन्त्योद्धारोऽवधेयः । हरदत्तस्त्वाह—नित्यस्त्रीत्वं नाम न लिङ्गान्तरानभिधायकत्वं, किन्तु शब्दान्तरसमभिव्याहारं विनैव स्त्रियां वर्त्तमानत्वं तत् । वृत्तिस्वरसोऽप्येवम् । कथन्तर्हि 'ग्रामण्ये' 'खलप्वे' इत्यादि प्रत्युदाह्रियते इति चेत् ? शृणु । क्रियाशब्दत्वेऽप्यनयोः पुंसि मुख्या वृत्तिः । पुंसामेव स्वयमौत्सर्गिको धर्मः यद्ग्रामनयनं खलपवनं वा । आध्यानं तु स्त्रीपुंससाधारणमेवेति वैषम्यम् । तस्माद्युक्तमेवेदं भाष्यमिति ।

अत्र वार्त्तिकम्-प्रथमलिङ्गग्रहणञ्च । प्रयोजनं क्विब्लुक्समासाः । अस्यार्थः-यः पूर्वं स्त्र्याख्यः पश्चादुपसर्जनतया लिङ्गान्तरविशिष्टं द्रव्यान्तरमाह तस्य नदीसंज्ञा वक्तव्या । क्विपि कुमारीमिच्छति कुमारीयति । ततः क्विप्, अल्लोपयलोपौ, क्वौ लुप्तस्य स्थानिवत्त्वनिषेधाद्यण् । यद्वा, कुमारयतीति कुमारी, आचारक्विबन्तात्कर्त्तरि क्विप् । कुमारी ब्राह्मणः । ङ्यन्तत्वात्सुलोपः । तस्मै कुमार्यै ब्राह्मणाय ।

स्यादेतत् । इह कयचिक्वपोः प्रकृतिभूतस्य ङीबन्तस्यापि नित्यस्त्रीत्वं दुर्लभं पुंलिङ्गात्क्यचिक्वपोः निर्वृत्तेन त्रिलिङ्गेन समानाकारत्वादिति चेत् ? न, अर्थभेदेन शब्दभेदाश्रयणात् । तत्र प्रथमोदाहृतस्येत्थं रूपाणि-कुमारीमिच्छन् कुमारीवाचरन् वा ब्राह्मणः कुमारी, ङ्यन्तत्वात्सुलोपः । कुमार्यौ । कुमार्यः । न चेह "अचि श्नुधातु" (अष्टा०सू०६-४-

७७) इतीयङ्प्रसङ्गः। "एरनेकाचः" (अष्टा०सू०६-४-८२) इति यणा बाधितत्वात्। अत एव अमि शसि च कुमार्यं, कुमार्यः; प्रध्यं, प्रध्य इतिवत्। न च "गतिकारकपूर्वस्यैव" इति निषेधः शङ्क्यः, तदितरपूर्वस्य नेत्यर्थात् विशिष्टाभावस्यापूर्वेऽपि सत्त्वात्। ङयि कुमार्यै, कुमार्याः, कुमारीणां, कुमार्यां ब्रह्मणे, हे कुमारि ब्राह्मणे इत्यादि। पत्न्यादेस्तु संयोगपूर्वकत्वादियङ्। पत्नियौ, पत्नियः इत्यादि। शेषं प्राग्वत्। पुंलिङ्गात्क्यच्क्यङोर्निष्पन्नस्य तु अङ्यन्तत्वात्सुलोपो न। कुमारीः। हेकुमारीः। अनदीत्वाद्ध्रस्वो न। कुमार्यं, कुमार्याः, कुमार्यां ब्राह्मणानां, कुमार्यि ब्राह्मणे इत्यादि। कुमारमात्मनमिच्छन्ती ब्राह्मणी कुमारीरित्यत्रापि कैयटमते नित्यस्त्रीत्वाभावात्पुंवदेव रूपम्। हरदत्तमते तु लक्ष्मीवत्। अमि शसि च यण्विशेषः।

प्रकृतमनुसरामः। "लुम्मनुष्ये" (अष्टा०सू०५-३-९८) इति लुप्। खरकुट्यै ब्राह्मणाय। यद्यप्यत्र युक्तवद्भावात्स्त्रीत्वमस्ति तथापि स्वाश्रयस्य पुंस्त्वस्यापि सत्त्वान्नित्यस्त्रीत्वं नास्तीति कैयटहरदत्तादयः। तच्चिन्त्यम्, 'चञ्चाः पश्य' इत्यादौ शसो नत्वापत्तेः। तस्माल्लुबन्तैः खरकुटीचञ्चादिशब्दैः शास्त्रीयस्त्रीत्वविशिष्ट एव लौकिकः पुमानभिधीयते इत्येव तत्त्वम्। एवञ्च लुपः प्रयोजितत्वेन कथं गणनेत्यपि चिन्त्यम्। समासे अतिलक्ष्मीः, बहुश्रेयसी। "ईयसश्च" (अष्टा०सू०५-४-१५६) इति कब्निषेधः। "ईयसो बहुव्रीहेर्न" (का०वा०) इत्युपसर्जनह्रस्वो न। उभयत्रापि सम्बुद्धौ ह्रस्वः ङित्सु आडागमादिकञ्च नदीसंज्ञाकार्यं बोध्यम्॥ अवयवस्त्रीविषयत्वात्सिद्धम्॥ समासे तावदवयवो लक्ष्म्यादिशब्दः स्त्रियामेव वर्त्तते इति तदानीमेव संज्ञाः। ततश्च वर्णसंज्ञापक्षे समुदायस्य नद्यन्तत्वात्कार्यसिद्धिः। तदन्तस्य संज्ञेति पक्षे तु अङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति वचनात्। वस्तुतस्तूक्तवचनस्य प्रागेव दूषितत्वात्तदन्तत्वेनैव सिद्धिर्बोध्या। अतितन्त्रीबन्धुरित्यत्रापि "नदी बन्धुनि" (अष्टा०सू०६-२-१०९) इति पूर्वपदान्तोदात्तत्वं सिध्यति,—पूर्वपदस्य नद्या विशेषणात्। किब्लुपोरपि अन्तरङ्गत्वात्क्विबादेः प्रागेव प्रवृत्ता संज्ञा बहिरङ्गेण लिङ्गान्तरयोगेन न निवर्तते त्वकत्पितृकेऽऋज्वत्। "अकृतव्यूहाः" (प०भा०५६) इत्यस्यानित्यताया "अचः परस्मिन्" (अष्टा०सू०१-१-५७) इति सूत्रे वर्णितत्वात्।

स्यादेतत्। इयङुवङ्स्थानप्रतिषेधे यण्स्थानप्रतिषेधप्रसङ्गोऽवयवस्येयङुवङ्स्थानत्वात्। यथा ह्यवयवस्य स्त्रीविषयत्वात्समुदायस्य नदीसंज्ञेत्युक्तम्, तथावयवस्येयङुवङ्स्थानत्वात्समुदायस्य यण्स्थान-

स्यापि प्रतिषेधः स्यात्। यथा स्त्रियै आध्यै प्रध्यै।

अत्राहुः,-इयुवङ्भ्यामङ्गमाक्षिप्यते,—अङ्गाधिकारे तयोर्विधानात्। तेन यस्याङ्गस्येयङुवङौ निर्वर्तेते तस्य नदीसंज्ञानिषेधः। 'आध्यै' इत्यत्र तु अवयवस्याङ्गत्वं नास्ति अङ्गस्य तु "एरनेकाचः" (अष्टा०सू०६-४-८२) इति यण्विधानादियङुवङः स्थानता नास्तीति निषेधाभावः। एतदर्थमेव च तत्र स्थानग्रहणम्, इयङुवङोर्यदा स्थितिस्तदा प्रतिषेधो यथा स्यात्, यदा त्वपवादेन बाधस्तदा मा भूदिति। एवं "ङिति ह्रस्वश्च" (अष्टा०सू०१-४-६) इत्यत्राप्यङ्गस्याक्षेपात्सोऽपि विधिरङ्गस्यैव स्त्रीत्वे भवति, नावयवस्य। शकस्यै, अतिशकटये ब्राह्मणाय। श्रियै, अतिश्रिये ब्राह्मणाय। इह तु स्यादेव-अतिश्रिये अतिश्रियै वा ब्राह्मण्यै इति स्थितं भाष्ये। न चेह नित्यस्त्रीत्वं नास्तीति वाच्यम्, हरदत्तमते तत्सत्त्वात्। कैयटमते तु "ङिति ह्रस्वश्च" (अष्टा०सू०१-४-६) इत्यत्र स्त्रीग्रहणमात्रमनुवर्त्तते, न त्वाख्याग्रहणम्। एवञ्च सुधीशब्देऽपि रूपद्वयं निर्विवादम्। सुध्यादयः पुंवदिति प्रक्रिया तु प्रामादिकयेव। अतिलक्ष्म्यतिचम्वोर्वातप्रमीहूहूभ्यां साम्योक्तिरप्येवम्। तथा 'स्वयंभूः पुंवद्' इत्यपि प्रमाद एव।

स्यादेतत्, 'निष्कौशाम्बिः पुमान्' इत्यत्रापि अन्तरङ्गतया नदीसंज्ञा स्यादतिलक्ष्म्यादौ यथा। सत्यम्, सत्यामपि तस्यां न कश्चिद्रूपे दोषः। न च सम्बुद्धिह्रस्वादिप्रसङ्गः, ह्रस्वादेशेन नद्या अपहारात्। वर्णस्य नदीत्वात्। स्त्र्याख्यत्वं तु तस्य शक्त्याश्रयतामात्रेण बोध्यम्। पर्याप्त्यधिकरणताया अविवक्षितत्वात्। तदन्तस्य नदीसंज्ञेति पक्षेऽपि एकदेशविकारानभ्युपगमेन सर्वादेशस्यैव वक्तव्यत्वात्। न च स्थानिवद्भावः, अल्विधित्वात्। 'प्रपठ्य' इत्यत्रेडभावार्थं विशेषणतयाऽप्यलाश्रयणे निषेधस्य सिद्धान्तितत्वादिति दिक्। निष्कौशाम्ब्यै निष्कौशाम्बये ब्राह्मण्यै इत्यत्र तु "ङिति ह्रस्वश्च" [अष्टा०सू०१-४-६] इति विकल्पो भवत्येवेति दिक्।

नेयङुवङ्स्थानावस्त्री (अष्टा०सू०१-४-४)। इयङुवङोः स्थितिः स्थानं निरपवादा प्रसक्तिर्यत्र तावीदूतौ नदीसंज्ञौ स्तः स्त्रीशब्दं विना। हे श्रीः। हे भूः। अस्त्रीति किम्? हे स्त्रि। कथं तर्हि "विमानना सुभ्रु कुतः पितुर्गृहे" इति कालिदासः। "हापितः क्वासि हे सुभ्रु" इति भट्टिश्च। "एकवंशप्रभवभ्रुव" इति श्रीहर्षश्च। प्रमाद एवायमिति हरदत्तः। "सामान्ये नपुंसकम्" (का० वा०) इति वा कथञ्चित्समाधेयम्। केचित्तु तदो दावचनेन "सकृद्‌द्वन्द्वमनित्यम्"

इति परिभाषाज्ञापनमाश्रित्यानित्योऽयं प्रतिषेध इति समादधुः । किंत्वेतत्सकलप्रमादेषु सुवचम् । तदोदावचनप्रत्याख्यानपरभाष्यादिविरुद्धश्च । अन्ये तु "वामि" [अष्टा०सू०१-४-५] इत्यतो वाग्रहणस्य सिंहावलोकितन्यायेनानुवृत्तस्य व्यवस्थितविभाषापरत्वेनेष्टसिद्धिमाहुः। तदपि न, सिंहावलोकितन्यायस्येहाभिमतत्वे नञ्ग्रहणस्य "वामि" (अष्टा०सू०१-४-५) इत्युत्तरसूत्रस्य च वैयर्थ्यापत्तेः । यत्तूक्तं दुर्घटवृत्तौ भ्रुशब्दाद् "अप्राणिजातेश्च" (का०वा०) इत्यूङि समासे उपसर्जनह्रस्वत्वे च कृते "ऊङुतः" (अष्टा०सू०४-१-६६) इत्यूङि तस्य समुदायभक्तत्वान्नोवङ्स्थानत्वमिति । तदतिस्थवीयः, प्रत्ययस्य भक्तताया निष्प्रमाणकत्वात् । तत्स्थानिकस्यैकादेशस्यान्तवद्भावेन भ्रूशब्दावयवताया अनपायात्, अङ्गाधिकारे तदुत्तरपदग्रहणस्य निर्विवादतया समुदायभक्तेऽप्युवङ्प्रवृत्तेश्च । 'सुभ्रुवौ' इत्यादिरूपाणां सर्वसम्मतत्वाच्चेति दिक् ।

वामि (अष्टा०सू०१-४-५) । इयङुवङ्स्थानौ वा नदीसंज्ञौ स्तः स्त्रियामामि । श्रीणाम, श्रियाम् । भ्रूणाम, भ्रुवाम । द्वितीयैकवचनं तु नेह सूत्रे गृह्यते, तत्र नदीकार्याभावात् । अस्त्रीत्येव । स्त्रीणाम् । इह "वाचि ह्रस्वश्च" इत्येव कुतो न कृतम् । एवं हि ङितीति न कर्तव्यमिति चिन्त्यम् । वस्तुतस्तु सन्निपातपरिभाषया 'भ्रूणाम्' इति नुट् न स्यादत आमीत्युक्तम् । परिभाषा चेयमनेनैव ज्ञाप्यते इति ध्येयम् ।

ङिति ह्रस्वश्च (अष्टा०सू०१-४-६) । इयङुवङ्स्थानौ ह्रस्वौ च यू वा नदीसंज्ञौ स्तः स्त्रियां ङिति परे । श्रियै, श्रिये, भ्रुवै, भ्रुवे, कृत्यै, कृतये, धेन्वै, धेनवे । अस्त्रीत्येव । स्त्रियै । स्त्रीलिङ्गाविति किम् ? अग्नये, वायवे । इह प्रथमलिङ्गग्रहणं नास्ति । तेन निष्कौशाम्बिर्हरिवदित्युक्तम् । स्त्रियमतिक्रान्तोऽतिस्त्रिरित्यत्र तु विशेषः । अतिस्त्रियौ, "स्त्रियाः" (अष्टा०सू०६-४-७९) इतीयङ् । अयं हि गौणत्वेऽपि भवति । किन्तु—

गुणनाभावौत्वनुड्भिः परत्वात्पुंसि बाध्यते ।
क्लीबे नुमा च स्त्रीशब्दस्येयङित्यवधार्यताम ॥

"जसि च" (अष्टा०सू० ७-३-११९) इति गुणः—अतिस्त्रयः । "वाम्शसोः" (अष्टा०सू०६-४-८०) अतिस्त्रियम्, अतिस्त्रीम । अतिस्त्रियौ । अतिस्त्रियः, अतिस्त्रीन् । "आङो नाऽस्त्रियाम्" (अष्टा०सू०७-३-१२०) अतिस्त्रिणा । अतिस्त्रिभ्याम् । "घेर्ङिति"(अष्टा०सू०७-३-१११)इति गुणः-अतिस्त्रये, अतिस्त्रेः । अतिस्त्रियोः । 'ह्रस्वनद्यापः' [अष्टा०सू०७-१-५४] इति नुट् अतिस्त्रीणाम् । "अच्च घेः" [अष्टा०सू०७-३-११९] अतिस्त्रौ ।

सङ्ग्रहश्च—

औकारे ओसि नित्यं स्यादम्शसोस्तु विभाषया ।
इयादेशोऽचि नान्यत्र स्त्रियाः [१]स्यादुपसर्जने ॥

एवं क्लीबे नुमा इयङ् बाध्यते । तेन 'अतिस्त्रि, अतिस्त्रिणी' इत्यादि वारिवत् । स्त्रियान्तु "ङिति ह्रस्वश्च" (अष्टा०सू०१-४-६) इतिह्रस्वान्तत्वप्रयुक्तो नदीसंज्ञाविकल्पः । अस्त्रीति तु इयङुवङ्स्थानावित्यस्यैव विशेषणम्, तत्सम्बद्धस्यैवानुवृत्तेः । न चेहावृत्त्यो नयविशेषणता, प्रमाणाभावात् । तेन अतिस्त्रियै, अतिस्त्रये । "औत्"(अष्टा०सू०७-३-१२८) इति बाधित्वा "इदुद्भ्याम्"(अष्टा०सू०७-३-११७) इति डराम्-अतिस्त्रियाम् । पक्षे "अच्च घेः" (अष्टा०सू०७-३-११९) अतिस्त्रौ ।

शेषो घ्यसखि [अष्टा०सू०१-४-७] । ह्रस्वौ यौ यू तदन्तं सखिभिन्नमनदीसंज्ञं घिसंज्ञं स्यात् । हरये, भानवे । ह्रस्वौ किम् ? ग्रामण्ये, खलप्वे । यू किम् ? मात्रे । असखि किम् ? सख्ये । शेषः किम् ? मत्यै । शेषग्रहणं व्यर्थमिति नदीसञ्ज्ञासूत्रे एवोक्तम् । समासे तु सुसखेरागच्छतीत्यादौ घिसञ्ज्ञा भवत्येव, समुदायस्य सखिशब्दाद्भिन्नत्वात् । तदन्तग्रहणं तु नास्ति, विशेष्यसम्बन्धाभावात् । यत्तु "ग्रहणवता" (प०भा०३१) इत्यादि हरदत्तेनोपन्यस्तं व्यत्यासूत्रे च कैयटेन । तत्पूर्वापरविरुद्धमिति "येन विधिः" (अष्टा०सू०१-१-७२)इति सूत्रे व्युत्पादितम् । न चैवं "यस्येति च" [अष्टा०सू०६-४-१४८]इति सूत्रे इवर्णस्य ईति सखीत्युदाहरणं न युज्यते, सखिशब्दात् "सख्याशिश्वीतिभाषायाम्" [का०वा०] इति ङीषि सति लोपे सवर्णदीर्घे वा विशेषाभावात् । यत्तु तत्र भाष्ये वृत्तौ चोक्तम्—असति लोपेऽतिसखेरागच्छतीत्यत्र सवर्णदीर्घस्य पूर्वं प्रत्यन्तवद्भावादसखीति घिसंज्ञाप्रतिषेधः स्यादिति, तदसखीति प्रसज्यप्रतिषेधमाश्रित्येति कैयटादौ स्पष्टम् । अत एवापाततः पर्युदासस्यैवेह स्थितत्वात् । अन्यथा वाक्यभेदादसमर्थसमासात् । 'सुसखेः' इत्याद्यसिद्ध्यापत्तेश्च । तस्मादीति लोपे फलं दुर्लभमिति चेत ? अत्रोच्यते, सखी, सख्यौ, सख्यः इत्यादावनङ्णत्वे माभूनामिति इलोप एषितव्यः । न च सिद्धान्तेऽपि प्रातिपदिकग्रहणे लिङ्गविशिष्टग्रहणाद्दोषतादवस्थ्यम्, विभक्तौ लिङ्गविशिष्टाग्रहणात् । एतेन इकारलोपस्य तद्धिते एवोदाहरणं न त्वीति परत इति वदन् हरदत्तोऽपास्तः ।

पतिः समास एव (अष्टा०सू०१-४-८) । पतिशब्दः समास एव घिसञ्ज्ञः स्यात । भूपतये । नेह-पत्या, पत्ये । विपरीतनियमं वारयितु-

---

[१] 'पुंस्युपसर्जने' क्वचित् ।

मेवकारः । दृढमुष्टिना ।

स्यादेतत्, "शेषोऽघ्यसखिपती" इत्येवास्तु । समस्तस्य तु पूर्वोक्तरीत्या सिद्धम् । न चोत्तरसूत्रे सख्युरपि सम्बन्धापत्तिः, बाधकाभावात् । इष्टरूपस्य तावतापि सिद्धेः । द्वितीयस्य तु साधोऽपि छन्दस्यपठितस्यानापाद्यत्वात् । न चैवमुत्तरसूत्रे षष्ठीयुक्तग्रहो व्यर्थः स्यादिति वाच्यम्, इष्टापत्तेः । एवमेव हि "श्रीग्रामण्योश्छन्दसि" (अष्टा०सू०७-१-५६)इति श्रीग्रहणं "नित्यं मन्त्रे" [अष्टा०सू०६-१-२१०] इत्यादीनि च प्रत्याख्यातानि । "सम्बुद्धौ शाकल्यस्य" [अष्टा०सू०१-१-१६]इत्यत्रानार्षग्रहणमप्येवम् । सत्यम् । यथा सखिगृहे गृहसखायावित्यत्र पूर्वनिपातानियमस्तथा पतिगृहे इत्यत्र मा भूत । इह हि घित्वात्पूर्वनिपात एव । बहुचपूर्वस्य तु सुसखिन्यायेन घित्वाद् 'बहुपतिना' इत्यादि बोध्यम् । अथ कथं "सखिना वानरेन्द्रेण"

"पतिना नीयमानायाः पुरः शुक्रो न दुष्यति" ।

"नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ" ।

इत्यादि ? अत्र हरदत्तः, छन्दोवदृषयः कुर्वन्तीति । अस्यायमाशयः-असाधव एवैते त्रिशङ्क्वाद्ययाज्ययाजनादिवत्तपोमाहात्म्यशालिनां मुनीनामसाधुप्रयोगोऽपि नातीव बाधते । अस्मदादीन्प्रति तु स्मृतिपुराणाद्यध्ययनविधिबलादेव तदन्तर्गततत्पाठो न बाधकः । तथाच स्वातन्त्र्येणेदृशं प्रयुञ्जाना अस्मदादयः प्रत्यवयन्त्येवेति नदीसंज्ञासूत्रे भाष्यकैयटयोरपि स्थितमिदम् । यद्वा, सखेत्याख्यातः सखिः, पतिरित्याख्यातः पतिः, तेन सखिना, पतिना । आख्यातण्यन्तात्कर्मणि "अच इः" (उ०सू०५८८) इत्यौणादिक इप्रत्ययः । लाक्षणिकत्वाच्चैतयोर्घिसंज्ञापर्युदासे ग्रहणं नास्तीति दिक् । एतेन—

अर्जुनस्य सखा कृष्णः कृष्णस्य सखिरर्जुनः ।

इत्यपि व्याख्यातम् । कथं "वचो वाचस्पतेरपि" इति माघः । न ह्ययं समासः, अलुग्विधायकादर्शनादिति । सत्यम्, "तत्पुरुषे कृति" (अष्टा०सू०६-३-१४) इति बहुलग्रहणादलुक् । एतेन दिवस्पतिवास्तोष्पती व्याख्यातौ । "षष्ठ्याः पति"(अष्टा०सू०१-४-८)इत्यादिना सत्वम् । ये तु तत्र छन्दसीत्यनुवर्तयन्ति "श्रियः पतिः" (शि०१-१) इत्यादिसिद्धये तन्मते पारस्करादित्वात्सुट् । केचित्तु "द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छच" (अष्टा०सू०४-२-३२) इति सामान्यापेक्षज्ञापकात् षष्ठ्या अलुक् । कस्कादित्वात्सत्वम् । इणः परस्य तु षत्वमित्याहुः ।

पदकारास्तु वाचस्पतिं विश्वकर्माणम्, वास्तोष्पते प्रतीत्यादौ पृथक् पदमधीयते ।

षष्ठीयुक्तश्छन्दसि वा (अष्टा०सू०१-४-९) । षष्ठ्यन्तेन युक्तः पतिशब्दश्छन्दसि घिसंज्ञो वा स्यात् । क्षेत्रस्य पतिना वयम् । इह योगो विभज्यते । षष्ठीयुक्तश्छन्दसीति । ततो वा । छन्दसीत्येव । सर्वे विधयश्छन्दसि विकल्प्यन्ते इत्यर्थः । "बहुलञ्छन्दसि" इत्यादिकस्तस्यैव प्रपञ्चः ।

ह्रस्वं लघु (अष्टा०सू०१-४-१०) । ह्रस्वं लघुसंज्ञं स्यात् । लघूपधगुणः-चेतति । न च ह्रस्वप्रदेशेष्वपि लघुसंज्ञयैव व्यवहारः सुकरः 'सर्पिष्ट्वम्' इत्यादौ "ह्रस्वात्तादौ तद्धिते" (अष्टा०सू०८-३-१०१) इति षत्वासिद्धिप्रसङ्गात् । गुरुसंज्ञया तत्र लघुसञ्ज्ञाया बाधात् । तस्मादेकसंज्ञाधिकाराद्बहिर्ह्रस्वसंज्ञाप्रणयनं सम्यगेव कृतम् । यद्येवन्तर्हि दीर्घप्लुतसंज्ञायाः समावेशमाशङ्क्य एकसंज्ञाधिकारेऽयं योगः करिष्यते इति भाष्यं विरुध्यते, गुरुसंज्ञाया लघुसंज्ञाया इव गुरुलघुसंज्ञाभ्यां ह्रस्वसंज्ञाया बाधप्रसङ्गात् । न च निरवकाशता, लघुसंज्ञाप्रवृत्त्युपायतामात्रेण सार्थकत्वात् । यथा पदं सञ्ज्ञं भवतीति व्याख्यायां पदसंज्ञायाः । सत्यम्, चकारादिना समावेशः कर्तव्य इत्याशयः । एतदपरितोषादेव वा तत्र पक्षान्तराण्युक्तानीति दिक् ।

संयोगे गुरु (अष्टा०सू०१-४-११) । ह्रस्वं गुरुसंज्ञं स्यात्संयोगे परे । शिक्षा, भिक्षा । "गुरोश्च हलः" (अष्टा०सू०३-३-१०३) इत्यकारप्रत्ययः ।

दीर्घञ्च (अष्टा०सू०१-४-१२) । दीर्घं गुरुसंज्ञं स्यात् । ईहाञ्चक्रे ।

यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् (अष्टा सू०१-४-१३। प्रत्ययो यस्माद्विहितस्तदादिशब्दः प्रत्यये परेऽङ्गसंज्ञं स्यात् । रामेण । विधिरिति किम् ? स्त्री ईयती । न चेह वतुपः स्त्रीशब्दादविधानेऽपि स विधिरस्त्येवेति वाच्यम्, सन्निधानबलेन यस्माद्यः प्रत्ययो विहितस्तस्मिन्सोऽङ्गमिति व्याख्यानात् । तदादि किम् ? वदामि, वदिष्यामि । "अतो दीर्घो यञि" (अष्टा०सू०७-३-१०१) इति दीर्घः । न चायमारम्भसामर्थ्यादेव भविष्यतीति वाच्यम्, "यय गतौ" "चय गतौ (भ्वा०आ० ४७८) आभ्यां यङ्लुकि यायामि, यायावः, यायामः, चाचामि, चाचावः, चाचामः इत्यादौ चरितार्थत्वात् । प्रत्यये किम् ! प्रत्ययविशिष्टस्य ततोऽधिकस्य वा मा भूत् । एवं हि 'वव्रश्च' इत्युरदत्वस्य परनिमित्तत्वं न लभ्यते । तथाच "अचः परस्मिन्" (अष्टा०सू०१-१-५७) इति स्थानिवत्वाभावाद्वकारस्य सम्प्रसारणप्रसङ्गः । न च प्रथमसूत्रेण स्थानिवद्भावः,

अव्विधित्वात्। अत एव हि सत्यपि प्रथमालिङ्गग्रहणे निष्कौशाम्ब्यादौ नदीकार्यं नेत्युक्तम्।

इह "प्रकृत्यादिप्रत्ययेऽङ्गम्" इत्येव लाघवाद्वक्तुं युक्तम्। प्रकृतिमात्रस्य तु व्यपदेशिवद्भावात्सिद्धम्। योगविभागेन परिभाषार्थलाभार्थं तथोक्तमिति तत्त्वम्। कर्ता, कारकः। इह योगो विभज्यते। यस्मात्प्रत्ययविधिस्तदादिप्रत्यये इति। परिभाषेयम्। प्रत्यये गृह्यमाणे यस्मात्तस्य विधिस्तदादि गृह्यते इत्यर्थः। तेन "ञ्नित्यादिः" (अष्टा०सू० ६-१-१९७] इत्यादौ यत्र प्रत्ययः सप्तम्या निर्दिश्यते तत्र तदादेर्ग्रहणम्। तेन 'देवदत्तो गार्ग्यः' इति सङ्घातस्य ञित्स्वरो न भवति। "सुप आत्मनः क्यच्" (अष्टा०सू०३-१-८) इत्यत्राप्यनेन तदादिनियमः। तत्र सुपा कर्मणस्तदादेर्वा विशेषणात्तदन्तविधिः। तेन 'महान्तं पुत्रम्' इत्यादावतिप्रसङ्गो न। सति हि वाक्यात्क्यचि 'महत्पुत्रीयति' इति स्यात्। तथा 'देवदत्तश्चिकीर्षति' इति सङ्घातस्य धातुसंज्ञा न, 'देवदत्तो गार्ग्यः' इति सङ्घातस्य प्रातिपदिकसंज्ञा न, 'देवदत्तो गार्ग्यायणः' इति सङ्घातात्फञ् नेति दिक्।

अस्यापवादः "कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्" (पा०भा० २८) इति। इह च "गतिरनन्तरः" (अष्टा०सू०६-२-४९) इत्यनन्तरग्रहणं ज्ञापकम्। तद्धि अभ्युद्धृतशब्दे उच्छब्देनव्यवहितस्याभिशब्दस्य प्रकृतिस्वरनिवृत्त्यर्थम्। न च परत्वाद् "गतिर्गतौ" (अष्टा०सू०८-१-७०) इति निघाते कृते उदात्तग्रहणानुवृत्त्या विधीयमानः पूर्वपदप्रकृतिस्वरो न भविष्यतीति वाच्यम्, अपादादावित्यधिकारात्पादादौ निघाताप्रवृत्तेः। तदादिनियमे तु हृतशब्दस्य क्तान्तत्वेऽप्युद्धृतशब्दस्याक्तान्तत्वात्प्राप्तिरेव नेति किमनन्तरग्रहणेन? प्रयोजनन्तु समासतद्धितस्वराः। तथाहि, 'अवतप्तेनकुलस्थितम्' इत्यत्र "क्तेन" इत्यनुवर्त्तमाने "क्षेपे" (अष्टा०सू०२-१-४७) इति समासः। "तत्पुरुषे कृति" (अष्टा०सू० ६-३-१४) इत्यलुक्। 'सांकूटिनम्' इत्यत्र "अणिनुणः" (अष्टा०सू०५-४-१५) इति सोपसर्गादण्। अत एव वादिवृद्धिरुपसर्गांशे पर्यवस्यति। 'व्यावक्रोशी' इत्यत्र "कर्मव्यतिहारे णच् स्त्रियाम्" (अष्टा०सू०३-३-४३) इति णच्। ततो "णचः स्त्रियाम्" (अष्टा०सू०५-४-१४)इत्यञ्। "न कर्मव्यतिहारे" [अष्टा०सू०७-३-६] इत्यैजागमनिषेधः। 'दूरादागतः' इत्यत्र थाथादिस्वरेणान्तोदात्तत्वम्। ननु परिभाषां विनाऽपि "समासस्य" (अष्टा०सू०६-१-२२३) इत्यन्तोदात्तो भविष्यतीति चेत्? मैवम्, आगम्यते स्मेति हि कर्मणि क्तः। तथाच समासस्वरं बाधित्वा "गतिरन-

न्तरः" (अष्टा०सू०६-२-४९) इति मध्योदात्तं स्यात् । सत्यां तु परिभाषायां "थाथघञ्" (अष्टा०सू०६-२-१४४) इत्यनेन कृत्स्वरापवादगतिस्वरं बाधित्वा परत्वादन्तोदात्तत्वं भवति । ननु थाथादिस्वरस्याप्यपवादो गतिस्वरः । सत्यम्, गतेरुत्तरस्य क्तान्तस्य यदन्तोदात्तत्वं तस्यैवासावपवादः । कारकादुत्तरस्य तु थाथादिस्वर एव भवतीति वक्ष्यते । नन्वस्तु गतिस्वरेणाद्युदात्त आगतशब्दः । ततो दूरशब्दस्य "स्तोकान्तिक" [अष्टा०सू०२-१-३९] इति समासः । "पञ्चम्याः स्तोकादिभ्यः" (अष्टा०सू०६-३-२) इत्यलुक् । ततः सतिशिष्टत्वात्समासान्तोदात्त एव भविष्यति । सत्यम्, अन्यार्थं कृतया परिभाषया कृदुत्तरपदप्रकृतिस्वरेणाद्युदात्ते आगतशब्दे प्राप्ते सगतेरपि क्तान्तत्वात्स्थानान्तरप्राप्तत्वाद्गतिस्वरस्य बाधकस्यापि बाधेन थाथादिस्वरो भवतीत्येवाभिप्रेतं न तु स्वर एवानन्यथासिद्धं परिभाषोदाहरणम् । तथाच परिभाषा प्रातिपदिकसंज्ञायां न प्रवर्तते,—मध्येपवादन्यायेन कृद्ग्रहणस्याप्रत्यय इति निषेधमात्रबाधकत्वात् । समासेतरपदसंज्ञकपूर्वभागघटितः सङ्घातो न प्रातिपदिकमिति निषेधस्तु परत्वाद्बाधक एव । तेन 'मूलकेनोपदंशम्' इत्यत्र न सुपो लुक् । न च समासविकल्पसामर्थ्यम्, "न समास" (का०वा०) इति शाकलनिषेधाप्रवृत्त्या दध्युपदंशादौ तत्सार्थक्यसम्भवात् । एतच्च "पुंयोगादाख्यायाम्" (अष्टा०सू०४-१-४८) इति सूत्रे भाष्यकैयटयोः स्पष्टमिति दिक् । "ष्यङः सम्प्रसारणम्" (अष्टा०सू०६-१-१३) इति सूत्रे भाष्ये तदादिनियमस्यापवादान्तरं पठितम् "स्त्रीप्रत्यये चानुपसर्जने तदादिनियमो न" इति । एतच्च वाचनिकमेवेति सर्वादिसूत्रे व्याख्यातम् । यद्वा, इह "नेयङुवङ्स्थानौ" (अष्टा०सू०१-४-४) इत्यतोऽस्त्रीत्यनुवर्त्तते । तत्र यद्यपि तत्र स्वरूपपदार्थकं तथापीहार्थपरं सम्पद्यते । प्रत्ययग्रहणे तदादि ग्राह्यं, स्त्री चेन्नाभिधीयते इत्यर्थः । तेन स्त्रीप्रत्यये तदादिनियमो नास्तीति फलितम् । न चैवम् 'अतिकारीषगन्ध्यापुत्रः' इत्यत्र सम्प्रसारणप्रसङ्गः, अस्त्रीत्यनेन प्रधानस्त्रियामेव प्रतिषेधात् । "गौणमुख्ययोः" इति न्यायात् । तेन यावान् शब्दः स्त्रियं प्राधान्येनाह तावान् स्त्रीप्रत्ययान्तः न तु ततोऽधिकोऽपीति स्थितम् ।

सुप्तिङन्तं पदम् (अष्टा०सू०१-४-१४) । सुबन्तं तिङन्तञ्च पदसंज्ञं स्यात् । ब्राह्मणा ऊचुः । अन्तग्रहणमन्यत्र "संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति" (प०भा०२७) इति ज्ञापनार्थम् । गौरब्राह्मणितरा । घसंज्ञायां तरबन्तग्रहणे हि सति गौरीशब्दस्य "पुंवत्कर्मधारय"

(अष्टा०सू० ८-३-४२) इति पुंवद्भावं बाधित्वा पुंवद्भावाद् ह्रस्वत्वं "खित्यनव्ययस्य" इति ह्रस्वः स्यात् पट्वितरेतिवत् । ब्राह्मणीशब्दस्य ह्रस्वो न स्यात् । कथं तर्हि प्रातिपदिकसंज्ञायां कृत्तद्धितशब्दाभ्यां तदन्तग्रहणमिति चेत् ? अत्र भाष्यकाराः-अर्थवद्ग्रहणं तत्रानुवर्तते । तत्सामर्थ्यात्तदन्तग्रहणमिति ।

स्यादेतत्; यद्यर्थवत्ता पारमार्थिकी विवक्ष्यते, तर्हि सा पदस्य वाक्यस्य वाऽस्ति, न तु कृत्तद्धितान्तस्य । तथाचार्थवत्सूत्रे वार्त्तिकम्- "अर्थवता नोपपद्यते केवलेनावचनादिति । अथ सिद्धं त्वन्वयव्यतिरेकाभ्यामिति" । तत्रत्योत्तरवार्तिकानुरोधेन प्रक्रियादशायां कल्पिता सा विवक्ष्यते, तर्हि कृत्तद्धितयोरपि सास्तीति चेत ? सत्यम्, अत एवार्थवद्ग्रहणसामर्थ्यमुक्तम् । प्रत्ययान्तेन त्वेकार्थीभूतेन प्रतीयमानोऽर्थ इह गृह्यते, तस्य लौकिकार्थं प्रति प्रत्यासन्नतरत्वात् । मतुपः प्राशस्त्यपरतया तस्यैव ग्रहणात् । अत एव च तदुपादानं सार्थकम् । पूर्वसूत्रे ऽधातुरिति पर्युदासबलेनापि तल्लाभसम्भवात् ।

नः क्ये (अष्टा०सू० १-४-१५) । क्यचि क्यङि क्यषि च नान्तमेव पदसंज्ञं स्यात् । क्यच्—राजीयति । क्यङ्—राजायते । क्यष्-चर्मायति, चर्मायते । सामान्यग्रहणार्थं क्यषः ककार इति वदतो वृत्तिकारस्य मतेनेदमुदाहृतम् । भाष्ये तु क्यषः ककारस्य प्रत्याख्यानात्क्यच्-क्यङोरेवेह ग्रहणम । चर्मायतीति रूपं चासाधु, क्यङन्ततया नित्यमात्मनेपदाभ्युपगमात् । तथा च वक्ष्यते—"लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि' (का०वा०) इति । एतच्च तृतीयएव स्फुटीकरिष्यामः । नान्तमेवेति किम् ? वाच्यति, स्रुच्यति, तपस्यति । ननु क्य एव नान्तमिति विपरीतो नियमः कुतो नेति चेत ? न, ङिसम्बुद्ध्योरिति ज्ञापकात् नलोपः प्रातिपदिकान्तस्येति ज्ञापकाच्च । अन्यथा हि "नलोपः क्ये" इत्येव सूत्रयेत् ।

सिति च (अष्टा०सू०१-४-१६) । सिति प्रत्यये परे पूर्वं पदसंज्ञं स्यात् । भसंज्ञापवादः । 'भवतष्ठक्छसौ" (अष्टा०सू०४-२-११५) भवदीयः "ऋतोरण्' (अष्टा०सू०५-१-१०५) "छन्दसि घस्" (अष्टा०सू०५-१-१०६) ऋतुः प्राप्तोऽस्य ऋत्वियः ।

स्वादिष्वसर्वनामस्थाने (अष्टा०सू०१-४-१७) । कप्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं पदसंज्ञं स्यात । राजभ्यां, राजभिः । राजत्वं, राजता । सर्वनामस्थाने तु राजानौ, राजानः । भुवद्भ्यो, धारयद्भ्यः इति पदसंज्ञाया उपसङ्ख्यानम् । "तसौ मत्वर्थे" (अष्टा०सू०

१-४-१९) इति भसंज्ञाया अपवादः। व्यत्ययेन भवतेः शपो लुक्।

यचि भम् (अष्टा०सू०१-४-१८)। यकारादिष्वजादिषु च स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं भसञ्ज्ञं स्यात्। गार्ग्यः, राज्ञः। वाचिकषडिकयोस्तु यथा भत्वाभत्वे निर्वहतस्तथा पञ्चमे वक्ष्यते। नभोऽङ्गिरोमनुषां वत्युपसंख्यानम् ( का० वा० ) । नभसा तुल्यं वर्तते । इति नभस्वत्, भत्वाद्रुत्वाभावः । मनुष्वदग्ने । "अङ्गिरस्वदङ्गिरः"। "जनेरुसिः" (उ०सू०२८०) इत्यत्र बहुलग्रहणानुवृत्तेर्मन्यतेरुपिप्रत्ययः "आदेशप्रत्ययोः" (अष्टा०सू०८-३-५९) इति षत्वम् । "वृषण्वस्वश्वयोः" ( का० वा० ) वृषं वर्षुकं वसु यस्य सः वृषण्वसुः । एवं वृषणश्वः। कर्मधारये षष्ठीतत्पुरुषादिर्वा यथासम्भवं बोध्यः । इहान्तवर्तिनीं विभक्तिमाश्रित्य पदत्वे सति नलोपः प्रसज्येत। भत्वात्तु न पदत्वम्। अत एव "पदान्तस्य" [अष्टा०सू०८-४-३७]इति णत्वनिषेधो न। "अल्लोपोनः" (अष्टा०सू०६०४-१३४) इति तु न भवति अङ्गसञ्ज्ञाया अभावात्। अङ्गस्येति तत्राधिकारात्। उपसंख्यानान्येतानि छन्दोविषयाणीति कैयटः।

तसौ मत्वर्थे (अष्टा०सू०१-४-१९)। तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे। विद्युत्वान्। भत्वाज्जश्त्वं न। उदकेन श्वयति वर्धते उदश्वित्। क्विप् "उदश्वितोऽन्यतरस्याम"(अष्टा०सू०४-२-१९) इति निपातनात्सम्प्रसारणाभावः।"उदकस्योदः संज्ञायाम्"(अष्टा०सू०६-३-५७)। उदश्वित्वान् घोषः। यशस्वी। मत्वर्थवृत्तित्वं मतुपो विनिप्रभृतीनां चाविशिष्टम्। अत उभयत्र भत्वप्रवृत्तिः। यथा देवदत्तशालास्था आनीयन्तामित्युक्ते देवदत्तोऽप्यानीयते उद्देश्यतावच्छेदकरूपाक्रान्तत्वात्।

अयस्मयादीनि छन्दसि [अष्टा०सू०१-४-२०) । एतानि छन्दसि साधूनि। भपदसंञ्ज्ञाधिकाराद्यथायोगन्तदुभयद्वारैषां साधुत्वं विधीयते। तथा च वार्त्तिकम—उभयसञ्ज्ञान्यपीति वक्तव्यमिति। अयस्मयं पात्रम्। भत्वाद्रुत्वन्न। अयसो विकार इत्यर्थे "द्व्यचश्छन्दसि" (अष्टा०सू०४-३-१५०)इति मयट्। एतेन "मयड्वैतयोर्भाषायाम्"(अष्टा० सू०४-३-१४३)इत्युक्तेः कथमिह मयडित्याशङ्क्यात एव निपातनादिति वदन् न्यासकृत्परास्तः। ससुष्टुभा सऋकता गणेन। इह ऋकतेति पदत्वात्कुत्वम्, भत्वाज्जश्त्वाभावः। जश्त्वविधानार्थायाः पदसञ्ज्ञाया भत्वेन प्रतिबन्धात्।

बहुषु बहुवचनम् (अष्टा०सू०१-४-२१)। बहुत्वे एतत्स्यात्। वृक्षाः। कथन्तर्हि दारा इति ? अवयवबहुत्वस्यावयविनि आरोपाद्भविष्यति।

न चैवमेकस्मिन्नपि वृक्षे बहुवचनापत्तिः, तत्रारोपे प्रमाणाभावात्। दारादौ तु नित्यबहुवचनान्तत्वग्राहककोशादेर्वृद्धव्यवहारस्य च मानत्वेन वैषम्यात्।

द्व्येकयोर्द्विवचनैकवचने (अष्टा०सू०१-४-२२)। द्वित्वैकत्वयोरेते स्तः। वृक्षौ, वृक्षः। इह द्व्येकशब्दौ सङ्ख्यापरौ, न तु सङ्ख्येयपरौ। अत एव द्व्येकयोरिति द्विवचनम्। अन्यथा बहुवचनं स्यात्। पूर्वसूत्रेऽपि बहुष्विति सङ्ख्यापरमेव। बहुवचनन्तु आश्रयगतं बहुत्वं धर्मं आरोप्य कृतम्। तत्फलन्तु बहुः पर्वत इति वैपुल्यवाचिनो नेह ग्रहणमिति सूचनमेव। वस्तुतो व्यर्थं तत्। परत्वादेकवचनसम्भवात्। यत्तु "आशतःसङ्ख्या सङ्ख्येये" इति, तत्प्रायोवादमात्रम्। अत्र श्लोकवार्त्तिकं-

सुपाङ्कर्मादयोऽप्यर्थाः सङ्ख्या चैव तथा तिङाम्।
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा।

"कर्मणि द्वितीया" (अष्टा०सू०२-३-२) इत्यादेः प्रकरणस्य "बहुषु बहुवचनम्"(अष्टा०सू०१-४-२०) इत्यादेश्च स्वादिसूत्रेण सहैकवाक्यतया विधायकत्वम्। तथा "बहुषु बहुवचनम्" (अष्टा०सू०१-४-२०) इत्यादिसूत्रयोस्तिबादिवाक्येनाप्येकवाक्यतेति पूर्वार्धस्यार्थः। तृतीयचरणेनार्थनियम उक्तः। चतुर्थेन तु प्रकृतार्थापेक्षः प्रत्ययनियम उक्तः। एषां पक्षाणां बलाबलचिन्ता तु "तद्धितश्चासर्वविभक्तिः" (अष्टा०सू०१-१-३८) इति सूत्र एवास्माभिः कृता। इह "एकद्विबहुष्वेकवचनद्विवचनबहुवचनानि" इति कर्तुमुचितम्। बहुशब्दश्च सङ्ख्यावाच्येव ग्रहीष्यते, द्विशब्दसाहचर्यात्। अत एव हि एकशब्दः सङ्ख्यावाच्येव गृह्यते। वस्तुतस्तु इदं सूत्रद्वयं मास्तु। एकवचनादिसंज्ञानामन्वर्थताश्रयणेन सकलेष्टसिद्धेः।

॥ इति श्रीशब्दकौस्तुभे प्रथमाध्यायस्य चतुर्थे
पादे द्वितीयमान्हिकम् ॥

कारके (अष्टा०सू०१-४-२३)। अधिकारोऽयम्। व्यत्ययेन प्रथमार्थे सप्तमी। तथाच 'ध्रुवम्' इत्यादौ प्रतिसूत्रं वाक्यं भित्वा कारकसंज्ञा विधीयते। तथाहि, अपाये ध्रुवं कारकसंज्ञं स्यात्। तत अपादानम्। उक्तं कारकमपादानसंज्ञं स्यात्। पुनः कारकशब्दानुवृत्तिसामर्थ्याद्विशेषसंज्ञाभिः सह समावेशो न तु पर्यायः। अनुवृत्तिं विनापि प्रथमवाक्यमात्रात्तत्सिद्धेः। तेन 'स्तम्बेरमः' इत्यादौ अधिकरणत्वात्सप्तमी, कारकत्वाद् "गतिकारकोपपदात्कृत्" (अष्टा०सू०६-२-१३९) इति प्रकृतिस्वरश्च सिद्धः। थाथादिस्वरस्तु न भवति, अपा साहचर्यादेरच

एव तत्र ग्रहणात्। न चोपपदत्वादेव कृदुत्तरपदप्रकृतिस्वरोऽस्त्विति वाच्यम्, "स्तम्बकर्णयोः" (अष्टा०सू०३-२-१३) इति निर्देशात्प्रातिपदिकयोस्तथात्वेऽपि सप्तमीविशिष्टयोरतथात्वात्। न हि सप्तमीविशिष्टं सप्तम्या निर्दिष्टम्, येनोपपदसंज्ञां लभेतेति दिक्।

अन्वर्था चेयं संज्ञा करोतीति कारकमिति। तेन क्रियानन्वयिनो न भवति। ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति। इह हि ब्राह्मणः पुत्रविशेषणं न तु क्रियान्वयी। ननु पुत्रोऽपि कथं कारकम्? प्रश्नो हि जिज्ञासा। तत्र प्रष्टुः कारकत्वेऽपि यं प्रति प्रश्नस्तस्य जनकत्वायोगादिति चेत्? सत्यम्, मास्तु जनकता। क्रियान्वयमात्रमिह विवक्षितम्। तच्चास्त्येव। एतेन सम्प्रदानस्य कारकत्वं व्याख्यातम्। यद्वा, सम्प्रदानादेरपि प्रथमं बुद्ध्यारोहात्कारकता। एवं ज्ञायते करोतीत्यादौ कर्तृकर्मणोरपि बोध्यम्। कार्याव्यवहितपूर्वक्षणवृत्तीनां कथं कारणतेति चेत्? यथा यागस्येत्यवेहि। तत्र व्यापारोऽस्तीति चेत्? न, तावताऽपि यागस्य पूर्ववर्तितानुपपादनात्। अव्यवहितपूर्ववर्तिस्वस्वव्यापारान्यतरकत्वं कारणत्वमिति चेत्? न, व्यापारत्वस्य कारणत्वगर्भतया आत्माश्रयापत्तेः, स्वव्यापारस्येव स्वज्ञानस्यापि प्रवेशसम्भवाच्च। अत एव ज्ञायमानं लिङ्गं पदञ्चानुमितिशब्दज्ञानयोः कारणमिति जरन्नैयायिकाः। ज्ञायमानाः पदार्थाः कारणमिति च मीमांसकाः। अत एव च रथन्तरसामादेरैन्द्रवाय्वाग्रत्वादौ निमित्ततेत्युद्घोषो मीमांसकानाम्। अथवा उपसर्जनसंज्ञा यथा राज्ञः कुमार्या राजकुमार्या इत्यादौ यथासम्भवमन्वर्थाऽपि 'अर्धपिप्पली' इत्यादौ वचनाद्भवति, तथा कारकसंज्ञापि प्रतिसूत्रं विधीयमाना वचनात्सम्प्रदानादौ भवति। प्रदेशेषु तु संज्ञाप्रकारक एव बोधः। तत्तद्रूपप्रकारको वेत्यन्यदेतत्।

स्यादेतत्। 'वृक्षस्य पर्णं पतति' इत्यादौ पर्णविशेषणस्यापि वृक्षस्य कारकतापत्तिः, 'वृक्षात्पतति, इतिप्रयोगानुरोधात्। तर्हि अस्मदीयशब्दप्रयोगवैलक्षण्यमात्रेण एकस्यैव जनकत्वाजनकत्वे व्यवतिष्ठेते इति चेत्? अत्रेदं सिद्धान्तरहस्यम्। कारकत्वं तद्व्याप्यकर्तृत्वादिषट्कञ्च वस्तुविशेषेऽनवस्थितम्। विशेषणविशेष्यवत् तर्हि गौः सर्वं प्रति गौरेव न तु कश्चित्प्रत्यगौरितिवद्विशेषणं विशेषणमेवेति सुवचम्। तथाच किं कारकं कः कर्ता किं कर्मेत्यादिप्रश्ने सर्वमित्युत्तरम्। वक्ष्यमाणकर्तृत्वकर्मत्वादेरचेतनेषु अनादिषु च निर्बाधत्वात् कथा पचिधातुव्यक्त्या उपस्थापितेऽर्थे किं कर्त्रादिकमिति प्रश्ने तु प्रकृतपाचिव्यक्त्युपात्तव्यापाराश्रयः कर्ता। व्यापारव्यधिकरणफलाश्रयः कर्म।

यद्व्यापारोत्तरभावित्वं क्रियाया विवक्ष्यते तत्करणम्। कर्तृकर्मणोराश्रयोऽधिकरणमित्यादि क्रमेणोत्तरम्। विक्लित्त्यनुकूलव्यापारो हि पच्यर्थः। व्यापारश्चानेकधा। तत्र पचेरधिश्रयणतण्डुलावपनैधोपकर्षणापकर्षणफूत्कारादितात्पर्यकत्वे तदाश्रयो देवदत्तः कर्ता। ज्वलनतात्पर्यकत्वे त्वेधाः कर्तारः। तण्डुलधारणादिपरत्वे स्थाली कर्त्री। अवयवविभागादिपरत्वे तण्डुलाः कर्त्तारः। अत एव कर्मकर्ता करणकर्तेत्यादिव्यवहारः। एवं 'स्थाल्या पचति' इत्यत्र तृतीयोपात्तव्यापाराश्रयोऽपि स्थाली करणमेव, न तु तदा कर्त्री; देवदत्तादिव्यापारस्यैव तत्र धातूपात्तत्वात्। तथा आदिखादिभ्यामुपात्तेऽर्थे बटुः कर्त्ता। तस्मिन्नेवार्थे भक्षयतिनोपात्ते बटुः कर्म। अधिपूर्वैः शीङ्स्थाप्रभृतिभिरुपात्तेऽर्थे आधारः कर्म। तत्रैव केवलैरुपात्तेऽधिकरणमित्यादि। नन्वेवमननुगम इति चेत्? सत्यम्, कस्य कः पिता को भ्रात इत्यत्रेवाननुगतस्यैव लक्ष्यत्वात्। अत एव प्रयोगाणां साध्वसाधुता व्यवतिष्ठते। अन्यथा क्वचित्कर्तुः सर्वत्र कर्तृतापत्तौ सकलप्रयोगाः सङ्कीर्येरन्। उक्तं च हरिणा—

> वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम्।
> स्थाल्या पच्यत इत्येषा व्यवस्था दृश्यते यतः॥ इति॥

अत एव प्रयोजकव्यापारव्याप्यत्वाविशेषेपि पच्यादिधातुषु प्रयोज्यो न कर्म गम्यादिष्वेव तु कर्म तथा 'पौराणिकाच्छृणोति' 'नटस्य शृणोति' इत्यत्र पौराणिकोपादानं कारकञ्च, नटस्तु नोभयमित्यादि वक्ष्यमाणं सङ्गच्छते। नन्वेवं "लः कर्मणि" (अष्टा०सू०३-४-६९) इत्यादिविधिषु किं कर्म ग्राह्यमिति चेत्? विनिगमकाभावात्सर्वमित्यवेहि। यथा भस्येत्यत्र सर्वं भम। तर्हि टिघुभादिवत्पारिभाषिकमेव कारकत्वकर्मत्वादिकं स्यादिति चेत्? को वा ब्रूते नेति। एतावानेव परं भेदः-टिघुभादीनां शब्दसंज्ञात्वमितरेषान्त्वर्थसंज्ञात्वमिति। एवञ्च "कर्मणि द्वितीया" (अष्टा०सू०२-३-२) इत्यनेन यथायथमाधारादावपि द्वितीया विधीयते इति फलितम्। 'रथेन गम्यते' 'रथः गच्छति' इत्यादावपि कर्तृविभक्तिरुत्सर्गेणैव सिद्धेति न तत्र लक्षणाऽऽश्रयणीयेत्यवधेयम्। विभक्तीनां वाच्यांशानिष्कर्षस्तु करिष्यते। एतेन ज्ञानस्य स्वप्रकाशत्वे कर्तृकर्मविरोधमुद्भावयन्तः परास्ताः, शब्दविशेषोपाधिकस्य कर्तृत्वादेः प्रत्यक्षादावुक्तिसम्भवात्। एतेन परसमवेतक्रियाफलशालित्वं कर्मत्वं चेदपादानेऽतिव्याप्तिरित्याशङ्क्य धात्वर्थतावच्छेदकफलशालित्वं तदिति परिष्कुर्वन्तोऽपि परास्ताः। 'ग्रामं गमयति देवदत्तम्'

इत्यादौ गन्तरि अव्याप्तेः । त्वन्मते गमनस्य प्रकृत्यर्थत्वेऽपि तथात्वानवच्छेदकत्वात् । तत्त्वे वा पाचयत्यादिप्रयोज्यकर्तर्यतिव्याप्तेः । तत्र पारिभाषिकमनुशासनोपयोगिकर्मत्वं वचनबलाद्व्यवस्थितमिति चेत् ? अपादानेऽपि तर्हि तन्नास्तीत्यवेहि, एकसंज्ञाधिकारेऽनवकाशया बाधात् । अत एव 'आत्मानमात्मा हन्ति' इत्यादौ परया कर्तृसंज्ञया कर्मसंज्ञाबाधमाशङ्क्याहङ्कारादिविशिष्टात्मभेदमाश्रित्य तत्रतत्र भाष्ये समाहितमिति दिक् ।

नन्वेवं करणं कारकमिति सामानाधिकरण्यं कथम्, अस्वातन्त्र्येण ण्वुल्प्रत्ययायोगात् । अन्यथा कर्तृसंज्ञापत्तौ करणसंज्ञायाः पर्यायापत्तेरिति चेत् ? उच्यते, अधिकारसामर्थ्यात्कारकशब्दोपनीतं स्वातन्त्र्यमवस्थान्तरगतं विज्ञायते । अवस्थान्तरे यत्स्वतन्त्रं तत्साधकतमङ्करणमिति । यथा 'कुरुक्षेत्रस्थाः काश्यां वसन्ति' इत्यादौ । कर्तुस्तु साम्प्रतिकं स्वातन्त्र्यम् । तच्च कर्तृसंज्ञायामुपयुज्यते इति । यद्वा, कारकशब्दः क्रिया परः, करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्तेः । तथाच अपादानादिसंज्ञाविधौ क्रियायामित्यस्योपस्थित्या क्रियान्वयिनामेव तत्तत्संज्ञाः स्युः । "कारकाद्दत्तश्रुतयोः" (अष्टा०सू०६-२-१४८) इत्यादौ तु कारकशब्दः स्वर्यते । तेनैतदधिकारोक्तं कर्त्रादिषट्कमेव गृह्यत इति ।

ध्रुवमपायेऽपादानम् (अष्टा०सू०१-४-२४) । अपायो विश्लेषो विभागस्तद्धेतुत्वोपहितो गतिविशेषश्चेह विवक्षितस्तस्मिन्साध्येऽवधिभूतमपादानसंज्ञं स्यात् । वृक्षात्पतति । 'ध्रुवम्' इत्यत्र "ध्रु गतिस्थैर्ययोः" (तु०प०१४००) इत्यस्मात्कुटादेः पचाद्यच् । ये तु "ध्रुव स्थैर्ये" इति पठन्ति । तेषामिगुपधलक्षणः कप्रत्ययः । ध्रुवतीति ध्रुवं स्थिरम् । एकरूपमिति यावत् । ध्रुवमस्य शीलमिति यथा । तथा चापाये साध्ये यदेकरूपमित्युक्ते प्रकृतधातूपात्तगत्यनाविष्टत्वे सति तदुपयोगीति लभ्यते । तच्चार्थादवधिभूतमेव पर्यवस्यति । तेन 'धावतो ऽश्वात्पतति' इत्यादौ क्रियाया विशिष्टस्याप्यश्वस्य प्रकृतधातूपात्तक्रियां प्रत्यवधित्वन्न विरुध्यते । तथा 'परस्परस्मान्मेषावपसरतः, इत्यत्र सृधातुना गतिद्वयस्याप्युपादानादेकैकेषनिष्ठाङ्गतिं प्रत्यपरस्यापादानत्वं सिध्यति । उक्तञ्च हरिणा प्रकीर्णकाण्डे—

> अपाये यदुदासीनं चलं वा यदि वाऽचलम् ।
> ध्रुवमेवातदावेशात्तदपादानमुच्यते ॥
> पततो ध्रुव एवाश्वो यस्मादश्वात्पतत्यसौ ।
> तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमिष्यते ॥

मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् ।
मेषयोः स्वक्रियापेक्षं कर्तृत्वञ्च पृथक् पृथक् ॥ इति ॥

अतदावेशादिति अपायानावेशादित्यर्थः ।

गतिर्विना त्ववधिना नापाय इति कथ्यते ।

इति तत्रैवोक्तेरवधिनिरपेक्षस्य चलनस्यापायत्वाभावादिति भावः । 'पर्वतात्पततोऽश्वात्पतति' इत्यत्र तु पर्वतावधिकपतनाश्रयो योऽश्वस्तदवधिकं देवदत्ताश्रयं पतनमर्थः । पञ्चमी त्ववधौ शक्ता । तत्राभेदेन संसर्गेण प्रकृत्यर्थो विशेषणम् । प्रत्ययार्थस्तु क्रियायां विशेषणम् । कारकाणां क्रिययैव सम्बन्धात् । अन्यथाऽसाधुत्वात् । क्रियान्वये सत्येव हि कारकसंज्ञा, तत्पूर्विका विशेषसंज्ञाश्च स्थिताः । अत एवाहुः—

नाम्नो द्विधैव सम्बन्धः सर्ववाक्येष्ववस्थितः ।
सामानाधिकरण्येन षष्ठ्या वापि क्वचिद्भवेत् ॥ इति ।

सामानाधिकरण्येनेति 'नीलो घटः' इत्याद्यभिप्रायम् । 'नीलं घटमानय' इत्यादावप्यन्तरङ्गक्रियान्वयानन्तरमेकक्रियावशीकृतानां पार्ष्णिकबोधाभिप्रायञ्च । षष्ठ्येति अकारकविभक्तेरुपलक्षणं 'हरये नमः' इति यथा । क्वचिदिति, अकारकविभक्तेरपि, 'नटस्य शृणोति' इत्यादौ क्रियान्वयदर्शनादिति भावः । एतेन 'भूतले घटो न' इत्यत्र भूतलाधेयत्वाभावो घटे भूतलाधेयत्वं वा घटाभावे विशेषणमिति द्वेधा व्याचक्षाणा नैयायिकाः परास्ताः, उभयथाऽपि क्रियानन्वये कारकविभक्तेरसाधुत्वात्, अर्थाभावेऽव्ययीभावापत्तेश्च । तस्य नित्यसमासत्वात् । नन्वस्मदुक्तोऽपि बोधोऽस्मद्दर्शनव्युत्पन्नानामनुभवसाक्षिक इति चेत् ? सत्यम्, न हि वयं बोध एव नोदेतीति ब्रूमः । सर्वे सर्वार्थबोधनसमर्था इत्यभ्युपगमात् किन्तु तस्मिन्नर्थेऽसाधुताम् । तथाच "सिद्धे शब्दार्थसम्बन्धे" इति वार्तिकं व्याचक्षाणा भाष्यकारा आहुः—"समानायामर्थावगतौ साधुभिश्चासाधुभिश्च गम्यागम्येतिवन्नियमः क्रियते" इति । उक्तञ्च-

भेदाभेदकसम्बन्धोपाधिभेदनियन्त्रितम् ।
साधुत्वं तदभावेऽपि बोधो नेह निवार्यते ॥ इति ॥

एवञ्च कस्माद्वाक्यात्कीदृग् बोध इति प्रश्ने यो यथा व्युत्पन्नस्तस्य तादृगेवेति स्थितिः । कीदृशे बोधे साधुत्वं कुत्र नेति परं विचारविषय इति तत्त्वम् । एतेन 'घटः कर्मत्वमानयनं कृतिः' इत्यादीनां स्वरूपायोग्यतेति परास्तम्, तथा व्युत्पन्नस्य बोधानुभवात् । अन्यथा व्युत्पन्नस्य व्युत्पत्तिरूपसहकारिविरहात्कार्यानुदयेऽपि स्वरूपयोग्यतानपायात् । एतेन प्र-

कृत्यर्थप्रकारको बोधो यत्र विशेष्यतया तत्र विषयतया प्रत्ययजन्य इत्यादिकार्यकारणभावं कल्पयन्तोऽप्यपास्ताः, विपरीतव्युत्पादिते व्यभिचारस्योद्भवात् । सिद्धान्ते तु घटः कर्मत्वमित्याद्यसाध्वेव । तथाहि, "अभिहिते प्रथमा" इति वार्त्तिकं, तत्कथं घटः कर्मत्वमिति प्रथमा ? घटानयनयोरानयनकृती प्रति कर्मतया "कर्तृकर्मणोः" (अष्टा०सू० २-३-६५) इति षष्ठीप्रसङ्गाच्चेति दिक् ।

निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा ।
अपेक्षितक्रियञ्चेति त्रिधापादानमुच्यते ॥

यत्र साक्षाद्धातुना गतिर्निर्दिश्यते तन्निर्दिष्टविषयम् । 'अश्वात्पतति' यथा । यत्र तु धात्वन्तरार्थाङ्गं स्वार्थं धातुराह तदुपात्तविषयम् । यथा 'बलाहकाद्विद्योतते' इति । निःसरणाङ्गे विद्योतने द्युतिर्वर्तते । यथा वा 'कुसूलात्पचति' इति । आदानाङ्गे पाकेऽत्र पचिर्वर्तते । अपेक्षितक्रियं तु तत्, यत्र प्रत्यक्षसिद्धमागमनं मनसि निधाय पृच्छति कुतो भवानिति, पाटलिपुत्रादिति चोत्तरयति; अथाध्याहारस्य न्याय्यतायाः उक्तत्वात् । इह 'सार्थाद्धीयते' इत्यपि निर्दिष्टविषयस्योदाहरणम् ।

स्यादेतत् । परत्वात्सार्थस्य कर्तृसंज्ञा प्राप्नोति । उक्तं हि "अपादानमुत्तराणि" इति । किञ्च सार्थस्य कर्तृत्वाभावे त्यज्यमानस्य कर्मसंज्ञा न स्यात् कर्तृव्यापारव्याप्यत्वाभावात् । ततश्च हीयते हीन इति कर्मणि लकारो निष्ठा च न स्यात् । न च कर्मकर्तर्ययं लकार इति वाच्यम्, जहातेः कर्तृस्थक्रियत्वात्कर्मण्येवायं लकार इति इन्दुनोक्तत्वात् । यत्तु "अपादाने चाहीयरुहोः" (अष्टा०सू०५-४-४५) इति सूत्रे न्यासकारेण सम्प्रदानसूत्रे कैयटेन चोक्तं कर्मसंज्ञायां कर्तृग्रहणं स्वातन्त्र्योपलक्षणम् । अतो हानक्रियायां स्वतन्त्रेणापादानेनेष्यमाणस्येह कर्मतेति । तच्चिन्त्यम्, 'माषेष्वश्वं बध्नाति' इत्यत्र कर्मणोऽप्यश्वस्य वस्तुतो भक्षणे यत्स्वातन्त्र्यं तदाश्रयकर्मसंज्ञापत्तेः । अत एव कर्मसंज्ञाविधायकसूत्रशेषे कैयटेनोक्तम्-प्रयोजकव्यापारस्याशब्दार्थत्वात्तदपेक्षं कर्मत्वमयुक्तमिति ।

अत्राहुः-'सार्थाद्धीयते' इत्यत्र कर्मकर्त्तरि लकारः । तथाहि, अपगमना जहातेरर्थः । सा च क्षुदुपघातादिना देवदत्तस्यापगमते तत्समर्थाचरणम् । यदा तु क्षुदुपघातादिना स्वयमेवापगच्छति तदा कर्मकर्तृत्वम् । स्फुटञ्चेदं हरदत्तमाधवग्रन्थयोः ।

स्यादेतत् । ध्रुवग्रहणं किमर्थम् ? न च 'ग्रामादागच्छति शकटेन' इत्यत्र

शकटेऽतिव्याप्तिवारणाय तदिति वाच्यम्, परत्वात्तत्र करणसंज्ञाप्रवृत्तेः। यथा 'धनुषा विध्यति' इत्यत्र। इह हि शरनिःसरणं प्रत्यवधिभावोपगमेनैव व्यधने करणतेत्युभयप्रसङ्गः। 'वृक्षस्य पर्णं पतति' इत्यादौ तु वृक्षः पर्णविशेषणं न त्वपायेन युज्यते। न च संज्ञिनिर्देशार्थं ध्रुवग्रहणम्, अपाये क्रियायां यदन्वेतीत्यस्याक्षिप्तस्य संज्ञिसमर्थकत्वात्। यद्वा, कारके इति निर्धारणसप्तम्याश्रयणात्कारकमिति लभ्यते। पूर्वत्रापि प्रथमार्थे सप्तमीत्युक्तत्वाच्च। तस्माद् ध्रुवग्रहणं चिन्त्यप्रयोजनम्।

जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम् (का०वा०)। अधर्माज्जुगुप्सते विरमति प्रमाद्यति वा। संश्लेषपूर्वको विश्लेषो विभागः। स चेह नास्ति। बुद्धिकल्पितस्तु गौणत्वान्न गृह्यते इति वार्त्तिकारम्भः। भाष्यकारास्तु जुगुप्सादयोऽत्र जुगुप्सादिपूर्विकायां निवृत्तौ वर्तन्ते इत्युपात्तविषयमेतत्। कारकप्रकरणे च गौणस्यापि ग्रहणम्। "साधकतमम्" (अष्टा०सू०१-४-४२) इति तमग्रहणाल्लिङ्गात्। अपायादिपदानां स्वरितत्वाद्वा "स्वरितेनाधिकारः" (अष्टा०सू०१-३-११) गौणोऽप्यर्थो गृह्यते इति व्यवस्थापनात्। तेन बुद्धिकल्पितस्याप्यपायस्य सत्वात्सिद्धम्। पूर्वं हि बुद्ध्याऽधर्मं सम्प्राप्य ततो दोषदर्शनान्निवर्तते इत्यस्त्यपायः। एवमुत्तरसूत्रेष्वपि प्रपञ्चत्वं बोध्यमिति दिक्।

भीत्रार्थानां भयहेतुः (अष्टा०सू०१-४-२५)। भयं भीः, त्राणं त्राः, भयार्थानां त्राणार्थानाञ्च योगे भयहेतुः कारकमपादानं स्यात्। चोरेभ्य उद्विजते बिभेति, रक्षति वा त्रायते। भयहेतुग्रहणं चिन्त्यप्रयोजनम्। 'अरण्ये बिभेति' इत्यादौ तु परत्वादधिकरणसंज्ञा।

कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे।

इति रामायणश्लोकस्तु कस्य संयुगे इति योजनया व्याख्येयः।

पराजेरसोढः (अष्टा०सू०१-४-२६)। परापूर्वस्य जयतेः प्रयोगेऽसोढो ह्यर्थोऽपादानं स्यात्। 'अध्ययनात्पराजयते' ग्लायतीत्यर्थः। अकर्मकश्चायम्। तत्र षष्ठ्यां प्राप्तायां वचनम्। असोढः किम्? शत्रून्पराजयते। अभिभवतीत्यर्थः। असोढ इति क्तार्थो भूतकालोऽत्राविवक्षितः। तेन 'अध्ययनात्पराजेष्यते' इत्यादि सिद्धम्। वस्तुतस्तु असोढग्रहणं व्यर्थं 'शत्रून्पराजयते' इत्यत्र परत्वात्कर्मसंज्ञासिद्धेः। इह सूत्रे पराजेरिति रूपं "विपराभ्यां जेः" (अष्टा०सू०१-३-१९) इतिवत्समर्थनीयम्। यत्तु परत्वात् "घेर्ङिति" (अष्टा०सू०७-३-१११) इति गुण इति हरदत्तेनोक्तं तत्सूत्रभाष्यादविरुद्धमिति प्रागेव प्रपञ्चितम्।

वारणार्थानामीप्सितः (अष्टा०सू०१-४-२७)। वारणार्थानां प्रयोगे

क्रियया आप्तुमिष्टं कारकमपादानं स्यात्। यवेभ्यो गां वारयति। "वृञ् वरणे" (चु०उ०१८१४) चुरादिः। प्रवृत्तिविघातो वारणम्। ईप्सित इति किम्? यवेभ्यो गां वारयति क्षेत्रे। नन्विह परत्वादधिकरणसंज्ञा भविष्यति यथा कृतेऽपीप्सितग्रहणे गोषु इप्सिततमत्वप्रयुक्ता कर्मसंज्ञा। सत्यम, चिन्त्यप्रयोजनमेवेप्सितग्रहणम्।

अन्तर्धौ येनादर्शनमिच्छति (अष्टा०सू०१-४-२८)। अन्तर्धाविति सप्तमी। येनेति कर्तरि तृतीया। न च कृद्योगे षष्ठीप्रसङ्गः। उभयप्राप्तौ कर्मण्येवेति नियमात्। व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति तत्कारकमपादानं स्यात्। मातुर्निलीयते कृष्णः। "लीङ् श्लेषणे"(दि०आ०११३९) दैवादिकः। अत्रान्तर्धाविति चिन्त्यप्रयोजनम्। न 'दिदृक्षते चोरान्' इत्यत्र हि परत्वात्कर्मता सिद्धा। इच्छतीति किम्? इच्छायामसत्यां सत्यपि दर्शने यथा स्यात्।

आख्यातोपयोगे (अष्टा०सू०१-४-२९)। उपयोगो नियमपूर्वकं विद्यास्वीकरणम्। तस्मिन्साध्ये य आख्याता तत्कारकमपादानं स्यात्। उपाध्यायादधीते। उपयोगे किम्? नटस्य शृणोति।

जनिकर्तुः प्रकृतिः(अष्टा०सू०१-४-३०)। जायमानस्य हेतुरपादानं स्यात्। पुत्रात्प्रमोदो जायते। इह जनिरुत्पत्तिः। "जनिरुत्पत्तिरुद्भवः" इत्यमरः (अ०को०१-४-३०)। "इञजादिभ्यः"(का०वा०) इति जनेर्भावे इञ् "जनिघसिभ्यामि्" (उ०सू०५७९) इत्युणादिसूत्रेणेण् वा। "जनिवध्योश्च" (अष्टा० सू०७-३-३५) इति वृद्धिप्रतिषेधः। तस्याः कर्तेति षष्ठीतत्पुरुषः। "कर्तरि च" (अष्टा०सू०२-२-१६) इति प्रतिषेधस्त्वनित्यः, अत एव ज्ञापकात्। यद्वा, शेषषष्ठ्या समासोऽयम्। निषेधस्तु कर्मषष्ठीविषय इति "कारके" (अष्टा०सू०१-४-२३) इति सूत्रे कैयटः। तथा चार्थमात्रस्य ग्रहणाद्धात्वन्तरयोगेऽपि भवति 'अङ्गादङ्गात्सम्भवति' इति यथा। एतेन "इक्श्तिपौ धातुनिर्देशे" (का०वा०) इतीका निर्देशोऽयमित्याश्रित्य "गमहन" (अष्टा०सू०६-४-९८) इत्युपधालोपमर्थासङ्गतिं चोद्भावयन्तो मीमांसावार्तिककाराः समाहिताः। अत्र प्रकृतिग्रहणमुपादानमात्रपरमित्येके। अत एव "प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात्" (ब्र०सू०) इत्यधिकरणे ब्रह्मणो जगदुपादानतायां "यतो वा इमानि भूतानि जायन्ते" इति पञ्चमीमुपष्टम्भिकामाहुः। अन्ये तु 'पुत्रात्प्रमोदो जायते' इति वृत्तिस्वरसात्प्रकृतिशब्द इह कारणमात्रपर इत्याहुः। अस्मिश्च पक्षे 'यतो वा' इति सामान्यशब्दोऽपि उपादानरूपविशेषपरः "छागो वा मन्त्रवर्णात्" (जै०सू०६-८-९-३१) इति षाष्ठन्यायात्। "अहमेव बहु स्याम्"

इति हि सामानाधिकरण्यं श्रूयते। तच्च चतुर्धा-भ्रमे, बाधायाम्, अभेदे, तादात्म्ये च। प्रकृते तादात्म्ये, भिन्नत्वे सत्यभिन्नसत्ताकत्वम् आविद्यकः सम्बन्धविशेषो वा तादात्म्यमित्याद्युत्तरमीमांसायां स्पष्टम्।

भुवः प्रभवः (अष्टा०सू०१-४-३१)। भूकर्तुः प्रभवः प्राग्वत्। हिमवतो गङ्गा प्रभवति। कश्मीरेभ्यो वितस्ता प्रभवति। "तसु उपक्षये" (दि.प.१२१३) भावे क्तः। विगतस्ता वितस्ता। अशोष्येत्यर्थः। अत्रोपलभतेः कर्मव्यापारे प्रभवतिर्वर्तते। प्रकाशते इत्यर्थः। "भीत्रार्थानाम्" (अष्टा० सू०१-४-२५) इत्यारभ्येयं सप्तसूत्री भाष्ये प्रत्याख्याता। तथाहि चोरेभ्यो बिभेति। भयान्निवर्तते इत्यर्थः। त्रायते, रक्षणेन चोरेभ्यो निवर्त्तयतीत्यर्थः। पराजयते, ग्लान्या निवर्तते इत्यर्थः। वारयति, प्रवृत्तिप्रतिबन्धनान्निवर्तयति। निलीयते, निलयनेन निवर्तते इत्यर्थः। अधीते, उपाध्यायान्निःसरन्तं शब्दं गृह्णातीत्यर्थः। ब्रह्मणः प्रपञ्चो जायते इत्यत्रापि ततोऽपक्रामति। यथा वृक्षात्फलमिति लोकप्रसिध्याश्रयेणापायो बोध्यः। प्रभवतीत्यत्रापि भवनपूर्वकं निःसरणमर्थः।

अत्रेदं वक्तव्यं, निवृत्तिनिःसरणादिधात्वन्तरार्थविशिष्टे स्वार्थे वृत्तिमाश्रित्य यथाकथञ्चिदुक्तप्रयोगाणां समर्थनेऽपि मुख्यार्थपुरस्कारेण षष्ठीप्रयोगो दुर्वारः। 'नटस्य शृणोति' इतिवत्। न ह्युपाध्यायनटयोः क्रियानुकूलव्यापारांशे विशेषो वक्तुं शक्यः। अनभिधानब्रह्मास्त्रमाश्रित्य प्रत्याख्यानन्तु नातीव मनोरमम्। एवञ्च "जुगुप्साविराम" (का० वा०) इत्यादिवार्तिकमप्यवश्यारम्भणीयम्। तथाच सूत्रवार्तिकमतमेवेह प्रबलमिति यावद्बाधं साधु। तथा ध्रुवं भयहेतुरसोढ इत्यादिसंज्ञिनिर्देशोऽपि सार्थकः परत्वात्तत्संज्ञाप्राप्तावपि शेषत्वविवक्षायां न माषाणामश्नीयादित्यादाविव षष्ठ्या इष्टतया तत्रापादानसंज्ञाया वारणीयत्वादित्यवधेयम्।

कर्मणा यमभिप्रैति स सम्प्रदानम् (अष्टा०सू०१-४-३२)। कर्मणा करणभूतेन कर्ता यमभिप्रैति सम्बध्नाति ईप्सति वा तत्कारकं सम्प्रदानं स्यात्। न च युगपत्कर्मत्वं करणत्वञ्च कथमिति वाच्यम्, क्रियाभेदेनाविरोधात्। दानक्रियायां हि कर्म अभिप्रापणक्रियायां करणम्। दीयमानया गवा हि शिष्य उपाध्यायमभिप्रैति। उपाध्यायाय गां ददाति। अत्राभिप्रैतीति पदत्रयम्। न तु समासः। "उदात्तवता गतिमता च तिङा गतेः समासो वक्तव्यः" इति वार्तिकस्य छन्दोविषयत्वादिति हरदत्तः। भाषाविषयत्वे बाधकं तु तत्रैव वक्ष्यामः।

अत्र वृत्तिकाराः-अन्वर्थसंज्ञेयं सम्यक् प्रदीयते यस्मै तत्सम्प्रदान-

"प्रेम्णा शरीरार्धहरां हरस्य" इति।

द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् (अष्टा०सू०२-२-३)। एतानि एकदेशिना सह वा प्राग्वत्स्युरेकं चेद् द्रव्यम्। द्वितीयं भिक्षायाः द्वितीयभिक्षा, भिक्षाद्वितीयम्। तृतीयभिक्षा। 'भिक्षातृतीयम्' इत्यादि। एकदेशिना किम्? द्वितीयं भिक्षाया भिक्षुकस्य। एकाधिकरणे किम्? द्वितीयं भिक्षाणाम्।

स्यादेतत् पूर्वसूत्रवदिदमपि प्रत्याख्यातम्। तथाहि, समुदायशब्दस्यावयवे वृत्तौ कर्मधारयेण 'द्वितीयभिक्षा' इत्यादि सिद्धम्। 'भिक्षाद्वितीयम्' इत्यादि तु षष्ठीसमासेन सिद्धम्। मैवम्, "पूरण" (अष्टा०सू०२-२-११) इतिषष्ठीसमासनिषेधात्। सिद्धान्ते त्वस्मिन् सूत्रेऽन्यतरस्यांग्रहणसामर्थ्यात्पक्षे षष्ठीसमासो लभ्यते, वाक्यस्य महाविभाषयैव सिद्धेः। नन्वेतत्सूत्रं विनापि "पूरणाद्भागे" (अष्टा०सू० ५-३-४८) इति स्वार्थेऽन्प्रत्ययं कृत्वा तदन्तेन षष्ठीसमासं करिष्याम इति चेत्? न, तत्रापि प्रतिषेधस्यात्। "पूरण" (अष्टा०सू० २-२-११) इत्यत्र हि अर्थग्रहणं न तु पूरणाधिकारविहितप्रत्ययग्रहणम्, अर्थशब्दस्य प्रत्येकमभिसम्बन्धात्। स्वार्थिकाश्च प्रकृत्यर्थेनार्थवन्त इति अन्नन्तस्यापि पूरणार्थतास्त्येवेति भाष्ये स्थितम्। अत एव "तान्युञ्छषष्ठाङ्कितसैकतानि" (र०व० ५-८) इत्यत्र समासः प्रामादिक इत्याहुः। वस्तुतस्तु "परवल्लिङ्गम्" (अष्टा०सू०२-४-२६) इतिसूत्रे तत्पुरुषग्रहणं "द्विगुप्राप्त" इत्यादि वार्त्तिकं "पूर्वापर" (अष्टा० सू०३-१-५८) इत्यादित्रिसूत्री च भाष्ये प्रत्याख्याता। तथाच भिक्षाद्वितीयादिसिद्धये संज्ञाप्रमाणत्वादिनिर्देशानां सामान्यापेक्षज्ञापकताश्रयणीया "पूरण" (अष्टा०सू०२-२-११) इत्यादिनिषेधोऽनित्य इति। एवञ्चोञ्छषष्ठेत्यपि साध्विति दिक्। तुरीयस्यापीष्यते इति वृत्तिकाराः। एतच्च भाष्यादौ नास्ति।

प्राप्तापन्ने च द्वितीयया (अष्टा०सू०२-२-४)। एतौ द्वितीयान्तेन सह प्राग्वत्। पक्षे "द्वितीयाश्रित" (अष्टा०सू०२-२-२४) इतिसमासः। प्राप्तो जीविकां प्राप्तजीविकः। जीविकाप्राप्त इति वा। आपन्नजीविकः। जीविकापन्नः। यद्यपि प्राप्ता जीविका येनेति कृत्वा कर्मणि क्तान्तेन बहुव्रीहौ 'प्राप्तजीविकः' इत्यादि सिध्यति, तथापि समासान्तोदात्तार्थं वचनं 'प्राप्तसुखः' इत्याद्यर्थञ्च। इह हि बहुव्रीहौ "जातिकालसुखादिभ्यः" ( का० वा० ) इति निष्ठायाः परनिपातः स्यात्। लिङ्गविशिष्टपरिभाषया प्राप्तशब्दस्याप्ययं समासः। प्राप्ता जीविका प्राप्तजीविकेति।

ननु "एकविभक्ति" (अष्टा०सू०१-२-४४) इत्युपसर्जनतया जीविकाशब्दस्य ह्रस्वोऽस्तु नाम, प्राप्ताशब्दस्य तु कुतः सः ? अत्र भाष्यम्, "अ-च" इति पूर्वपदस्याकारोऽपि सूत्रेऽस्मिन् विधीयते, चकारेण समुच्चयार्थेनाकारप्रश्लेषस्यानुमानादिति । प्राप्तापन्ने समस्येते, अ च, अत्वं च भवति प्राप्तापन्नयोः । सौत्रत्वाच्च प्रकृतिभावो नेति भाव इति प्राञ्चः । वस्तुतस्तु द्वितीयेत्यस्यानन्तरमकारप्रश्लेषो बोध्यः । एवं हि प्रकृतिभावप्रसङ्ग एव नास्तीति बोध्यम् ।

कालाः परिमाणिना (अष्टा०सू०२-२-५) । परिमीयते परिच्छिद्यते येन तत्परिमाणं तद्वान्परिमाणी । परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते स तत्पुरुषः । मासो जातस्य यस्य स मासजातः । ननु जातो देवदत्तः तस्य च दिष्ट्यादि परिच्छेदकं न तु कालः, तस्य क्रियामात्रपरिच्छेदकत्वादिति चेत् ? सत्यम्, साक्षात्क्रियां परिच्छिन्दन्नपि कालस्तद्द्वारा देवदत्तं परिच्छिनत्ति । यस्य हि जननादूर्ध्वं मासो गतः स मासजात इति व्यवह्रियते । तत्र व्यवहारकालजननक्षणयोरन्तरालभावी मासो जननद्वारा जातमपि परिच्छिनत्त्येव । विग्रहे षष्ठीनिर्दिष्टस्यापि वृत्तौ प्राधान्यमिह बोध्यम् । 'दण्डी चित्रगुः' इत्यादाविव विशेषणविशेष्यभावव्यत्यासेनैव एकार्थीभावाभ्युपगमात् । तथाच हरिणा-

कचिद् गुणप्रधानत्वमर्थानामविवक्षितम् ।

इत्युपक्रम्य—

आख्यातं तद्धितार्थस्य यत्किञ्चिदुपदर्शकम् ।
गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः ॥

इति वदता आक्षिकवैयाकरणाद्युदाहरणानि स्पष्टीकृतानि । तथाच 'मासजातः' इत्यस्य मासप्रागभावविजननाश्रय इत्यर्थः । अत एव मासजातो दृश्यतामित्यादिक्रियायोगो जातस्यैव भवति न तु अर्धपिप्पल्यादाविव पूर्वपदार्थस्य । द्व्यहजातः । द्वयोरह्नोः समाहारः । "राजाहःसखिभ्यष्टच्" (अष्टा०सू०५-४-९१) । "न संख्यादेः समाहारे" (अष्टा० सू०५-४-८९) इत्यह्नादेशप्रतिषेधः । कथन्तर्हि 'द्व्यहजातः' इति ? उच्यते, नायं समाहारे द्विगुः किन्तूत्तरपदे द्वे अहनी जातस्य यस्येति त्रिपदतत्पुरुषाभ्युपगमात् । ननु सुप्सुपेत्येकत्वस्य विवक्षितत्वात्कथमेतदिति चेत् ? वचनादित्यवेहि । उक्तं हि वार्त्तिककृता-"उत्तरपदेन परिमाणिना द्विगोः समासवचनम्" इति । अस्यार्थः-परिमाणिवचनेनोत्तरपदेन द्विगोः सिद्धये समासो वक्तव्यः । अर्थाद् द्वयोर्युगपदिति गम्यते । तथाच वचनाद्बहूनामप्ययं तत्पुरुषो भवति । एवं द्वौ मासौ

जातस्य पूर्वयोस्तत्पुरुषे सति "कालान्ते द्विगौ" (अष्टा०सू०५-१-८६) इति पूर्वपदप्रकृतिस्वरो भवति । द्वयोर्मासयोः समाहारो द्विमासम् । पात्रादिः । द्विमासं जातस्येति तु विगृह्य समासे क्रियमाणे सतिशिष्टत्वात्समासान्तोदात्तत्वं स्यात् ।

स्यादेतत् । यावद्वचनं वाचनिकामिति परिमाणिमात्रेण त्रिपदतत्पुरुषः, अन्यत्र तु द्विपद एवेति स्थितम् । तथाच "कथं त्रिलोकनाथेन सतां मखद्विषः" इति कालिदासः । "नवरसरुचिरम्" इति च काव्यप्रकाशकारः ? इह हि त्रिलोकनवरसशब्दयोर्न तावद् "विशेषणं विशेष्येण" ( अष्टा०सू०२-१-८७ ) इति समासः । "दिक्संख्ये संज्ञायाम्" (अष्टा०सू०२-१-५०) इति नियमात् । नापि समाहारे द्विगुः "द्विगोः" (अष्टा०सू०४-१-२१) इति ङीप्प्रसङ्गात् । न च पात्रादित्वं कल्प्यम् 'त्रिलोकी' इति प्रयोगस्यासाधुतापत्तेः । तथा च परिशेषात्त्रिपदत्वपक्ष एवावशिष्यते । द्विमासजातः । त्रिपदे तत्पुरुषे जातशब्दे उत्तरपदे परतः स चोक्तरीत्या दुष्ट एवेति । अत्रोच्यते, लोकशब्दोऽत्र समुदायपरः । तथा च त्र्यवयवो लोक इति मध्यमपदलोपी तत्पुरुषः । इदञ्च, "द्विगोर्लुगनपत्ये" (अष्टा०सू०४-१-८८) इत्यत्र भाष्ये एव स्पष्टम् । त्रयाणां लोकनाथ इति वा । नवरसा चासौ रुचिरेति बहुव्रीहिगर्भः कर्मधारयोऽपि सुवचः ।

प्रकृतमनुसरामः । 'राजपुरुषः' इत्यादौ यद्यप्यभेदैकत्वसंख्या भासते तथापि मासजाते न तथा किन्तु शूर्पेण क्रीतः शौर्पिक इत्यत्र शूर्पस्येव मासस्य मुख्यमेवैकत्वम् । अक्तपरिमाणस्य वाचके तथैव व्युत्पत्तेरिति ध्येयम् ।

नञ् (अष्टा०सू०२-२-६) । नञ् सुपा सह प्राग्वत् । अब्राह्मणः । अवृषलः । उत्तरपदार्थप्रधानोऽयम् । तथाहि आरोपितत्वं नञा द्योत्यते । तच्चोत्तरपदप्रवृत्तिनिष्ठम् । तथा चारोपितं यद् ब्राह्मणत्वं तद्विशिष्टे समासः शक्तः । विशेषणविशेष्ययोः संसर्गस्त्वारोप एव । तेन ब्राह्मणाभिन्नत्वबोध आर्थः । अत एवानुपसर्जनत्वादतस्मिन्नित्यादिसर्वनामकार्यनिर्वाहः ।

स्यादेतत् । विघ्नानामभावोऽविघ्नमित्यत्रापि परत्वात्तत्पुरुषः स्यात् । अव्ययीभावस्तु 'निर्मक्षिकम्' इत्यादौ सावकाशः । मैवम्, उत्तरपदार्थप्राधान्य एवास्य प्रवृत्तेः । उक्तं हि प्राक् "अव्ययीभावादिमहासंज्ञाव्यवहारेण पूर्वाचार्योक्तार्थनियमोऽप्युत्सर्गतः स्वीक्रियते" इति । नन्वेवम् 'अनुपलब्धिः' इत्यादौ का गतिः ? शृणु । "रक्षोहागमलघ्व-

सन्देहाः" इति भाष्यप्रयोगात्पक्षे तत्पुरुषोऽपीष्यते। अत एव भूवादि-सूत्रे "अथासंहितया' इति "विरामोऽवसानम्" (अष्टा०सू०१-४-११०) इति सूत्रे तु 'अद्रुतायामसंहितम्' इति द्विधापि भाष्यवार्तिकयोः प्रयुक्तम्। यद्वा, अनुपलब्ध्यसन्देहादावपि लाक्षणिक आर्थो वा तदभावबोधः।

स्यादेतत्, अन्यपदार्थप्राधान्येऽयं समासः। भावप्रधानो ह्यत्र निर्देशः। न ब्राह्मणत्वं यस्मिन्नित्यर्थादुन्मत्तगङ्गादावव्ययीभाव इवेह तत्पुरुषो बहुव्रीहेर्बाधक इति। फलन्तु 'अकर्ता' 'अभोक्ता' इत्यादौ "नद्यृतश्च" (अष्टा०सू०५-४-१५३) इति कबभावः स्यात्। मैवम्, 'अतस्मिन्' इत्यादौ सर्वनामकार्यगणकार्ययोरसिद्धिप्रसङ्गात्। 'अवर्षा हेमन्तः' इत्यत्र हेमन्तस्येव तद्विशेषणस्याप्येकवचनापत्तेश्च। 'अधनो ब्राह्मणः' इत्यादावपि न्यायसाम्यात्तत्पुरुषपरवल्लिङ्गतापत्तेश्चेति दिक्।

मतान्तरन्तु—

तपः श्रुतञ्च योनिश्चेत्येतद् ब्राह्मणकारणम्।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः॥

इत्यादिवचनप्रामाण्यात्सर्वे समुदायशब्दाः तत्तद्व्यक्तिभिरिव तदीयगुणसमुदायेनाप्युपाहितायाः सत्ताया जातित्वात्। तथाच 'अपूर्णो ब्राह्मणोऽब्राह्मणः' इति सर्वथाप्युत्तरपदार्थप्राधान्यं निर्बाधम्। अत्र च लिङ्गम्-"एतत्तदोः" (अष्टा०सू०६-१-१०२) इति सूत्रेऽनञ्समासग्रहणम्। एवञ्च "अनेकमन्यपदार्थे" (अष्टा०सू०२-२-४) इत्यादावेकवचनं सिद्धम्। माघश्च-"सेव्यतेऽनेकया सन्नतापाङ्गया" इति। कथन्तर्हि "पतन्त्यनेके जलधेरिवोर्मयः" इति? अत्राहुः। अध्यारोपितैकत्वानां प्रकृत्यर्थतया तत्र वास्तवबहुत्वाभिप्रायं बहुवचनं न विरुध्यते इति। अनेकश्च. नेकश्चे·येकशो षो वा। यत्तु—

तत्साहश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः॥

यथा-अब्राह्मणः, अ पं. अनश्वः, अनुदरा कन्या, अपचसि, अधर्मः, इति। तत्तु यथायथमा..कार्थमभिप्रेत्येति बोध्यम्। निरूढलक्षणायाः शक्तिसमकक्ष्यतया ...न्ते त्वतिरिक्तशक्तेरुक्ततया वृत्तिविशेषे तदर्थान्तर्भाव इति वा कथञ्चिन्नेयम्। इह न ब्राह्मणस्य भाव इति युगपदेव भावनारोपितत्वेन च सम्बन्धे विवक्षिते समास एव

प्रथमं न तु परावपि त्वतलौ, प्रकृत्यर्थस्य सापेक्षत्वेनासामर्थ्यात्। नञ्समासस्तु प्रधानस्य सापेक्षत्वान्निर्बाधः। ततश्च सतिशिष्टः प्रत्ययस्वरो लित्स्वरश्च भवति न तु "तत्पुरुषे तुल्यार्थ" (अष्टा०सू०६-२-२)इत्ययम्।

ईषदकृता (अष्टा०सू०२-२-७)। स्पष्टोऽर्थः। ईषत्पिङ्गलः। ननु 'ईषत्कम्" 'ईषदुन्नतम्' इत्यादावव्याप्तिः। ईषद्गार्ग्यादावतिव्याप्तिश्च। सत्यम्। अत एव वार्तिककृतोक्तम्-"ईषद् गुणवचनेन" इति। अकृतेत्यपनीय तत्स्थाने गुणवचनेनेति पूरणीयमित्यर्थः। अतो नाव्याप्त्यतिव्याप्ती। यद्यपि गर्गापत्यत्वे उत्कर्षापकर्षौ न स्तस्तथापि तदेकार्थसमवायिनां क्रियागुणानां तौ बोध्यौ। तथाच प्रयुज्यते-'गार्ग्यतरः' 'गार्ग्यकल्पः' इत्यादि।

षष्ठी (अष्टा०सू०२-२-८)। षष्ठ्यन्तं समर्थेन सुबन्तेन सह प्राग्वत्। राजपुरुषः। कृद्योगा च षष्ठी समस्यत इति वाच्यम् (का०वा०)। इध्मव्रश्चनः। प्रतिपदविधाना चेति निषेधस्यायमपवादः। वस्तुतस्तु स निषेधोऽयं तदपवादश्चेत्युभयमपि न वक्तव्यमिति वक्ष्यते।

याजकादिभिश्च (अष्टा०सू०२-२-९)। एभिः षष्ठी समस्यते। "तृजकाभ्यां कर्त्तरि" (अष्टा०सू०२-२-१५) इत्यस्य प्रतिप्रसवोऽयम्। ब्राह्मणयाजकः। याजक, पूजक, परिचारक, परिवेषक, स्नातक, अध्यापक, उत्सादक, उद्वर्तक, होतृ, पोतृ, भर्तृ, रथगणक, पत्ति, गणक। वृत्।

गुणात्तरेण तरलोपश्चेति वक्तव्यम् (का०वा०)। इदञ्च वार्त्तिकं भाष्ये "सर्वं गुणकार्त्स्न्ये" (अष्टा०सू०६-२-९३) इति सूत्रे पठितम्। तरबन्तं यद् गुणवाचि तेन समास इत्यर्थः। "न निर्धारणे" (अष्टा०सू० २-२-१०) इति निषेधस्यायमपवाद इति वृत्तिकाराः। "पूरणगुण" (अष्टा०सू०२-२-११) इति गुणनिषेधस्येति भाष्यकाराः। सर्वेषां श्वेततरः सर्वश्वेतः। सर्वेषां महत्तरः सर्वमहान्।

न निर्धारणे (अष्टा०सू०२-२-१०) निर्धारणे या षष्ठी सा न समस्यते। नृणां द्विजः श्रेष्ठः। अत्र द्विजशब्देन समासप्रसङ्गः। तदपेक्षा हि षष्ठी। कथं 'पुरुषोत्तमः' इति ? अत्र समाधानं "द्विवचनविभज्य" (अष्टा०सू०५-३-५७) इति सूत्रे स्थित्वा कैयट आह यस्मान्निर्धार्यते यश्चैकदेशो निर्धार्यते यश्च निर्धारणहेतुरेतत्त्रितयसन्निधाने निर्धारणं भवतीति तत्रैवायं निषेधो न तु त्रितयसन्निधानाभावेऽपीति। यद्वा, पुरुषेषूत्तम इति निर्धारणसप्तम्यां "संज्ञायाम" (अष्टा०सू०२-१-४४) इति समासः। यत्त्वेवं सति "न निर्धारणे" (अष्टा०सू०२-२-१०) इति सूत्रं व्यर्थं स्यादिति। तन्न, स्वरे भेदात्। सप्तमीसमासे हि "तत्पुरुषे तुल्यार्थ" (अष्टा०सू०

६-२-२) इति पूर्वपदप्रकृतिस्वरः षष्ठीसमासे त्वन्तोदात्तत्वं स्यात्।

प्रतिपदविधाना च षष्ठी न समस्यते इति वाच्यम् (का०वा०)। सर्पिषो ज्ञानम्। "ज्ञोविदर्थस्य" (अष्टा०सू०२-३-५१) इति षष्ठी। सा च प्रतिपदविधाना "षष्ठी शेषे" (अष्टा०सू०२-३-५०) इति विहायान्यस्याः सर्वस्या अपि तथात्वात्। न चैवमनेनैव गतार्थत्वात् "न निर्धारणे" (अष्टा०सू०२-२-१०) इति व्यर्थमिति शङ्क्यम। "यतश्च निर्धारणम्" (अष्टा०सू०२-३-४१) इति सूत्रं हि षष्ठीं न विधत्ते किन्तु सप्तमीमेव। षष्ठीं तु तया मा बाधीति प्रतिप्रसूयते इत्यन्यदेतत्। एवं "स्वामीश्वर" (अष्टा०सू०२-३-३९) इत्यादिष्वपि। तेन 'गृहस्वामी' 'सर्वेश्वरः' इत्यादि सिद्धम्। वस्तुतस्तु "ज्ञोऽविदर्थस्य" (अष्टा०सू०२-३-५१) इत्यादिचतुर्दशसूत्रीमध्ये "दिवस्तदर्थस्य" (अष्टा०सू०२-३-५८) इत्यादिषट्सूत्रीं विहायावशिष्टायामष्टसूत्र्यां शेष इति वर्त्तते। तथाच 'न माषाणामश्नीयात्' इत्यादाविव "षष्ठी शेषे" (अष्टा०सू०२-३-५०) इत्येव सिद्धे नियमार्थं प्रकरणम्-षष्ठी भवत्येव श्रूयत एव, न तु लुप्यते। तथाच लुक्प्रयोजिका समाससंज्ञैव न भवतीति फलितोऽर्थः। तस्मात् "प्रतिपदविधाना न" इति वचनं न कर्तव्यम्। एवं स्थिते "कृद्योगा च" (का०वा०) इत्यपि मास्तु। कर्तृकर्मणोः कृति" (अष्टा०सू०२-३-६५) इत्यत्र हि शेषे इति निवृत्तम्। तथाच षष्ठीविध्यर्थमेव (१)तदिति कुतः समासनिवृत्तिप्रसङ्गः। आह च—

साधनैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये॥ इति।

कथन्तर्हि हरिस्मरणं-"विशेषस्मृतिहेतवः" "पदात् पदार्थस्मरणम्" इत्यादीति चेत्? कर्मणिषष्ठ्या समासस्यानिषेधादिति गृहाण। तथा चेह कारकषष्ठ्या समासात्कृदुत्तरपदप्रकृतिस्वरो भवति। शेषषष्ठीसमासे त्वन्तोदात्तता स्यात्। एवञ्चान्तोदात्तनिवृत्तये प्रकरणं 'मातुःस्मृतम्' इत्यादौ समासाभावार्थं च। न हि तत्र कारकषष्ठी लभ्यते "न लोक" (अष्टा०सू०२-३-६९) इति प्रतिषेधादिति निष्कृष्टोऽर्थः। आह च—

निष्ठायां कर्मविषया षष्ठी च प्रतिषिध्यते।
शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते॥ इति।

पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन (अष्टा०सू०२-२-११)। पूरणाद्यर्थैस्त्रिभिः सदादिभिश्च षष्ठी न समस्यते। पूरणे-सतां

---

(१) "कर्तृकर्मणोः" (अष्टा०सू०२-३-६५) इति सूत्रम्।

षष्ठः। अत्र पूरणार्थाः प्रत्यया एव गृह्यन्ते न तु पूरणोऽमनादिशब्दा अपि। तेन "कुम्भपूरणभवः पटुरुच्चैः" इत्यादि सिद्धम्। अत्र च ज्ञापकं "लोपे चेत्पादपूरणम्" (अष्टा०सू०६-१-१३४) इति सूत्रप्रयोगः। पूरणाधिकारस्तु न गृह्यते। भागेऽनुप्रत्यये सति तदन्तेनापि निषेधस्य "द्वितीयतृतीय" (अष्टा०सू०२-२-३३) इति सूत्रे भाष्य एव स्पष्टत्वात्। अत एव 'भिक्षाद्वितीयम्' इत्यादावन्यतरस्यांग्रहणसामर्थ्यात्समास इत्युक्तम्। अत एव च "तान्युञ्छषष्ठाङ्कितसैकतानि" (र०वं०५-८) इति कालिदासस्य प्रमाद इत्याहुः। षष्ठ इत्याख्यातः षष्ठः, आख्यातण्यन्ताद्--"एरच्" (अष्टा०सू०३-३-५६) इति वा समाधेयम्।

गुणश्चेह "सत्त्वे निविशतेऽपैति" इति लक्षितो गृह्यते केवलगुणस्य गुणोपसर्जनद्रव्यस्य च प्रतिपादकः, व्याप्तिन्यायात्। काकस्य कार्ष्ण्यम्। ब्राह्मणस्य शुक्लाः। यदा ऽर्थात्प्रकरणाद्वा दन्तादि विशेष्यं निर्ज्ञातं तदेदमुदाहरणम्। कथं तर्हि "गोसहस्रम्' इति। अत्राहुः। संख्यया नायं निषेधः "शतसहस्रान्ताच्च निष्कात्" (अष्टा०सू०५-२ ११९) "कोशशतजनशतयोरुपसंख्यानम्" (का०वा०) "खारीशतमपि न ददाति" (भा०इ०) इत्यादिमुनित्रयप्रयोगात्। अनित्यश्चायं गुणेन निषेधः। "संज्ञाप्रमाणत्वात्" "उत्तरपदार्थप्राधान्यम्" इत्यादिनिर्देशात्। तेन 'करणपाटवम्' 'अर्थगौरवम्' 'बुद्धिमान्द्यम्' इत्यादि सिद्धम्। 'चन्दनगन्धः' इत्यादौ तु नायं निषेधः "तत्स्थैश्च गुणैः" इति समासस्य प्रतिप्रसवात्। गन्धत्वेन प्रतीयमानो हि गन्धो न कदापि गुणिसमानाधिकरणः। किन्तु स्वप्रधानः। यस्तु "वहति जलमयं पिनष्टि गन्धान्" इति प्रयुज्यते स चन्दनत्वादिजातिनिमित्तको न तु गुणशब्दः, मालतीकुसुमादिष्वदर्शनादिति। एवं घटरूपमित्यादि। सुरभिशुक्लादिशब्दास्तु न तत्स्थगुणप्रतिपादकाः, तेन रूपेण प्रतीयमानस्य गुणिसामानाधिकरण्यदर्शनात्। एवं "शौक्ल्यम्' इत्यादावपि बोध्यम्। शौक्ल्यसौरभादिशब्दैर्हि शुक्लत्वसुरभित्वादिप्रकारक एव गुणबोधः। तद्रूपापन्नस्य च द्रव्यसामानाधिकरण्यमस्त्येव 'शुक्लः' 'सुरभिः' इत्यादाविति दिक्।

सुहितार्थास्तृप्त्यर्थाः। फलानां सुहितः। करणस्यैव शेषत्वविवक्षया षष्ठी। न च "न लोक' (अष्टा०सू०२-३-६९) इतिनिषेधः शङ्क्यः, तस्य कृद्योगलक्षणषष्ठीविषयकत्वात्। इह सुहितार्थयोगे करणस्य शेषत्वविवक्षैव नियतेत्याहुरिति हरदत्तः। तत्राहुरित्यपरितोषोद्भावनम्। तद्बीजन्तु नियमे प्रमाणाभावः,

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचने ॥

इत्यादिप्रयोगाणां पाक्षिकयापि शे(१)षत्वविवक्षया सिद्धत्वात् । अत एव करणत्वविवक्षया तृतीयां भट्टिः प्रायुङ्क्त—

फलैर्नानाविधैश्चित्रैः स्वादुशीतैश्च वारिभिः ।
तृप्तास्तां भ्राजथुमन्तीं प्रपच्छुः कस्य पुरियम् ॥ इति ।

नन्वेवं षष्ठीसमासे निषिद्धेऽपि तृतीयातत्पुरुषेण 'फलतृप्तः' इति स्यादेवेति चेत् ? इष्टापत्तेः । न चैवं निषेधवैयर्थ्यम्, स्वरे विशेषात् । तथाहि, षष्ठीसमासेऽन्तोदात्तत्वं स्यात्, तृतीयासमासे तु थाथादिस्वरापवादः "तृतीया कर्मणि" (अष्टा०सू०६-२-४८) इति पूर्वपदप्रकृतिस्वरः । तृपिश्च सकर्मकोऽप्यस्ति, "पितॄनतार्प्सीत्समामंस्त बन्धून्" इति भट्टिप्रयोगात् । तेनास्मात्कर्मणि क्तो नास्तीति न शङ्कनीयम् । 'फलतर्पणम्' इत्यादौ तु स्पष्ट एव स्वरे भेदः, कारकात्परत्वेन कृदुत्तरपदप्रकृतिस्वरात् ।

सत्--द्विजस्य कुर्वन् कुर्वाणो वा । किंकर इत्यर्थः । शेषे षष्ठी । चोरस्य द्विषन् । इह "द्विषः शतुर्वा वचनम्" इति पाक्षिकी कर्मणिषष्ठी ।

अव्यय—ब्राह्मणस्य कृत्वा । तादर्थ्यरूपसम्बन्धस्य सामान्यरूपेण विवक्षायां षष्ठी । ब्राह्मणसम्बन्धिनी क्रियेत्यर्थः । 'पुरा सूर्यस्योदेतोः' इत्यप्यव्ययोदाहरणम् । इह कर्त्तरि षष्ठी "(२)अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः" ( का० वा० ) इति वचनात् । अत्र सत्तव्याभ्यां साहचर्यात्कृदव्ययेनैव समासो निषिध्यते । तेन 'तदुपरि' इत्यादि सिद्धमिति रक्षितः । तथा च भट्टिप्रभृतयः प्रयुञ्जते-यत्कृतेऽरीन्निगृह्णीमः,

आदेयाः किंकृते भोगाः कुम्भकर्ण त्वया विना ।

भवत्कृते खञ्जनमञ्जुलाक्षीति, तत्पाणिमात्मोपरि पातुकन्तु, किमु तदन्तरुभौ भिषजौ दिवः, इत्यादि च । तथा "अनेकमन्यपदार्थे" (अष्टा०सू०२-२-२४) इति सूत्रे 'सर्वपश्चात्' इति भाष्यप्रयोगोऽपीहानुकूलः । कैयटहरदत्तौ तु अव्ययप्रतिषेधे वृक्षस्योपरीत्युदाहरन्तौ (३)अकृदव्ययेनापि निषेधं मन्येते । तत्तु भट्टिश्रीहर्षादिप्रयोगाणां प्रतिकूलम् ।

---

( १ ) 'विशेष' आदर्शे ।

( २ ) "न लोकाव्यय" (अष्टा०सू०२-३-६९) इति सूत्रेणेत्यादिः ।

( ३ ) 'कृदव्ययेनापि' आदर्शे ।

यद्वा, अस्मिन्पक्षे कृ(१)च्छब्दः सम्पदादिक्विबन्तः कार्यपरः। ततश्चतुर्थी। आत्मन उपरि पातुक इति विग्रहः। तस्यां यन्मध्यं तत्रेत्यर्थे "सप्तमी शौण्डैः" (अष्टा०सू०२-१-४) इति सूत्रोक्तरीत्या सप्तमीतत्पुरुषोऽव्ययीभावो वेति दिक्।

तव्य-ब्राह्मणस्य कर्तव्यम्। निरनुबन्धकस्य सूत्रे ग्रहणात्तव्यता समासो भवत्येव-स्वकर्तव्यम्। स्वरे भेदः। "गतिकारकोपपदात्" (अष्टा०सू०६-२-१३९) इति कृदुत्तरपदप्रकृतिस्वरः। तत्र तव्यतस्तित्त्वेनान्तस्वरितता। तव्यस्य त्वाद्युदात्तत्वान्मध्योदा(२)त्तं पदमिति।

समानाधिकरणेन-तक्षकस्य सर्पस्य। विशेषणसमासस्त्विह बहुलग्रहणान्नेत्युक्तम्।

स्यादेतत्, इह षष्ठीसमासः प्राप्नोत्येव न। बाह्यसम्बन्धापेक्षा हीयं षष्ठी। तथा च कटोऽपि कर्म, भीष्मादयोऽपीति न्यायेन द्वयोरपि षष्ठ्यन्तयोर्विषप्रभृतिनाऽन्वये सति पश्चात्प्रातिपदिकार्थमात्रयोः पार्ष्णिकः सम्बन्धो वाच्यः। तथाच तक्षकस्येति सर्पस्येति च परस्परमसमर्थं कथं समस्यताम्? अत एव 'नीलोत्पलस्य' 'मेरुमहीभृतः' इत्यादावपि प्रथमान्तयोर्विशेषणसमासे ततः षष्ठीति न्याय्यं न तु षष्ठ्यन्तयोर्विशेषणसमासः, उक्तरीत्याऽसामर्थ्यात्। किञ्च यथा 'चित्रगुः' इत्यादौ सम्बन्धस्याभिहितत्वात्प्रथमा तथेहापि षष्ठ्यन्तयोः समासे ततः प्रथमैव स्यान्न तु षष्ठी। उच्यते। कट एव कर्म भीष्मादयस्तु तत्सामानाधिकरण्यमात्रात्तद्विभक्तिं लभन्ते इति पक्षे इदं बोध्यम्। समानाधिकरणेन निषेध एव चैतत्पक्षज्ञापकः। अत एव विशेषणविभक्तिः साधुत्वार्थेत्युद्घोषोऽपि सङ्गच्छते। न चैवमपि समासात्षष्ठी न स्यादिति वाच्यम्, पञ्च(३)कपक्षे द्वितीयादेरिवोपपत्तेः। सकलविभक्तिसाधारणेन कर्मधारयेणान्यतरस्य स्फुटमनभिधानात्। एवैव च वैयधिकरण्यस्थले सर्वेषां गतिः। तथाहि, 'राज्ञः कुमार्या राजकुमार्याः' इति षष्ठ्यन्तस्य समासे पूर्वनिपातानियममाशङ्क्योपसर्जनसंज्ञाया अन्वर्थतामाश्रित्य समाहितमाकरे। न च तत्र त्वदुक्तस्यासामर्थ्यस्योक्तिसम्भवोऽपि, येन प्रथमान्तमेव समस्येत। तथाच राज्ञः-

(१) उपरिनिर्दिष्टप्रयोगत्रये कृते इत्यत्रेति यावत्।

(२) तव्यप्रत्ययान्तेन सह समासे तु कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तं 'स्वकर्तव्यं' स्यादित्यर्थः।

(३) स्वार्थद्रव्यलिङ्गसङ्ख्याकारकाणि पञ्च प्रातिपदिकस्यैवार्थों विभक्त्यादि तु तदनुवादमात्रकमिति पक्षे।

कुमारी, कुमार्यौ, इत्यादय एव विग्रहा इति उपसर्जनसंज्ञाविधायकयोः सू(१)त्रयोः काशिकादौ स्पष्टम्। "अनेकमन्यपदार्थे"(अष्टा०सू०२-२-२४) इति सूत्रे "तत्पुरुषे तुल्यार्थ" (अष्टा०सू०६-२-२) इति सूत्रे च भाष्यकैयटयोरपि स्पष्टमेवेदम्। तथाच प्रथमान्तेन विग्रह इति नियमाभावात्सर्वत्र त(२)त्पुरुषोऽपि द्वितीयादिविभक्तयः पञ्चकपक्षवदेवोपपादनीया इति तत्त्वम्। राजपुरुषादौ सङ्ख्याया इवोत्तरपदार्थप्रविष्टसम्बन्धस्यापि वृत्तावप्रवेशाच्च। प्रयोगार्हे विग्रहे परं समासोत्तरविभक्तिसजातीयायाः प्रयोगात्। पचन्तीति पाचका इतिवत्। वाक्यसंस्कारपक्षेऽलौकिकेऽपि बहुवचनवत्षष्ठ्यादिकल्पनाया एव न्याय्यत्वादिति दिक्।

यत्तु वृत्तावुदाहृतं शुकस्य माराविकस्य, राज्ञः पाटलिपुत्रकस्येति। तत्र मारावीत्याहेति माराविकः। "तदाहेतिमाशब्दादिभ्य उपसंख्यानम्" ( का० वा० ) इति ठक्। शब्दनक्रियायाः प्रतिषेधको माराविकः। माराविदस्येति पाठे माराविशब्दं ददातीति स एवार्थः। एवं पाटलिपुत्रे भवः पाटलिपुत्रकः। इत्थं स्थिते यदीह समासोऽनिष्टः स्यात्तदेदं समानाधिकरण इत्यस्योदाहरणं सङ्गच्छेत। समास इष्ट इति तु वदता तेनैव नेदमुदाहर्तुं युक्तम्।

यत्तु तत्रैव समर्थितम्-षष्ठीसमासे सति पूर्वनिपातानियमः स्यात्। विशेषणसमासे तु विशेषणस्यैव पूर्वनिपातः सिध्यतीति। तत्रेदं वक्तव्यम्। विशेषणविशेष्यभावस्याव्यवस्थितत्वेनातिप्रसङ्गे प्राप्ते 'अप्रधानमुपसर्जनम्, आर्थं चाप्राधान्यम्' इत्यादिक्रमेण द्रव्यगुणादिशब्देषु व्यवस्थेष्यते। तच्च षष्ठीसमासेऽपि सुवचमिति किन्तन्निषेधेनेति! वस्तुतस्तु गोधेनोः भोज्योष्णस्य कुमारश्रमणाया गो गर्भिण्या इत्यादीनीहोदाहार्याणि। पोटायुवतीत्यादीनां विभक्त्यन्तरे विशेषणसमासं बाधित्वा चरितार्थानां परेण षष्ठीसमासेन बाधापत्तेः। तथाच विशेषणस्यैवोपसर्जनतया पूर्वनिपातेऽप्यनिष्टं स्पष्टमेवेत्यवधेयम्।

क्तेन च पूजायाम् (अष्टा०सू०२-२-१२)। "मतिबुद्धि" (अष्टा०सू०३-२-१८८) इति सूत्रेण विहितो यः क्तस्तदन्तेन षष्ठी न समस्यते। स हि पूजायां वर्तमानाद्विहित इत्येतावन्मात्रेण पूजाग्रहणं तस्योपलक्षणं गृहत एव काण्डः। तेन मतिबुद्ध्यर्थाभ्यां क्तस्याप्ययं निषेधः। राज्ञां मतो बुद्धः पूजितो वा। "क्तस्य च वर्तमाने" (अष्टा०सू०२-३-६७)इति

---

( १ ) "प्रथमानिर्दिष्टं समास उपसर्जनम्" (अष्टा०सू०१-२-४३) "एकविभक्ति चापूर्वनिपाते" (अष्टा०सू०१-२-४४) इति सूत्रयोरित्यर्थः

( २ ) 'तत्पुरुषोपरि' आदर्शे।

षष्ठी । कथन्तर्हि "कलहंसराममहितः कृतवान्" इति भट्टिः ? "मह पूजायाम्" (भ्वा०प०७३०) रामस्य महित इत्यर्थः तथा 'राजपूजितः' इत्यादि । अत्राहुः । 'क्तेन च पूजायाम्' (अष्टा०सू०२-३-१२) इत्यादिषु कारकषष्ठ्या एव समासो निषिध्यते । यदा तु कर्त्रादेरेव शेषत्वविवक्षया षष्ठी तदा भवत्येव समासः । स्वरे च विशेषः—कारकषष्ठ्या समासे हि कृदुत्तरपदप्रकृतिस्वरः, शेषषष्ठ्या तु समासान्तोदात्तत्वमिति । अनुन्यासकारस्त्वाह—यदा वर्तमाने क्तस्तदा षष्ठी समासनिषेधश्च । यदा तु भूते क्तस्तदा कर्तरि तृतीया । यथा "पूजितो यः सुरासुरैः" इति । तस्याः "कर्तृकरणे कृता बहुलम्" (अष्टा०सू०२-१-३२) इति समासः । न च तक्रकौण्डिन्यन्यायाद्वर्त्तमाने क्त इह भूते क्तं बाधते इति वाच्यम् (१)तेनेत्यधिकारे उपज्ञातइति निर्देशेनाबाधज्ञापनात् । न च ज्ञा(२)नार्थमात्रविषयकं ज्ञापकम्, उदाहृतप्रयोगानुरोधेन सामान्यविषयकत्वस्यैव न्याय्यत्वादिति ।

अधिकरणवाचिना च (अष्टा०सू०२-२-१३) क्तेन षष्ठी न समस्यते इदमेषामासितं गतं भुक्तं वा । "क्तोऽधिकरणे च" (अष्टा०सू०३-४-७६) इति क्तः । "अधिकरणवाचिनश्च' (अष्टा०सू०२-३-६८) इति कर्तरि षष्ठी । "अधिकरणे च" इत्येव सिद्धे वाचिग्रहणं स्पष्टार्थम् । कथं तर्हि 'किंवृत्तं' 'यद्वृत्तम्' इति ? अत्राहुः—नायमधिकरणे क्तः, किन्तु भावे । किमो वृत्तं यस्मिन्निति व्यधिकरणपदो बहुव्रीहिः । यद्वा, कर्त्तरि क्तः । किमो वृत्तं निष्पन्नमिति च विग्रहः ।

कर्मणि च (अष्टा०सू०२-२-१४) । चकार इतिशब्दार्थः । कर्मणीतिशब्दमुच्चार्य विहिता परिशेषिता वा या षष्ठी सा न समस्यते । चित्रज्ञवान्दोहोऽगोपेन । यद्यनेन'कर्मषष्ठीमात्रं न समस्यते'इत्यभिप्रेतं स्यात्तर्हि तृजकाभ्यां(३)निषेधं नारभेत । यत्र हि कर्तरि तृजकौ तत्र कर्मणिषष्ठ्या भाव्यम् । 'शब्दानुशासनम्' इत्यादौ यथा न समासनिषेधस्तथोक्तं पस्पशायाम् ।

---

(१) "तेनैकदिक्" (अष्टा०सू०४-३-११२) इति तृतीयाधिकारे "उपज्ञाते" (अष्टा०सू०४-३-११५) इति तृतीयान्तादुपज्ञातेऽर्थे शैषिकप्रत्ययविधायकेन निर्देशेनेत्यर्थः । अन्यथा भूते क्तस्य बाधे षष्ठ्या एव लाभादिति भावः ।

(२) ज्ञानार्थकधातुभ्य एव प्राप्तस्य भूते क्तस्य वर्तमानक्तेनाबाध इति यावत् ।

(३) "तृजकाभ्यां कर्तरि" (अष्टा०सू०२-२-१५) इति पात्रत ।

तृजकाभ्यां कर्त्तरि (अष्टा०सू०२-२-१५)। कर्त्रर्थतृजकाभ्यां षष्ठ्या न समासः। कर्तरीत्यकस्यैव विशेषणं न तु तृचोपि, अव्यभिचारात्। अपां स्रष्टा। पुराम्भेत्ता। वज्रस्य भर्त्ता। यद्यपि भर्तृशब्दो याजकादिषु पठितस्तथापि रूढेर्बलीयस्त्वात्पतिपर्यायस्य तत्र ग्रहणम्। यौगिकस्य तु निषेध एव। ओदनस्य पाचकः। कर्तरि किम्? इक्षूणां भक्षणमिक्षुभक्षिका। "पर्यायार्हर्णोत्पत्तिषु ण्वुच्" (अष्टा०सू०३-३-१११) धात्वर्थनिर्देशे ण्वुलवा(१)। कथं तर्हि घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः? अत्र न्यासकारः-तृन्नन्तमेतत्। "न लोक" (अष्टा०सू०२-३-६९) इति षष्ठीनिषेधस्त्वनित्यः, ण्यकाभ्यामिति वक्तव्ये तृचः सानुबन्धकस्योपादानाज्ज्ञापकात्। कैयटस्तु शेषषष्ठ्या समास इत्याह। "जनिकर्तुः प्रकृतिः" (अष्टा०सू०१-४-३०) "तत्प्रयोजको हेतुश्च"(अष्टा०सू०१-४-५४) इति ज्ञापकादनित्योऽयं प्रतिषेध इति तु बहवः।

कर्तरि च (अष्टा०सू०२-२-१६)। कर्तृषष्ठ्या अकेन न समासः। भवतः शायिका। "पर्यायार्हर्ण" (अष्टा०सू०३-३-१११) इति ण्वुच्। पूर्वत्र द्वन्द्वेन निर्दिष्टोऽपि तृच् नेहानुवर्त्तते, तद्योगे कर्तुरभिहिततया कर्तृषष्ठ्या असम्भवात्।

नित्यं क्रीडाजीविकयोः (अष्टा०सू०२-२-१७)। एतयोरर्थयोरकेन नित्यं षष्ठी समस्यते। उद्दालकपुष्पभञ्जिका। क्रीडाविशेषस्येयं संज्ञा। "संज्ञायाम्" (अष्टा०सू०३-३-१०९) इति भावे ण्वुल्। पुष्पाणामिति कर्मणिषष्ठी। जीविकायाम्-दन्तलेखकः। तत्र क्रीडायां विकल्पे प्राप्ते जीविकायां 'कर्त्तरि च" (अष्टा०सू०२-२-१६) इति निषेधे प्राप्ते वचनम्। जयादित्यस्तु "तृजकाभ्याम्"(अष्टा०सू०२-२-१५) इति सूत्रे कर्तरीत्येतदनुवृत्तायाः षष्ठ्या विशेषणम्। तृ(२)जुत्तरार्थ इत्युक्त्वा "कर्तरि च"(अष्टा०सू०२-२-१६) इति सूत्रे कर्तृग्रहणं तृजकयोर्विशेषणतया व्याख्याय "नित्यं क्रीडा" (अष्टा०सू०२-२-१७) इति सूत्रे अकप्रत्ययमेवोदाजहार। तत्रेदं वक्तव्यम्, प्रथमसूत्रे कर्तृग्रहणं तृजकयोरेव विशेषणं युक्तं, तयोः श्रुतत्वात्; न तु षष्ठ्याः। एवञ्च तृजुत्तरार्थ इत्यपि न कल्प्यम्। अकस्यैव चोत्तरत्रानुवृत्तिर्न तु तृचः, असम्भवात्। तथाच सूत्रद्वयस्य व्यत्यासेनार्थ उचित इति। वामनस्तु "अके जीविकार्थे"

---

(१) "धात्वर्थनिर्देशे ण्वुल्वक्तव्यः" (का०वा०) इत्यनेनेत्यर्थः।

(२) 'तृच्प्रत्ययेन कर्तुरभिधाने तद्योगे कर्तृषष्ठ्या असम्भवात्' इत्यादिः।

(अष्टा०सू०६-२-७३) इति सूत्रे अके इति किम् ? रमणीयकर्तेति जीविकायां तृचं प्रत्युदाजहार । तस्यायमाशयः-मा भूत्क्रीडायां तृच्, लक्षणाभावात् । जीविकायान्तु "ण्वुल्तृचौ (अष्टा०सू०३-१-१३३) इति ण्वुलि तृजपि सुलभ एवेति । एतन्मते "नित्यं क्रीडा" (अष्टा०सू०२-२-१७) इत्यत्र तृजग्रहणासम्बन्धशङ्कावारणार्थं तृजुत्तरार्थं इत्यादि कुसृष्ट्यादरणमित्याहुः ।

कुगतिप्रादयः (अष्टा०सू०२-२-१८) । कुशब्दो गतिसंज्ञाः प्रादयश्च समर्थेन नित्यं समस्यन्ते । कुः पापार्थे । कुपुरुषः । नित्यसमासविषयस्याप्यस्य पूर्वपदप्रकृतिस्वरार्थमव्ययत्वमिष्यते । तथा च वार्त्तिकम्-"अव्यये नञ्कुनिपातानाम्" (का०वा०) इति । तस्मादयं स्वरादिषु बोद्धव्यः । स एव चेह गृह्यते, न तु पृथिवीवृत्तिः ग(१)त्यादिसाहचर्यात् । गतिः-ऊरीकृत्य । प्रादिग्रहणमगत्यर्थम् । तद्विषयविभागार्थानि तु बहूनि वार्त्तिकानि । तथाहि, दुर्निन्दायाम्-दुः पुरुषः । स्वती पूजायाम्-सुपुरुषः, अतिपुरुषः । आङीषदर्थे-आपिङ्गलः । प्रायिकं चैतदुपाधिवचनम् । अन्यथा "ईषदर्थे च" (अष्टा०सू०६-३-१०५) इति कोः कादेशविधानमनुपपन्नं स्यात् । कोष्णम् । दुष्कृतम् । दुरत्र कृच्छ्रार्थे । अनभिधानात्तु भूते खल् न भवति । सुष्टुतम् । सुशब्दोऽतिशये, न तु पूजायाम् । अत एवोपसर्गनिबन्धनं षत्वम् । अतिस्तुतम् । "अतिरतिक्रमणे च" (अष्टा०सू०१-४-९५) इति क(२)र्मप्रवचनीयत्वम् ।

प्रादयो गताद्यर्थे प्रथमया । वृत्तिविषये गताद्यर्थवृत्तयः प्रादयो गतित्वाभावेऽपि प्रादिग्रहणेन समस्यन्ते इत्यर्थः । प्रगत आचार्यः प्राचार्यः । प्रान्तेवासी ।

अत्यादयः क्रान्ताद्यर्थे द्वितीयया । अतिक्रान्ता मालामतिमालः ।

अवादयः क्रुष्टाद्यर्थे तृतीयया । अवक्रुष्टः कोकिलया अवकोकिलः ।

पर्यादयो ग्लानाद्यर्थे चतुर्थ्या । परिग्लानोऽध्ययनाय पर्यध्ययनः । अलं कुमार्यै अलंकुमारि । नित्यसमासत्वेऽपि चतुर्थीविधानसामर्थ्यात्पक्षे वाक्यमिति रक्षितः । एतेन "एकविभक्ति चापूर्वनिपाते" (अष्टा०

---

(१) अद्रव्यार्थकेत्यादिः ।

(२) 'कर्मप्रवचनीयत्वाभावः' इति पाठः । तत्त्वबोधिन्याम् "अतिरतिक्रमणे च" (अष्टा०सू०१-४-९५) इति सूत्रे अन्ये तूदाहरन्ति-"अतिसिक्तम् अतिस्तुतमिति" । इत्युक्तेः षत्वाभावाच्च कर्मप्रवचनीयसंज्ञा निर्बाधाऽत्रेति चिन्त्यम् ।

सू०१-२-१४४) इति सूत्रे 'अलंकुमारिः' इति भाष्यं "पर्यादयोग्लानाद्यर्थे इति समासः" इति कैयटवचनं च व्याख्यातम् । तदेव भाष्यमनित्यतायां ज्ञापकमिति वास्तु । वस्तुतस्तु नेहानेन समासः, अलमोऽप्रादित्वात् । प्रादिसमासस्य त्वयं प्रपञ्च इत्याकरः । किन्तु "द्विगुप्राप्तापन्नालम्पूर्व"(का०वा०) इत्यनेन ज्ञाप्यमानो ऽलंपूर्वस्तत्पुरुषः पृथग्गतिग्रहणात्पर्याप्त्यर्थेनापि भवन्नभिधानानुरोधाच्चतुर्थ्यन्तेनैव भवति । तस्य चानित्यसमासत्वं निर्बाधमेवेत्यवधेयम् ।

निरादयः क्रान्ताद्यर्थे पञ्चम्या। निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः। प्रादिग्रहणस्य अगत्यर्थत्वादतिप्रसङ्गे प्राप्ते कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः । वृक्षम्प्रति विद्योतते विद्युत् । कथन्तर्हि अधीत्येति ? इह हि "अधिपरी अनर्थकौ (अष्टा०सू०१-४-९३) इति कर्मप्रवचनीयत्वम् । उच्यते, "अध्यापकधूर्तैः" (अष्टा०सू०ए०२-१-६५) इतिनिर्देशादनित्यः प्रतिषेधः । अत एव 'सुस्तुतम्' 'अतिस्तुतम्' इति षत्वाभावेऽपि समास उदाहृतः । "स्वती पूजायाम" (का०वा०) इति वचनाद्वा तत्सिद्धिः ।

उपपदमतिङ् (अष्टा०सू०२-२-१९) । उपपदं सुबन्तं समर्थेन नित्यं समस्यते । अतिङन्तश्च समासः । कुम्भं करोतीति कुम्भकारः । इह कुम्भ अस् कार इत्यलौकिकं प्रक्रियावाक्यम् । लडर्थाद्याधिक्येऽप्यदूरविप्रकर्षेण तूक्तं लौकिकं वाक्यं बोध्यम । अतिङ् किम् ? मा भवान् भूत् । "माङि लुङ्" (अष्टा०सू०३-३-१७५)इति सप्तमीनिर्देशान्माङुपपदम् । ननु सुपेत्यधिकारात्तिङन्तेन न भविष्यति ? सत्यम्, तन्निवृत्तिरनेन ज्ञाप्यते । तत्फलं त्वनुपदमेव स्फुटीकरिष्यामः । प्रथमान्तं तु सुप्ग्रहणमिहानुवर्तते एव। अत एव 'राजदर्शी' इत्यादौ पूर्वपदे नलोपादिपदकार्यं सिध्यति । सुप्सुपेतीह नानुवर्त्तते इति भाष्यवृत्त्यादिग्रन्थास्तु मिलितं नानुवर्तते इत्येवंपराः। अतिङिति नोपपदस्य विशेषणं किन्तु समासस्येति यद्यपीह भाष्ये न स्पष्टं, तथापि "अनवक्लृप्त्यमर्षयोः" (अष्टा०सू०३-३-१४५) इति सूत्रे भाष्ये एव स्पष्टम्। तत्र हि किंवृत्तस्यानधिकारादकिंवृत्तग्रहणानर्थक्यमित्युक्त्वा उपपदसञ्ज्ञार्थं तर्हीत्याशङ्क्यातिङिति समासप्रतिषेधात्सञ्ज्ञानर्थक्यमिति सिद्धान्तितम् । एवं पूर्वसूत्रेपि गतिग्रहणं पृथक्कृत्य तेनाप्यतिङ्ग्रहणं सम्बन्धनीयम । गतिः समस्यते अतिङन्तश्च समासः स्यादिति । तेन 'प्रयवति' इत्यादौ तिङन्तेन समासो न । अतिङ्ग्रहणाच्च सुपेति तृतीनिवर्त्तत । तथाच "गतिकारकोपपदानां कृद्भिः सह समासवचनं

प्राक् सुबुत्पत्तेः" (प०भा०)इति प्राचां परिभाषा एकदेशानुमतिद्वारा सामान्यापेक्षज्ञापकभूतेन अमिङ्ग्रहणेन लभ्यते। गतीनां कारकाणामुपपदानां च कृद्भिः सह यः समासः स उत्तरपदात्सुबुत्पत्तेः प्रागेव कार्य इत्यर्थः। पूर्वपदन्तु सुबन्तमेवेत्युक्तम्।

गतीनां तावत्—व्याजिघ्रतीति व्याघ्री। "आतश्चोपसर्गे" (अष्टा० सू०३-१-१३६) इति कः। "पाघ्राध्मा" (अष्टा०सू०३-१-१३७) इति शप्रत्ययस्तु न भवति "जिघ्रतेः संज्ञायां प्रतिषेधो वक्तव्यः" इत्युक्तेः। व्याङ्भ्यां घ्रशब्देन गतिसमासः। स च यदि घ्रशब्दस्य सुबन्ततामपेक्षेत तर्हि सुबुत्पत्तये संख्याकर्मादियोगो विवक्षणीयः। तद्योगाच्च प्रागेव लिङ्गयोगः "स्वार्थमभिधाय" इत्यादिन्यायात्। ततश्च लिङ्गनिमित्तः प्रत्ययो भवन् टाबेव स्यात् न तु ङीष्, घ्रशब्दमात्रस्य अजातिवाचित्वात्। ततश्च व्याङ्भ्यां घ्राशब्देन समासः। ततो व्याघ्राशब्दस्य जातिवाचित्वेऽप्यनकारान्तत्वाज्जातिलक्षणो ङीष् न स्यात्। सुबुत्पत्तेः प्रागेव जायमानस्तु समासो लिङ्गयोगानपेक्षत्वेन अन्तरङ्गत्वाद्भवति। ततो ङीष् पूर्वपदस्य तु सुबन्तत्वात्पदकार्याणि स्युरेव। 'निगतः' इति रुत्वं 'सय्यँन्ता' इति परसवर्णविकल्प इत्यादि।

कारकाणाम्—अश्वैः क्रीता। अल्पैरभ्रैर्लिप्ता। "कर्तृकरणे कृता बहुलम्" (अष्टा०सू०२-१-३२) इति समासः। स यद्युत्तरपदस्य सुबन्तस्य स्यात्तर्हि पूर्ववट्टाप् स्यात्। ततश्च "क्रीतात्करणपूर्वात्" (अष्टा०सू० ४-१-५०) "क्तादल्पाख्यायाम्" (अष्टा०सू०४-१-५१) इति ङीष् न स्यात्, अत इत्यधिकारात्। वचनसामर्थ्यात्स्यादिति चेत्तर्हि वाक्यावस्थायां स्यात् पूर्वशब्दस्य व्यवस्थावचनत्वसम्भवात्। अत इत्यधिकारो वा व्यवच्छिद्येत। तथाच—

सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी।

इति भट्टिप्रयोगो न सिध्येत्। सिद्धान्ते तु "कर्तृकरणे "कृता" (अष्टा०सू०२-१-३२) इत्यत्र बहुलग्रहणात्क्वचित्सुबन्तेन समासः। अतो न ङीष्।

उपपदानाम्—कच्छेन पिबतीति कच्छपी। व्याघ्रीवत्। सु(१)पीति योगविभागात्क इत्यादि। यत्त्वतिङ्ग्रहणमुपपदविशेषणमिति। तन्न, तथा सति प्रथमान्तसुब्ग्रहणस्य निवृत्त्यापत्त्या बहुविप्लवापत्तेः। एतेनातिङ् किम्? एधानाहारको व्रजतीति प्रत्युदाहरणमपि प्रत्युक्तम्। यदपि कौ-

---

(१) "सुपि स्थः" (अष्टा०सू०३-२-४) इति सूत्रे।

मु(१)द्यां "कुगति" (अष्टा०सू०२-२-१८) इति सूत्रे उक्तम्—"अत्र सुप्सुपेत्यननुवृत्तेस्तिङाऽपि समासः, ऊरीकरोति" इत्यादि। तदप्यसत्, तत्र शेषीकृतेनातिङ्ग्रहणेनैव विरोधात्। तिङ्समासस्तु सहेति योगविभागबललभ्यो वार्त्तिकोक्तविशेषविषयश्छान्दसश्चेति प्रागेव प्रपञ्चितम्।

अमैवाव्ययेन (अष्टा०सू०२-२-२०)। अमैव तुल्यविधानं यदुपपदं तदेवाव्ययेन सह समस्यते। स्वादुङ्कारं भुङ्क्ते। सम्पन्नङ्कारम्। लवणङ्कारम्। "स्वादुमि णमुल्" (अष्टा०सू०३-४-२६)। स्वादुमीत्यत एव निपातनात्पूर्वपदस्य मान्तत्वम्। स्वादुमीत्यर्थग्रहणम्। सम्पन्नलवणशब्दावपि स्वादुपर्यायौ। येन वाक्येनामेव केवलो विधीयते न तु प्रत्ययान्तरसहितः, तस्मिन्, वाक्ये सप्तमीनिर्देशबलेन यस्योपपदसंज्ञा तदमैव तुल्यविधानमित्युच्यते। सूत्रे च तुल्यविधानमित्यध्याह्रियते। नियमाङ्गभूतस्त्वेवकारो नियमस्वभावादेव लभ्यते न तु सूत्रारूढः। अमैव च यत्तुल्यविधानं यस्य प्रत्ययान्तरं प्रति उपपदत्वमेव नास्तीति प्रत्ययान्तरेण स समासो नाशङ्कनीयः। सूत्रस्य प्रयोजनन्तु "कालसमयवेलासु तुमुन्" (अष्टा०सू०३-३-१६७) 'कालः समयो वेला वा भोक्तुम्' इत्यत्र समासनिवृत्तिः। अमैवेति किम्? अग्रेभोजम्, अग्रेभुक्त्वा, "विभाषाऽग्रेप्रथमपूर्वेषु" (अष्टा०सू०३-४-२४) इति क्त्वाणमुलौ। अमा चान्येन च तुल्यविधानमेतत्। अव्ययेनेति किम्? कु(२)म्भकारः। असति ह्यव्ययग्रहणे अमैव यत्तुल्यविधानं तदेव समस्येते। न च पूर्वसूत्रस्यानवकाशत्वादव्ययविषय एव नियम इति वाच्यम्, तथासत्यमैव नियमापत्तेः। अमन्तेनोपपदस्य यस्समासः सोऽमैव तुल्यविधानस्येति। तथा च 'अग्रेभोजम्' इत्यत्र मा भूत्। 'अग्रेभुक्त्वा कालो भोक्तुम्' इत्यत्र तु स्यादेव।

तृतीयाप्रभृतीन्यन्यतरस्याम् (अष्टा०सू०२-२-२१)। "उपदंशस्तृतीयायाम्" (अष्टा०सू०३-४-४७) इत्यादीन्युपपदान्यमन्तेनाव्ययेन सह वा समस्यन्ते। उभयत्र विभाषेयम्। यदमैव तुल्यविधानं तस्य प्राप्ते, यथा "उपदंशस्तृतीयायाम्" (अष्टा०सू०३-४-४७) इति। यत्पुनरमा चान्येन च तुल्यविधानं तस्याप्राप्ते, यथा "अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ" (अष्टा०सू०३-४-५९) इति। मूलकोपदंशम्भुङ्क्ते, मूलकेनोपदंशम्। उच्चैःकारमाचष्टे। इह समासपक्षे कृदुत्तरपदप्रकृतिस्वरः

---

(१) प्रक्रियाकौमुद्याम्।

(२) अत्र समासो न स्यादिति भावः।

"आदिर्णमुल्यन्यतरस्याम्" (अष्टा०सू०६-१-१९४) इत्याद्युदात्तत्वम्। असमासपक्षे तु उच्चैरित्यन्तोदात्तम्, स्वरादिषु तथापाठात्। कारमित्याद्युदात्तम्। अमैत्ये(१)व। "पर्याप्तिवचनेष्वलमर्थेषु" (अष्टा०सू०३-४-६६) पर्याप्तो भोक्तुम्।

क्त्वा च (अष्टा०सू०२-२-२२)। क्त्वाप्रत्ययेन सह तृतीयाप्रभृतीन्युपपदानि वा समस्यन्ते। "अव्ययेयथाभिप्रेताख्याने" (अष्टा०सू०३-४-५९) इति क्त्वाप्रत्ययः। समासपक्षे ल्यप्। उच्चैःकृत्य। उच्चैःकृत्वा। तृतीयाप्रभृतीनीत्येव। अ(२)लङ्कृत्वा। खलुकृत्वा।

शेषो बहुव्रीहिः (अष्टा०सू०२-२-२३)। अधिकारोऽयम्। शेषः किम्? उन्मत्तगङ्गम्। "प्राक्कडारात्परङ्कार्यम्" इति पा(३)ठे परत्वाद्बहुव्रीहिसंज्ञा मा भूत्। उपयुक्तादन्य शेषः। 'शिष असर्वोपयोगे' (चु०उ०१८१९)। कर्मणि घञ्। येषां पदानां यस्मिन्नर्थेऽव्ययीभावादिसंज्ञा नोक्ता स बहुव्रीहिरित्यर्थः। एकसंज्ञाधिकारे तु त्रिकतः शेषो ग्राह्यः। तथाहि सप्तसु सुपां त्रिकेषु यस्य त्रिकस्य शुद्धिग्राहिकया समासो नोक्तः सः शेषः। प्रथमेति यावत्। ततश्च प्रथमान्तानां बहुव्रीहिरित्यर्थाऽस्समानाधिकरणानां भवति। कण्ठेकाल इत्यादौ तु "सप्तमीविशेषणं" (अष्टा०सू०२-२-३५) इति ज्ञापकात्सिद्ध इति।

॥ इति श्रीशब्दकौस्तुभे द्वितीयस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम्।

---

अनेकमन्यपदार्थे (अष्टा०सू०२-२-२४)। अनेकं सुबन्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः। पदेन प्रकृत्यर्थोपसर्जनः प्रत्ययार्थोऽभिधीयते इति स्थिते त्रिकतः शेषस्योक्ततया अप्रथमाविभक्त्यर्थे बहुव्रीहिरिति फलितम्। त्रिकतः शेषो हि प्रथमा, तदन्यपदार्थश्च कर्मादिरिति। प्राप्तमुदकं यं प्राप्तोदको ग्रामः। उदककर्तृकप्राप्तिकर्मीभूत इत्यर्थः। यद्यपि क्तप्रत्ययार्थस्य कर्तुर्धात्वर्थं प्रति विशेष्यतोचिता तथापि व्यपेक्षावादिभिरगत्या समासे भिन्नैव व्युत्पत्तिः स्वीकरणीया। सिद्धान्ते तु एकार्थीभावा-

---

(१) एतदग्रे 'नेह' इति शेषः।

(२) अत्रोभयत्रापि "अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" इति क्त्वाप्रत्ययः। इदं सूत्रं च "उपदंशस्तृतीयायाम्" इत्यतः पूर्वमिति न तृतीयाप्रभृतित्वमिति बोध्यम्।

(३) "प्राक्कडारात्समासः" इति सूत्रे इत्यर्थः।

न्युपगमात्सर्वं सुस्थमित्युक्तम्। ऊ(१)ढरथोऽनड्वान्। उपहृतपशू रुद्रः। उद्धृतौदना स्थाली। चित्रगुः। वीरपुरुषको ग्रामः। प्रथमार्थे तु न भवति-वृष्टे देवे गतः। अनेकोक्तेर्बहूनामपि चित्राजरतीगुः। तन्वीदीर्घाजङ्घः। इह प्रथमो न पुंवत्, उत्तरपदत्वाभावात्। द्वितीयोऽपि न, अ(२)पूर्वपदत्वात्। उत्तरपदे नित्यसमासस्य तु नायं विषय इत्युक्तम्। एतच्च केषाञ्चिन्मतम्। परमार्थस्तु षाष्ठभाष्यादिपर्यालोचनया नेह पूर्वपदमाक्षिप्यते। "आनङ् ऋतः" (अष्टा०सू०६-३-२५) इत्यत्र यथा। इष्टसिद्ध्यनुरोधेन पूर्वपदं क्वचिदाक्षिप्यते न तु सर्वत्रेति "ओजः सहोऽम्भः" (अष्टा०सू०६-३-३) इति सूत्रे हरदत्तेनोक्तत्वाच्च। तेनोपान्त्यस्य पुंवदेव-चित्राजरद्गुरित्यादि। अत एव चित्राजरत्यौ गावौ यस्येति विग्रहेऽप्येवमेव। अदृष्टसदृशप्रजामिति तु कर्मधारयोत्तरपदे द्वयोरेव बहु(३)व्रीहिः। अपि च परमस्वधर्मः। स्वशब्दस्य निरपेक्षपूर्वपदत्वाभावात्ततो धर्मशब्दः परो न तु केवलादिति नानिच्। कर्मधारयपूर्वपदे तु भवत्येवेति वक्ष्यते। किञ्च—

सुसूक्ष्मजटकेशेन सुनताजिनवाससा।
समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति॥

अयं श्लोकः समर्थसूत्रे भाष्ये पठितः। सुष्ठु सूक्ष्मा जटाः केशा यस्येति चतुर्णां बहुव्रीहौ "ङ्यापोः संज्ञाछन्दसोर्बहुलम्" (अष्टा० सू०६-३--६३) इति बहुलवचनाद्ध्रस्वत्वम्। यद्वा जटावन्तो जटाः, अर्शआद्यच्; जटाः कृता जटा इति वा "तत्करोति" (ग० सू०) इति ण्यन्तादेरच्। एवं सुष्ठु नतम् अजिनं वास आच्छादनं यस्य तेन, समन्तानि शितीनि रन्ध्राणि यस्येति विग्रहः। द्वयोर्वृत्तौ हि केशवासो रन्ध्रेभ्यः पूर्वं (४)उदात्तः स्यात्। इष्यते तु सुसमन्तयोः प्रकृतिस्वर इति भा(५)वः। एवं 'नीलोज्वलवपुः' इहापि नीलशब्दस्य

---

(१) ऊढः रथो येन, उपहृतः पशुः यस्मै, उद्धृतमोदनं यस्मात्, चित्रा गावो यस्य, वीराः पुरुषा यस्मिन्निति विग्रहाः।

(२) पूर्वपदत्वाभावादित्यर्थः।

(३) सदृशा प्रजा सदृशप्रजा, अदृष्टा सदृशप्रजा यस्येति रूपः।

(४) पूर्वं त्रयाणां कर्मधारयेण पश्चाद्बहुव्रीहौ समासे "बहुव्रीहौ प्रकृत्या पूर्वपदम्" इति पूर्वपदस्य प्रकृतिस्वरे "समासस्य" इति सूत्रेण विशिष्टस्यैवान्तोदात्ततया केशवासोरन्ध्रेभ्यः पूर्वं एवोदात्तः स्यात्।

(५) सर्वेषां युगपदेकस्मिन्नेव बहुव्रीहौ समासे तु आद्ययोरुदाहरणयोः सोरन्त्ये समन्तस्य पूर्वपदत्वेन तयोरेव स्वर इति भावः।

प्रकृतिस्वरः। न च 'चित्रगुः' इत्यत्र उत्तरपदस्याप्युपसर्जनसंज्ञार्थमनेकग्रहणमिति वाच्यम्, प्रथमानिर्दिष्टत्वं विनाऽपि "एकविभक्ति" (अष्टा०सू०१-२-४४) इत्यनेन तत्सिद्धेः, प्रधानस्यान्यपदार्थस्य नानाविभक्तियोगेऽपि वर्तिपदयोर्नित्यं प्रथमान्तत्वात्। न चैवं 'राजकुमारीं पश्य' इत्यादावव्याप्तिप्रसङ्गः, तत्र द्वितीयाद्यन्तेनापि कुमारीशब्देन विग्रहाभ्युपगमात्।

अन्यग्रहणं किम्? बहुव्रीहितत्पुरुषयोर्विषयविभागो यथा विज्ञायेत। स्वपदार्थे हि सावकाशं तत्पुरुषं परत्वादन्यपदार्थे बहुव्रीहिर्बाधेत। असति त्वन्यग्रहणे 'कण्ठेकालः' इत्यादौ व्यधिकरणपदे बहूनां समुदाये च सावकाशं बहुव्रीहिं स्वपदार्थ इवान्यपदार्थेऽपि 'नीलोत्पलं सरः' इत्यादौ समानाधिकरणे तत्पुरुषो बाधेत। पदग्रहणं किम्? ग्राहवती नदी। इह हि 'तत्र मा स्नासीत्' इति वाक्यार्थो गम्यते। अर्थग्रहणं किम्? यावता पदे पदान्तरस्य वृत्त्यसम्भवादेव पदार्थे भविष्यति। सत्यम्। कृत्स्ने पदार्थे यथा स्यात्। अन्यथा 'चित्रगुः' इति षष्ठ्यर्थसम्बन्धमात्रपरं स्यात्। तथा च देवदत्तादिभिः सामानाधिकरण्यं न स्यात्।

समानाधिकरणानामेव बहुव्रीहिः, त्रिकतः शेषस्योक्तत्वात्। तेनेह न—पञ्चभिर्भुक्तमस्य। 'पञ्च भुक्तवन्तोऽस्य' इत्यादौ तु न भवत्यनभिधानात्।

अव्ययानां वाच्यः॥ उच्चैर्मुखः। उच्चैःशब्दस्याधिकरणप्रधानत्वाद्व्यधिकरणत्वाद्वचनमित्याहुः। त्रिकतः शेष इत्युक्तरीत्या प्रथमान्तस्यापेक्षितत्वात्तस्य चेहापि सत्त्वाच्छक्यमकर्तुमिदं वचनम्। अत एव वाक् च दृषच्च प्रिया यस्येति त्रिपदबहुव्रीहौ कृते अवान्तरद्वन्द्वोऽभ्युपगतः।

प्रादिभ्यो धातुजस्य बहुव्रीहिर्वक्तव्यः, वा चोत्तरपदलोपः॥ प्रपतितपर्णः प्रपर्णः।

नञोऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपः॥ अविद्यमानपुत्रः अपुत्रः।

अस्तिक्षीरादीनामुपसंख्यानमसुबन्तत्वात्॥ अव्ययत्वात्सिद्धम्। तथाहि। विभक्तिप्रतिरूपकत्वान्निपातसंज्ञा, निपातोऽव्ययमित्यव्ययसंज्ञा। इह द्वौ द्रोणौ अर्द्धद्रोणश्च अर्द्धतृतीया द्रोणा इति व्यवह्रियते तत्र अर्द्धः तृतीयो येषामिति बहुव्रीहिः। उद्भूतावयवभेदः समुदायः समासार्थ इति बहुवचनम्। द्रोणशब्दश्च द्रोणयोरर्द्धद्रोणे च लक्षणया वर्त्तते इति सामानाधिकरण्यम्।

संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये (अष्टा०सू०२-२-२५)। संख्येयार्थया संख्यया अव्ययादयः समस्यन्ते, स बहुव्रीहिः। दशानां समीपे ये वर्तन्ते ते उपदशाः। नव एकादश वेत्यर्थः। सामीप्यप्राधान्ये त्वव्ययीभाव इत्युक्तम्। उपविंशाः। "बहुव्रीहौ संख्येये" (अष्टा० सू०५-४-७३) इति डच्। "ति(१)विंशतेर्डिति"। आसन्नदशाः। अदूरदशाः। अधिकदशाः। द्वौ वा त्रयो वा द्वित्राः। वाऽर्थेऽयं समासः। ततश्च वैकल्पिकौ द्वौ त्रयश्चेति पञ्च अस्माच्छब्दादुपतिष्ठन्ते। अत एव बहुवचनम्। उक्तं च सैषा पञ्चाधिष्ठाना वागिति। कार्यान्वये हि विकल्पो न त्वेतच्छब्दजन्यबोधविषयत्वेऽपीति भावः। त्रिचतुराः। "च(२)तुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानम्" इत्यच्। द्विरावृत्ता दश द्विदशाः। अत्र वृत्तौ द्विशब्देन दशत्वावृत्तिगता द्वित्वसंख्योच्यते। ननु द्वित्रा इत्यत्र वार्थः, द्विदशा इत्यत्र सुजर्थश्चान्यपदार्थ इति पूर्वेणैव सिद्धम्। न च मत्वर्थे पूर्वयोगः अमत्वर्थार्थं चेदमिति वाच्यम्, प्राप्तोदकादिषु मत्वर्थं विनापि तत्स्वीकारात्। सत्यम्, अन्यपदार्थप्राधान्ये पूर्वयोगः; इह तु वार्थसुजर्थौ न प्रधानम्।

दिङ्नामान्यन्तराले (अष्टा०सू०२-२-२६)। दिशो नामान्यन्तराले वाच्ये समस्यन्ते स बहुव्रीहिः। दक्षिणस्याः पूर्वस्याश्च दिशोरन्तरालं दक्षिणपूर्वा। "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यः" इति भाष्यम्। अत एव "ठक्छसोश्च" (का०वा०) इति वार्तिकस्योक्तिसम्भवः। यद्यपि तत्र छसा साहचर्याद्भवतष्ठगेव गृह्यते इति "न कोपधायाः" (अष्टा० सू०६-३-३७) इति सूत्रे कैयटहरदत्ताभ्यामुक्तम्। युक्तं चैतत्। गन्त्र्या चरति धावन्त्या चरतीति प्राग्वहतीये ठकि 'गान्त्रिकः' 'धावन्तिकः' इति यथा स्याद् 'गान्तृकः' 'धावतकः' मा भूदिति, तथापि भाष्यं दृष्ट्वा वार्तिककृतोऽप्रवृत्तेः। अत एव हि "एकतद्धिते च" (अष्टा०सू०६-३-६२) इति सूत्रस्याप्युक्तिसम्भवो लभ्यते इति दिक्। भवन्मयः। सर्वकाम्यति। सर्वकभार्यः। सर्वप्रियः इत्यादिवृत्तौ पूर्वभागतया प्रविष्टस्यैवा(३)यं पुंवद्भावः, नत्वन्यस्याः, "भस्त्रै(४)षाद्बा" इति लिङ्गात्। तेनाकचि एकशेषवृत्तौ च न। सर्विका, सर्वाः।

---

(१) 'इत्यनेन तिशब्दस्य लोपः' इत्यस्य शेषः।

(२) "त्र्युपाभ्यां चतुरोऽजिष्यते" इति कौमुदीपाठः।

(३) "सर्वनाम्नो वृत्तिमात्रे' इति भाष्योक्तेः।

(४) "भस्त्रैषाजाज्ञाद्बा" इति सूत्रे 'एषा' 'द्वा' इत्यनयोः समासघटकत्वेऽपि पूर्वभागत्वेन तदप्रविष्टतया तदकरणेन निर्देशात्।

न चान्तरालस्यान्यपदार्थत्वात्पूर्वेणैव सि(१)द्धमिति चेत् ? न, अप्रथमार्थे तदित्युक्तत्वात्। वैयधिकरण्याच्च "विभाषा दिक्समासे" (अष्टा०सू०१-१-२८) इत्यत्र प्रतिपदोक्तस्यास्यैव ग्रहणार्थमपीदम्। तेन या पूर्वा सोत्तरा यस्य मुग्धस्य तस्मै—'उत्तरपूर्वाय' इत्यत्र न वि(२)कल्पः।

कबभावार्थं च। तथा हि, "शेषाद्विभाषा" (अष्टा०सू०५-४-१५४) इत्यत्र तन्त्रावृत्त्याद्याश्रयणेन एकः शेष उपयुक्तादन्यः, अपरः शेषाधिकारः तेनोत्तरपूर्वादौ न कप्, इह शेषग्रहणाननुवृत्तेः। द्वितीयशेषग्रहणात्तु 'प्रियपथः' प्रियधुरः' इत्यादौ न कप्। यत्तु "तत्रतेनेदम्" (अष्टा०सू०२-२-२७) इति सूत्रे कैयटेनोक्तं–"शेषाधिकार एव गृह्यते, न तूपयुक्तादन्यः" इति। तत्तु तत्रत्यभाष्यस्योक्तिसम्भवमात्रपरम्।

नामग्रहणं रूढ्यर्थम्। इह मा भूत्—ऐन्द्र्याश्च कौबेर्याश्चान्तरालमिति।

तत्र तेनेदमिति सरूपे (अष्टा०सू०२-२-२७) सप्तम्यन्ते ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरणविषये इदं युद्धमित्यर्थे समस्यते कर्मव्यतिहारे स बहुव्रीहिः। इतिकरणाल्लौकिकविवक्षातात्पर्यकात् ग्रहणप्रहरणकर्मव्यतिहारयुद्धानि लभ्यन्ते। गृह्यतेऽस्मिन्निति ग्रहणं केशादि, प्रहरणं दण्डादि, कर्मव्यतिहारः परस्परग्रहणं परस्परप्रहरणं च। केशेषु केशेषु गृहीत्वा युद्धं प्रवृत्तं केशाकेशि। मुष्टीमुष्टि। दण्डैश्च दण्डैश्च प्रहृत्य युद्धं प्रवृत्तं दण्डादण्डि। "इच् कर्मव्यतिहारे" (अष्टा०सू०५-४-१२७) इतीच्समासान्तः। तदन्तमव्ययं, तिष्ठद्गुप्रभृतिष्विच्प्रत्ययस्य पाठेन अव्ययीभावत्वात्। "अन्येषामपि दृश्यते" (अष्टा०सू०६-३-१३७) इति पूर्वपदस्य दीर्घः। अत एव 'मुष्टामुष्टि' इति प्रामादिकम्। न च सूत्रे इदं शब्दात् प्राक् आकारः प्रश्लिष्यतामिति वाच्यम्, भाष्यकैयटाद्यसम्मतत्वात् 'अस्यासि' इत्यादावतिप्रसङ्गाच्च। परिशिष्टे तु "आच्च गुणिनः" इति सूत्रितम्। गुणोऽस्त्यस्येति गुणी ग्रामीति व्याख्याय 'मुष्टामुष्टि' इत्युदाहृतं, तदपाणिनीयम्।

सरूपग्रहणं किम् ? हलैश्च मुसलैश्च युद्धम्। इदमपि सूत्रे वैयधिकरण्यार्थं प्रथमाविभक्त्यर्थं एकशेषबाधनार्थं च। कबभावार्थं चेति तु भाष्येऽभ्युच्चयमात्रं, शेषग्रहणस्य प्रागनुक्तपरतायाः पञ्चमे स्पष्टत्वात्।

(१) अस्य 'समसनम' इत्यादि।
(२) सर्वनामसंज्ञाविकल्पः।

तेन सहेति तुल्ययोगे (अष्टा०सू०२-२-२८) । सहेत्येतत्तुल्ययोगे वर्तमानं तृतीयान्तेन सह वा समस्यते स बहुव्रीहिः । सपुत्र आगतः। सह पुत्रः । "वोपसर्जनस्य" (अष्टा०सू०६-३-८२) इति सभावः । नन्वत्र पिता प्रधानमन्यपदार्थः । सत्यम् । व्यधिकरणयोः प्रथमार्थे च यथा स्यात्, कप् च मा भूदित्येवमर्थं वचनम् । तुल्ययोगेति किम् ?

सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ।

विद्यमानतावाची सहशब्दः । दशसु पुत्रेषु विद्यमानेष्वित्यर्थः । तुल्ययोगवचनं प्रायिकम्, ज्ञापकात् । यदयं "विभाषा साकाङ्क्षे" (अष्टा०सू०३-२-११४) "विभाषा सपूर्वस्य" (अष्टा०सू०४-१-३४) इत्यादि निर्दिशति । तेन 'स(१)कर्मकः' 'सलोमकः' इत्यादि सिद्धम् ।

चार्थे द्वन्द्वः । प्रागनुक्तसमासमनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते, स द्वन्द्वः । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः ।

परस्परनिरपेक्षस्यानेकस्यैकस्मिन्प्रति सम्बन्धिन्यन्वयः समुच्चयः । यथा "अहरहर्नयमानो गामश्वं पुरुषं पशुं वैवस्वतो न तृप्यति सुराया इव दुर्मदः" इति, अत्र नयतिक्रियायामेकस्यां गवादीनां समुच्चयः । गम्यमानत्वात्तु चशब्दस्याप्रयोगः ।

यदा तु एकस्य प्राधान्यमितरस्यानुषङ्गिकता तदाऽन्वाचयः । यथा भिक्षामट, गां चानयेति । अत्र हि अदर्शनाद्गामनानयन्नपि भिक्षामटत्येव । अनटस्तु भिक्षां न गामानयति । तथा अटन्नपि नान्विष्य गामानयति ।

मिलितानामन्वय इतरेतरयोगः ।

समूहः समाहारः । तत्र समुच्चयान्वाचययोर्न समासः, असामर्थ्यात् । एकार्थीभावे हि सति 'पुष्पवन्तौ पश्य' इत्यादाविव एकपदोपात्तौ मिलितावेव अन्वियातां, न तु प्रत्येकम् । ध(२)वखदिरौ वा(३)गृहपदम् ।

शेषः किम् ? नीलोत्पलम् । इह हि एकस्मिन्धर्मिणि अनेकधर्मसमुच्चयाद् द्वन्द्वः स्यात् । न चेष्टापत्तिः, पटुश्चासौ खञ्जश्चेत्यादावपि द्वन्द्वे सति "द्वन्द्वे घि" (अष्टा०सू०२-२-३२) इत्यादिनियमापत्तेः । "विशे-

(१) विद्यमानतावाची सहशब्दः । एवञ्चात्र कर्मादिसमानाधिकरणः सहशब्द इति तृतीयाया असम्भवेनानेन समासाप्राप्तौ "अनेकमन्यपदार्थे" इति समासः । अत एवात्र कप् सिद्ध इति बोध्यम् ।

(२) इतरेतरयोगे समासः ।

(३) समूहः समासार्थः ।

षणम्'' (अष्टा०सू०२-१-५७) इत्यादिना तत्पुरुषे तु काणखञ्जवन्नियमः सिध्यति । परं कार्यमिति पाठे चेदम् । एकसंज्ञाधिकारे तु विशेषविहितत्वात्तत्पुरुषसंज्ञैव भवति । सामानाधिकरण्याभावे तु द्वन्द्व एव । यथा प्रमाणप्रमेयेत्यादौ, साधर्म्यवैधर्म्याभ्यामित्यत्र च । न ह्यत्राभेदान्वयो विवक्षितः । यद्यपि सामान्यविशेषयोर्वाचनिको द्वन्द्वनिषेधस्तथाप्यनित्यः स इति त्यदाद्येकशेषसूत्र एवोपपादितम् ।

अनेकं किम् ? होतृपोतृनेष्टोद्गातारः । न ह्यत्र द्वयोर्द्वयोर्द्वन्द्वं कृत्वा पुनर्द्वन्द्वः कर्तुं शक्यः, होतृपोत्रोरप्यानङापत्तेः । 'वाक्त्वक्स्रग्दृषदम्'इत्यादौ त्वगादेरपि टजापत्तेश्च । न चोत्तरपदे नित्यसमासोपसंख्यानात्तथापि तदापत्तिः, सकृत्समुदाये प्रवृत्तस्य द्वन्द्वस्य एकाज्द्विर्वचनन्यायेनावयवे पुनरप्रवृत्तेः । उपसंख्यानस्यान्यथोपक्षयात् । न चैवं 'वाक्त्वचस्रग्दृषदः' 'होतापोतानेष्टोद्गातारः' इत्यादि न स्यादेवेति वाच्यम्, द्वयोर्द्वयोरेव सहविवक्षया द्वन्द्वे समुदाययोः पुनः सहविवक्षायां तदुपपत्तेः । पूर्वत्राप्यनेकग्रहणफलं दत्तमेव । तस्माद्यथायथं समासान्तपुंवद्भावस्वराऽऽनङां प्रवृत्तिरप्रवृत्तिश्चानेकग्रहणफलं स्थितम् ।

अनेकस्य चार्थे वृत्तिस्तु जहत्स्वार्थायां वृत्तौ मिलितस्यैव । पक्षान्तरे तु प्रत्येकम् । तदेतदुच्यते "युगपदधिकरणवचने द्वन्द्वः" इति । अधिकरणं वर्तिपदार्थः, तस्य युगपद्वचन इत्यर्थः । अत एव आङ्गश्च वाङ्गश्च कालिङ्गश्चेत्यत्र सहविवक्षायां तेनै(१)व बहुष्विति लुकि 'अङ्गवङ्गकलिङ्गाः' इति सिध्यतीति लुक्प्रकरणे भाष्ये एव स्पष्टम् । यत्त्विह सूत्रे "सेयं युगपदधिकरणवचनता दुःखा च दुरुपपादा च" इति भाष्ये उक्तम् । तस्यायमाशयः—अस्तु जहत्स्वार्थता, तथापि धवौ च खदिरौ चेत्यादिविग्रहोऽसङ्गतः, प्रक्रियादशायामपि प्रथमप्रवृत्तस्यैकवचनस्य त्यागायोगात् । अन्यथा षष्ठीतत्पुरुषादेरपि प्रथमयैव राजा चासौ पुरुषश्चेत्यादिविग्रहापत्तिः । "तत्पुरुषे तुल्यार्थ" (अष्टा०सू०६-२-२) इत्यादीनां निर्विषयतापत्तिश्च ।

स्यादेतत् । भूतपूर्वगत्या त(२)न्निर्वाहः, उत्तरपदार्थप्राधान्यादिवत् । अलुक्समासे तु "षष्ठ्या आक्रोशे" (अष्टा०सू०६-३-२१) इत्याद्यनुवादसामर्थ्यादेव निमित्तापायन्यायो नाश्रयिष्यते । मैवम्, ज्ञापकस्य सामान्यविषयतायां लाघवेन द्वन्द्वावयवेष्वपि द्विवचनाद्यलाभात् निमि-

---

(१) "तद्राजस्य बहुषु तेनैवास्त्रियाम्" इत्यनेनेत्यर्थः ।
(२) "तत्पुरुषे" इत्यादीनां निर्वाहः ।

त्तापायन्यायस्यानित्यत्वाच्च । न चैवं तद्रा(१)जलुगसिद्धिः । 'तेनैव' इति सौत्रमंशं 'बहुवचने परे' इति व्याख्यां च प्रत्याख्याय बहुषु वर्तमानस्येत्यर्थस्य स्थापयिष्यमाणत्वात् । अत एव जहत्स्वार्थायामपि लुक् सिध्यति । सम्प्रति प्रतीयमानं यद्बहुत्वं तदाश्रयस्य तद्राजेन प्रागभिधानात् भूतपूर्वगतेश्च त्वयापि वाच्यत्वात् । न हि तद्धितवृत्तौ एकशेषवृत्तौ च तद्राजोऽर्थवान् । तद्राजात्तद्राजद्वन्द्वे तु वैकल्पिको लुगिति वक्ष्यते । एवं स्थिते द्वन्द्वैकशेषयोरलौकिकवाक्येऽपि द्विवचनादि दुर्लभम् । लौकिके विग्रहे तु दूरापास्तं तदिति दुःखेत्यनेनोक्तम् । एतेन राजा चासौ पुरुषश्चेत्येव विगृह्णन्तो मीमांसकाः परास्ता इति दिक् ।

इह 'एकविंशतिः' 'द्वाविंशतिः' इत्यादौ "राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु" (अष्टा०सू०६-२-३४) "संख्या" (अष्टा०सू०६-२-३५) इति पूर्वपदप्रकृतिस्वर इष्टस्तस्मात् द्वन्द्व एवायम् । स च समाहारे । नेतरेतरयोगे, अनभिधानात् । पुंस्त्वन्तु लोकात् । यदा त्वेकाधिका विंशतिरिति शाकपार्थिवादिसमासः क्रियते, तदा समासान्तोदात्तत्वमपीष्यते इति पाश्चमिकभाष्ये "बहुव्रीहौ संख्येये डच्" (अष्टा०सू०५-४-७३) इत्यत्र स्थितम् ॥

उपसर्जनं पूर्वम् (अष्टा०सू०२-२-३०) ॥ समासे उपसर्जनं पूर्वं प्रयोज्यम् । कृष्णश्रितः ।

राजदन्तादिषु परम् (अष्टा०सू०२-२-३१) । एषु पूर्वप्रयोगार्हं परं स्यात् । दन्तानां राजा राजदन्तः । वनस्याग्रे अग्रेवणम् । "वनम्पुरगा" (अष्टा०सू०८-४-४) इत्यादिना णत्वम् । इहैव गणे निपातनादलुक् । एवञ्चालुगिव णत्वमप्यस्तु । तथा च तत्र सूत्रे अग्रग्रहणं शक्यमकर्तुम् । आकृतिगणोऽयम् । धर्मादिष्वनियम इष्यते । अर्थधर्मौ, धर्मार्थावित्यादि । गणमध्य एव जम्पतीदम्पतीजायापतीति पाठात् जायाशब्दस्य जम्भावो दम्भावश्च वा निपात्यते ।

द्वन्द्वे घि (अष्टा०सू०२-२-३२ । द्वन्द्वे घ्यन्तं प्राक् स्यात् । हरिहरौ । अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे (का०वा०) । हरिगुरुहराः । हरिहरगुरवः । हरश्च हरिगुरू चेति विग्रहे तु हरस्य पूर्वनिपातः, अल्पाच्तरत्वात् ।

अजाद्यदन्तम् ( अष्टा०सू०२-२-३३) । इदं द्वन्द्वे पूर्वं स्यात् । बहुष्वनियमः । अश्वरथेन्द्राः, इन्द्राश्वरथाः । घ्यन्तादजाद्यदन्तं विप्रति-

(१) 'अङ्गवङ्गकलिङ्गाः' इत्यत्र ।

षेधेन (का०वा०)। इन्द्राग्नी।

अल्पाच्तरम् (अष्टा०सू०२-२-३४)। अत एव निपातनात्स्वार्थे तरप् कुत्वचुत्वयोरभावश्च। द्वन्द्वे अल्पाच् पूर्वं स्यात्। धवखदिरौ। कथं तर्हि प्रासादे धनपतिरामकेशवानामिति। धनपतेश्च रामकेशवयोश्चेति विग्रहः। पूर्वाभ्यामल्पाच्तरं विप्रतिषेधेन (भा०इ०)। वागग्नी, वागिन्द्रौ। एवमग्रेऽपि। कथं तर्हि "अधीतिबोधाचरणप्रचारणैः" (नै०का०) इति। अधीत्या च बोधादिभिश्चेति विग्रहे भविष्यति। यद्वा, अनित्यमिदं प्रकरणं "लक्षणहेत्वोः क्रियायाः" (अष्टा०सू०३-२-१२६) "समुद्राभ्राद् घः" (अष्टा०सू०४-४-१२८) इत्यादिनिर्देशात्। तेन "स सौष्ठवौदार्यविशेषशालिनीम्" (कि०का०) "लोचनाधरकृताहृतरागा" इत्यादि सिद्धम्। ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण निपातो वक्तव्यः (का०वा०)। हेमन्तशिशिरवसन्ताः। कृत्तिकारोहिण्यौ। समाक्षराणां किम्? ग्रीष्मवसन्तौ। लघ्वक्षरं पूर्वम् (का०वा०)। कुशकाशम्। अभ्यर्हितञ्च। मातापितरौ। "वासुदेवार्जुनाभ्यां वुन्" (अष्टा०सू०४-३-९८) इति निर्देशेनेदं ज्ञाप्यते इतिचतुर्थे भाष्यम्। वर्णानामानुपूर्व्येण (का०वा०)। ब्राह्मणक्षत्रियविट्शूद्राः। भ्रातुश्च ज्यायसः (का०वा०)। युधिष्ठिरार्जुनौ। संख्याया अल्पीयस्याः (का०वा०)। एतच्च द्वन्द्वाद्वन्द्वविषयकम्। द्वित्राः। द्वाविंशतिः। "द्व्येकयोः" (अष्टा०सू०१-४-२२) इति तु सौत्रो निर्देशः।

सप्तमीविशेषणे बहुव्रीहौ (अष्टा०सू०२-२-३५)। सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं प्रयोक्तव्यम्। कण्ठेकालः। यदा कण्ठे किञ्चिदस्तीति निर्ज्ञाते काल इति विशेषणं तदेदं बोध्यम्। अन्यदा तु सप्तमीग्रहणं विनापि विशेषणत्वादेव सिद्धम्। सर्वनामसंख्ययोरुपसंख्यानम् (का०वा०)। सर्वश्वेतः। द्विशुक्लः। कथं तर्हि तः परो यस्मात्स तपर इति, कथं च जहत्स्वार्थेति? इह हि जहत् स्वं पदं यं स जहत्स्वः, सोऽर्थो यत्रेति बहुव्रीहिगर्भो बहुव्रीहिः। तथाच स्वपरशब्दयोः सर्वनामत्वात्पूर्वनिपातः स्यात्। सत्यम्, सूत्रभाष्यादिप्रयोगाद्राजदन्तत्वं बोध्यम्। मिथोऽनयोः समासे तु संख्यापूर्वे शब्दपरविप्रतिषेधात्। एतदर्थमेव हि संख्यासर्वनाम्नोरिति नोक्तम्। द्व्यन्यः। त्र्यन्यः। वा(१) प्रियस्य पूर्वत्वम् (का०वा०)। गुडप्रियः, प्रियगुडः। गड्वादेः परा सप्तमीष्टा (का०वा०)। गडुकण्ठः। क्वचिन्न-वहेगडुः। आकृतिगणोऽयम्।

---

(१) कौमुद्यां 'वा प्रियस्य' इत्येव पाठः।

निष्ठा (अष्टा०सू०२-२-३६)। निष्ठान्तं बहुव्रीहौ पूर्वं स्यात्। कृतकृत्यः। जातिकालसुखादिभ्यः परा निष्ठा बोध्या। "जातिकालसुखादिभ्योऽनाच्छादनात्" (अष्टा०सू०६-२-१७०) इति ज्ञापकात्। सारङ्गो जग्धोऽनया सारङ्गजग्धी। "क्तादल्पाख्यायाम्" (अष्टा०सू०४-१-५१) इत्यनुवर्तमाने "अस्वाङ्गपूर्वपदाद्वा" (अष्टा०सू०४-१-५३) इति ङीप्। मासजाता। सुखजाता। कथं तर्हि कृतकटः, पीतोदकः? गड्वादेरितिवत्प्राप्तबाधमात्रे तात्पर्यमिति वृत्तिकारः। कथं 'चारुस्मितम्' इति? "नपुंसके भावे क्तः" (अष्टा०सू०३-३-११४) इत्यस्य न पूर्वनिपातः, निष्ठाशब्दोपादानेन विहितस्यैवेह ग्रहणादित्याहुः।

वाहिताग्न्यादिषु (अष्टा०सू०२-२-३७)। एषु निष्ठान्तं वा पूर्वं स्यात्। आहिताग्निः। अग्न्याहितः। आकृतिगणोऽयम्। प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ वक्तव्ये (का०वा०। अस्युद्यतः। दण्डपाणिः। इहापि प्राप्तबाधमात्रं बोध्यम्। विवृतासिः।

कडाराः कर्मधारये (अष्टा०सू०२-२-३८)। कडारादयः शब्दाः कर्मधारये पूर्वं प्रयोज्याः। कडारजैमिनिः, जैमिनिकडारः। कडार, गडुल, काण, खञ्ज, कण्ड, खोड, खलति, गौर, वृक्ष, भिक्षुक, पिङ्ग, पिङ्गलतनु, जठर, बधिर, मठर, कुब्ज, बर्बर। कर्मधारये किम्? कडारपुरुषको ग्रामः।

इति श्रीशब्दकौस्तुभे द्वितीयाध्यायस्य द्वितीये पादे द्वितीयमान्हिकम्। पादश्चायं समाप्तः।

अनभिहिते (अष्टा०सू०२-३-१)। अधिकारोऽयम। तिङ्कृत्तद्धितसमासैरिति वक्तव्यम् (का०वा०)। तेन तिङाद्युक्ते कर्मणि द्वितीया न। तिङ्-सेव्यते हरिः। कृत्-कृतः कटः। तद्धितं-शतेन क्रीतः-शत्यः, शातिकः। "शताच्च ठन्यतावशते" (अष्टा०सू०५-१-२१) समासः-प्राप्तमुदकं यं प्रासादको ग्रामः। परिगणनं किम्? कटं करोति भीष्ममुदारम्। इह विशेष्यात्कटादुत्पन्नया द्वितीयया गतार्थत्वाद्विशेषणात् द्वितीया न स्यात्। परिगणनसामर्थ्यात्तु भवति।

स्यादेतत्। कटोपि कर्म भीष्मादयोऽपीति पक्षे सर्वेभ्यो द्वितीया उचितैव। अरुणैकहायनीन्यायेन हि पार्ष्णिकः परस्परावच्छेदः। अत एव हि 'सक्तुलवौ' इत्यादौ कारकपूर्वत्वप्रयुक्तो यण् सिध्यति। "पूरण गुण" (अष्टा०सू०२-२-११) इत्यत्र समानाधिकरणग्रहणाज्ज्ञापकात्। अभेदान्वयस्थले विशेष्यविभक्तिर्विशेषणादपि भवतीति पक्षेऽप्येवम्।

सकृल्लवाविति तु कारकेणाभेदेनान्वयवतो विशेषणस्यापि कारकत्वानपायात्समाधेयम्। तस्मान्नार्थः परिगणनेन। किञ्चानभिहिताधिकारेणापि नार्थः। नहि 'कटः कृतः' इत्यादावतिव्याप्तिः, क्तप्रत्ययेनैव कर्मत्वस्योक्तत्वात् उक्तार्थानामप्रयोगात्। तद्यथा 'बहुपटुः' इत्यादौ बहुचोक्तार्थत्वान्न कल्पबादयः। किं च 'कटं करोति' इत्यादौ सावकाशा द्वितीया 'कृतः कटः' इत्यादिषु प्रथमया बाधिष्यते, निरवकाशत्वात्। न च 'वृक्षः' 'प्लक्षः' इत्यादिरवकाशः, तत्रापि प्रतीयमानास्तिक्रियां प्रति कर्तृत्वेन तृतीयाप्रसङ्गात्। अथ नीलमिदं न तु रक्तमित्यादौ विशेषणान्तरनिवृत्तितात्पर्यकेऽव्यस्तिक्रियाया अनावश्यकत्वात् प्रथमाया अवकाशं ब्रूषे; तर्हि विप्रतिषेधात् प्रथमाऽस्तु। न च ततोऽपि परत्वात् षष्ठीप्रसङ्गः, अशेषत्वात्।

उच्यते, परिगणनं तावत्प्रत्याख्यातमेव भाष्ये। सूत्रं तु 'कर्तव्यः कटः' इत्यादिसिद्धये। इह हि प्रथमां बाधित्वा "कर्तृकर्मणोः कृति (अष्टा०सू० २-३-६५) इति षष्ठी स्यात्। न च कृत्येनोक्तार्थत्वान्नेह षष्ठीति वाच्यम्, संख्या विभक्त्यर्थ इति पक्षे सूत्रारम्भात्। कर्मणि यदेकत्वं तत्र कृद्योगे षष्ठ्येकवचनमिति हि वाक्यार्थः। तथाच षष्ठीवाच्यस्य कर्मैकत्वादेः कृत्येनानुक्तत्वाद् दुर्वारा षष्ठी। कारकं विभक्त्यर्थ इति पक्षे तु मास्तु सूत्रमिति स्थितम्।

आरब्धे तु सूत्रे पर्युदासोऽयं, न तु प्रसज्यप्रतिषेधः, असमर्थसमासापत्तेः वाक्यभेदापत्तेश्च। 'प्रासादे आस्ते' इत्यत्र सदिक्रियाया आसिक्रियायाश्चैकमाधिकरणं प्रासादाख्यं, तच्च सदेः परेण घञा अभिहितमिति सप्तमीनिषेधापत्तेश्च। पर्युदासे तु आसिक्रियानिरूपितमाधिकरणशक्तिमनभिहितामाश्रित्य सप्तमीविधिः प्रवर्त्तते। आसने आस्ते शयने शेते इत्यादौ तु ल्युटः प्रकृतिभ्यां क्रियोपस्थितौ तद्योग्यम् अनुद्भूतशक्तिकं वस्तुमात्रं कृता उच्यते। तस्य च वर्त्तमानेककर्तृकातिङ्प्रकृत्युपस्थाप्यक्रियानिरूपितशक्त्युद्भवप्रतिपादनाय सप्तमीति दिक्।

स्यादेतत्। यद्ययं पर्युदासस्तर्हि 'पक्त्वौदनो भुज्यते' इति न सिद्ध्येत्। भुजिप्रत्ययेनाभिहितेऽप्योदने क्त्वाप्रत्ययेनानभिधानमाश्रित्य द्वितीयापत्तेः। भावे हि क्त्वेति वक्ष्यते। प्रसज्यप्रतिषेधे तु भुजिप्रत्ययेनाभिधानमाश्रित्य प्रसज्यप्रतिषेधः सुवचः। किन्तु प्रागुक्तदोषानिस्तारः।

अत्रोच्यते। प्रधाननिरूपितशक्त्यभिधाने प्रथमैव, अभिहिते नेति प्रसज्यप्रतिषेधात्। 'आसने आस्ते' 'शयने शेते' इत्यत्र तु न प्रधानशक्तेरभिधानं; येन प्रथमा स्यात्। एतच्च "स्वादुमि णमुल्" (अष्टा०सू०

३-४-२६) इति सूत्रे कैयटादौ स्पष्टम् । हरिरप्याह--

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
यदा, गुणे तदा तद्वदनुक्तापि प्रतीयते ॥ इति ।

पर्युदासेऽप्यनभिहितां प्रधानशक्तिमाश्रित्यैव विधिः प्रवर्त्तते । एतेन 'पक्त्वा भुङ्क्ते' 'दत्तं गृह्णाति' इत्यादि पक्षद्वयेऽपि समर्थितं भवति । वस्तुतस्तु 'पक्त्वा भुज्यते' इत्यादौ ओदनस्य पचिभुजिभ्यां न युगपच्छाब्दोऽन्वयबोधः । किन्त्वन्यतरेण शाब्दः, अपरेणार्थः । तत्र च प्रथमाद्वितीययोर्व्यवस्थैव । पक्त्वा भुज्यते ओदनः । अर्थादोदनमेव पक्त्वेति । न ह्यष्टकाः पक्त्वेत्यादि सम्भवति । न चोपस्थितपरित्यागोऽनुपस्थितकल्पना च न्याय्या । ओदनं पक्त्वेति प्रयोगे तु भुज्यत इत्यत्रार्थी ओदनस्य कर्मता । अत एव 'घटं कर्तुं शक्यते' इत्यपि भवत्येवेति पस्पशायां कैयटः । तस्मात्पर्युदासे एकवाक्यत्वं समाससौष्ठवं चेत्येव । गुणरूपन्तु पक्षद्वयेऽपि तुल्यमिति स्थितम् । एतेन—

विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ।

इति व्याख्यातम् । साम्प्रतमिति निपातेनाभिहितत्वात् । युक्तमिति हि तदर्थः । परिगणनं तु प्रत्याख्यातमेव ।

इह हरदत्तेन भाट्टमते कारकविशिष्टा संख्या विभक्त्यर्थ इत्युक्तं तत्तु कर्त्रधिकरणस्थयथाश्रुतभाष्यस्वरसमनुसृत्य कथञ्चिन्नेयम् । वस्तुतस्तु भाट्टमते प्रकृत्यर्थेन संख्यया च करणत्वादिशक्त्यो विशेष्याः । अत एवैकशक्तिक्रोडीकृतानेकविधिस्तत्रतत्र स्वीकृत इति दिक् ॥

कर्मणि द्वितीया (अष्टा०सू०२-३-२) । द्वितीयादयः शब्दाः सुपां त्रिकेषु वर्त्तन्ते "समं स्यादश्रुतत्वात्" (जै०सू०१०-३-१३-१३) इति न्यायात् पूर्वाचार्यव्यवहाराच्च । इह स्वादिसूत्रेणैकवाक्यतया विधिः, भिन्नवाक्यतया नियमो वा । सोऽपि प्रकृत्यर्थानपेक्ष्य प्रत्ययनियमो वाऽर्थनियमो वेति सर्वे पक्षाः साधवः । उक्तं च--

सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम् ।
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु च ॥ इति ।

व्याख्यातं चेदं प्रथमे । इह च तिङामिति स्वरसात्सुप्स्वपि कर्माद्येव वाच्यं न तु कर्मत्वम् । न च तिङ्क्ष्वपि कर्मत्वमेवार्थ इति वाच्यं, "तयोरेव" (अष्टा०सू०३-४-७०) इत्युत्तरसूत्रेऽपि तथात्वापत्तौ 'घटः कृतः' इत्यादावभेदान्वयानुपपत्तिप्रसङ्गात् । तथा च "लः कर्मणि"

(अष्टा०सू०३-४-६९) "कर्मणि द्वितीया" (अष्टा०सू०२-३-२) इति सूत्रस्वरसोऽपि सङ्गच्छते । घटमित्यत्र च घटः कर्मेत्यभेदान्वये आनयनादौ कर्मत्वेन संसर्गेण विशेषणत्वम् । तथाच प्रकारतया संसर्गविधया चेति द्विधा कर्मत्वादिभानमित्येकः पक्षः। "शक्तिः कारकम्" इति भाष्यस्वरसात्सैव वाच्येत्यपरः । अनन्यलभ्यस्य शब्दार्थतया आधार आधेयं वा द्वितीयाऽर्थः । 'ओदनं पचति' इत्यत्र हि ओदनरूपो य आधारस्तद्विशिष्टा विक्लित्तिर्भासते । वैशिष्ट्यं त्वाधेयता । ओदनाधेया वा विक्लित्तिरर्थः, आधेयरूपप्रत्ययार्थस्य प्रकृत्यर्थं प्रति विशेष्यत्वात्। आधेयत्वमेव च संसर्ग इति पक्षान्तरम् । आकृत्यधिकरणन्यायेनाधारत्वाधेयत्वे पदार्थौ इति चापरम् । संसर्गा एवैते । तात्पर्यग्राहिका एव परं विभक्तय इति मतान्तरम् । सर्वेऽप्यमी पक्षा हेलाराजीयादौ तत्रतत्र स्थिता भाष्यादिसम्मताश्चेति दिक्। ओदनं पचतीत्यादौ ।

उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥

अस्यार्थः--उभयशब्दसर्वशब्दयोस्तसिलन्तयोः प्रयोगे द्वितीया कार्या । उभशब्देन ह्युभयशब्दो लक्ष्यते, अन्यथा तसिलसम्भवात् । उभशब्दो हि द्विवचनटाब्विषय इत्युक्तम् । धिगित्यत्र सप्तम्या लुक्, "प्रकृतिवदनुकरणम्" (प०भा० ) इत्यतिदेशात् । न त्वविभक्तिकः । 'गवित्ययमाह' इत्यत्र यथा पदान्तत्वाभावात् "लोपः शाकल्यस्य" (पा०सू०८-३-१९) इत्यस्याप्रवृत्तिस्तथेह जश्त्वाप्रवृत्तिप्रसङ्गात् । न चायं गान्त एवेति वाच्यम्, "कस्य च दः" (पा०सू०५-३-७२) इत्यस्याप्रवृत्तौ 'धकित्' इत्यस्यासिद्धिप्रसङ्गात् । आम्रेडितान्तेष्विति । कृतद्विर्वचनेष्वित्यर्थः । उभयतः कृष्णं गोपाः । सर्वतः कृष्णम् । धिक् कृष्णाभक्तम् । उपर्युपरि लोकं हरिः । अध्यधि लोकम् । अधोधो लोकम् । (१)कथं तर्हि—

उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः ?

उच्यते, उपरिबुद्धीनां उत्तानबुद्धीनामुपरि चरन्तीत्यर्थः । एवं चाम्रेडितान्तत्वाभावान्न द्वितीया । यद्वा, प्रतिपदोक्तस्य "उपर्यध्यधसः सामीप्ये" (पा०सू०८-१-७) इति कृतद्वित्वस्यात्र ग्रहणम् । तेन वीप्साद्विर्वचने सति नास्य प्रवृत्तिः । ततोऽन्यत्रापीत्युक्तम्, तान्परिगणयति वृत्तिकारः—अभितःपरितःसमयानिकषाहाप्रतियोगेऽपीति । अभितः

---

(१) कथं बुद्धीनामिति षष्ठी उपपदविभक्तेर्द्वितीयायाः षष्ठ्यपवादत्वादित्यर्थः।

कृष्णम्। उभयत इत्यर्थः । परितः कृष्णम् । सर्वत इत्यर्थः । "पर्यभिभ्यां च" (पा०सू०५-३-९) इति तसिल्। आभिमुख्यवृत्तिरपि विभक्तिप्रतिरूपको निपातोऽभितःशब्दोऽस्ति सोऽपीह गृह्यते । समयानिकषाशब्दौ समीपपर्यायौ । ग्रामं समया निकषा वा । हाशब्दः शोकवृत्तिः । हा कृष्णाभक्तम्, तस्य शोच्यते इत्यर्थः । षष्ठ्यपवादो द्वितीया । सम्बोधने त्वन्तरङ्गत्वात्प्रथमैव । हा तातेति यथा । एतेन धिङ्मूर्खेति प्रयोगो व्याख्यातः । बुभुक्षितं न प्रतिभाति किंचित् । एष प्रतिशब्दः क्रियाविशेषकत्वादुपसर्गो न तु कर्मप्रवचनीयः । एवमन्येऽपि द्वितीयाग्रहणात्साधनीयाः । तद्यथा, चैत्रं यावच्छीतमिति । परमपुरुषाराधनमृते इति च । तथा च चान्द्रसूत्रम्--"ऋते द्वितीयाच" इति, चकारात्पञ्चमी । सा चास्मच्छास्त्रे "अन्यारात्" (पा०सू०२-३-२९) इत्यनेन विधास्यते ॥

तृतीया च होश्छन्दसि (पा०सू०२-३-३) । जुहोतेः कर्मणि तृतीया स्याद् द्वितीया च छन्दसि । यवाग्वाग्निहोत्रं जुहोति । अग्निहोत्रशब्दोऽत्र हविषि वर्तते । "यस्याग्निहोत्रमधिश्रितम् अमेध्यमापद्यते" इत्यादिप्रयोगदर्शनात् । अग्नये हूयत इति व्युत्पत्तेश्च । जुहोतिः प्रक्षेपे । अस्मिन्नेव च प्रयोगे यवागूशब्दात्तृतीया, अग्निहोत्रशब्दाच्च द्वितीया । विरुद्धार्थकविभक्त्यनवरुद्धत्वान्नामार्थयोरभेदान्वयः । यवाग्वाख्यं हविरग्नौ देवतोद्देशेन त्यक्त्वा प्रक्षिपतीत्यर्थः । एतत्सूत्रं भाष्ये प्रत्याख्यातम् । अग्निहोत्रशब्दो हि ज्योतिष्यपि वर्तते, अग्निहोत्रं प्रज्वलितमिति दर्शनात् । हूयतेऽस्मिन्निति व्युत्पत्तेश्च । जुहोतिश्च प्रीणने । तद्यदा यवागूशब्दात्तृतीया तदा यवाग्वाग्निं प्रीणयतीत्यर्थः । यदा तु द्वितीया तदा यवाग्वाख्यमग्निहोत्रं हविर्द्रव्यं प्रक्षिपतीत्यर्थ इति ।

मीमांसकास्त्वाहुः—अग्निहोत्रशब्दः कर्मनामधेयम्, तत्प्रख्यं चान्यशास्त्रमिति न्यायात् । दृश्यते च स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासावित्यादि । एवं स्थिते भावार्थाधिकरणन्यायेन करणकोटिनिक्षिप्ते होमे सामानाधिकरण्यापन्नस्याग्निहोत्रस्य करणत्वान्तृतीयायां प्राप्तायां पक्षे द्वितीयार्थमिदं वचनमिति, तन्तु सूत्रसन्दर्भविरुद्धम् । कर्मणीति ह्यनुवर्तते ॥

अन्तरान्तरेण युक्ते (पा०सू०२-३-४) । आभ्यां योगे द्वितीया स्यात् । अन्तराशब्दः सप्तम्यन्तस्य मध्य इत्येतस्यार्थे वर्तते । अन्तरेणशब्दस्तु तत्र च विनार्थे च । अन्तरा त्वां मां च हरिः ।

मृणालसूत्रामलमन्तरेण स्थितश्चलच्चामरयोर्द्वयं स ।

अन्तरेण हरिं न सुखम् । ननु मध्यस्याऽवध्यपेक्षतया यथावधिभूताभ्यां युष्मदस्मदर्थाभ्यां चामरद्वयेन च योगस्तथा आधेयेनापि सह। तस्मादाधेयादपि द्वितीया स्यात् । मैवम् , तत्रान्तरङ्गतया प्रथमाया एवोत्पत्तेः । तस्माद्विशेषणादयं षष्ठ्यपवादभूता द्वितीया न तु विशेष्यादपीति स्थितम् ।

अथ टाबन्तेनान्तराशब्देन तृतीयान्तेनान्तरेणेत्यनेन च योगे कुतो नेति चेत् ? प्रतिपदोक्ततया तयोरेवेह ग्रहणात् परस्परसाहचर्याच्च। तद्यथा-गुरुभार्गवावित्युक्ते ग्रहयोरेव प्रतीतिर्नत्वाचार्यपरशुरामयोः । तेन किमनयोरन्तरेण गतेनेति सिद्धम् । किमनयोर्विशेषेण ज्ञातेनेत्यर्थः। युक्तग्रहणाच्चेह-अन्तरा त्वां मां च कृष्णस्य मूर्तिः । इह कृष्णान्न द्वितीया। अन्तरेत्यनेनानन्वयात् ।

कालाध्वनोरत्यन्तसंयोगे (पा० सू० २-३-५) । इह द्वितीया स्यात् । मासमास्ते । यद्यपीह कर्मत्वादेव सिद्धम् । कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणामित्युक्तेस्तथापि सकर्मकार्थं गुणद्रव्याभ्यां योगार्थं चेदम् । मासमधीते । मासं कल्याणी । मासं गुडधानाः । क्रोशमधीते । क्रोशं कुटिला नदी । क्रोशं पर्वतः । अत्यन्तसंयोगे किम् ? मासस्य द्विरधीते । "कृत्वोर्थप्रयोगे कालेऽधिकरणे" इति षष्ठी ।

अपवर्गे तृतीया (पा० सू० २-३-६)। अपवर्गः फलप्राप्तिस्तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात् । अह्ना क्रोशेन वाऽनुवाकोऽधीतः । अपवर्गे किम् ? मासमधीतो नायातः ।

सप्तमीपञ्चम्यौ कारकमध्ये (पा० सू० २-३-७)। शक्तिद्वयमध्ये यौ कालाध्वानौ ताभ्यां सप्तमीपञ्चम्यौ स्तः । अद्य भुक्त्वायं द्व्यहे द्व्यहाद्वा भोक्ता । कर्तृशक्त्योर्मध्येयं कालः । इहस्थोयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत् । कर्तृकर्मणोर्मध्येयं देशः । कालाध्वभ्यां विभक्त्योर्यथासंख्यं न भवति, अस्वरितत्वात् ।

कर्मप्रवचनीययुक्ते द्वितीया (पा० सू० २-३-८) । स्पष्टोऽर्थः । हरिं प्रति पर्यनु वा ।

यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी (पा० सू० २-३-९) । कर्मप्रवचनीययुक्ते इत्यनुवर्तते । यस्मादधिकं तदस्मिन्नधिकमिति च निर्देशादधिकशब्दयोगे पर्यायेण पञ्चमीसप्तम्यौ स्तः । प्रकृतसूत्रार्थस्तु यस्मादधिकं यस्य चेश्वरवचनं कर्मप्रवचनीययुक्ते तत्र सप्तमी स्यात् । उपपरार्द्धे हरेर्गुणाः, परार्द्धादधिका इत्यर्थः । ऐश्वर्ये तु स्वस्वामिनोः पर्यायेण सप्तमी । तथाहि, ईश्वर इत्युच्यते येन तदीश्वरवचनं ऐश्व-

र्थम् । अथवेश्वरशब्दो भावप्रधानः । यस्य स्वामिन ईश्वरत्वमुच्यते इत्यर्थः । अथवा यस्येति स्वं निर्दिश्यते यस्य स्वस्य ईश्वर उच्यते ततः स्वादित्यर्थः । पर्यायेण चेयं विभक्तिः शेषविषयकर्मप्रवचनीयविभक्त्या- स्मात् विशेषणादेवोत्पन्नया सप्तम्या द्विष्ठस्यापि सम्बन्धस्याभिधा- नात् । प्रत्ययार्थस्य प्रकृत्यर्थं प्रति विशेष्यतया विशेषणादेव प्रत्ययौचि- त्याच्च । विशेष्यात्तु प्रथमैव । अधिरामे भूः । "सप्तमी शौण्डैः (पा० सू० २-१-४०) इति समासपक्षे तु रामाधीनेति भवति । "अषडक्ष" (पा०सू० ५-४-७) इत्यादिना खः । विभक्त्यर्थवृत्तित्वे त्वव्ययीभावः । अधिरामम् । स्वाद्विभक्तौ अधिभुवि रामः । इह सूत्रे यस्यचेश्वरवचनमित्यंशः प्रत्या ख्यातो भाष्ये । तथाहि, स्वामिन्याधारे भूः स्थिता तस्यां च स्वामी तत्र यदा यदधिकरणत्वेन विवक्ष्यते तदा तत्र सप्तमी भविष्यति । एवं चा- धिरीश्वरे इति संज्ञासूत्रमपि न कर्तव्यम् । न चागत्युपसर्गत्वबाधार्थं तत् । ऐश्वर्यविषयस्य अधेः क्रियायोगाभावेनैव तदप्राप्तेः । उत्तरार्थ- मिति चेत्तर्हि योगविभागो न कार्यः ।

पञ्चम्यपाङ्परिभिः (पा० सू० २-३-१०) एतैः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात् । अपविष्णोः परिविष्णोः संसारः । अपेन साहचर्यात्परे- र्वर्जनार्थस्य ग्रहणम् । तेन लक्षणादिषु न भवति । वृक्षं परि विद्योतते विद्युत् । आङ्मर्यादावचने । आपाटलिपुत्राद्वृष्टो देवः ।

प्रतिनिधिप्रतिदाने च यस्मात् (पा० सू० २-३-११) । तत्र कर्मप्रव- चनीययुक्ते पञ्चमी स्यात् । प्रद्युम्नः कृष्णात्प्रति । तिलेभ्यः प्रतियच्छति माषान् । इह सूत्रे अनेनैव यस्मादिति पञ्चमी ।

गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि (पा० सू० २-३-१२) अध्वभिन्ने गत्यर्थानां कर्मणि एते स्तश्चेष्टायां सत्याम् । ग्रामं ग्रामाय वा गच्छति । गत्यर्थेति किम् ? ओदनं पचति । कर्मणीति किम ? अश्वेन व्रजति । चेष्टायां किम् ? मनसा हरिं व्रजति । अनध्वनीति किम ? पन्था- नं गच्छति । आस्थितप्रतिषेधो वक्तव्यः (का०वा०) । आस्थितः । सम्प्राप्तः । गन्त्रा अधिष्ठित इत्यर्थः । तेन यदा उत्पथात्पन्था एवाक्रमितुमिष्यते तदा भवत्येव चतुर्थी । उत्पथेन पथे गच्छति । 'अजान्नयति ग्रामम्' इत्यत्र तु न चतुर्थी, अगत्यर्थत्वात् । प्रतीयते ह्यत्र गतिः, न त्वसौ नयतेरर्थः, प्रापणवाचित्वात् । एवं स्त्रियं गच्छतीत्यत्रापि न चतुर्थी, असम्प्राप्तप्रे- क्षाभावात् । अनध्वनीति ह्यपनीय असम्प्राप्त इति पूर्यते । द्वितीयाग्रह- णमपवादविषयेऽपि यथा स्यात्, तेन कृद्योगलक्षणा षष्ठी न भवति । अन्यथा चतुर्थीत्येव ब्रूयादिति वदन् वृत्तिकारो ग्रामं गन्तेति तृजन्त-

योगे उदाजहार । इदन्तु भाष्यविरुद्धम् । तथाहि, सन्दर्शनादिभिराप्य- मानत्वात्क्रियापि कृत्रिमं कर्मेति क्रिययाभिप्रेयमाणस्य सम्प्रदानत्वं सिद्धम् । सन्दर्शनादीनां गमनस्य च भेदाविवक्षायां तु द्वितीयापि सिद्धेति सूत्रमिदं प्रत्याख्यातं भाष्ये । एवं हि वदता कृद्योगे षष्ठ्येवेष्यते । अत एव "अकेनोः" (पा० सू०२-३-७०) इति सूत्रे 'ग्रामं गामी'इत्युदाहृतं भाष्ये ।

चतुर्थी सम्प्रदाने (पा०सू०२-३-१३) । स्पष्टम् । विप्राय गां ददाति । तादर्थ्ये उपसंख्यानम् (का०वा०) । यूपाय दारु । इह दारुशब्दात् "हेतौ" (पा०सू०२-३-२३) इति तृतीया तु न भवति । षष्ठीविषये हि सा । प्रातिपदिकार्थमात्रे प्रथमैव । ननूपसंख्यानस्यावश्यकत्वे सूत्रं व्यर्थमेवेति चेत् ? न, हरये रोचते इत्याद्यर्थं तस्यावश्यकत्वात् । क्लृपि सम्पद्यमाने च (का० वा०) । विकारवाचकाच्चतुर्थीत्यर्थः । स हि सम्पद्यते प्रादुर्भवति । भक्तिर्ज्ञानाय कल्पते । प्रकृतिविकारयोर्भेदविवक्षायां चतुर्थी । अभेदविवक्षायान्तु प्रथमैव । भक्तिर्ज्ञानं कल्पते इति केचित् । अन्ये त्वभेदविवक्षायामपि चतुर्थीत्याहुः । जनिकर्तुरित्यपादानत्वाविवक्षायान्तु पञ्चमी । भक्तेर्ज्ञानं कल्पते इति । केचित्तु तत्रापि चतुर्थीमिच्छन्ति । उत्पातेन ज्ञापिते च (का० वा०) । प्राणिनां शुभाशुभयोः सूचको भूतविकार उत्पातः । वाताय कपिला विद्युत् । हितयोगे च (का० वा०) । चतुर्थीसमासविधानाज्ज्ञाप्यते । ब्राह्मणाय हितम् ।

क्रियार्थोपपदस्य च कर्मणि स्थानिनः (पा० सू० २-३-१४) । उपपदं कृत्रिमन्तच्च क्रियार्थक्रियारूपं तुमुन्ण्वुलोरेव सम्भवतीति विशेषणमहिम्ना विशेष्यन्तुमुन् ण्वुलन्तमेव लभ्यते । अप्रयुज्यमानस्य कर्मणि चतुर्थी स्यात् । फलेभ्यो याति, फलान्याहर्तुमित्यर्थः । स्थानिशब्दोऽप्रयुज्यमानपरतया वैयाकरणगृहे प्रसिद्धः ।

तुमर्थाच्च भाववचनात् (पा० सू० २-३-१५) । भाववचनाश्चेति सूत्रेण ये विहितास्तदन्ताच्चतुर्थी स्यात् । यागाय याति । पाकाय पचनाय भक्तये । भाववचनेनैव तादर्थ्यस्य द्योतितत्वात्तादर्थ्ये चतुर्थी न स्यादिति सूत्रारम्भः ।

नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च (पा० सू० २-३-१६) । एभिर्योगे चतुर्थी स्यात् । हरये नमः । उपपदविभक्तेः कारकविभक्तिर्बलीयसी, प्रधानभूतक्रियासम्बन्धस्यान्तरङ्गत्वात् । नमस्करोति देवान् । कथन्तर्हि- "नमश्चकार देवेभ्यः" इति, "रावणाय नमस्कुर्याः" इति च भट्टिः ? अत्र माधवः-साक्षात्प्रभृतिषु पाठाद्विकल्पिकं नमःशब्दस्य गतित्वम् । तत्र गति-

संज्ञापक्षे उपसर्गवद् द्योतकतया कृञ एव प्रणतिरर्थः । तत्कर्माणि द्वितीया नमस्यति देवानीतिवत् । अगतित्वे तु करोतिक्रियाकर्मभावापन्नं विशेष्यभूतं प्रणाममाचष्ट इति देवादावकर्माणि नमः स्वस्तीति चतुर्थ्यैवेति ।

अत्रेदं वक्तव्यम्-उक्तरीत्या चतुर्थीसमर्थनेऽपि नमसो गतिसंज्ञाभावान्नमस्पुरसोर्गत्योरिति सत्वं न स्यात् । तथा च प्रयोगानिर्वाहस्तदवस्थः। तस्मात् क्रियार्थोपपदस्यचेति चतुर्थी बोध्या,देवान् प्रसादयितुमित्यर्थात् । वर्धमानस्तु-"श्राद्धाय निगल्हते"इतिवत्क्रियाग्रहणं कर्तव्यमिति चतुर्थीत्याह । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । अलं मल्लो मल्लाय । अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि । कथन्तर्हि-"प्रभुर्बुभूषुर्भुवनत्रयस्य"(मा.का. १-४९)इति माघः ।उच्यते,पर्याप्त्यर्थस्यैवालमो ग्रहणं,न तु 'अलं रोदनेन' इत्यादौ वारणार्थस्यापीतिव्याख्यानान्तरं भाष्ये स्थितम् । एवञ्च व्याख्याभेदात्प्रभ्वादियोगे षष्ठ्यपि साधुः। अत एव सूत्रकारो द्वेधा निरदिक्षत् । तस्मै प्रभवति सन्तापादिभ्यः (पा०सू०५-१-१०१) सएषांग्रामणीः (पा०सू०५-२-७८)इति च । तथाच भट्टिः-"नाप्रोथीदस्य कश्चन पुप्रोथास्मै न कश्चन"इति ।प्रोथृ पर्याप्तौ(भ्वा०उ०८६७)इत्यस्य रूपम् ।'अलं रोदनेन' इत्यत्र तु करणे तृतीया, रोदनेन न किंचित्साध्यमित्यर्थावगमात् । वषडिन्द्राय ।चकारः पुनर्विधानार्थः । तेनाशीर्विवक्षायामपि षष्ठीं बाधित्वा चतुर्थ्येव भवति । स्वस्ति गोभ्यो भूयात् । अन्यथा स्वस्तियोगे चतुर्थ्या अवकाशः । स्वस्ति जाल्मायास्तीति। तत्त्वकथने कुशलार्थैराशिषीत्यस्यावकाशः स्वस्तिभिन्नाः कुशलार्थाः। उभयप्रसङ्गे परत्वात् पक्षे षष्ठी स्यात्

मन्यकर्मण्यनादरे विभाषाऽप्राणिषु (पा० सू० २-३-१७) । प्राणिवर्जे मन्यतेः कर्माणि चतुर्थी वा स्यात्तिरस्कारे । न त्वां तृणं मन्ये तृणाय वा । मन्यतिग्रहणं किम् ? न त्वां तृणं चिन्तयामि । श्यना निर्देशान्नेह-न त्वां तृणं मन्वे। मनु अवबोधने (त०आ०१४७०)। तनादेरुः । न च मन्येत यका निर्देशः किं नस्यादिति वाच्यम् , अनभिहिते इत्यधिकारात् । न हि यका योगे अनभिहितं कर्म सम्भवति । श्यन्नपि दैवादिकधातूपलक्षणमात्रं न तु स्वयं विवक्षितः । तेन—

तृणाय मत्वा रघुनन्दनोऽपि
बाणेन रक्षः प्रधनान्निरास्थत् ।

इति भट्टिप्रयोगः सङ्गच्छते । अनादरश्चात्र नादराभावमात्रमपि तु तिरस्कारः, कुत्सेति यावत् । अधर्मानृतादिवन्नञः प्रतिपक्षवाचि

त्वात् । स च द्वेधा–उत्कृष्टस्यापकृष्टेनोपमानात् । यथा तृणाय मत्वेति । तृणमिव मत्वेत्यर्थः । क्वचित्तु निषेधयोगेनोपमानायोग्यत्वप्रतीतेः । यथा–न त्वां तृणं मन्ये इति । तृणतुल्यमपि त्वां न मन्ये इत्यर्थः । इयांस्तु विशेषः अत्रात्यन्तमनादरः पूर्वत्र त्वनादरमात्रम् ! उभयत्रापि सूत्रेण सिद्धम ।

वार्त्तिककारस्त्वाह–प्रकृष्य कुत्सितग्रहणं कर्तव्यमिति । यद्वाचिनश्चतुर्थी ततोऽपि यदि कुत्सा न तु साम्यमात्रं तदा चतुर्थीत्यर्थः । एवञ्च प्रतिषेधयुक्तायामेव कुत्सायां चतुर्थीविधानात् प्रागुक्तभट्टिप्रयोगो विरुध्यते सूत्ररीत्या तु सः । तथा चापिशलिरपि मन्यकर्मण्यनादर उपमाने विभाषा, प्राणिष्वित्यसूत्रयत् । अप्राणिष्वित्यपनीय अनावादिष्विति पाठ्यमिति भाष्यम् । नौकाकान्नशुकशृगालाः नावादयः। (का०वा०) तेन न त्वां नावमन्नं वा मन्ये इत्यत्राप्राणित्वेऽपि चतुर्थी न । न त्वां शुने मन्ये इत्यत्र तु प्राणित्वेऽपि चतुर्थी भवत्येवेति दिक् । अनादरेति कर्मणो विशेषणम् । अनादरद्योतकं यत्कर्मेति । तेन तृणादेरेव चतुर्थी न तु युष्मदः, व्यवस्थितविभाषाविज्ञानाद्वा ।

इति श्रीशब्दकौस्तुभे द्वितीयस्याध्यायस्य तृतीयपादे प्रथममाह्निकम् ।

कर्तृकरणयोस्तृतीया (पा०सू०२-३-१८) । रामेण बाणेन हतो वाली । प्रकृत्यादिभ्य उपसङ्ख्यानम् (का०वा०) । प्रकृत्याभिरूपः । क्रियाया अश्रवणात् कर्तृकरणयोरभावात् षष्ठीह प्राप्ता । ननु गम्यमानकरोतिक्रियाकरणत्वात् सिद्धम् । करणान्तरव्युदासाय हि प्रकृतेरेव करणत्वं विवक्षितम् । स्वभावेनायमभिरूपः कृतो न त्वलङ्कारादिनेत्यर्थात् । इदन्तर्हि प्रायेण याज्ञिकाः । प्रायशब्दो बह्वर्थः । बहवो याज्ञिका इत्यर्थः । ननु याज्ञिकशब्दाभिधेयमध्ययनं प्रति बाहुल्यं करणम् । सङ्गीभूय यज्ञमधीयते इत्यर्थात् । यत्रापि विशिष्टवेषं कश्चिद् दृष्ट्वा प्रायेणायं याज्ञिक इत्यध्यवस्यति । तत्रापि गम्यमानज्ञानक्रियां प्रति करणत्वात् सिद्धम् । आचारादिबाहुल्येन याज्ञिकोऽयमिति ज्ञायते इत्यर्थात् । केचित्तु प्रायेणशब्दो विभक्तिप्रतिरूपको निपातो नूनमित्यर्थे वर्त्तते इत्याहुः । दृश्यते च प्रायेण सामग्र्यविधौ गुणानामिति । प्रायेण निष्क्रामति चक्रपाणाविति च । इदं तर्हि गोत्रेण गार्ग्यः, प्रथमा षष्ठी वा प्राप्नोति । नन्विहापि अनेनाहं ज्ञाये इत्यर्थात्सिद्धम् । इदन्तर्हि समेन विषमेणेति, अत्र समविषमाभ्यां द्वितीया प्राप्ता । ननु पथोऽपि गमकरणत्वात् समेन पथेत्यर्थोऽस्तु । इदं तर्हि द्विद्रोणेन धान्यं क्री-

णाति। पञ्चकेन पशून् गृण्हाति। द्वयोर्द्रोणयोः समाहार इति द्विद्रोणं पञ्चादिः। द्वौ द्रोणौ कृत्वेत्यर्थः। इह द्वितीया षष्ठी वा प्राप्ता। पञ्च परिमाणमस्य पञ्चकः सङ्घः। तत्र सङ्घसङ्घिनोरभेदविवक्षायां पशूनित्यनेन सामानाधिकरण्यात् द्वितीया प्राप्ता। एतदपि प्रत्याख्यातं भाष्ये। द्विद्रोणाद्यर्थे मूल्ये द्विद्रोणादिशब्दः तस्य च क्रयं प्रति करणत्वम्। द्विद्रोणादीनां च यन्मूल्यं तेन द्विद्रोणाद्येव क्रियते इत्यर्थभेदोऽपि नास्तीति।

सहयुक्तेऽप्रधाने (पा०सू०२-३-१९)। सहार्थेन युक्तेऽप्रधाने तृतीया स्यात्। पुत्रेण सहागतः पिता। पितुरत्र क्रियासम्बन्धः शाब्दः, पुत्रस्य तु आर्थ इति तस्याप्राधान्यम्। सहे ऽप्रधाने इत्येव वाच्ये युक्तग्रहणादर्थग्रहणम्। पुत्रेण सार्धम्। विनापि सहशब्देन तदर्थावगतौ स्यादेव, तथा च सौत्रप्रयोगः। "वृद्धोयूना" (पा०सू०१-२-६५) इति। प्रधानग्रहणं शक्यमकर्तुम्। न चैवं पितुरपि तृतीयापत्तिः। तत्र प्रातिपदिकमात्रापेक्षत्वादन्तरङ्गत्वेन प्रथमोपपत्तेः।

येनाङ्गविकारः (पा०सू०२-३-२०)। येन शरीरविकारो लक्ष्यते ततस्तृतीया स्यात्। अर्शआद्यजन्तः सूत्रे अङ्गशब्दः। तद्विकारलक्षकश्च प्रकृत्यर्थभूतोऽवयव एव गृह्यते, सन्निधानात्। स चार्थाद्विकृत एव न ह्यविकृतेनावयवेन शरीरस्य विकारः सम्भवति। तदेतदभिसन्धाय वृत्तावुक्तम्-येनाङ्गेन विकृतेनेत्यादि। अक्ष्णाकाणः। पादेन खञ्जः। पाणिना कुणिः। सामान्योपक्रमे वाक्ये अक्ष्णेत्युक्ते भवत्याकाङ्क्षा, निरूपयति वा काणो वेति। तत्र काण इत्यादिप्रयोगो न विरुध्यते। यद्यप्यक्ष्येव काणं तथापि तद्योगाच्छरीरेऽपि व्यवहारो निरूढः। षष्ठ्यपवादो योगः। अक्षिसम्बन्धिकाणत्ववानित्यर्थात्।

इत्थम्भूतलक्षणे (पा०सू०२-३-२१)। कञ्चित् प्रकारं प्राप्त इत्थम्भूतस्तल्लक्षणे तृतीया स्यात्। जटाभिस्तापसः। जटाज्ञाप्यतापसत्ववान्।

संज्ञोऽन्यतरस्यां कर्मणि (पा०सू०२-३-२२)। सम्पूर्वस्य जानातेः कर्मणि तृतीया वा स्यात्। पित्रा पितरं वा सञ्जानीते। "सम्प्रतिभ्यामनाध्याने" (पा०सू०१-३-४६) इति तङ्। कृद्योगे तु परत्वात्षष्ठी। पितुः सञ्ज्ञाता। यत्तु हरदत्तेनोक्तम्, आध्याने परत्वात् "अधीगर्थ" (पा०सू०२-३-५२) इति षष्ठी मातुः सञ्जानातीति। तन्न, तत्र शेषाधिकारात्। कर्मत्वविवक्षायां तृतीयाद्वितीययोरवश्याभ्युपेयत्वात्। भिन्नविषयया षष्ठ्या विप्रतिषेधस्यान्याय्यत्वाच्चेति दिक्।

हेतौ (पा०सू०२-३-२३)। हेत्वर्थे तृतीया स्यात्। धनेन कुलम्।

विद्यया यशः। हेतुरिह लौकिकः फलसाधनीभूतः, न तु तत्प्रयोजको हेतुश्चेति कृत्रिमः। तस्य चकारेण कर्तृसंज्ञाविधानात्कर्तृकरणयोरित्येव तृतीयायाः सिद्धत्वात्। न च लौकिकहेतोरपि करणत्वात्तुल्यो दोष इति वाच्यम्, लौकिकस्य द्रव्यादिसाधारण्यात् निर्व्यापारसाधारण्याच्च। करणस्य तु क्रियामात्रविषयत्वात् व्यापारनियतत्वाच्च। आह च—

द्रव्यादिविषयो हेतुः कारकं नियतक्रियम्। इति।

अनाश्रिते तु व्यापारे निमित्तं हेतुरुच्यते। इति च।

तथा फलमपीह हेतुशब्देन गृह्यते। अध्ययनेन वसति। इदञ्च "प्रत्ययः" (पा०सू०३-१-१) इति सूत्रे कैयटे स्पष्टम्।

अकर्तर्यृणे पञ्चमी (पा०सू०२-३-२४)। कर्तृवर्जितं यदृणं हेतुभूतं ततः पञ्चमी स्यात्। तृतीयापवादः। शताद्बद्धः। अकर्तरीति किम्? शतेन बन्धितः। शतमिह उत्तमर्णाय धार्यमाणत्वादृणन्तत्प्रयोजको हेतुश्चेति चकारेण कर्तृसंज्ञञ्च। ननु पूर्वसूत्रे लौकिकस्य हेतोर्ग्रहणमित्युक्तम्। अयन्तु शास्त्रीयः। सत्यम्, शास्त्रीयस्यापि लौकिकत्वमस्त्येव। व्यापकं हि लौकिकं न तु विरुद्धम्। अथ वा इहार्थतया पूर्वसूत्रेऽपि सामान्यग्रहणमस्तु।

विभाषा गुणेऽस्त्रियाम् (पा०सू०२-३-२५)। गुणहेतावस्त्रीलिङ्गे पञ्चमी वा स्यात्। जाड्याज्जाड्येन वा बद्धः। पाण्डित्यात्पाण्डित्येन वा मुक्तः। गुणे इति किम्? धनेन कुलम्। अस्त्रियां किम्? बुद्ध्या मुक्तः। इह सत्त्वे निविशतेऽपैतीति लक्षितो गुणो गृह्यते। तदनुरूपत्वादुदाहरणप्रत्युदाहरणयोः। इह "विभाषा" इति योगो विभज्यते। तेनागुणेऽपि क्वचिद्भवति, एवं स्त्रियामपि। एतच्च "हेतुमनुष्येभ्यः" (पा०सू०४-३-८१) इतिसूत्रे हरदत्तग्रन्थे स्पष्टम्। केचित्तु गुणशब्दोऽत्र परतन्त्रमात्रपरः। यस्य द्विगुणस्य भावादित्यत्र यथा। तेन वह्निमान्धूमादित्यादावपि पञ्चमी सिद्धेत्याहुः। कथन्तर्हि नास्तीह घटोनुपलब्धेरिति। अत्राहुः, स्त्रियामपि क्वचिद्भवति विभाषागुणे इतियोगविभागात्। बाहुलकं प्रकृतेस्तनुदृष्टेरिति वार्त्तिकप्रयोगश्चेह ज्ञापक इति।

षष्ठी हेतुप्रयोगे (पा०सू०२-३-२६)। हेतौ द्योत्ये षष्ठी स्यात्। अन्नस्य हेतोर्वसति।

सर्वनाम्नस्तृतीया च (पा०सू०२-३-२७)। सर्वनाम्नो हेतुशब्दस्य च प्रयोगे हेतौ द्योत्ये तृतीया स्यात् षष्ठी च। केन हेतुना वसति। कस्य हेतोः। निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम् (का०वा०)। किन्नि-

मित्तं वसति। केन निमित्तेन। कस्मै निमित्तायेत्यादि। एवं किं कारणम्। को हेतुः। किं प्रयोजनमित्यादि। असर्वनाम्न्यप्येतद्भवति, वृत्तिकारेणेऽग्रपाठ्यपि भाष्यकारेण "हेतौ" (पा०सू०२-३-२३) इत्यत्र पठितत्वात्। प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये नस्तः। अनेन कारणेन वसति। अन्नाय कारणायेत्यादि। वार्त्तिके पर्यायोपादानं प्रपञ्चार्थम्, प्रयोजनादिशब्दानुरोधेनार्थपरत्वस्वीकारात्।

अपादाने पञ्चमी (पा०सू०२-३-२८)। स्पष्टम्। ग्रामादागच्छति। ल्यब्लोपे कर्मण्यधिकरणे चोपसङ्ख्यानम् (का०वा०)। प्रासादात्प्रेक्षते। आसनात्प्रेक्षते, प्रासादमारुह्य आसने उपविश्य प्रेक्षत इत्यर्थः। गम्यमानापि क्रिया कारकविभक्तिनिमित्तम्, प्रविश पिण्डीतिवत्। तेन कुतोभवान्, पाटलिपुत्रादित्यादि सिद्धम्। इह हि प्रत्यक्षादिसिद्धमागमनमुपजीव्यावधावेव प्रश्नोत्तरे प्रवर्तते। एतेन "प्रश्नाख्यानयोश्च" इति वार्तिकं प्रत्याख्यातम्, अपेक्षितक्रियाया दानत्वेनैव सिद्धत्वात्। अन्यथा कश्चन्द्र इत्यादावतिव्याप्तेश्च। यतश्चाध्वकालनिर्माणं तत्र पञ्चमी। (का०वा०) तद्युक्तादध्वनः प्रथमासप्तम्यौ (का०वा०)। कालात्सप्तमी च वक्तव्या (का०वा०)। वनाद्ग्रामो योजने योजनं वा। कार्त्तिक्या आग्रहायणी मासे। कृत्तिकाभिर्युक्ता पौर्णमासी कार्त्तिकी। पौर्णमास्यां "लुबविशेषे" (पा०सू०४-२-४) इति लुङ् न भवति, "सास्मिन्पौर्णमासीति (पा०सू०४-२-२१) इत्यधिकारे "विभाषाफाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः" (पा०सू०४-२-२३) इति निर्देशात्। अग्रे हायनमस्या इति आग्रहायणी। प्रज्ञादेराकृतिगणत्वात् स्वार्थिकोऽण्, आग्रहायण्यश्वत्थादिनिपातनाणत्वम्। तद्युक्तादिति। तेन पञ्चम्यन्तेन अर्थद्वारेण युक्तात्काले वर्त्तमानान्मासादिशब्दादित्यर्थः। अत्र भाष्ये कार्त्तिक्याः प्रभृतीति प्रयोगात्प्रभृतियोगे पञ्चमीति कैयटः। प्रभृतीत्यर्थग्रहणम्, तत आरभ्येत्यर्थ इति कैयटात्। स्कन्धात्प्रभृत्येव सपल्लवानीति कुमारः।

अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते (पा०सू०२-३-२९)। एतैर्योगे पञ्चमी स्यात। अन्य इत्यर्थग्रहणम्। इतरग्रहणन्तु प्रपञ्चार्थम्। न च इतरस्त्वन्यनीचयोः (अ०को०३-३-२००) इत्यमरोक्तेर्नीचार्थकस्येदं ग्रहणमिति वाच्यम्, "अस्मात्तारो मन्दो वा" इत्यादाविव "पञ्चमीविभक्ते" (पा०सू०२-३-४२) इत्यनेनैव सिद्धत्वात्। देवदत्तादन्यो भिन्नो विलक्षणोऽर्थान्तरं वेत्यादि। न चैवं 'घटः पटो न' इत्यत्रातिप्रसङ्गः, नञोऽप्यन्योन्याभावार्थकत्वात। घटाद्भेद इत्याद्यनुरोधेन धर्मि-

पर्यन्तविवक्षाया अयोगादिति वाच्यम्, नञो द्योतकताया उक्तत्वात्। आरान्देवदत्तात्। इह "दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्" (पा०म्०२-३-३४) इति प्राप्तः। "आराद्दूरसमीपयोः" (अ०को०३-३-२५) "ऋते कृशानोर्न हि मन्त्रपूतम्"। अत्र ऋतेयोगे पाक्षिकी द्वितीयापीत्युक्त प्राक्। दिशि दृष्टः शब्दो दिक्शब्दः। तेन सम्प्रति देशकालवृत्ति-नाऽपि योगे भवति। ग्रामात्पूर्वो देशः। चैत्रात्पूर्वः फाल्गुनः। कथन्त-र्हि पूर्वं कायस्येति? उच्यते, अवयववाचिभिर्योगे न भवति "तस्य परमाम्रेडितम्" (पा०सू०८-१-२) इति निर्देशात्। अञ्चूत्तरपदस्य दिक्शब्दत्वेऽपि "षष्ठ्यतसर्थप्रत्ययेन" (पा०सू०२-३-३०) इत्येतद्बा-धनार्थं पृथग्ग्रहणम्। प्राक् प्रत्यग्वा ग्रामात्। न च तेन सध्र्यूङ्ङि-त्यादौ पञ्चम्यर्थं तत्किन्न स्यादिति वाच्यम्, दिक्शब्दसाहचर्येण प्रा-गादीनामेव ग्रहणात्। आच्—दक्षिणा ग्रामात् उत्तरा वा। आहि—दक्षिणाहि उत्तराहि ग्रामात्। "दक्षिणादाच्" (पा०सू०५-३-३६)। "आ-हि च दूरे (पा०सू०५-३-३७) "उत्तराच्च" (पा०सू०५-३-३८) इत्याजाहौ।

षष्ठ्यतसर्थप्रत्ययेन (पा०सू०२-३-३०)। एतद्योगे षष्ठी स्यात्। दक्षिणतो ग्रामस्य। उत्तरतः। "दक्षिणोत्तराभ्यामतसुच्" (पा०सू०५-३-२८)। एवं पुरःपुरस्तादुपर्युपरिष्टात्।

एनपा द्वितीया (पा०सू०२-३-३१)। एनबन्तेन योगे द्वितीया स्यात्। षष्ठ्यपीष्यते। सा तु 'एनपा' इति योगं विभज्य साधनीया। दक्षिणेन ग्रामं ग्रामस्य वा। एवमुत्तरेण। "एनबन्यतरस्यामदूरेपञ्चम्याः" (पा०सू०५-३-३५) इत्येनप्। कथन्तर्हि—

तत्रागारं धनपतिगृहादुत्तरेणास्मदीयम्।

"इत्यधिकारात्परेण वासरूपविधिर्नावश्यं भवतीत्यादि"। एनबपि परशब्दात्पाक्षिकः। यदा तद्विधौ "उत्तराधरदक्षिणात्" (पा०सू०५-३-३४) इति नानुवर्तते। सत्यम्, अत एव चिन्त्यमेवेदमिति हरदत्तः। उत्तरेणेति तृतीयैकवचनान्तं तोरणेनेत्यनेन समानाधिकरणमित्यन्ये। अपरे तु धनपतिगृहानिति शसन्तं पठन्ति।

—

पृथग्विनानानाभिस्तृतीयान्यतरस्याम् (पा०सू०२-३-३२)। अन्य तरस्यांग्रहणं समुच्चयार्थम्, निपातानामनेकार्थत्वात्। मण्डूकप्लुत्या पञ्चम्यनुवर्तते। एभिर्योगे तृतीयापञ्चम्यौ स्तः। वृत्तिकारस्त्वाह—'पृथग्विनानानाभिः' इति योगविभागाद् द्वितीयापीष्यत इति। पृथग्रा मेण रामाद्रामं वा। एवं विना नाना। "हिरुङ् नाना च वर्जने" (अ०को०३-४-३) इत्यमरः। "नानानारीर्निष्फला लोकयात्रा"। इति प्रयोगः।

करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य (पा०सू०२-३-३३)। अद्रव्यार्थेभ्य एभ्यः करणे तृतीयापञ्चम्यौ स्तः। स्तोकेन स्तोकाद्वा मुक्तः। असत्त्वेति किम्? स्तोकेन विषेण हतः।

दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् (पा०सू०२-३-३४)। एतैर्योगे षष्ठी स्यात्पञ्चमी च। "पृथग्विना" (पा०सू०२-३-३२) इत्यत्र पञ्चमी समुच्चीयते इत्युक्तम्। इहाप्येकप्रघट्टकत्वात्तथैवेति द्रष्टव्यम्। दूरमन्तिकं वा ग्रामस्य ग्रामाद्वा।

दूरान्तिकार्थेभ्यो द्वितीया च (पा०सू०२-३-३५)। एभ्यो द्वितीया स्याच्चकारात्पञ्चमीतृतीये। प्रातिपदिकार्थे विधिरयम्। ग्रामस्य दूरं दूराद् दूरेण वा। अन्तिकमन्तिकादन्तिकेन वा। उत्तरत्राप्येतदनुवृत्त्या तत्तद्विषयेऽपि द्वितीयादयः स्युः। तथा चाधिकरणेऽपि प्रयुज्यते—दूरादावसथान्मूत्रमिति। आवसथस्य दूरे इत्यर्थः। असत्त्ववचनग्रहणमनुवर्तते। तेनेह न—दूरः पन्थाः। दूराय पथे देहि। दूरस्य पथः स्वमिति।

सप्तम्यधिकरणे च (पा०सू०२-३-३६)। चकाराद् दूरान्तिकार्थेभ्यः। कटे आस्ते। दूरान्तिकार्थेभ्यः प्राग्विभक्तित्रयमुक्तम्। अनेन च सप्तमीति तेभ्यश्चतस्रो विभक्तयः फलिताः। क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम् (का०वा०)। इनिति इन्नन्तः शब्दः। विषयो वृत्तिभूमिर्यस्य क्तान्तस्य तस्येत्यर्थः। अधीती व्याकरणे। अधीतमनेनेति विग्रहः। "श्राद्धमनेन भुक्तम्" (पा०सू०५-२-८५) इत्यतोऽनेनेति वर्त्तमाने "इष्टादिभ्यश्च" (पा०सू०५-२-८८) इति सूत्रेण कर्त्तरीनिप्रत्ययः। ततस्तद्धितार्थेन सहैकार्थीभूतस्याधीतस्य निष्कृष्य व्याकरणादिना सम्बन्धाभावात्। क्तप्रत्ययेनानभिहितं व्याकरणम्। तत्र कृतपूर्वी कटमितिवद् द्वितीया प्राप्ता। गुणभूतयाऽपि हि अध्ययनक्रियया कर्मणः सम्बन्धो न विरुद्धः, "सहाधीतवान् व्याकरणम्" इत्यादौ यथा। आह च—

अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः।
क्रिया सम्बध्यते तद्वत् कृतपूर्व्यादिषु स्थिता॥ इति।

न विविच्य ग्रहो यस्याः सा अविग्रहा, गुणीभूतेत्यर्थः। ननु कालकर्मणोऽपि सप्तमी प्राप्नोति "मासमधीती व्याकरणे" इत्यादौ। मैवम्, तस्य बहिरङ्गत्वात्। न चैवं तत्र द्वितीयापि न स्यादिति वाच्यम्, तद्विधाने लक्ष्यानुरोधेन व्यक्तिपक्षस्याश्रयणात्। साध्वसाधुप्रयोगे च (का०वा०)। साधुः कृष्णो मातरि। असाधुर्मातुले। अत्र साधुत्वासाधु-

त्वयोर्मात्रादिविषयत्वेऽपि क्रियाया अभावेनाधिकरणत्वाभावाद्वचनम् । "साधुनिपुणाभ्याम्" (पा०सू०२-३-४३) इत्येव सिद्धे अनर्चार्थमत्र साधुग्रहणम् । तेन तत्त्वकथनेऽपि भवति । सूत्रे अर्चाग्रहणन्तु निपुणार्थम् । साधुग्रहणन्तु तत्र वार्त्तिकं दृष्ट्वा सूत्रस्याप्रवृत्तेरिति ध्येयम् । अर्हाणां कर्तृत्वे अनर्हाणामकर्तृत्वे तद्वैपरीत्ये च (का०वा०) । सत्सु तरत्सु असन्त आसते इत्यादि । यद्यपीदं "यस्य च भावेन" (पा०सू०२-३-३७) इत्येव सिद्धम् । तथापि लक्ष्यलक्षणभावाविवक्षायामपि यथा स्यादिति वचनमित्याहुः । निमित्तात्कर्मयोगे (का०वा०) । निमित्तमिह फलम् । तद्वाचिनः सप्तमी स्यात् । यदि तस्य कर्मणा सह योगो योगविशेषः संयोगसमवायात्मकः ।

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥

चर्मफलकं द्वीपिकर्मकं हननमित्यर्थः । अत्र हेतुतृतीया प्राप्ता । तत्र हि फलमपि हेतुशब्देन गृह्यते । "अध्ययनेन वसति" इत्यादिसिद्धये इति "प्रत्ययः" (पा०सू०३-१-१) इति सूत्रे कैयटे स्थितम् । अत्र द्वीपिचर्मणोः समवायः सम्बन्धः । चमरशब्दाज्जातिलक्षणो ङीष् । पुष्कलकः शङ्कुः । ससीम्नि सीमज्ञानार्थं हतो निहतः निखात इत्यर्थः । निहन्यमानेन शङ्कुना सह सीम्नः संयोगः सम्बन्ध इति हरदत्तादयः । दुर्गवाक्यप्रबोधे तु कुलचन्द्रस्त्वाह—सीमा अण्डकोशः । पुष्कलको गन्धमृगः । उक्तं च मेदिनीकोशे—

सीमा घाटस्थितिक्षेत्रेष्वण्डकोशेषु च स्त्रियाम् । इति ।
अथ पुष्कलको गन्धमृगे क्षपणकीलयोः । इति च ।

कर्मयोगे किम् ? वेतनेन धान्यं लुनाति ।

यस्य च भावेन भावलक्षणम् (पा०सू०२-३-३७) । यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात् । निर्ज्ञातकाला क्रिया अनिर्ज्ञातकालायाः क्रियायाः कालपरिच्छेदकत्वात् लक्षणमित्युच्यते । गोषु दुह्यमानासु गतः । एवं देशपरिच्छेदिकाऽपि सति गुणे द्रव्यत्वमस्ति ।

षष्ठी चानादरे (पा०सू०२-३-३८) । अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः । इह सूत्रे अनादरे इति पूर्वेण सत्सप्तमी । अनादरे सति यो भावं लक्षयतीति । तथा च तदाधिक्यं फलितम् । रुदति रुदतो वा प्राव्राजीत् । रुदन्तं पुत्रादिकमनादृत्य सन्न्यस्तवानित्यर्थः ।

स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च (पा०सू०२-३-३९)। एतैः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः। षष्ठ्यामेव प्राप्तायां पाक्षिकसप्तम्यर्थं वचनम्। गवां गोषु वा स्वामी, ईश्वरो वेत्यादि। दायमादत्ते इति दायादः, सोपसर्गाद्यत एव निपातनात्कः। गवामित्येतत्तु यद्यपि समुदायस्य विशेषणम्, तथापि दीयते इति दाय इति व्युत्पत्त्या अवयवार्थभूतमंशं स्पृशत्येव। तेन गवात्मकस्यांशस्यादातेति फलितोऽर्थः। गवां प्रसूतः, गा एवानुभवितुं जात इत्यर्थः।

आयुक्तकुशलाभ्यां चासेवायाम् (पा०सू२-३-४०)। आभ्यां योग षष्ठीसप्तम्यौ स्त आसेवायां गम्यमानायाम्। आसेवा तात्पर्यम्। आयुक्तो व्यापारितः। कुशलो निपुणः। आयुक्तः कुशलो वा हरिभजनस्य हरिभजने वा। आसेवायां किम्? आयुक्तो गौः शकटे, ईषद्युक्त इत्यर्थः।

यतश्च निर्द्धारणम् (पा०सू०२-३-४१)। जातिगुणक्रियासञ्ज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्द्धारणं, यतो निर्द्धारणं ततः षष्ठीसप्तम्यौ स्तः। नृणां नृषु वा ब्राह्मणः श्रेष्ठः। गवां गोषु वा कृष्णा बहुक्षीरा। गच्छतां गच्छत्सु वा धावन् शीघ्रः। अमीषां छात्राणां देवदत्तः पटुः।

पञ्चमी विभक्ते (पा०सू०२-३-४२)। विभागो विभक्तम्। निर्द्धार्यमाणस्य यत्र भेद एव न तु शब्दोपात्तसामान्यरूपाक्रान्तता, तत्र निर्द्धारणाश्रयात्पञ्चमी स्यात। माथुराः पाटलिपुत्रकेभ्य आढ्यतराः। न ह्यत्र गवां कृष्णा इत्यादिष्विव सामान्यविशेषभावः, किन्तु शब्दोपात्तधर्मयोर्विरोध एव। इदञ्च सूत्रं बुद्धिकल्पितमपायमाश्रित्यापादानप्रकरणे प्रत्याख्यातम्। आह च—

बुद्ध्या समीहितैकत्वात् पञ्चालान् कुरुभिर्यदा।
पुनर्विभजते वक्ता तदापायः प्रतीयते॥ इति।

साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः (पा०सू०२-३-४३)। आभ्यां योगे सप्तमी स्यादर्चायां गम्यमानायां, न तु प्रतेः प्रयोगे। मातरि साधुर्निपुणो वा। "पुण कर्मणि शुभे"(तु०प०१३३२) अस्मान्निपूर्वादिगुपधलक्षणः कः।"अर्च पूजायाम्"(भ्वा०प०२०४) अस्माच्चौरादिकाद्"गुरोश्च हलः" (पा०सू०३-३-१०३) इत्यप्रत्ययः। चौरादिकात्तु "ण्यासश्रन्थ" (पा०सू०३-३-१०७) इति युच् स्यात्। अर्चायां किम्? निपुणो राज्ञो भृत्यः। इह तत्त्वकथने तात्पर्यम्। साधुशब्दप्रयोगे त्वनर्चायामपि सप्तमी भवत्येव। साध्वसाधुप्रयोगे च (का०वा०) इति वार्त्तिकादिति

प्रागेवोक्तम्। अप्रत्यादिभिरिति वक्तव्यम् (का०वा०)। नेह-साधुर्निपुणो वा मातरम्प्रति पर्यनु वा।

प्रसितोत्सुकाभ्यां तृतीया च (पा०सू०२-३-४४)। आभ्यां योगे तृतीया स्याच्चात्सप्तमी। प्रसित उत्सुको वा हरिणा हरौ वा। "तत्परे प्रसितासक्तौ" (अ०को०३-१-७) इत्यमरः। उत्सुकसाहचर्यात्प्रसितोऽपि तत्पर एवेह गृह्यते। तेन प्रकर्षेण सितः शुक्ल इत्यर्थे न भवति।

नक्षत्रे च लुपि (पा०सू०२-३-४५)। नक्षत्रे प्रकृत्यर्थे सति यो लुप्संज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमानात्तृतीयासप्तम्यौ स्तोऽधिकरणेऽर्थे।

मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्।

मूले श्रवणे इति वा। "नक्षत्रेण युक्तः कालः" (पा०सू०४-२-३) इत्यणो "लुबविशेषे" (पा०सू०४-२-४) इति लुप्। अधिकरणे किम्? पुष्यः। पुष्यं प्रतीक्षते। पुष्याय स्पृहयति।

अत्र कश्चित्-सूत्रे पञ्चम्यर्थे सप्तम्यौ। लुबन्तान्नक्षत्रवाचिन इति व्याचख्युः। तेषां लुबन्तविशेषणान्न स्यात्। "उत्तराभ्यां फाल्गुनीभ्यां नोत्तराभ्यां गच्छेत्" इति यथेति हरदत्तः।

इति श्रीशब्दकौस्तुभे द्वितीयस्याध्यायस्य तृतीयपादे द्वितीयमाह्निकम्।

प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा (पा०सू०२-३-४६)। प्रातिपदिकार्थमात्रे लिङ्गमात्रादिषु च प्रथमा स्यात्। द्वन्द्वान्ते श्रूनत्वात्प्रत्येकं मात्रशब्दः सम्बध्यते। स चावधारणे। "मात्रं कात्स्न्येऽवधारणे" (अ०को०३-३-१८६) इत्यमरः। प्रातिपदिकार्थादीन्येव तन्मात्रमित्यस्वपदविग्रहः। "मयूरव्यंसकादयश्च" (पा०सू०२-१-७२) इति समासः। प्रातिपदिकार्थः सत्ता। उक्तं हि-"तस्यां सर्वे शब्दा व्यवस्थिताः" इति।

तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते। इति च।

उच्चैः। नीचैः। अत्र हि परिमाणविशेषोपहितं सत्तामात्रं प्रतीयत इत्याहुः। अन्ये तु नियतोपस्थितिकः प्रातिपदिकार्थ इत्याहुः। अस्मिन्पक्षे 'वृक्षः कुड्यं भित्तिः' इत्यादीनां नियतलिङ्गानां प्रातिपदिकार्थमात्रे प्रथमेत्येव सिद्धम्। लिङ्गमात्रे इति तु तटस्तटीतटमित्याद्यर्थम्। न ह्यत्र पुंस्त्वादि नियतोपस्थितिकम्। अतः लिङ्गमात्राधिक्येऽपि विधीयते। परिमाणमात्रे द्रोणो व्रीहिः। इह हि द्रोणलक्षणं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः। प्रकृत्यर्थस्य द्रोणस्य प्रत्ययार्थे परिमाणे

ऽभेदेन संसर्गेण विशेषणता, प्रत्ययार्थश्च। व्रीहिषु परिच्छेद्यपरिच्छेदकभावेन संसर्गेण विशेषणमिति बोध्यम्। वचनमात्रे-एकः द्वौ बहवः। वचनं सङ्ख्या, तथैव प्राचां व्यवहारात्। तत्र प्रकृत्या उक्तायामपि सङ्ख्यायां यथा स्यादित्येतदर्थमिदं वचनम्।

इह सूत्रे 'अर्थलिङ्गयोः प्रथमा'इत्येतावदेवावश्यकम्, इतरत्तु व्यर्थम्। तथाहि प्रातिपदिकग्रहणं तावद्व्यर्थम। ङ्याप् प्रातिपदिकाद्धि स्वादयो विधीयन्ते। तत्रार्थे इत्यपेक्षायां यस्मात्स्वादिविधिस्तदर्थ इति लभ्यत एव। परिमाणमप्यनर्थकम्, 'गौर्वाहीकः' इत्यादाविव मुख्यार्थमात्रे प्रथमायां सत्यां पदान्तरसमभिव्याहारेण गौणार्थप्रतीत्युपपत्तेः, वाहीके गोत्वस्येव व्रीह्यादौ द्रोणत्वादेरारोपसम्भवात्। एवं वचनग्रहणमपि व्यर्थम्, "न केवला प्रकृतिः प्रयोक्तव्या" इति "प्रत्ययः" (पा०सू०३-१-१) "परश्च"(पा०सू० ३-१-२) इति सूत्रे वक्ष्यमाणतया प्रत्ययस्यावश्यकत्वात्। अनन्वितवचनप्रयोगापेक्षया अनुवादकप्रयोगस्यैव न्याय्यत्वात्। मात्रग्रहणमपि व्यर्थम्, "सम्बोधने च" (पा०सू०२-३-४७) इति ज्ञापकेन कर्माद्याधिक्ये प्रथमाया अप्रवृत्तेः। ननु 'वीरः पुरुषः' इत्यादौ अभेदसंसर्गस्याधिकस्य भानात् प्रथमा न स्यादिति चेत्? न, संसर्गस्य वाक्यार्थत्वेन बहिरङ्गत्वात्प्रथमप्रवृत्तसंस्कारबाधानुपपत्तेः।

वार्त्तिककारस्त्वाह--अभिहिते प्रथमेति। 'वृक्षस्तिष्ठति' 'कृतः कटः' 'शत्यः' 'प्राप्तोदको ग्रामः' इत्यादौ तिङादिभिरभिहिते कर्त्रादौ प्रथमा भवतीत्यर्थः। एवञ्च 'वीरः पुरुषः' इत्यादौ सत्यव्याधिक्ये अभिहितत्वात् प्रथमा सिद्धेति। न च 'वृक्षः' 'प्लक्षः' इत्यादावव्याप्तिः, अस्तीत्यध्याहारात्।

अत्र भाष्यम्-अभिहितेनाभिहितेतिप्रसङ्ग इति। तथाहि, 'प्रासाद आस्ते' इत्यत्र सदिक्रियायाश्चासिक्रियायाश्चैकमधिकरणं प्रासादाख्यं तच्च सदेरुत्पन्नेन घञाभिहितम्। आसेर्लटा त्वनभिहितम्। तत्र सप्तमीं बाधित्वा परत्वात्प्रथमा स्यात्। अतिङ्समानाधिकरणे प्रथमेत्युच्येत। तदपि न, 'देवदत्तः पचति'इत्यादिषु तिङां दौर्लभ्यापत्तेः। तथाहि, देवदत्तः पच लट् इति स्थिते यावत्तिङो न कृतास्तावत्तिङसामानाधिकरण्याभावात् प्रथमैवेति नियमो न प्रवर्तेत। तथा च देवदत्तशब्दादविशेषोत्पन्नाः सर्वे स्वादयः सन्त्येवेति शतृशानचौ स्याताम। तन्निमित्तभूतस्याप्रथमान्तेन सामानाधिकरण्यस्य सत्वात्। तिङ्विधेस्तु लिङ्गादिष्ववकाशः। स एव प्रथम-

वेति नियमस्यापि "विदो लटो वा" (पा०सू०३-४-८३) इत्यादेस्तु विदि-मात्रप्रयोगे चरितार्थता। यथा "वेत्थ वेद" इत्यादि। स्थानिन्यपि मध्यमोत्तमयोर्विधानादर्थात्प्रकरणाद्वा निर्ज्ञातस्य प्रयोगानावश्यकत्वा च। पाक्षिकश्चायं दोषः। शत्रादिविधौ हि 'अप्रथमा' इत्यादिः पर्युदासः प्रसज्यप्रतिषेधो वेति द्वैतम,तत्र द्वितीये उक्तदोषस्यासङ्गतेः प्रथमाया अपि सत्वेन शत्रादिनिषेधसम्भवात्।

यत्तु भाष्ये पर्युदासपक्षे "विभक्तिनियमे दोषो न"इत्युक्तमातच्चिन्त्यम्, तत्र हि द्वितीया कर्मण्येवेत्यादि वचनव्यक्त्याश्रयणात्। देवदत्ते द्वितीया मा भूत्, षष्ठी तु स्यादेव। सा हि शेष एवेति नियम्यते। यत्र च वि-भक्त्यन्तरस्य नियमो न प्रवृत्तः स शेषः। ततश्च तिङः सामानाधिक-रण्यात् प्राक् शेषलक्षणषष्ठ्यां सत्यां दुर्वारौ शतृशानचाविति।

सम्बोधने च (पा०सू०२-३-४७)। इह प्रथमा स्यात्। हे राम।

सामन्त्रितम् (पा०सू०२-३-४८)। सम्बोधने या प्रथमा तदन्तं श-ब्दरूपमामन्त्रितसंज्ञं स्यात्। यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्र-हणं दुर्लभं, तथापि महासंज्ञाकरणाल्लभ्यते आमन्त्रणमामन्त्रितम्। अ-भेदोपचारात्तत्साधने शब्दे वृत्तिः। विभक्त्यन्तेन चामन्त्र्यते न तु के-वलया विभक्त्येति। संज्ञाप्रदेशाः, आमन्त्रितस्य चेत्यादयः। सेति किम्? प्रातिपदिकार्थसूत्रेणाऽपि या सम्बोधने प्रथमा तदन्तस्यापीयं संज्ञा यथा स्यात्। हे पचन्, हे पचमान। इह हि शतृशानचोः सम्बो-धने विधानादभिहितः सोऽर्थोऽन्तर्भूत इति पूर्वेणैव प्रथमा। यदि तु विभक्तिरहितयोस्तयोः कर्त्राद्यभिधान एव सामर्थ्यम्।यथा द्विर्वचनरहि-तस्य लोटः, तेनेहापि "सम्बोधने च" (पा०सू०२-३-४७) इति पक्षः। तदा सेति मास्तु, 'अनन्तरस्य विधिर्वा" इति प्रवृत्तेऽपि रूपनिष्पत्तेः।

एकवचनं सम्बुद्धिः (पा०सू०२-३-४९)। आमन्त्रितप्रथमाया यदेक-वचनं तत्संबुद्धिसंज्ञं स्यात्। हेपटो। "सम्बुद्धौ च" (पा०सू०७-३-१०६) इति वर्तमाने "ह्रस्वस्य गुणः" (पा०सू०७-३-१०८)। सु सम्बुद्धिरिति वाच्ये एकवचनग्रहणमेकोऽर्थं उच्यते, येन तावन्मात्रस्य प्रत्ययस्य संज्ञार्थम्। अन्यथा प्रक्रमाभेदाय तदन्तस्य स्यात्।

षष्ठी शेषे (पा०सू०२-३-५०)। कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः शेषस्तत्र षष्ठी स्यात्। राज्ञः पुरुषः। ननु प्रत्यय-नियमपक्षे शेष एवेत्यवधारणार्थमस्तु नाम शेषग्रहणम्। अर्थनियमपक्षे तु षष्ठ्याश्चान्यस्य च प्राप्तौ षष्ठ्येवेति नियमसम्भवात्किन्तेनेति चेत्? न, उत्तरार्थमवश्यकर्तव्यस्य शेषग्रहणस्य स्पष्टार्थमिहैव ग्रहणम्। न चा-

प्रधानार्थे शेषग्रहणम् । तेन द्वयोः पर्यायेण वा न स्यादिति वाच्यम्, प्रत्ययार्थस्य प्राधान्येनाप्रधानादेव षष्ठ्या न्याय्यत्वात् । अत्र कृत्यर्थे पुरुषं तु 'राज्ञः' इति षष्ठ्यर्थस्य विशेषणत्वमुचितमेवेति दिक् ।

ज्ञोऽविदर्थस्य करणे (पा०सू०२-३-५१) । जानातेरज्ञानार्थस्य करणे शेषत्वेन विवक्षिते षष्ठी स्यात् । समासनिवृत्त्यर्थमिदं प्रकरणमिति "न निर्धारणे" (पा०सू०२-२-१४)इति सूत्रे "प्रतिपदविधाना च" (का०वा०) इति वार्तिकस्य प्रत्याख्यानावसरे एवोपपादितम् । सर्पिषो ज्ञानम् । वस्तुतः करणीभूतं यत्सर्पिस्तत्सम्बन्धिनी प्रवृत्तिरित्यर्थः । ज्ञानपूर्विकायां प्रवृत्तौ जानातेर्लक्षणा ।

अधीगर्थदयेशां कर्मणि (पा०सू०२-३-५२) । एषां कर्मणि शेषे षष्ठी स्यात् । "इक् स्मरणे" (अ०प०१०४७) ककार इहैव विशेषणार्थः । अधिशब्दोच्चारणन्तु सामान्यापेक्षज्ञापकं "इङिकावध्युपसर्गं न व्यभिचरतः" इति । अत एव स्मृत्यर्थदयेषामिति नोक्तम् । सूत्रभङ्गपक्षेऽपि हि कित्वं कर्त्तव्यमेव "इणवदिक" (का०वा०) इत्यत्र विशेषणार्थम् । "एः" इत्युक्ते "कटीगतौ"(भ्वा०प०३२०) इत्यत्र प्रश्लिष्टस्यायतेर्ग्रहणापत्तेः । मातुः स्मरणम् । सर्पिषोदयनमीशनं वेत्यादिवृत्त्यादिग्रन्थेष्विह प्रकरणे उदाहरणं प्रत्युदाहरणञ्च । यद्यपि तिङन्तं दृश्यते, तथापि तत्सर्वमुपलक्षणतयाऽभियुक्तैर्व्याख्यातमेव ।

कृञः प्रतियत्ने (पा०सू०२-३-५३) । करोतेः कर्मणि शेषे षष्ठी स्यात् गुणाधाने । एधोदकस्योपस्करणम् । एधाश्चोदकञ्चेति विग्रहे "जातिरप्राणिनाम्" (पा०सू०२-४-६) इत्येकवद्भावः । "उपात्प्रतियत्न" (पा०सू०६-१-१३९) इत्यादिना सुट् ।

रुजार्थानां भाववचनानामज्वरेः (पा०सू०२-३-५४) । भावकर्तृकाणां ज्वरिवर्जितानां रुजार्थानां कर्मणि शेषे षष्ठी स्यात् । चौरस्य रोगस्य रुजा । रुजो भङ्गे (तु०प०१४१६) । भिदादिपाठात्प्रकृतसूत्रएव निपातनाद्वाङ् । रुजाशब्दो व्याधौ रूढः । सूत्रे भाववचनानामिति कर्तरि ल्युट् । प्रकृत्यर्थस्तु न विवक्षितः । तर्हि भावो वक्ता सम्भवति । तस्मात् प्रत्ययस्य साधुत्वनिर्वाहाय वचिर्बोध्यः । अज्वरिसन्ताप्योरिति वाच्यम् (का०वा०) । रोगस्य चौरज्वरः, चौरसन्तापो वा । रोगकर्तृकचौरसम्बन्धि ज्वरादिकमित्यर्थः । तपेर्हेतुमण्ण्यन्तादेरच् । इह समासो भवत्येव ।

आशिषि नाथः (पा०सू०२-३-५५) । आशीरर्थस्य नाथतः शेषे कर्मणि षष्ठी स्यात् । सर्पिषो नाथनम् । आशिषीति किम् ? माणवक-

नाथनम्, तत्सम्बन्धिनी याञ्चेत्यर्थः। यद्यपि कर्मत्वविवक्षायां "कर्तृकर्मणोः" (पा०सू०२-३-६५) इति यदा षष्ठी तदा समासो भवत्येव, तथापि तत्र कृदुत्तरपदप्रकृतिस्वरः। समासान्तोदात्तत्वं तु याञ्चादावेव न स्यादिशिषीति निष्कर्षः।

जासिनिप्रहणनाटक्राथपिषां हिंसायाम (पा०सू०२-३-५६)। हिंसार्थानामेषां शेषे कर्मणि षष्ठी स्यात्। जसु ताडने ( चु० प० १७१८ ) जसु हिंसायाम् (चु० उ० १६६८) इति च चुरादिः, तस्येदं ग्रहणं न तु दैवादिकस्य जसुमोक्षणे (दि०प० १२११) इत्यस्य। जासीति निर्देशात् हिंसायामिति वचनाच्च। चौरस्योज्जासनम्। निप्राभ्यामुपसृष्टो हनो निप्रहणः। "हन्तेरत्पूर्वस्य (पा०सू०८-४ २२) इति णत्वम्। निप्रौ संहतौ विपर्यस्तौ व्यस्तौ च। चौरस्य निप्रहणनं प्रणिहननं निहननं प्रहणनं वा। प्रणीत्यत्र "नेर्गद" (पा०सू०८-४-१७) इति णत्वम्। नट अवस्यन्दने ( चु० उ०१५४५ ) चुरादिः। नट नृत्तौ ( भ्वा० प० ७८१ ) इत्यस्य तु घटादेरग्रहणम्, दीर्घनिर्देशात्। चौरस्योन्नाटनम्। क्रथ हिंसायाम् (भ्वा०प०८१) इति घटादौ पठ्यते तस्येह निपातनाद्वृद्धिरिति वृत्तिकारः। अत एव "क्रथ हिंसायाम्" इति चुजादौ स्वरितेतं वदन्, देवस्तत्रैवानुदात्तेतं पठन्, शाकटायनश्च मतान्तरपरतया नीतो माधवादिभिः। चौरस्य क्राथनम्। मित्वन्तु "चिण्णमुलोः" ( पा० सू० ६-४-९३) इति दीर्घविकल्पार्थम्। अक्राथि अक्राथि। क्रथं क्रथम्। क्राथं क्राथम्। इह हि निपातनं बाधित्वा परत्वाद्दीर्घविकल्पः।

यत्तु न्यासकृतोक्तं क्राथीति विकृतनिर्देशात् मित्वेऽपि वृद्धिर्यत्र तत्रैव षष्ठी। चङन्ते तु वृद्ध्यभावात चोरमचिक्रथदिति। तन्मन्दम्, समासनिवृत्तये प्रकरणमिदमिति सिद्धान्तात् तिङन्तानामनुदाहरणत्वात् चङन्तेऽपि शेषषष्ठ्या दुरपह्नवत्वादिति माधवः। न च क्राथेरेव शेषे षष्ठी न तु ह्रस्वस्येति व्याख्यानात्प्रकरणं भित्वा प्रकृते तिङन्तमप्युदाहरणमस्त्विवति न्यासस्याशयो वाच्यः, एवमपि द्वितीयाया दुर्लभत्वात् प्रक्रमभेदे मानाभावाच्च। यद्यपि हरदत्तेनोक्तं घटादिपाठः " घटादयः षितः" ( ग० सू० ) इति आतिदेशिकषित्वे अङ् यथा स्यादित्येतदर्थं इति। तदपि मन्दम्, " घटादयः षितः" (ग०सू०) इति हि मध्ये सूत्रितम्। तेन पूर्वेषामेव षित्वं न तु परेषामपि, परश्चायमिति दिक्। वृषलस्य पेषणम्। हिंसायां किम्? धानापेषणम्। अन्तोदात्तः। शेष इत्यनुवृत्तेः कर्मत्वविवक्षायां द्वितीयैव। तथा च भट्टिः-"अघ्नो द्विजान्देवयजीन्निहन्मः" इति। "निजौजसोज्जा-

लयितुं जगदद्रूहाम् । (मा० का०१-३७) इति माघस्तु शेषत्वे बोध्यः ।

व्यवहृपणोः समर्थयोः (पा०सू०२-३-५७)। शेषे कर्मणि षष्ठी स्यात् । द्यूते क्रयविक्रयव्यवहारे चानयोस्तुल्यार्थता बोध्या । शतस्य व्यवहरणं पणनं वा । शतसम्बधी क्रयविक्रयरूपेण विनियोगो देवनं वेत्यर्थः । समर्थयोः किम् ? शलाकाव्यवहारः, गणनेत्यर्थः । ब्राह्मणपणनम्, स्तुतिरित्यर्थः । "आयादयआर्धधातुके वा" (पा०सू०३-१-३१) इति आयस्य विकल्पः ।

दिवस्तदर्थस्य (पा०सू०२-३-५८)। इह शेषे इति न सम्बध्यते, उत्तरसूत्रद्वयारम्भात् । पूर्वसूत्रएव दिवेः पाठे तदर्थस्येति न कर्तव्यमिति । यद्यपि लाघवं तथापि योगविभाग उत्तरार्थः, शेषासम्बन्धार्थश्च । व्यवहृपणिसमानार्थस्य दिवः कर्माणि षष्ठी स्यात् । इह त्रिसूत्र्यां तिङन्तमप्युदाहरणम् । शतस्य दीव्यति । तदर्थस्य किम् ? ब्राह्मणं दीव्यति।

विभाषोपसर्गे । (पा०सू०२-३-५९)। पूर्वयोगापवादः । शतस्य शतं वा प्रतिदीव्यति ।

द्वितीया ब्राह्मणे (पा०सू०२-३-६०)। ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि द्वितीया वा स्यात् । षष्ठ्यपवादः । गामस्य तदहः सभायां दीव्येयुः । सोपसर्गस्य छन्दसि व्यवस्थितविभाषयापि सिद्धे निरुपसर्गार्थं आरम्भः ।

प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने (पा०सू०२-३-६१)। इष्यतेर्दैवादिकस्य गत्यर्थस्य लोण्मध्यमपुरुषैकवचनं प्रेष्येति तत्साहचर्याद् ब्रुविरपि तथाभूतो गृह्यते । देवतासम्प्रदानं यस्यार्थस्य तत्र वर्तमानयोः प्रेष्यब्रूहीत्येतयोः कर्मणोर्हविर्विशेषस्य वाचकाच्छब्दात् षष्ठी स्यात् । अग्नये छागस्य हविषो वपाया मेदसः प्रेष्यानुब्रूहि वा । प्रेष्यब्रुवोः किम् ? अग्नये छागं हविर्वपामेदो जुहुधि । हविषः किम ? अग्नये गोमयानि प्रेष्य । देवतासम्प्रदाने किम ? माणवकाय पुरोडाशान्प्रेष्य ! हविषः प्रस्थितत्वेन विशेषणे प्रतिषेधो वक्तव्यः (का० वा०)। इन्द्राग्निभ्यां छागं हविर्वपामेदः प्रस्थितं प्रेष्य इह सूत्रे शेषग्रहणं न सम्बध्यते, तिङन्तेन समासस्याप्रसक्तत्वात् । इदञ्च भाषायामपि प्रवर्तते, उत्तरत्र छन्दोग्रहणात ।

चतुर्थ्यर्थे बहुलं छन्दसि (पा०सू०२-३-६२)। षष्ठी स्यात । पुरुषमृगश्चन्द्रमसे गोधाकालकादार्वाघाटस्ते वनस्पतीनाम्, वनस्पतिभ्य इत्यर्थः । बहुलग्रहणाच्चन्द्रमसश्चतुर्थी । षष्ठ्यर्थे चतुर्थीत्यपि वक्तव्यम् (का०वा०)। या खर्वेण पिबति तस्यै खर्वः । व्यत्ययवचनात्सिद्धम् ।

यजेश्च करणे (पा०सू०२-३-६३)। इह छन्दसि बहुलं षष्ठी स्यात्। घृतस्य घृतेन वा यजते।

कृत्वोर्थप्रयोगे कालेऽधिकरणे (पा०सू०२-३-६४)। इह षट्सूत्र्या विच्छिन्नमपि शेषग्रहणमनुवर्त्तते, उत्तरसूत्रे कर्मग्रहणात्। "कर्त्तरि च" (पा०सू०२-२-१६) इति हि नोक्तम्। शेषसम्बद्धं कर्मग्रहणं मानुवृत्तादिति प्राञ्चः। वस्तुतो व्याख्यानमेव शरणम्, सन्निहितस्याधिकरणस्य निवृत्तये वा कर्मग्रहणसम्भवात्। पञ्चकृत्वोऽह्नो भोजनम्। द्विरह्नो भोजनम्। शेषे किम? अन्यथा विधिरेवायं स्यात्। तथाच द्विरह्न्यधीत इति सप्तमी न स्यात्। षष्ठ्या बाधात्।

कर्तृकर्मणोः कृति (पा०सू०२-३-६५)। शेषे इति निवृत्तम्। कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात्। भवतः शायिका। अपां स्रष्टा। कर्तृकर्मणोः किम? शस्त्रेण भेत्ता।

स्यादेतत्, इह कर्तृकर्मभ्यां क्रिया आक्षिप्यते। तद्वाचीह धातुरेव। धातोश्च द्वये प्रत्ययाः-कृतास्तिङश्च। तत्र तिङः प्रयोगे "नलोक" (पा०सू०२-३-६९) इति प्रतिषेधेन भाव्यम्। ततश्च परिशेषात् कृद्योगएव षष्ठी भविष्यति तत् किं कृद्ग्रहणेन? मैवम्, तद्धितान्तस्य वारणीयत्वात्, यथा कृतपूर्वीकटमिति। ननु कृतः कटः पूर्वमनेनेत्यस्मिन्विग्रहे क्तस्य कर्मणि विधानात्तेनैव कर्मणोऽभिहितत्वात् द्वितीयया न भाव्यम्। एवं तदपवादभूतया षष्ठ्यापि, इहाप्यनभिहिताधिकारात्। किञ्च कृतशब्दस्य कटसापेक्षतया समासो दुर्लभः। एवं तद्धितोऽपीति चेत्? अत्रोक्तं हरिणा—

विशेषकर्मसम्बन्धे निर्भुक्तेऽपि कृतादिभिः।
विशेषनिरपेक्षोऽन्यः कृतशब्दः प्रवर्त्तते॥
अकर्मकत्वे सत्येवं क्तान्ते भावाभिधायिनि।
ततः क्रियावता कर्त्रा योगो भवति कर्मणाम्॥
अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः।
क्रिया सम्बध्यते तद्वत् कृतपूर्व्यादिषु स्थिता॥ इति॥

अस्यार्थः-कृतादिभिः शब्दैः कटादिसमभिव्याहारात् विशिष्टकर्मसम्बन्धे निष्कृष्य भुक्तेऽपि अनुभूतेऽपि कृतः पूर्वं कटोऽनेनेत्यवस्थायामिति भावः, तस्यामवस्थायां वृत्तिविरहात्। कर्मसामान्यवचनोऽन्य एव कृतशब्दः प्रवर्तते वृत्तिं लभते। अविवक्षितकर्मतायां नेह पच्यते इत्यादावपि कर्मसामान्ये प्रत्ययाभ्युपगमादिति भावः।

अविवक्षितकर्मणां भावे प्रत्यय इति मतान्तरमाह-अकर्मकत्व इति।

ननु कर्मसामान्ये भावे वा क्तप्रत्यये कृते सापेक्षत्वाभावात् "सुप्सुपा" इति समासे कृते "पूर्वादिनिः"(पा०सू०५-२-८६)"सपूर्वाच्च" (पा०सू०५-२-८७) इति कर्त्तरि इनिप्रत्ययोऽस्तु नाम। कटस्य तु प्रथमपक्षे केनाभिधानं दुर्वारम्। यथा शक्यञ्च "क्षुदुपहन्तुम" इत्यत्र क्षुधः कृत्यप्रत्ययेन। मैवम्, तद्धितार्थेनैकार्थीभूतस्य कृतशब्दार्थस्य निष्कृष्य कटेन सम्बन्धाभावात्।

तदेतदाह-ततः क्रियावतेति। नन्वेवं क्रिययापि योगाभावे कथं द्वितीयेत्याशङ्क्याह-अविग्रहेति। विशिष्य ग्रहो ग्रहणं तद्रहितापाधान्येनागृह्यमाणापीत्यर्थः। अयं भावः-गुणभूतयापि क्रियया कारकाणां सम्बन्धो दृश्यते, यथा कटं कृतवानिति। कृतपूर्वीशब्दश्चायं पूर्वं कृतमनेनेत्यस्मिन्नर्थे व्युत्पादितः। पूर्वं कृतवानित्यनेन समानार्थः सम्पद्यते। तत्र करोतिक्रियापेक्षमस्ति कटस्य कर्मत्वम्। अनभिहितश्च तत्। अतोऽसति कृद्ग्रहणे षष्ठी स्यादेवेति स्थितम्।

स्यादेतत्, ओदनः पच्यतेतमां, "गुरुर्धरित्री क्रियतेतरान्त्वया" (मा०कां०) इत्यादावपि ओदने धरित्र्यादेः कर्मणः क्रिययैव योगाद् द्वितीयैव स्यात्। क्रियाविशेषणीभूतेन लकारार्थेन कर्मान्वयश्चेत् कार्थेनाप्यस्तु। क्रियायाः कारकेष्विव शक्तेरपि शक्तिमत्युत्थिताकाङ्क्षत्वाविशेषात्। किञ्चास्तु नाम कथञ्चित् स्वार्थपरित्यागेन वृत्तिः, राजपुरुषादौ सङ्ख्याविशेषस्य मासजातादौ गुणप्रधानभावादेश्च बहुशस्त्यागदर्शनात्। तथापि कृद्ग्रहणं व्यर्थमेव, "नलोक" (पा०सू०२-३-६९) इति निष्ठायोगे निषेधसिद्धेः। निष्ठान्तधातूपात्तक्रियायोगे न भवतीति हि तदर्थः। 'ग्रामं गतवान्' इत्यादावपि कारकाणां क्रिययैवान्वयात्। न च 'पाचयति यज्ञदत्तो देवदत्तेन' इत्यत्र णिच्प्रकृत्यर्थं प्रति कर्तुः प्रयोज्यात्षष्ठीं वारयितुं कृद्ग्रहणम्। णिच् तु न कृदिति वाच्यम्, लयोगे नेत्येव निषेधसिद्धेः। लप्रकृत्या लान्तपदेन वा या क्रियोपात्ता तद्योगे नेत्यर्थात्। सा च क्रिया गुणभूता प्रधानभूता वेत्यत्र नाग्रहः। गौणमुख्यन्यायस्तु नाश्रीयते, लक्ष्यानुरोधात् स्वरितेनाधिकः कार इति व्याख्यानाच्च। अत एव तत्र तृतीया लभ्यते। 'भेदिका देवदत्तस्य' 'यज्ञदत्तस्य काष्ठानाम्" इत्यत्रोभाभ्यां कर्तृभ्यां षष्ठ्युच्यत एव। तस्माद्व्यर्थं कृद्ग्रहणमिति।

अत्राहुः, कृत्येव यथा स्यात्तद्धिताधिक्ये मा भूदिति कृद्ग्रहणम्। व्याकरणं प्राज्ञः। "प्रज्ञादिभ्यश्च" (पा०सू०५-४-३८) इति स्वार्थेऽण्। एवञ्च वदतां मते 'ओदनस्य पाचकतमः'

इत्यत्रापि षष्ठी नेति लभ्यते। कृतपूर्वीतिवत्कर्तव्यपूर्वीत्यादेरभ्युपगमे तु तव्यदाद्यन्तेन समासादिनौ कृते कृद्ग्रहणव्यावर्त्यताऽपि सम्भवति। भाष्यं त्विहोदासीनमेवेत्यभियुक्तप्रयोगा अन्वेषणीयाः। "यन्तर्हि धयै रामोदमुत्तमम्" इति भट्टिः। उच्यते, अनित्येयं षष्ठी, तदर्हमिति निर्देशात्। द्विकर्मकेभ्यस्तु कर्तरि कृति कृते प्रधाने नियताषष्ठी, गुणे तूभयथा भवेदित्यकथितसूत्रे एवोक्तम्।

उभयप्राप्तौ कर्मणि (पा०सू०२-३-६६)। उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी स्यात्। आश्चर्यो गवां दोहोऽगोपेन। अकाकारयोः प्रयोगे प्रतिषेधो नेति वक्तव्यम् (का०वा०)। भेदिका बिभित्सा वा रुद्रस्य जगतः। कथन्तर्हि क्तिना बाधा न भवतीति, "स्थागापापचोभावे" (पा०सू०३-३-९५) इति सूत्रे वृत्तिः। तथा लुटा लीयुटो बाधा न भवतीति, "लुट्तिथोः" (पा०सू०३-४-१०७) इत्यत्र वृत्तः। अत्र रक्षितः-अप्रत्ययादित्यकारप्रत्ययस्येह ग्रहणम्, प्राथम्यात्। बाधाशब्दे तु "गुरोश्च हलः" (पा०सू०३-३-१०३) इत्यकार इत्याह करणत्वविवक्षायां तृतीयेति वा बोध्यम्। शेषे विभाषा (का०वा०)। स्त्रीप्रत्ययविषयमेवेदमित्येके। विचित्रा सूत्रस्य कृतिः पाणिनेः पाणिनिना वा। केचिदविशेषेण विभाषामिच्छन्ति। शब्दानामनुशासनमाचार्येणाचार्यस्य वा।

क्तस्य च वर्तमाने (पा०सू०२-३-६७)। वर्तमानार्थक्तस्य योगे षष्ठी स्यात्। "नलोक" (पा०सू०२-३-६९) इति निषेधस्यापवादः। राज्ञां मतो बुद्धः पूजितो वा। "मतिबुद्धिपूजार्थेभ्यश्च" (पा०सू०३-२-१८८) इति वर्तमाने क्तः। कथन्तर्हि नपुंसके भावे क्तस्य योगे षष्ठी, 'छात्रस्य हसितम्' इति शेषविज्ञानात्सिद्धम्। कर्तृत्वविवक्षायां तृतीयैव, 'छात्रेण हसितम्' इति।

अधिकरणवाचिनश्च (पा०सू०२-३-६८)। क्तस्य योगे षष्ठी स्यात्। इदमेषां शयितम्। इह कर्तरि षष्ठी। सकर्मकेभ्यस्त्वधिकरणे क्ते कृते कर्तृकर्मणोर्द्वयोरपि षष्ठी, अनभिहितत्वाविशेषात्। इदमेषां भुक्तमोदनस्य। "उभयप्राप्तौ कर्मणि" इत्ययं तु नियमः "कर्तृकर्मणोः कृति" इत्यस्या एव प्राप्तेः। इह गत्यर्थेषु धातुष्वयं भवति। इदमेषां गतमित्यधिकरणे। इदमेते गता इति कर्तरि। इदमेभिर्गतमिति कर्मणि। इहैभिर्गतमिति नपुंसके भावे। कर्तृविवक्षाया इदमेषां गतमिति तत्रैव शेषविवक्षायाम्।

नलोकाव्ययनिष्ठाखलर्थतृनाम् (पा०सू०२-३-६९)। जिघृक्षिततरूपविनाशप्रसङ्गात् तृनामिति णत्वं न कृतम्। एषां प्रयोगे षष्ठी न स्यात्

"कर्तृकर्मणोः कृति" (पा०सू०२-३-६५) इति प्राप्ता प्रतिषिध्यते। ला-देशाः-ओदनं पचन् पचमानः पेचानः पेचिवान्। कथन्तर्हि-"बभ्रिर्वज्रं" "पपिः सोमं" "ददिर्गाः" इति। नहि किकिनौ लकारौ नापि तदादेशौ। नैष दोषः, "किकिनौ लिट् च" (पा०सू०वा०३-२-१७१) इत्यनेन लिट्कार्यातिदेशः क्रियते, न तु लिट्संज्ञा। "विशेषातिदेशे च सामान्यमप्यतिदिश्यते" इति। उ--कटं चिकीर्षुः। कन्यामलङ्करिष्णुः। उक--वाराणसीमागामुकः। कमेर्भाषायामनिषेधः (का०वा०)। लक्ष्म्याः कामुकः। अव्यये—कटं कृत्वा। तोसुन्कसुनोरप्रतिषेधः (का०वा०)। पुरा सूर्यस्योदेतोराधेयः। पुरा क्रूरस्य विसृपोविरप्शिन्। निष्ठा--ओदनं भुक्तवान्। देवदत्तेन कृतम्। खलर्थ-त्वया सुकरम्। ईषत्पानः सोमो भवता। तृन्निति प्रत्याहारः, "शतृशानचौ" इत्यारभ्य तृनो नकारात्। तेन शानन्प्रभृतीनामपि ग्रहणम्। सोमं पवमानः। "पूङ्यजोः शानन्" (पा०सू०३-२-१२८)। नटमाघ्नानः। "ताच्छील्यादिषु चानश्" अधीयन् पारायणम्। "इङ्धार्योः" (पा०सू०३-२-१३०) इति शता। तृन्, पाता सुतमिन्द्रो अस्तु सोमम्। द्विषः शतुर्वा। मुरस्य मुरं वा द्विषन्। सर्वत्र कारकषष्ठ्याः प्रतिषेधः। शेषे षष्ठी तु स्यादेव। ब्राह्मणस्य कुर्वन्। सत्यानुरक्ता नरकस्य जिष्णवः। छात्रस्य हसितम्। जनिकर्तुरित्यादि।

इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः।
अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम्।

(कि०का०२-२) इति च।

यद्वा, "इक्ष्वाकूणां सिद्धयः" इत्यन्वयो न तु "इक्ष्वाकूणां दुरापे" इति। तथा "वागधिपस्य विस्मयम्" इत्यन्वयो न तु "वागधिपस्य दुर्वचम्" इति दिक्। इह उश्च उकश्च ऊकाविति व्युत्पाद्य लश्च ऊकौ चेति विग्रहीतव्यम्। ऊकारेण च कृतो विशेषणात्तदन्तविधिः। व्यपदेशिवद्भावात्केवलेनापि निषेधः।

अकेनोर्भविष्यदाधमर्ण्ययोः (पा०सू०२-३-७०)। भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थे नश्च योगे षष्ठी न स्यात्। एधानाहारको व्रजति। व्रजङ्गामी। द्वितीयासमासप्रसङ्गे व्युत्पादितमेतत्। आधमर्ण्ये-शतं दायी। भविष्यदिति स्वर्यते। तेन भविष्यदधिकारविहितस्य ग्रहणान्नेह-वर्षशतस्य पूरकः। पुत्रपौत्राणां दर्शकः। अयं हि, "ण्वुल्तृचौ" (पा०सू०३-१-१३३) इत्यविशेषेण विहितो न तु "तुमुण्ण्वुलौ" (पा०सू०३-३-१०) इतिवद्भविष्यदधिकारस्थः। इह यथासंख्यं वारयितुं भाष्ये

योगो विभक्तः। अकस्य भविष्यति, इत आधमर्ण्ये चेति।

कृत्यानां कर्त्तरि वा (पा०सू०२-३-७१)। षष्ठी वा स्यात्। "कर्तृकर्मणोःकृति" (पा०सू०२-३-६५) इति नित्यं प्राप्ते विभाषेयम्। कर्तव्यमिदं कृष्णेन कृष्णस्य वा। कर्त्तरीति किम्? गेयो माणवकः साम्नाम्। "भव्यगेय" (पा०सू०३-४-६८) इति कर्तरि यद्विधानादनभिहितं कर्म। इहापि भाष्ये योगविभागः कृतः। तद्यथा—कृत्यानाम्। उभयप्राप्तौ नेत्यनुवर्तते। नेतव्या व्रजं गावः कृष्णेन। इह प्रधाने कर्मणि गवाख्ये कृत्यः, अप्रधानकर्मणः कर्तुश्च। कृत्येनानभिधानात्षष्ठी प्राप्ता निषिध्यते। ततः कर्तरि वा॥ षष्ठी स्यात्। अन्यत्सर्वं निवृत्तम्।

तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् (पा०सू०२-३-७२)। तुल्यार्थैर्योगे तृतीया वा स्याच्छेषे, पक्षे षष्ठी। तुल्यः सदृशः समो वा कृष्णेन कृष्णस्य वा। अतुलोपमाभ्यां किम्? तुला उपमा वा कृष्णस्य नास्ति। कथन्तर्हि "तुलां यदा रोहति दन्तवाससा" इति कालिदासः। "स्फुटोपमं भूतिसितेन शम्भुना"(मा०का०१-४) इति माघश्च।

अत्राहुः, तोलनं तुला। अस्मिन्नेव सूत्रे "तिलुगङ्कोः" निपातनात्साधुरिति माधवः। उपमितिरुपमा। तत्र धात्वर्थं प्रति करणीभूतयोः दन्तवासःशम्भुशब्दयोस्तृतीया युक्तैव। यथा-उपमीयतेऽनेनेत्यादौ। प्रकृतसूत्रं तु शेषे षष्ठ्यपवादभूततृतीयाविधायकम्। नेह प्रवर्त्तते इत्यन्यदेतत्।

यद्वा, "सहयुक्ते प्रधाने" (पा०सू०२-३-१९)इति तृतीयाऽस्तु।

"स्ववालभारस्य तदुत्तमाङ्गजैः समञ्चमर्येव तुलाभिलाषिणः।

इत्यत्र यथा। उक्तं हि, विनापि तद्योगं तृतीया। "वृद्धो यूना"(पा० सू०१-२-६५) इति निदर्शनादिति। तुल्यार्थैरित्यर्थग्रहणात् द्योनकानामिवादिशब्दानां योगे न, गौरिव गवयः। यथा-गौस्तथा गवय इति। वेति वर्तमाने अन्यतरस्यां ग्रहणमुत्तरसूत्रे चकारेण स्वस्यानुकर्षणार्थम्। अन्यथा हि तृतीयैवानुकृष्येत, सन्निहितत्वात्।

चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः (पा०सू०२-३-७३)। सुखपर्यन्तानां द्वन्द्वः। ततोऽर्थशब्देन बहुव्रीहिः। तथा च द्वन्द्वान्ते श्रूयमाणात्प्रत्येकमर्थशब्दः सम्बध्यते। मद्रभद्रशब्दयोः पर्यायतया सूत्रेऽन्यतरो न पठनीयः। केचित्तु अर्थशब्दोऽपि पृथगेव निमित्तम्। व्याख्यानाच्च सर्वत्रार्थग्रहणमित्याहुः। आशिषिगम्यमानायामेतैर्योगे शेषे चतुर्थी वा स्यात, पक्षे षष्ठी। आयुष्यं चिरञ्जीवितं देवदत्ताय देवदत्तस्य वा भूयात्। एवं मद्रं भद्रं कुशलं निरामयं सुखं शं

अर्थः प्रयोजनं हितं पथ्यं भूयादित्यादि । हितयोगे चतुर्थी वक्तव्या (का०वा०)। इत्यस्य अनाशिषि च रितार्थत्वादाशिष्यनेन विकल्प एव। आशिषीति किम ? देवदत्तस्यायुष्यमस्ति ।

इति श्रीशब्दकौस्तुभे द्वितीयस्याध्यायस्य तृतीये पादे तृतीयमाह्निकम्।
॥ समाप्तश्चायं पादः॥

द्विगुरेकवचनम् (पा०सू०२-४-१) । वक्तीति वचनम्। बाहुलकात्कर्तरि ल्युट्। सामान्ये नपुंसकम् (का०वा०)। समाहारद्विगुरेकार्थप्रतिपादकः स्यात्। "तद्धितार्थ"(पा०सू०२-१-५१) इति सूत्रे हि भावसाधन एव समाहार इति स्थितम्। तथा च न्यायसिद्धमेतत्। कर्मसाधनताभ्रमं वारयितुमारभ्यते "स नपुंसकम्" (पा०सू०२-४-१७) इत्यस्य प्रवृत्त्यर्थं च। दृश्यते च भ्रमनिवृत्तयेऽपि सूत्रकृतो यत्नः। यथा—"उपकादिभ्योऽन्यतरस्यामद्वन्द्वे" (पा०सू०२-४-६९) इति। तत्र हि अद्वन्द्वइत्यस्य द्वन्द्वग्रहणं नानुवर्त्तते इत्यर्थो भाष्ये स्थितः ।

द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् (पा०सू०२-४-२) । प्राण्यङ्गानां द्वन्द्व एकार्थः स्यात्। एवं तूर्याङ्गानां सेनाङ्गानाञ्च। पाणिपादम्। मार्दङ्गिकपाणविकम्। रथिकाश्वारोहम्। इह प्राणिसेनयोरङ्गं नामावयवः। तूर्यस्य तु अङ्गं नामोपकारकं बोध्यम्। 'मार्दङ्गिक' इत्यादौ मृदङ्गवादनं शिल्पमित्यर्थे "शिल्पम्" (पा०सू०४-४-५५) इति ठक्। 'पाणिपादम्' इत्यादौ "जातिरप्राणिनाम्" (पा०सू०२-४-६) इत्येव सिद्धे व्यतिकरनिरासार्थं वचनम्। 'हस्त्यश्वं' 'हस्त्यश्वाय' इत्यत्र तु सेनाङ्गत्वेऽपि परत्वात्पशुलक्षणो विकल्प इति "विभाषा वृक्षे" ( पा०सू०२-४-१२ ) इत्यत्र भाष्यकैयटयोः स्थितम्। अथ कथं "रथवाजिपत्तिकरिणीसमाकुलम्" इति। नपुंसकह्रस्वत्वेन हि भाव्यम्।

उच्यते, रथादिसहिताः करिण्य इति मध्यमपदलोपी समासो बोध्यः। यद्वा, रथश्च वाजी चेत्यादि विग्रहः। जातावेकवचनम्। "फलसेनादीनां बहुप्रकृतिः" इति वक्ष्यमाणत्वान्नैकवद्भावः। एतेन 'पातितैरथनागाश्वैः' इति। "इत्थं रथाश्वेभनिषादिनां प्रगे" (मा०का०१२-१) इति माघश्च व्याख्यातः। इहापि मध्यमपदलोपादेकवचनान्तेन विग्रहाद्वा ।

यद्वा, कृतद्वन्द्वानामेकशेषः। तथा च "तिङस्त्रीणि त्रीणि" (पा० सू०१-४-१०१) इति सूत्रे "लुटःप्रथमस्य" (पा०सू०२-४-८५) इति सूत्रे

च भाष्यम्--''उभयं हि दृश्यते बहूनि शाकिकिटकानि'' इति। माघटिप्पणे--''रथतुरङ्गाश्वेभे निषीदन्ति'' इति णिन्यन्तेनोपपदसमास इति समाधानान्तरं सारम्। यद्यपि ''चार्थे द्वन्द्वः'' (पा०सू०२-२-२९) इत्येवेतरेतरयोगे समाहारे च द्वन्द्वो विहितः, समाहारस्यैकत्वाच्च सिद्धमेकवचनं, तथापि नियमार्थमिदं प्रकरणम्-प्राण्यङ्गादीनामेकवचने द्वन्द्व एव। समाहारद्वन्द्व एवेत्यर्थः। न च समाहारे एषामेवेति विपरीतं ग्राह्यम्, ''तिष्यपुनर्वस्वोः'' (पा०सू०१-२-६३) इति सूत्रे बहुवचनग्रहणात्। तद्धि समाहारैकवचनव्यावृत्तये क्रियते तिष्यपुनर्वास्विदमिति।

अनुवादे चरणानाम् (पा०सू०२-४-३)। चरणानां द्वन्द्व एकवत्स्यात्। चरणशब्दः कठकालापादिषु शाखाभेदेषु मुख्यः। तदध्यायिषु पुरुषेषु गौणः। उभयेषां चैषां ''गोत्रञ्च चरणैः सह''(का०वा०)इति जातिसंज्ञा। तत्र शाखाभेदवाचिनां ''जातिरप्राणिनाम्''(पा०सू०२-४-६)इत्येकवद्भावस्य सिद्धत्वाद्गौणोऽपि पुरुषवृत्तिरेवेह गृह्यते। उदगात्कठकालापम्। प्रत्यष्ठात्कठकौथुमम्। इह यदा कठकालापेषूदितेषु प्रतिष्ठितेषु चावाभ्यां तत्र गन्तव्यमिति संवादं कृत्वा तच्च विस्मृत्य कश्चिदास्ते तत्र प्रतीदमुच्यते-ननूदगात्कठकालापन्तत्किमास्यते इति। अतो भवत्यनुवादः। कठेन प्रोक्तमधीयते कठाः। वैशम्पायनान्तेवासित्वाण्णिनिः। ''कठचरकाल्लुक्'' (पा०सू०४-३-१०७) ''तदधीतेतद्वेद'' (पा०सू०४-२-५९) इत्यण्। ''प्रोक्ताल्लुक्'' (पा०सू०४-२-६४)। कलापिशब्दात् ''कलापिनोऽण्'' (पा०सू०४-३-१०८) ''नान्तस्य टिलोपे सब्रह्मचारि'' (का०वा०) इत्यादिना टिलोपः। अध्येत्रणो लुक्। एतेन कौथुमो व्याख्यातः। यदा तु उदयप्रतिष्ठे नानूद्येते, किन्तु अज्ञाते ज्ञाप्येते तदा प्रत्युदाहरणम्—उदगुः कठकालापाः। स्थेणोरद्यतन्यामेवेति वाच्यम्। स्थेणोः किम्? अनन्दिषुः कठकालापाः। अद्यतन्यां किम्? उद्यन्ति कठकालापाः।

अध्वर्युक्रतुरनपुंसकम् (पा०सू०२-४-४)। अध्वर्युशब्दो यजुर्वेदलक्षकः। तत्रोत्पन्नो विनियुक्तो वा यः क्रतुः तद्वाचिनामनपुंसकलिङ्गानां द्वन्द्व एकवत्स्यात्। अर्काश्वमेधम्। साह्नातिरात्रम्। अध्वर्युक्रतुः किम्? इषुवज्रौ। उद्भिद्वलभिदौ। सामवेद एषां विधानम्। अनपुंसकमिति किम्? राजसूयवाजपेये। इमौ हि शब्दार्धर्चादिषु पठितौ। यदा नपुंसकलिङ्गौ तदा प्रत्युदाहरणम्।

अध्ययनतोऽविप्रकृष्टाख्यानाम् (पा०सू०२-४-५)। अध्ययनेन नि-

मित्तेन येषामविप्रकृष्टा प्रत्यासन्ना आख्या तेषां द्वन्द्व एकवत्स्यात्। पदकक्रमकम्। पदान्यधीते पदकः। क्रमादिभ्यो वुन् (पा०सू०४-२-६१)।एवं क्रमकः। क्रमकवार्त्तिकम्। वृत्तिः संहिता, तामधीते वार्त्तिकः। उक्थादिपाठाट्ठक्। पदान्यधीत्य क्रमोऽध्येतव्य इति स्पष्टा प्रत्यासत्तिः। क्रमकवार्तिकमित्यत्र तु संहितामनधीत्य क्रमोऽध्येतुं न शक्यते इत्येव प्रत्यासत्तिर्बोध्या। अध्ययनत इति किम्? पितापुत्रौ। अविप्रकृष्टाख्यानां किम्? याज्ञिकवैयाकरणौ।

जातिरप्राणिनाम् (पा०सू०२-४-६)। प्राणिवर्जजातिवाच्यवयवको द्वन्द्व एकवत्स्यात्। आराशस्त्रि। आरा प्रतोदः। जातिः किम्? नन्दकपाञ्चजन्यौ। संज्ञाशब्दावेतौ।

खड्गोऽस्य नन्दकः शङ्खः पाञ्चजन्यः प्रकीर्तितः।

अप्राणिनां किम्? ब्राह्मणक्षत्रियविट्शूद्राः। नञिवयुक्तन्यायेन द्रव्यजातीनामेकवद्भावो न गुणक्रियाजातीनाम्। रूपरसौ। गमनाकुञ्चने। जातिप्राधान्य एवायमेकवद्भावः। यदा तु द्रव्यविशेषविवक्षा तदा बदरामलकानि। जातिविवक्षायान्तु बदरामलकम्। इहैकवद्भावो वैकल्पिक इति भाष्यस्वरसः। तथाच "विभाषा वृक्षमृग" (पा०सू०२-४-१२) इति सूत्रे "बहुप्रकृतिः" (का०वा०) इत्यादि वार्तिकमुपक्रम्य बदरामलकं बदरामलकानीत्युदाहृतं भाष्ये। बदरामलकानीति प्राप्ते इत्यर्थं व्याचक्षाणानां मते तु नित्यमेवेति तत्रैव कैयटः। अत एव "तस्य भावस्त्वतलौ" (पा०सू०५-१-११०) इति सूत्रभाष्यस्थ ओषधिवनस्पतीनामिति प्रयोगः सङ्गच्छते। भाष्यप्रयोगान्नैकवद्भाव इति वदन् कैयटस्तु जातिविवक्षायामपि एकवद्भावाभावं मेने। एवं "लटः शतृशानचौ"(पा०सू०३-२-१२४)इति सूत्रस्थभाष्यकैयटादिग्रन्थो बोध्यः। कथं तर्हि "रञ्जितानुविविधास्तरुशैलाः" इति भारविः। न ह्यत्र व्यक्तिविशेषविवक्षा? सत्यं, तरुसहिताः शैला इति बोध्यम्।

विशिष्टलिङ्गो नदीदेशोऽग्रामाः (पा०सू०२-४-७)। अग्रामा इत्येकवचनस्य स्थाने सौत्रं बहुवचनम्। विशिष्टलिङ्गानां भिन्नलिङ्गानां नदीवाचिनान्देशवाचिनाञ्च ग्रामवर्जितानां द्वन्द्व एकवत् स्यात्। सूत्रे चत्वारोऽपि शब्दा अवयवधर्मेणावयविनि द्वन्द्वे बोध्याः। नदीदेश इत्यसमासनिर्देशः। उध्यश्च इरावती च उध्येरावति। कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम्। भिन्नलिङ्गाः किम्? गङ्गायमुने। मद्रकेकयाः। नदीदेश इति किम्? कुक्कुटमयूर्यौ। अग्रामाः किम? जाम्बवं नगरं, शाल्मकिनी ग्रामः, जाम्बवशाल्मकिन्यौ। अत्र पूर्वपदार्थ-

स्य अग्रामत्वेऽपि उत्तरपदार्थस्य ग्रामत्वात्तदाश्रयः प्रतिषेधः । तदुक्तम् "उभयतश्च ग्रामाणां प्रतिषेधो वक्तव्यः" इति । नदीग्रहणमदेशत्वात् । जनपदो हि देशः । अत एव पर्वतानां न–कैलासश्च गन्धमादनं च कैलासगन्धमादने ।

क्षुद्रजन्तवः (पा०सू०२-४-८) । एषां द्वन्द्व एकवत्स्यात् । यूकालिक्षम् । आनकुलात् क्षुद्रजन्तवः ।

येषाञ्च विरोधः शाश्वतिकः (पा०सू०२-४-९) । येषां नित्यं वैरं तेषां द्वन्द्व एकवत्स्यात् । गोव्याघ्रम् । गजसिंहमित्यादि । विरोधो वैरं न तु सहानवस्थानादिः, 'छायातपौ' इत्यादावतिव्याप्तेः । शश्वदिति त्रैकाल्यमाह । तत्र भवः इत्यर्थे "कालाट्ठञ्" (पा०सू०४-३-११) । तान्तत्वपरत्वेऽपि निपातनादिकादेशः । अव्ययानां भमात्रे"(का०वा०) इति प्राप्तस्य टिलोपस्याभावश्च सामान्यापेक्षमिकस्य केनाबाधे ज्ञापकमिदम् । तेन कान्दाविकादि सिद्धमिति कश्चित् । वस्तुतस्तु कन्दुः स्वेदनी, तत्र "संस्कृतं भक्षाः" (पा०सू० ४-२-१६) इत्यण् । कान्दवम् । "तदस्य पण्यम्"(पा०सू०४-४-५१) इति ठक् । शाश्वतिकः किम्? चैत्रमैत्रौ कलहायेते । एतेन "देवासुरैरमृतमम्बुनिधिर्ममन्थे" इति भारविप्रयोगो व्याख्यातः । तेषां हि अमृतादिप्रयुक्तः कादाचित्को विरोधो न तु नित्यः, मन्थनप्रवृत्तिकाले तद्विरहात् । इह (१)पशुशकुनिद्वन्द्वावकाशो–महाजोरभ्रं, महाजोरभ्राः । हंसचक्रवाकं, हंसचक्रवाकाः । "येषां च" (पा० सू० २-४-९) इत्यस्यावकाशः–श्रमणब्राह्मणम्, मार्जारमूषकम्, अश्वमहिषं, काकोलूकमित्यत्रोभयप्रसङ्गे परत्वात्पशुशकुनि विभाषा प्राप्ता चकारेण पुनर्विधानाद् "येषांच" इति नित्यमेव भवति ।

शूद्राणामनिरवसितानाम् (पा०सू०२-४-१०) । अबहिष्कृतानां शूद्राणां द्वन्द्व एकवत्स्यात् । तक्षायस्कारम् । रजकतन्तुवायम् । शूद्रशब्दोऽत्र त्रैवर्णिकेतरपरो न तु शूद्रत्वजातिपरः, अनिरवसितानामिति प्रतिषेधात् । निरवपूर्वात्स्यतेः कर्मणि क्तः । निरवसानं बहिष्करणम्, तच्चेह पात्राद्विवक्षितम् । यैर्भुक्ते पात्रं न शुध्यति "भस्मना शुध्यते कांस्यम्" इत्यादिस्मृतिकारोक्तसंस्कारेणापि ते पात्राद्बहिष्कृताः । अनिरवसितानां किम्? चण्डालमृतपाः ।

गवाश्वप्रभृतीनि च (पा०सू०२-४-११) । एतानि द्वन्द्वरूपाणि कृतै-

---

(१) "विभाषा वृक्षमृग" (पा० सू० २-४-१२) इति विहितद्वन्द्वस्यावकाश इत्यर्थः ।

कवद्भावानि साधूनि स्युः। गवाश्वकम्। गवाविकम्। गवैडकम्। अजाविकम्। अजैडकम्। एषां पशुद्वन्द्वविभाषायां प्राप्तायां वचनम्। कुब्जवामनम्। कुब्जकैरातम्। पुत्रपौत्रम्। श्वचाण्डालम्। स्त्रीकुमारम्। दासीमाणवकम्। उष्ट्रखरम्। शाटीप्रच्छदम्। इहाप्राणिजातिवाचिनामबहुप्रकृत्यर्थः पाठः। उष्ट्रशशम्। मूत्रशकृत्। मूत्रपुरीषम्। यकृन्मेदः। मांसशोणितम्। दर्भपूतीकम्। अर्जुनपुरुषम्। तृणोलपम्। दासीदासम्। अत्र "पुमान् स्त्रिया" (पा०सू०१-२-६७) इत्येकशेषो न। कुटीकुटम्। मांसशोणितम्। भागवतीभागवतम्। गवाश्वप्रभृतिषु "यथोच्चारितं द्वन्द्ववृत्तम्" इति वार्त्तिकम्। गणपाठे रूपमेषां विवक्षितं न तु पूर्वोत्तरपदनिर्देशमात्रे तात्पर्यमित्यर्थः। तेन अवङादेऽशोभावपक्षे न भवति। अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः।

विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् (पा०सू०२-४-१२)। वृक्षादीनां सप्तानां द्वन्द्वः अश्ववडवेत्यादि द्वन्द्वत्रयं च विभाषा एकवत्स्यात्। वृक्षादौ विशेषाणां ग्रहणम्। तथाहि, वृक्षादिशब्दैः प्रत्येकं द्वन्द्वो विशेष्यते। न चैको वृक्षशब्दो द्वन्द्वः। न च द्वयोः सहप्रयोगः, एकशेषात्। एवं पर्याययोरपि, विरूपाणामपि समानार्थानामेकशेषारम्भात्। नापि 'वृक्षश्च धवश्च' इत्यादि, सामान्यविशेषयोर्वाचनिकद्वन्द्वनिषेधस्योक्तत्वात्। न च प्राच्यभरतेष्विति निर्देशादनित्यः स इति वाच्यम्, तथापि 'वृक्षधवम्' इत्यादि, प्रयोगादर्शनेन निषेधस्यैव प्रकृते प्रवृत्तेः। तस्माद्विशेषाणामेवेह ग्रहणं स्थितम्। प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः। रुरुपृषतम्, रुरुपृषताः। कुशकाशम्, कुशकाशाः। व्रीहियवम्, व्रीहियवाः। दधिघृतम्, दधिघृते। गोमहिषम्, गोमहिषाः। तित्तिरिकपिञ्जलम्, तित्तिरिकपिञ्जलाः। अश्ववडवम्, अश्ववडवौ। पूर्वापरम्, पूर्वापरे। अधरोत्तरम्, अधरोत्तरे।

अत्र वार्त्तिकम्—बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानामिति (का०वा०)। एषां बहुप्रकृतिरेव द्वन्द्व एकवदित्यर्थः। नेह—बदरामलकौ, रथिकाश्वारोहौ, प्लक्षन्यग्रोधावित्यादि। इदं वार्त्तिकं विध्यन्तरशेषभूतं न तु स्वातन्त्र्येण विधायकम्। विधित्वे हि स नित्यश्चेत्तर्हि वनस्पत्यादीनामेतत्सूत्रोपात्तानामपि बहुप्रकृतित्वे विकल्पं बाधित्वा नित्यं स्यात्। अबहुप्रकृतिकत्वे च सौत्रो विकल्पः स्यात्। वैकल्पिकत्वे तु फलादीनामपि "जातिरप्राणिनाम्"

(पा०सू०२-४-६) इत्यादिलक्षणान्तरप्राप्तं नित्यमेकवद्भावं बाधित्वा बहुप्रकृतिकत्वे विकल्पः स्यात् । न च "बदरामलकं, बदरामलकानि" इति भाष्यदर्शनादिष्टापत्तिरिति वाच्यम्, तत्र बदरामलकानीति क्वाचित्कः पाठः, सोऽपि बदरामलकानीत्येवं प्राप्ते जातिलक्षणो नित्य एकवद्भाव इति व्याख्येय इति कैयटेनोक्तत्वात् । यत्तु नित्ये एकवद्भावे प्राप्ते विकल्पोऽनेन क्रियते इति मतान्तरं कैयटेनोक्तम् । तदापाततः, "बदरामलके तिष्ठतः" इति तदुत्तरभाष्यविरोधात् । उक्तरीत्या प्रकृतवार्त्तिकस्य बहुप्रकृतिके विकल्पविधिपरत्वे हि अन्यत्र नित्य एकवद्भावो दुर्वारः स्यादिति दिक् ।

तत्रापि यदि "विभाषा वृक्ष" (पा०सू०२-४-१२) इत्यत्र पठितत्वादस्यैव शेषः स्यात्, तदा वनस्पत्यादिष्वबहुप्रकृतित्वे विकल्पाभावेऽपि "जातिरप्राणिनाम्" (पा०सू०२-४-६) इति नित्यो विधिः स्यात् । तस्मात्सर्वप्रकरणशेषोऽयम् । एषां फलादीनां द्वन्द्वोऽनेन लक्षणान्तरेण वा एकवद्भवन् बहुप्रकृतिरेवेति । तेन "प्लक्षन्यग्रोधौ" इत्यत्र अयं विकल्पो "जातिरप्राणिनाम्" (पा०सू०२-४-६) इति नित्यश्च न भवति । एवं व्रीहियवौ कुशकाशावित्यादि ।

प्रकृतसूत्रोपात्तानान्तु इत्थं विषयविभागः—येऽत्राप्राणिनस्तेषां "जातिरप्राणिनाम्" (पा०सू०२-४-६) इति नित्यं प्राप्ते विकल्पो विधीयते । स च तेषां तैरेव । तथाच वृक्षादीनामन्यैः सह द्वन्द्वे यथाप्राप्तं नित्यं विकल्पो वा । तद्यथा-'व्रीहिकुशप्लक्षम्' इत्यत्र "जातिरप्राणिनाम्" (पा०सू०२-४-६) इति नित्यः । 'प्लक्षशब्दस्पर्शौ' 'प्लक्षशब्दस्पर्शाः' इत्यत्र तु "चार्थे द्वन्द्वः" (पा०सू०२-२-२९) इत्युभयत्र । न चेह "जातिरप्राणिनाम्" (पा०सू०२-४-६) इत्यस्य प्रवृत्तिः, अद्रव्यजातित्वात् । अप्राणिनामिति हि पर्युदास इत्युक्तम् । पशुग्रहणन्तु हस्त्यश्वादिषु सेनाङ्गलक्षणस्य नित्यविधेर्बाधनार्थम् । मृगशकुनिग्रहणं त्ववशिष्यते । तत्रेत्थं वचनं व्यज्यते-यो विभाषाप्राप्त एकवचनो द्वन्द्वः स मृगविशेषाणां तैरेव नान्यैरिति । तेनैषामन्यैः सह इतरेतरयोग एवेति फलितम् । एवं 'पूर्वापरम्' 'अधरोत्तरम्' इत्यत्रापि । पशुद्वन्द्वत्वादेव सिद्धे अश्ववडवग्रहणं प्रतिपदविधानार्थम् । तेनैकवद्भावपक्षे "पूर्ववदश्ववडवौ" (पा०सू०२-४-२७) इत्येतद्बाधित्वा "स नपुंसकम्" (पा०सू०२-४-१७) इति प्रवर्तते । तच्छब्दो हि एकवद्भावभाजं परामृशति । तेन एकवद्भावबन्नपुंसकत्वमपि प्रतिपदविहितं सम्पद्यते । "पूर्ववदश्ववडवौ" (पा०सू०२-४-२७) इति स्वैक-

वद्भावविरहपक्षे प्रवर्त्तते। अश्ववडवौ। अश्ववडवान्॥

विप्रतिषिद्धं चानधिकरणवाचि (पा०सू० २-४-१३)। विरुद्धार्थानामद्रव्यवाचिनां द्वन्द्व एकवद्वा स्यात्। अत्रेदं नियमशरीरम्—य एकवचनो द्वन्द्वो विभाषा प्राप्तः, स यदि विप्रतिषिद्धवाचिनां भवति, तदा अद्रव्यवाचिनामेवेति। तेन द्रव्यवाचिनामितरेतरयोग एव। शीतोष्णे उदके स्तः। विप्रतिषिद्धं किम्? नन्दकपाञ्चजन्यम्। इह द्रव्यवाचित्वेऽपि पाक्षिकः समाहारद्वन्द्वो भवत्येव। यत्तु वृत्तौ 'कामक्रोधौ' इति प्रत्युदाहृतं, तत्रापि 'शीतोष्णं' 'सुखदुःखम्' इत्यादाविव पाक्षिकस्यैकवद्भावस्य दुर्वारत्वात्। नियमार्थं हि प्रकृतसूत्रमिति स्थितम्। न च अद्रव्यवाचिनाञ्चेद्भवति तर्हि विप्रतिषिद्धानामेवेति तदाशयः कल्प्यः, "शीतोष्ण उदके" इत्यत्र पाक्षिकैकवद्भावापत्त्या "अनधिकरणवाचीति किम्? शीतोष्णे उदके" इत्येवंरूपस्वोक्तिविरोधापत्तेः,सौत्रानुपूर्वीस्वरसभङ्गप्रसङ्गाच्चेति दिक्।

न दधिपयआदीनि (पा० सू० २-४-१४)। एतानि नैकवत्स्युः। दधिपयसी। मधुसर्पिषी। सर्पिर्मधुनी। इह त्रिषु व्यञ्जनत्वाद्विकल्पः प्राप्तः। ब्रह्मप्रजापती। शिववैश्रवणौ। स्कन्दविशाखौ। न चेह विरूपाणामपीति एकशेषः शङ्क्यः,

"स्कन्दश्चैव विशाखश्च द्वौ सुतौ संबभूवतुः।"

इति महाभारतस्वरसेनापर्यायत्वानिर्णयात्। परिव्राट्कौशिकौ। प्रवर्ग्योपसदौ। शुक्लकृष्णे। इध्माबर्हिषी, निपातनाद्दीर्घः। दीक्षातपसी। श्रद्धातपसी। मेधातपसी। अध्ययनतपसी। उलूखलमुसले। आद्यवसाने। श्रद्धामेधे। ऋक्सामे। वाङ्मनसे। इह ब्रह्मप्रजापत्यादिषु समाहारद्वन्द्वनिषेधमुखेनेतरेतरयोगद्वन्द्वो व्यवस्थाप्यते। तत्साहचर्यात् 'दधिपयसी' इत्यादावपि तथैव। तेन तत्र व्यञ्जनत्वप्रयुक्तविकल्पे निषिद्धेऽपि जातिलक्षणो नित्य एकवद्भावोऽस्त्विति न शङ्कनीयम्। किञ्च नेह लक्षणविशेषे आग्रहः, एकवद्भावमात्रस्य निषेधात्। यथा "न षट्स्वस्रादिभ्यः" (पा० सू० ४-१-१०) इत्यत्र स्त्रियां यदुक्तं तन्नेति सामान्यतो निषिध्यते। तथाच वक्ष्यति—दोषस्त्वित्वे तस्मान्नोभाविति। ननु भवेदेवं यदि "जातिरप्राणिनाम्" (पा० सू० २-४-६) इति विधिः स्यात्, निषेधस्तु सः। तथाच तेनेतरेतरयोगे प्रकृतसूत्रेण समाहारे च निषेधाद्दधिपयआदीनां द्वन्द्व एव न लभ्येत।

अत्रोच्यते—नियमवाक्यानां विधिरूपेण निषेधरूपेण वा प्रवृत्तिरिति पक्षद्वयं तावत्प्रत्ययलक्षणसूत्रे उपपादितम् "द्युद्भ्यो लुङि"

(पा० सू० १-३-९१) इत्यादौ भाष्यारूढं च। तत्र "जातिरप्राणिनाम" (पा० सू० २-४-६) इत्यादौ विधिमुखतापक्षस्यैव लक्ष्यानुरोधेनाश्रयणात्तस्य च "न दधि" (पा० सू० २-४-१४) इत्यादिना निषेधात्सर्वं सुस्थम् ।

अधिकरणैतावत्त्वे च (पा० सू० २-४-१५)। द्रव्यसङ्ख्यावगमे नैकवत्स्यात्। दश दन्तोष्ठाः। ननु वर्त्तिपदार्थस्य सङ्ख्याविशेषे बोधनीये इतरेतरयोगद्वन्द्व एवेति न्यायसिद्धम्। अन्यथा हि "दशपञ्च पूलयः" इति द्विगाविव प्रधानभूते समाहार एव दशत्वसङ्ख्या अन्वियात् न तु समुदायादिषु तत्किं निषेधेन ? सत्यम, नानेन समाहारद्वन्द्वो निषिध्यते, किन्तु प्राण्यङ्गादीनां समाहार एवेति योऽसौ नियमः स एव निषिध्यते। असति हि निषेधे

पञ्चस्विहास्याङ्घ्रिकरेष्वभिख्या
भिक्षाऽधुना माधुकरीसदृक्षा ।

इत्यादीनामसाधुत्वं स्यात्, समाहार एवेति नियमेनेतरेतरयोगे द्वन्द्वस्य दुर्लभत्वात्। तथाच सङ्ख्यावगतावेकवदेवेति नियमो न स्यादिति सूत्रार्थः फलितः। तस्मादितरेतरयोगद्वन्द्वस्य प्रतिप्रसवार्थमिदम्। एतेन "दश दन्तोष्ठाः" इत्यादौ समाहारद्वन्द्वस्यैवेतरेतरयोगद्वन्द्वस्यापि दौर्लभ्याद्वाक्यमेव प्रयोज्यम्। अधिकरणैतावत्त्वेचेत्यनेन प्राण्यङ्गानां समाहार एवेत्यनेन चोभयोर्निषेधादिति प्रत्युक्तम्। "दश ब्राह्मण क्षत्रियाः" इत्यादौ प्रागुक्तन्यायबलेनैव समाहारद्वन्द्वो वारणीयः।

विभाषा समीपे (पा०सू०२-४-१६)। अधिकरणैतावत्त्वस्य सामीप्येन परिच्छित्तौ समाहार एवेत्येवंरूपो नियमो वा स्यात। उपदशं दन्तोष्ठम। उपदशा दन्तोष्ठाः। "अव्ययं विभक्ति" (पा० सू० २-१-६) इत्यादिना सुबन्तसामान्येन विधीयमानोऽव्ययीभावः सङ्ख्ययापि भवति। बहुव्रीहिस्तु "सङ्ख्ययाव्ययासन्न" (पा० सू० २-२-२५) इत्यादिना विशिष्य विहितः। तत्रैकवद्भावपक्षे अव्ययीभावो ऽनुप्रयुज्यते। एकार्थस्य त्वेकार्थ एवान्तरङ्गः। ऐकार्थ्यञ्च सामीप्यप्रधानत्वात्। यद्यप्यव्ययीभावो निःसङ्ख्यस्तथापि भेदाभावरूपमैकार्थ्यं बोध्यम्। सामानाधिकरण्यन्तु सामीप्यतद्वतोरभेदविवक्षया। अधिकरणैतावत्त्वं तु समाहारसमाहारिणोरभेदविवक्षया। पक्षान्तरे तु बह्वर्थस्य बह्वर्थो बहुव्रीहिरेवानुप्रयुज्यते। बह्वर्थत्वञ्च तस्य समीपिप्राधान्यात्। यदि तूभयत्राव्ययीभाव एवानुप्रयुज्यते, तदा तस्याव्ययत्वाद्

बहुत्वाभावाद्बहुवचनं न स्यात् । सत्यपि वा तस्मिन्नमभावे कृते 'उपदशा' इति न स्यात्, बहुव्रीहेरेवानुप्रयोगे तु उपदशस्य पाणिपादस्येति षष्ठी स्यात्। उपदशं पाणिपादस्येति चेष्यते। तस्माद्यथोक्तमेव मनोरमम् ।

स नपुंसकम्(पा०सू०२-४-१७)। समाहारे द्विगुर्द्वन्द्वश्च नपुंसकः स्यात्। परवल्लिङ्गापवादः। पञ्चगवम्। दन्तोष्ठम्। प्रकरणादेवानुवाद्यलाभे सग्रहणमेतत्प्रकरणानुपात्तस्यापि समाहारद्वन्द्वस्य सङ्ग्रहार्थम् । तथा च "युवोरनाकौ" (पा०सू०७-१-१) इत्यादावुच्यते-युवोरिति समाहारद्वन्द्वे"स नपुंसकम्"(पा०सू०२-४-१७) इति क्लीबत्वं स्यादिति। अत एव प्रयुज्यते "कार्यकालं संज्ञापरिभाषम्" इति। अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः (का०वा०)। अत इत्यधिकारे "द्विगोः" (पा०सू०४-१-२१) इति ङीब्विधानमिह लिङ्गम्। पञ्चमूली। वाबन्तः (का०वा०)। पञ्चखट्वी, पञ्चखट्वम्। स्त्रीत्वपक्षे उपसर्जनह्रस्वत्वम्। अनो नलोपश्च वा च द्विगुः स्त्रियाम् (का०वा०) । पञ्चतक्षं, पञ्चतक्षी। "उत्तरपदत्वे चापदादिविधौ" (का०वा०) इति प्रत्ययलक्षणप्रतिषेधात् पदत्वाभावान्नलोपवचनम्। पात्राद्यन्तस्य प्रतिषेधः । पञ्चपात्रम्। त्रिभुवनम्। चतुर्युगम्। द्विसमासम्। पात्रादिराकृतिगणः।

अव्ययीभावश्च (पा०सू०२-४-१८)। अयं नपुंसकं स्यात् । अधिस्त्रि। उन्मत्तगङ्गम्। पूर्वपदार्थप्रधानस्य अलिङ्गत्वेऽन्यपदार्थप्रधानस्य तु विशेष्यलिङ्गत्वे प्राप्ते इदमुच्यते। अनुक्तसमुच्चयार्थश्चकारः। तत्फलन्तु "पुण्यसुदिनाभ्यामह्नः" (का०वा०)। पुण्याहम्। सुदिनाहम्। कर्मधारये "राजाहस्सखिभ्यष्टच्" (पा०सू०५-४-९१)। "रात्राह्नाहाः पुंसि" (पा०सू०२-४-२९) इत्यस्यापवादः । सुदिनशब्दः प्रशस्तवाची। तथा च प्रयुज्यते—

सुदिनासु सभासु कार्यमेतत् प्रविचिन्वीत विशेषतः स्वयञ्च। इति।

तेनेह दिनाहःशब्दयोः सहप्रयोगविरोधो न शङ्कनीयः। पथः सङ्ख्याव्ययादेः ( का०वा० ) । त्रयाणां पन्थाः त्रिपथम् । विरूपः पन्थाः विपथम् । प्रादिसमासः। कथन्तर्हि-"अतिपन्थाः सुपन्थाश्च" (अ० को०२-१-१६) इत्यमरः? उच्यते,पथ इति कृतसमासान्तात्प्रथमा; संख्याव्ययरूपादेः परः कृतसमासान्तः पथशब्दः क्लीबमित्यर्थः। पथः क्लीबतेति पाठेऽपि सङ्ख्यादिपथशब्दस्याव्यभिचरितसमासान्ततया तत्साहचर्यादव्ययादेरपि तथाभूतस्यैव ग्रहणं बोध्यम् । तथाच क्लीबलिङ्गकारिका—पथः सङ्ख्याव्ययात्पर इति । न चेह समासान्तोऽस्ति, "न पू-

जनात्" (पा०सू०५-४-५९) इति निषेधात्। कथन्तर्हि "सत्पथश्चार्चिते ऽध्वनि" इति? स्वतिभ्यामेवेति परिगणनात्। अथ कथं—

"व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः"

इत्यमरः (अ०को०२-१-१६)? अत्र क्षीरस्वामिदुर्घटादयो विपथं कापथमित्येव पाठः कर्तव्यो लिङ्गकारिकाद्यनुरोधादित्याहुः। एवन्तु "व्यध्वौ विपथकापथौ" इति रभसकोशेऽपि पुंस्त्वं प्रामादिकमिति लभ्यते। वस्तुतस्तु पथे गतौ इत्यस्मात्पचाद्यचि पथते व्याप्नोतीति पथः, अकारान्तोऽयम्। तथाच त्रिकाण्डशेषः, "वाटः पथश्च मार्गः स्यात्" इति। तेन समासे पुंस्त्वन्न। न चैवं 'विपथः' इति सिद्धावपि 'कापथो' न स्यात्कादेशस्य दुर्लभत्वादिति वाच्यम्, ईषदर्थे चेति तत्सम्भवात्, कुत्सायामर्थतः पर्यवसानात्। पथ्वकारान्तस्याभ्युपगमे "पथो विभाषा" (पा०सू०५-४-७२) इति सूत्रं व्यर्थं स्यादिति माधवेनोक्तम्। तत्रायं समाधिः—"अपथं नपुंसकम्" (पा०सू०२-४-३०) इति सूत्रे कृतसमासान्तनिर्देशसामर्थ्यात् "नञस्तत्पुरुषात्" (पा०सू०५-४-७१) इत्यस्य नित्यं बाधः प्राप्तः। न च सोऽप्यकारान्तस्य निर्देशः, "पथःसङ्ख्याव्ययादेः" (का०वा०) इत्यत्रापि तथात्वापत्तौ सत्यामपथो विपथः कापथ इत्याद्यसिद्ध्यापत्तेः। किञ्च "राजाह्नाहाः" (पा०सू०२-४-२९) इति सूत्रात्परम् "अपथं नपुंसकम्" (पा०सू०२-४-३०) इति सूत्रे वार्त्तिकं पठ्यते। तथाच प्रक्रमानुरोधात्कृतसमासान्तनिर्देश एव न्याय्यः सम्प्रदायसिद्धश्च। अत एव "अपथं नपुंसकम्" (पा०सू०२-४-३०) इति सूत्रस्य वार्त्तिकेन गतार्थतामाशङ्क्य सूत्रस्य प्राच्यत्वाददोष इति कैयटः। एवं स्थिते 'अपन्थाः' इत्येतत्सिद्धये "पथो विभाषा" (पा०सू०५-४-७२) इति सूत्रम्, अमरस्य च न पूर्वापरविरोध इत्यवधेयम्।

प्रकृतमनुसरामः-इदं क्लीबत्वविधानं परवल्लिङ्गताया अपवादः। तेन "विपथा नगरी" इति बहुव्रीहौ न। पन्थानमतिक्रान्ता ऽतिपथेत्यत्रापि न। इह हि "द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु न" (का०वा०) इति परवल्लिङ्गता प्रतिषिद्धा। यद्येवमुत्पथमिति प्रतीकमुपादाय "कुगति" (पा०सू०२-२-१८) इति तत्पुरुष इति कैयटो विरुध्यते। मैवम्, न हि तत्र 'पथ उद्गतः' इत्यादिविग्रहः, किन्तु उत्कृष्टः पन्था इति। तथा च परवल्लिङ्गमेव प्राप्तम्। तस्मादुत्तरपदार्थप्राधान्य एवेदं लिङ्गविधानमिति स्थितम्। स्पष्टश्चेदं माधवग्रन्थे। यत्तु वृत्तिग्रन्थे 'सुपथम्' इत्युदाहृतम्। तत्र सुशब्दस्य वैपुल्यमर्थो न तु पूजेति समासान्तः

कृत इति माधवः। क्रियाविशेषणानाञ्च क्रियाया असत्त्वरूपत्वात्तद्वि- शेषणानां तद्वदलिङ्गत्वे प्राप्ते वचनमिदं वार्त्तिकानारूढमपि वृत्तिकारेण कृतमित्याहुः। मृदु पचति। प्रथमं पचति। "सामान्ये नपुंसकम्" (का० वा०) इति वा सिद्धम्। अत एव नियतलिङ्गेषु नेदं प्रवर्त्तते। आदिं पचति। आदिभूता या विक्लित्तिस्तां करोतीत्यर्थः। धातूपात्तभावना- म्प्रति कर्मत्वात्तत्सामानाधिकरण्याद्वा द्वितीया। अत एव 'सकृल्लवौ' इत्यादौ कारकपूर्वत्वाद्यणित्याकरः। न च सकलकारकाणां क्रियावि- शेषणत्वात् क्लीबतापत्तिः शङ्क्या, कारकाणां विभक्त्यर्थत्वरूपत्वाच्च। शक्त्याधारस्तु यद्यपि द्रव्यं नामार्थश्च; तथापि नासौ क्रियां प्रति वि- शेषणं, किन्तु क्रियाविशेषणीभूतकारकविशेषणमिति बोध्यम्। अत एव नामार्थस्य भेदेन धात्वर्थान्वयो नेति सिद्धान्तः। 'स्तोकं पच्यते' इत्यादावपि धात्वर्थव्याप्यस्यैव तण्डुलादेर्नाभिधानं न तु धातुक्रोडी- कृतस्यापि "भावे चाकर्मकेभ्यः" (पा०सू०३-४-६९) इत्यत्र विशेषण- सामर्थ्याद्बाह्यकर्मग्रहणे "लः कर्मणि" (पा०सू०३-४-६९) इत्यत्रापि त- थैव निर्णयात्। अतो धातुना क्रोडीकृतस्य विशेषणं द्वितीयान्तमेव, न तु अभिहितत्वप्रयुक्तप्रथमान्तम्। न वा "स्तोकमोदनस्य पक्ता" इत्यत्र स्तोकशब्दात्कृद्योगलक्षणा षष्ठी। यत्र तु भावनाम्प्रति करणत- या धात्वर्थविशेषस्यान्वयस्तत्र विशेषणानां तृतीयान्ततैव "ज्योति- ष्टोमेन यजेत" इति यथा। स्पष्टं चेदं "करणे यजः" (पा०सू०३-२- ८५) इति सूत्रे वृत्तिपदमञ्जर्योः। न चैवं "ज्योतिष्टोमेन समीचीनं यजेत्" इति न स्यादिति वाच्यम्, भावनाविशेषणत्वे तदुपपत्तेः। तत्र च प्रथमान्ततैव। सन्दर्शनप्रार्थनादिभिर्व्याप्यमानत्वात्क्रियाया अपि कृत्रिमकर्मत्वे तु तद्विशेषणत्वेऽपि द्वितीयैव। तदिह क्रियाविशेष- णानां क्लीबतेत्युत्सर्गः, नियतलिङ्गे तदभावात्। द्वितीयेत्यप्युत्सर्गः, प्रथमातृतीययोरप्युक्तत्वात्। एकवचनमप्युत्सर्गः। 'हतशायिकाः शय्यन्ते' इत्यादौ बहुवचनस्यापि "सार्वधातुके यक्" (पा०सू०३-१- ६७) इति सूत्रे वक्ष्यमाणत्वादिति दिक्। 'प्रातः कमनीयम्' इत्याद्य- व्ययविशेषणे तु क्लीबत्वं यद्यपि तुल्यं तथापि प्रथमैकवचनमेव न तु द्वितीयैकवचनम्, कर्मताभावात्। प्रातरादिरिति तु नियतलिङ्गमे- वेति दिक्। यद्यप्येतानि वार्त्तिकानि भाष्ये "अपथं नपुंसकम्" (पा० सू०२-४-३०) इत्यत्र पठितानि तथापि "अव्ययीभावश्च" (पा०सू० ४-३-५९) इति चकारसूचितार्थकथनपराणीत्याशयेन वृत्त्यनुरोधादि- हैव व्याख्यातानि।

तत्पुरुषोऽनञ्कर्मधारयः (पा०सू०२-४-१९) । अधिकारोऽयम् । कर्मधारयशब्दो भावप्रधानः । द्वन्द्वगर्भो नञा बहुव्रीहिः । न विद्यते नञ् च कर्मधारयत्वं चेत्युभे यत्र स तत्पुरुष इत्यर्थः । वक्ष्यति "विभाषा सेनासुरा" (पा०सू०२-४-२५) इत्यादि । तत्पुरुषः किम ? दृढसेनो राजा । नञ्रहितः किम् ? असेना । कर्मधारयत्वरहितः किम् ? परमसेना । मध्यमसूत्रेष्वयमधिकारो नातीवोपयुज्यत इति तत्रैव वक्ष्यामः ।

संज्ञायां कन्थोशीनरेषु (पा०सू०२-४-२०) । कन्थान्तस्तत्पुरुषः क्लीबं स्यात्सा चेदुशीनरदेशोत्पन्नायाः कन्थायाः संज्ञा । सुशमस्यापत्यानि सौशमयः, तेषां कन्था सौशमिकन्थम् । संज्ञायां किम् ? वीरणकन्था । ऊशीनरदेशेषु किम् ? दाक्षिकन्था । इहानादिः संज्ञा गृह्यते । सा चोशीनरेषु तत्पुरुषभिन्ना नञ्समासरूपा कर्मधारयश्च नास्त्येवेतीह मन्दमधिकारस्य फलम् ।

उपज्ञोपक्रमन्तदाद्याचिख्यासायाम् (पा०सू०२-४-२१) । उपज्ञायते इत्युपज्ञा । "आतश्चोपसर्गे" (पा०सू०३-१-१३६) इति कर्मण्यङ् प्रत्ययः । उपक्रम्यते इत्युपक्रमः । कर्मणि घञ् । "नोदात्तोपदेशस्य" (पा०सू०७-३-३४) इति वृद्धिप्रतिषेधः । उपज्ञान्त उपक्रमान्तश्च तत्पुरुषो नपुंसकं स्यात्, तयोरुपज्ञोपक्रमयोरादिः प्राथम्यञ्चेदाख्यातुमिष्यते । पाणिनेरुपज्ञा पाणिन्युपज्ञं ग्रन्थः । त्वदुपक्रमं सौजन्यम् । इच्छासनेह विवक्षैव शब्दव्युत्पत्तौ नियामिका न तु वस्तुस्थितिरिति ज्ञाप्यते । तेन क्रियासम्बन्धमात्रविवक्षायां न 'देवदत्तोपज्ञो रथः' इत्यादि । इह षष्ठीतत्पुरुषाद्विना तदादित्वासम्प्रत्ययादलभ्यमधिकारफलम् ।

छाया बाहुल्ये (पा०सू०२-४-२२) । छायान्तस्तत्पुरुषो नपुंसकं स्याद् बाहुल्ये सति चेच्छायाम् । यानि सम्भूयोपजीव्यां छायामारभमाणान्यावरकद्रव्याणि तत्समर्पकात्पूर्वपदात्परश्छायाशब्दश्चेदित्यर्थात्फलति । अत एवेह नाधिकारः फलवान् । इक्षूणां छाया इक्षुच्छायम् । "विभाषासेना" (पा०सू०२-४-२५) इत्यादेर्विकल्पस्यापवादोऽयम् । कथन्तर्हि 'इक्षुच्छायानिषादिन्यः'(र०वं०४-२०) इति ? उच्यते, आसमन्तान्निषादिन्य इत्याङ्प्रश्लेषो बोध्यः ।

सभा राजाऽमनुष्यपूर्वा (पा०सू०२-४-२३) । राजपूर्वा अमनुष्यपूर्वा च या सभा तदन्तस्तत्पुरुषो नपुंसकं स्यात् । इनसभम् । ईश्वरसभम् । पर्यायस्यैवेष्यते । तथाहि, अराजेतिच्छेदः । नञिवयुक्तन्याया-

महाराजा राजसदृशस्तत्पर्यायो गृह्यते। नेह, राजसभा। चन्द्रगुप्तसभा। कथं "नृपतिसभामगमन्न वेपमाना" (म०भा०) इति कीचकवधे? गजपतिवद्राजविशेषवाचित्वादिति रक्षितः। यद्वा, ना पतिर्यस्यां सभायामिति बहुव्रीहौ कृते पश्चात्कर्मधारयः। अनञ्कर्मधारय इत्यनुवृत्तेर्न क्लीबत्वम्। अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह। रक्षःसभम्। रूढ्यर्थाभावान्नेह--काष्ठसभा।

अशाला च (पा०सू०२-४-२४)। शालावाची सङ्घातवाची च सभाशब्दः। तत्र राजामनुष्यपूर्वत्वे पूर्वसूत्रेण पूर्वस्य क्लीबत्वमुक्तम्। सङ्घातवाचिनस्तु अनेन विधीयते। स्त्रीसभम्, स्त्रीसङ्घात इत्यर्थः। अशाला किम्? अनाथसभा, अनाथकुटीत्यर्थः।

विभाषा सेनासुराच्छायाशालानिशानाम् (पा०सू०२-४-२५)। एतदन्तस्य तत्पुरुषस्य क्लीबता वा स्यात् ब्राह्मणसेनम्, ब्राह्मणसेना। यवसुरम्, यवसुरा। कुड्यच्छायम्, कुड्यच्छाया। गोशालम, गोशाला। श्वनिशम्, श्वनिशा कृष्णचतुर्दशीत्याहुः। तस्यां हि श्वान उपवसन्तीति प्रसिद्धिः। "शुनश्चतुर्दश्यामुपवसतः पश्यामः" इति तिर्यगधिकरणे शाबरभाष्यम्।

परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः (पा०सू०२-४-२६)। एतयोः परपदस्यैव लिङ्गं स्यात्। कुक्कुटमयूर्याविमौ, मयूरीकुक्कुटाविमौ। अर्धं पिप्पल्या अर्धपिप्पली।

स्यादेतत् यदि समासार्थस्य परवल्लिङ्गत्वमनेनातिदिश्यते, तर्हि "पूर्ववदश्ववडवौ" (पा०सू०२-४-२७) इति सूत्रेणापि न्यायसाम्यात्समासस्यैवातिदेष्टव्यम्। ततश्च टाप् श्रूयेत समासार्थस्य पुंस्त्वेऽपि उत्तरपदार्थस्य स्त्रीत्वानपगमात्। यत्तु "गोस्त्रियोः" (पा०सू०१-२-४८) इति ह्रस्व इति। तन्न, "चार्थे द्वन्द्वः" (पा०सू०२-२-२९) इत्यत्रानेकमित्यधिकारात्सर्वेषां प्रथमानिर्दिष्टत्वेऽपि प्राधान्यादुपसर्जनसञ्ज्ञाविरहात्। अन्वर्थसंज्ञा हि सा। अत एव राज्ञः कुमार्याः राजकुमार्या इत्यत्र न ह्रस्व इत्युक्तम्। अत एव च 'कुक्कुटमयूर्यौ' इत्यत्र न ह्रस्वः। ननु मास्त्वन्वर्थता। तथाच 'अश्ववडवौ' इति सिद्ध्यति। 'राजकुमार्याः' 'कुक्कुटमयूर्यौ' इत्यत्र तु ह्रस्वे कृते पुनः स्त्रीप्रत्ययात् सिद्धम्। तदुक्तम्-'परवल्लिङ्गमिति शब्दशब्दार्थौ इति। तथाहि, लिङ्गशब्देन लिङ्गाभिधायी प्रत्ययोऽर्थश्च गृह्यते, तन्त्राद्याश्रयणात्। एवञ्च द्वन्द्वार्थस्य तत्पुरुषार्थस्य च परस्येव लिङ्गं स्यात्। तदभिधायी प्रत्ययश्च परस्येवेति सूत्रार्थः। तथा च यत्र 'द्रव्यगुणौ'

'गुणकर्मणी' इत्यादौ लिङ्गाभिधायी प्रत्ययो न सम्भवति तत्रार्थ एवातिदिश्यते। उभयसम्भवे तूभयम्। यथा 'कुक्कुटमयूर्यौ" इत्यादौ। ततश्च औपदेशिकस्य ह्रस्वत्वेऽप्यातिदेशिकस्य श्रवणं भविष्यति। न च पुनर्ह्रस्वः शङ्क्यः, अनुपसर्जनत्वात्तदन्यस्याप्रातिपदिकत्वाच्च। न चैवमपि 'दत्तागार्ग्यायण्यौ' 'दत्ताकारिषगन्ध्ये' इत्यत्र ह्रस्वत्वे कृते समासात्पुनः फक्ष्यङौ स्यातामिति वाच्यम्, "भस्याढे तद्धिते" (का०वा०) इति पूर्वोत्पन्नयोर्निवृत्तिसम्भवादिष्टापत्तेरिति। मैवम्, 'दत्ता च युवतिश्च दत्तायुवती' इत्यत्र तिप्रत्ययद्वयश्रवणापत्तेः। तत्राभत्वेन पुंवद्भावायोगात्। तस्मादुपसर्जनत्वं द्वन्द्वे नास्त्येव अन्वर्थत्वादिति स्थितम्। 'अश्ववडवौ' इत्यत्र स्त्रीप्रत्ययनिवृत्तौ उपायान्तरं वक्तव्यमिति।

अत्रोच्यते, "विभाषावृक्षमृग"(पा०सू०२-४-१२) इतिसूत्रे ऽश्ववडवेत्यत्र टापो निवृत्तिर्निपात्यते। तदुक्तम्-"समासादन्यल्लिङ्गमिति चेदश्ववडवयोष्टाब्लुग्वचनं निपातनात् सिद्धम्" इति। "द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः (का०वा०)। पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः। प्राप्तो जीविकां प्राप्तजीविकः। आपन्नजीविकः। अलङ्कुमारिः। निष्कौशाम्बिः। भाष्ये त्वेतत्प्रत्याख्यातम्। तथाहि, तत्पुरुषग्रहणं न करिष्यते। परवल्लिङ्गं द्वन्द्वस्येत्येव। कथं 'पूर्वकायः' 'अर्द्धपिप्पली' इति? एकदेशिसमासोऽपि नारभ्यते। कर्मधारय एवायं-पूर्वश्चासौ कायश्च, अर्द्धश्चासौ पिप्पली चेति। ततश्च प्राधान्यादेवोत्तरपदार्थस्य लिङ्गं भवति। न च षष्ठीसमासबाधनार्थमेकदेशिसमासोऽवश्यारब्धव्य इति वाच्यम्, इष्टत्वादनभिधानाच्च। तथाहि, "द्वितीयतृतीय"(पा०सू०२-२-३) इत्यत्रान्यतरस्याङ्ग्रहणात्सूत्रकारस्यापि षष्ठीसमास इष्टः, अर्धशब्देनापि षष्ठीसमासो भाष्यकाराणामिष्ट इति प्रागेवोक्तम्। 'पूर्वापरम्' इत्यत्र त्वनभिधानात्षष्ठीसमासो न भविष्यतीति। इदञ्च प्रत्याख्यानं दुर्बलम्, अनभिधानाश्रयणमगतिकगतिरिति सन्प्रत्ययविधौ भाष्य एवोक्तत्वात्।

पूर्ववदश्ववडवौ (पा०सू०२-४-२७)। द्विवचनमतन्त्रम्। अर्थातिदेशश्चायम्। परवल्लिङ्गतापवादः। अश्ववडवौ, अश्ववडवान्, अश्ववडवैर्जवनैरित्यादि। "विभाषा वृक्ष" (पा०सू०२-४-१२) इत्यादिसूत्रेण समाहारद्वन्द्वपक्षे तु "स नपुंसकम्" (पा०सू०२-४-१७) इत्येव भवति, तच्छब्देन विशिष्य परामर्शार्थमेवाश्ववडग्रहणात्। अन्यथा पशुग्रहणेनैव सिद्धौ तद्वैयर्थ्यापत्तेरित्युक्तम्।

हेमन्तशिशिरावहोरात्रे च च्छन्दसि (पा०सू०२-४-२८)। पूर्ववदित्यनुवर्तते। हेमन्तश्च शिशिरं च हेमन्तशिशिरौ। अत्रेदमवधेयम्, शिशिरशब्दः पुन्नपुंसकयोः। तथाच चक्रवज्रान्धकारेति सूत्रे तिमिरशिशिराणि नपुंसके चेति भगवान्पाणिनिः। अमरोऽपि—"हेमन्तः शिशिरोऽस्त्रियाम्"(अ०को०१-४-१९) इत्याह। तथा चात्र सूत्रे हेमन्तशिशिराविति न कर्तव्यम्। अहोरात्रे शिवे स्याताम्। इह "रात्राह्नाहाः" (पा०सू०२-४-२९) इति पुंस्त्वं प्राप्तम्। द्वित्वमतन्त्रम्। अहोरात्राणि विदधत्। न चेदं समाहारद्वन्द्वे सत्येकशेषात्सिद्धमिति वाच्यम्, तत्रापि पुंस्त्वस्योत्तरसूत्रे वक्ष्यमाणत्वात्। छन्दसि लिङ्गव्यत्ययो वक्ष्यते तस्यैवायं प्रपञ्चः। लोके तु दुःखे हेमन्तशिशिरे। अहोरात्रौ पुण्यौ।

रात्राह्नाहाः पुंसि (पा०सू०२-४-२९)। एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव। रात्रेः पूर्वो भागः पूर्वरात्रः। एकदेशिसमासः। "अहः सर्वैकदेश" (पा०सू०५-४-८७) इत्यच् समासान्तः। पूर्वाह्णः। "राजाहः सखिभ्यः" (पा०सू०५-४-९१) इति टच्। "अह्नोऽह्न एतेभ्यः" (पा० सू०५-४-८८) इत्यह्नादेशः। "अह्नोऽदन्तात्" (पा०सू०८-४-७) इति णत्वम्। द्व्यहः। "न संख्यादेः समाहारे" (पा०सू०५-४-८९) इत्यह्नादेशाभावः। "अह्नष्टखोरेव" (पा०सू०६-४-१८५) इति टिलोपः। परवल्लिङ्गापवादोऽयं योगः। वृत्तौ तु एते पुंसीत्युक्तम्। तत्राप्येतदन्ता इत्यर्थो बोध्यः। यत्तु रात्रादीनामेवानेन पुंस्त्वे कृते तदन्तस्य "परवल्लिङ्गम्" (पा०सू०२-४-२६) इत्येव सिद्धमिति। तन्न, समाहारे नपुंसकत्वापत्तेः। परवल्लिङ्गत्वापवादो हि "स नपुंसकम्" (पा०सू० २-४-१७) इति योगः। न च नपुंसकत्वे इष्टापत्तिः, 'द्विरात्रः' 'त्रिरात्रः' इति वृत्तिकारीयोदाहरणविरोधात्। तद्धि समाहारे द्विगुरिति सर्वैर्व्याख्यातम्। अमरोऽपि प्रायुङ्क्त—"ते तु त्रिंशदहोरात्रः" (अ०को० १-४-१२) इति, "मासेन स्यादहोरात्रः" (अ०को०१-४-२२) इति च। तस्मात्तदन्तस्यैवायं पुंस्त्वविधिः। यद्यपि सन्निधानात्परवल्लिङ्गताया एवायमपवादस्तथापि परत्वान्नपुंसकतां बाधते।

अत्रेदं चिन्त्यम्—उक्तरीत्या 'अहोरात्रः' इत्यत्र पुंस्त्वमस्तु। द्विरात्रादौ तु वृत्तिकारहरदत्ताद्युक्तं पुंस्त्वमसङ्गतम्, तत्र विशिष्टक्लीबत्वाविधेः। तथाच लिङ्गानुशासनसूत्रम्। "अपथपुण्याहे नपुंसके" (लि० सू०१३२)। "संख्यापूर्वा रात्रिः" (लि०सू०१३२) इति। अमरोऽप्याह—"रात्रेः प्राक् संख्ययान्वितम्" (अ०को०३-५-२५) इति "गणरात्रं निशाबह्व्यः" (अ०को०१-४-६) इति च। अनुवाकादयः

पुंसीति वक्तव्यम् (का०वा०)। अनुवाकः। शंयुवाकः। सूक्तवाकः। वाक्यविशेषस्यैताः सञ्ज्ञाः। कर्मणि घञन्ता इति नपुंसकत्वे प्राप्ते वचनम्।

अपथं नपुंसकम् (पा०सू०२-४-३०)। इदं नपुंसकं स्यात्तत्पुरुषे। समासान्तरे तु अपथो देशः। अपथा नगरी। कृतसमासान्तनिर्देशा-न्नेह-अपन्थाः।

अर्धर्चाः पुंसि च (पा०सू०२-४-३१)। अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः। ते च गणरत्ने संगृहीताः। तद्यथा--

अर्धर्चध्वजकुञ्जशीधुमधवो वर्चस्ककूर्चाढकाः
पङ्कानीकपिनाकनिष्ककपटाष्टङ्कः किरीटः कुटः।
कूटः कङ्कटकर्वटाण्डशकटा वल्मीकसानूनटाः
खण्डोद्योगाविडङ्गशृङ्गसरकाः पुंस्त्रव्रजौ मोदकः।
मधुर्मकरन्दे मद्ये माक्षिके च द्विलिङ्गः।
"मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः।
अर्धर्चादिगणे पाठात्पुन्नपुंसकयोर्मधुः"॥

इति शाश्वतः। अमरस्तु-"मार्द्वीके मधु न द्वयोः" इत्याह। चैत्रदैत्ययोस्तु पुंस्येव। वर्चस्कं शकृत्। कूर्चं दीर्घश्मश्रु। आढकं मानविशेषः। पङ्कः कर्दमपापयोः। अनीकं सैन्यम्। पिनाको रुद्रधनुस्त्रिशूलं च। निष्क आभरणम्। कपटं व्याजः। टङ्कः पाषाणभेदनः। किरीटो मुकुटम्। कुटो घटः। कूटं सङ्घातो माया च। कङ्कटं सन्नाहः। कर्वटं नद्यादिवेष्टितः खेटकग्रामः। अण्डं पक्ष्यादिप्रसवः। नटो नर्त्तकविशेषः। खण्ड इक्षुविकारः शकलं च। उद्योगमुत्साहः। विडङ्ग औषधम्। सरकं मद्यम। शेषं प्रसिद्धम्।

शाको मस्तककल्कशूकनिकराः शुल्कं निदाघो नखो
बाणद्रोणसुवर्णभूषणरणाः कार्षापणस्तोरणः।
काण्डस्ताण्डवदण्डमण्डपिटकाः सक्तुस्तटाकव्रणौ
पेटो मञ्चकवारबाणचरणा वस्त्राम्बरैरावताः।

कल्क औषधनिर्यासः दम्भः पातकं च। शूकं धान्यादेः सूची। शुल्कं घट्टादावायस्थानम्। द्रोणो मानविशेषः पक्षिविशेषश्च। भूषणोऽलङ्कारः। काण्डः शरनालवर्गवारिसमयकुत्सितेषु। मण्डो दध्यादेर्द्रवांशः। पिटको वंशनिर्मितः पात्रविशेषः। पेटः संहतिः। ऐरावतमिन्द्रगजः।

नरकमटविटङ्कस्वेडिनाभूतवुस-

प्रयुतघृतवसन्ता हस्तबुस्तापराह्णाः ।
पलितफलककण्टा नाम कर्माभिधाना
ऽयुतशततृणनीडा यौवनोद्यानयानाः ।

चरकं ग्रन्थविशेषः । मठं व्रतिनां स्थानम् । विटङ्कं कपोतपाली । क्ष्वेडितो मुखध्वनिविशेषः । भूतः पिशाचे द्विलिङ्गः । क्रियाशब्दस्तु विशेष्यलिङ्गः । वृत्तं शीलम् । प्रयुते दशलक्षाः । घृत आज्यम् । हस्तं पाणिः । बुस्तं मांसशष्कुली । पलितः पाण्डुरकेशः । फलकः खेटकम् । कण्टं पापम् । अयंनामा अयंकर्मा, कार्यमित्यर्थः ।

कर्म व्याप्ये क्रियायाञ्च पुंनपुंसकयोर्मतम् ।

इति रुद्रः । यौवनो द्वितीयं वयः । उद्यान आरामः । यानो वाहनम् ।

तीर्थप्रोथौ नलिनपुलिनस्तेययोधौषधानि
स्थानः शूर्पो निधनशयनद्वीपपुच्छायुधानि ।
यूथं गूथं कुणपकुतपक्षेमवर्णासनानि
च्छत्राकाशप्रतिसरमुधाष्टापदारण्यवर्षाः ॥

प्रोथोऽश्वनासा । स्तेयश्चौर्यम् । योधो भटः । औषधो भेषजम् । स्थानम् आधारः । शूर्पो वेणुपात्रम् । निधनो मृत्युः । शयनः शय्या । यूथः पशुसमूहः । गूथो विष्ठा । कुणपं शवः । कुतपः कालविशेषः । वर्णमक्षरम । प्रतिसरः कङ्कणम् । मुखो वदनम् । अष्टसु लोहेषु पदं प्रतिष्ठाऽस्येत्यष्टापदं सुवर्णम् । "अष्टनः संज्ञायाम्" (पा०सू०६-३-१२५) इति दीर्घः । अरण्योऽटवी । वर्षः संवत्सरः ।

कमण्डलुर्मण्डपकुट्टिमार्बुदावतंसपाराः शतमानचन्दनौ ।
समानपूषौ दृढमूषिकौदना दिनं विमानं च वितानलोहितौ ॥

अर्बुदो दशकोटिः । पर्वते तु पुंलिङ्गः । तथा च मेदिनी—

अर्बुदो मांसपुरुषे दशकोटिषु न स्त्रियाम् ।

महीधरविशेषे ना इति । अवतंसं शेखरम् । पारः परतीरम् । शतमानं रूप्यपलम् । समानः सदृशः । पूषो मुद्गादिनिर्यासः । मूषिक आखुः । ओदनं कूरः । दिनो दिवसः । लोहितः शोणितम् । गुणवाची तु वाच्यलिङ्गः ।

अंसक्षीरकषायबिम्बविटपा नेत्राव्ययौ शेखरः
केदाराश्रमशल्यशूलवलया बालस्तमालो मलः ।
गुल्माङ्गारविहारतोमररसाः पात्रं पवित्रं पुरम्
मध्यो बुध्नमृणालमण्डलनला नालप्रवालोत्पलाः ॥

अंसः स्कन्धः । क्षीरो दुग्धम् । कषायं तुवरो रसः । बिम्बो

मण्डलम्। विटपः स्तम्भः शाखा च। नेत्रो नयनम्। अव्ययमथेत्यादि। शेखरमापीडः। केदारं क्षेत्रम्। आश्रमो मुनिस्थानम्। शूलमायुधं रोगविशेषश्च। वलयो हस्ताभरणम्। बालः शिशुः केशश्च। तमालो वृक्षविशेषः। मलः पापं विट् च। गुल्मः प्रकाण्डम्। अङ्गारो दग्धकाष्ठम्। विहारः क्रीडास्थानम्। रसं मधुरादि। पात्रो भाजनम्। "त्रिषु पात्री पुटी वाटी" (अ०को०३-५-२२) इत्यमरादिहायोगव्यवच्छेदे, तात्पर्यं न त्वन्ययोगव्यवच्छेदेऽपि। एवं पवित्रः पावनम्, पुरः पुरीत्याद्यपि। बुध्नमधोभागः। नलः सुषिरतृणम्। नालः पुष्करादीनां दण्डः। अयं स्त्रियामपि, "नाला मृणालाग्रभुजो भजामः" इति श्रीहर्षः। प्रवालं पल्लवो विद्रुमश्च॥

जृम्भो वज्रकबन्धकर्षककुदाश्चक्रान्धकाराङ्कुशा
वक्त्रः संगमदेहदाडिमहिमाः पत्रं बलं वल्कलम्।
कार्पासामिषकाशकोशकुसुमप्रग्रीवमासेक्कसा
निर्यासः कलशाम्बरीषकलला माषं करीषं कुशम्॥

जृम्भो जृम्भणम्। वज्रः कुलिशं हीरकश्च। कबन्धं रुण्डः। कर्षः पलचतुर्भागः। ककुदं श्रेष्ठे वृषांसे राजचिन्हे च। चक्रो रथाङ्गः। अङ्कुशः सृणिः। वक्त्रो मुखम्। सङ्गमो नद्यादेर्मेलनम्। देहं शरीरम्। दाडिमं फलविशेषः। हिमस्तुहिनम्। पत्रः पर्णं वाहनं च। बलं सामर्थ्यं सैन्यं च। कुसुमः पुष्पम्। प्रग्रीवं वातायनम्। मासं त्रिंशदहोरात्रः। इक्कसश्चिक्कसं गोधूमादिचूर्णम्। अमरस्तु चिक्कसमर्धर्चादौ पपाठ। निर्यासं वृक्षादेर्निष्यन्दः। कलशं घटः। अम्बरीषं भ्राष्ट्रम्। कललं शुक्रशोणितयोः परिणामविशेषः। माषं परिमाणविशेषो धान्यविशेषश्च। करीषं शुष्कगोमयम्। कुशशब्दस्य विषयविवेकस्तु "दण्डमड" इत्यादिलिङ्गानुशासनसूत्रव्याख्यानावसरे वक्ष्यते।

मुसलमुकुलमूलाः पार्श्वपात्रीवपूर्वाः
कमलहलचषालाः खण्डलं कुण्डलं च।
निगलफलपलाला मङ्गलं शालशीला
विषचषकविशालाः पूलतैले कपालम्॥

मूलः शिफा। पात्रीवं यज्ञोपकरणम्। कमलः पद्मम्। हलः सीरम्। चषालं यज्ञपात्रविशेषः। खण्डलं खण्डम्। फलः प्रयोजनम्। शालो वृक्षविशेषः। शीलं चरितम्। विषो वत्सनागादिः। चषको मधुपानभाजनम्। पूलं बद्धतृणसंचयः॥

समरतिमिरवारा राजसूयोपवासौ
चमसदिवसकंसा वाजपेयो हिरण्यम् ॥
जठरदरशरीराऽऽरावकान्ताराष्ट्राः
पटहगृहकवाटाः कुक्कुटार्द्रौ च धाम ॥

वारः परिपाटी । "कंसोऽस्त्री पानभाजनम्" (अ०को०२-९-३३) इत्यर्थः । दरस्त्रासे रोगे अल्पे च । शरीरः कायः । आरावः शब्दः । गृहशब्दो नपुंसकेऽभिधेयवचनः । पुंसि तु बहुवचनान्त एव । "कवाटमररं तुल्ये" (अ०को०२-२-१८) इत्यमरः । अत्रैव कपाटशब्दोऽपि साधुरिति "शक्तौ हस्तिकपाटयोः (पा०सू०३-२-९४) इति सूत्रे वक्ष्यामः । आर्द्रः शृङ्गवेरम् । धाम गृहं तेजश्च ॥

पद्माषाढकपित्थषष्टिककुलान्यम्भोजवाजामृताः
स्थूलद्यूतखलीनलोहकवचाशोकक्षयानेकपाः ।
शङ्खस्तण्डकधर्मचर्मरजतस्नेहासिहंसापराः
सारः सैन्धवमध्यमाध्वरधनुर्मानस्तनस्थाणवः ॥

पद्मो निधौ पुंसि, जलजे तु द्विलिङ्गः । आषाढं व्रतिदण्डो मासश्च । कपित्थो वृक्षविशेषः । वृत्तौ तु कवीयेति पठ्यते, अश्वमुखबन्धनरज्जुस्तस्यार्थः । उक्तं च बोपालितेन "नार्यां करीखलीनं कवीयं वा ना तुरङ्गमुखभाण्डम्" इति । षष्टिकं व्रीहिभेदः । कुलो वंशो गृहं च । अम्भोजः कमलम् । वाजं पिच्छम् । अमृतं सलिलम् । अशोकं तरुः । क्षयो गृहम् । अनेकपं हस्ती । शङ्खो निधौ पुमान्, जलजे द्विलिङ्गः । तण्डकश्छन्दोगानां ग्रन्थविशेषः । चर्माजिनम् । रजतं रूप्यम् । स्नेहं सौहार्दम् । असिः खड्गः । अपरोऽन्यः । सारो बलम् । सैन्धवो लवणम् । मानो दर्पः । स्थाणुः शङ्कुः ॥

महिमनेत्रकपञ्चकदण्डकाः क्रकचशम्बलकुण्डपकन्दराः ॥
कटकमालवमर्मरदैवताः शिखरकेसरदारुभगन्दराः ॥

महिमं महत्त्वम् । नेत्रकं शृङ्खलकण्टकम् । पञ्चकं विस्तारः । दण्डकं छन्दोविशेषः । क्रकचं काष्ठादिदारणसाधनम् । शम्बलं पाथेयम् । कुण्डपं क्रतुविशेषः । कन्दरा स्त्रियामपि । मालवो देशविशेषः । मर्मरं शुष्कपर्णध्वनिः । दैवतो देवः । दारुः काष्ठम् ॥

दीपोद्यमब्रह्मपिधानभावा वास्तुव्रताधःप्रवराभिधानाः ।
अर्मो मुहूर्तौ धनवप्रसौधा रेणुस्तलं लोमपटं विहायः ॥

दीपं प्रकाशविशेषः । भावः स्वभावः । वास्तुर्वेश्म । अर्मः चक्षूगःरो । धनो वित्तम । पटं वस्त्रम ॥

उटजचापनपुंसकपातका भुवनकोटरपल्लवगोमयाः ।
अविखरं हरिचन्दनमूलकौ भवनसङ्क्रमगाण्डिवपत्तनाः ॥

उटजः पर्णशाला । चापो धनुः । पातकः पापम् । गाण्डिवोऽर्जुनधनुः । दीर्घमध्योऽपि । एतच्च "गाण्ड्यजगात्सञ्ज्ञायाम्" (पा०सू०५-२-११०) इति सूत्रे वृत्त्यादौ स्पष्टम् ॥

कर्पूरकूर्पासकषष्ट्युशीरगाण्डीवनिष्ठेवसवर्णभस्त्राः ।
पिण्याकपुस्तौ नखरेषुखण्डवैनीतिकद्वीपिनखारकूटाः ॥

कर्पूरो घनसारः । कूर्पासकः कञ्चुकः । षष्टिः सङ्ख्यावाची । उशीरो नलदम् । निष्ठेवो निष्ठीवनम् । भस्त्रश्चर्मकोशः भस्त्रा च । पुस्तः पुस्तकम् । नखरं नखः । इषुर्बाणः । अयं स्त्रीलिङ्गोऽपि । "पत्री रोप इषुर्द्वयोः" (अ०को०२-८-८७)इत्यमरः । तथाच श्रीहर्षः "कुसुमानि यदि स्मरेषवः" इत्युपक्रम्य "हृदयं यदमूमहन्नमूः" इति प्रायुङ्क्त । खण्डः पद्मादीनां समुदायः । विनीतानामिदं वैनीतिकम् । मनुष्यवाह्यं यानम् । द्वीपी व्याघ्रः । आरकूटः पित्तलम् ॥ अमरस्त्वाह—

पुन्नपुंसकयोः शेषोऽर्धर्चपिण्याककण्टकाः ।
मोदकस्तण्डकष्टङ्कः शाटकः कर्पटोऽर्बुदः ॥
पातकोद्योगचरकतमालामलकानडः ।
कुष्ठं मुण्डं शीधु बुस्तं क्ष्वेडितं क्षेम कुट्टिमम् ॥
सङ्गमं शतमानार्मशम्बलाव्ययताण्डवम् ।
कवियं कन्दकार्पासं पारावारं युगन्धरम् ॥
यूपं प्रग्रीवपात्रीवे पूषश्चमसचिक्कसौ ।
अर्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम् ॥
तन्नोक्तमिह लोकेऽपि तच्चेदस्त्यस्तु शेषवत् । इति ॥

अर्म चक्षुरोगः ।"अर्तिस्तुसुहुसृ" (उ०सू०१४५) इत्यादिना औणादिको मन्प्रत्यय इति तद्व्याख्यातारः । शम्बलं तालव्यादि दन्त्यादि चेति ते एव । इह यद्यपि अर्धर्चादीन् चिक्कसान्तानत्र पठितान् कूटोऽस्त्रीत्यादींश्च तत्र तत्र प्राक्पठितान् विहायान्येषां प्रसिद्धविलक्षणं पुंस्त्वादिकमित्युक्तम् । तेन घृतक्षीरदारुलोमासनमुखशरीरादयो लोके नियतलिङ्गा एवेति प्रतीयते । तथापि मुनित्रयवचनविरहाद्वैदिकत्वं निर्मूलम् । अत एवापरितोषाल्लोकेऽपीत्याद्युक्तमित्याहुः ।

युक्तं चैतत्, लिङ्गानुशासनसूत्राणां घृतादिविषयकाणां लोकवेदसाधारण्येनैव प्रवृत्तेः । एवमन्येऽपि ये शब्दाः कोशादिना पुन्नपुंसकलिङ्गतया निर्णीतास्ते सर्वे अर्धर्चादिषु बोध्याः ॥

इदानीं परवल्लिङ्गमित्यतिदेशे उपयुक्ततया प्रसङ्गात् पाणिनीयलिङ्गानुशासनसूत्राणि व्याख्यायन्ते ॥

लिङ्गम् ॥ स्त्री ॥ अधिकारसूत्रे एते ।

ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः ॥ ऋकारान्ता एते पञ्चैव स्त्रीलिङ्गाः, स्वस्रादिसप्तकस्यैव ङीन्निषेधेन कर्त्रीत्यादेर्ङीपा ईकारान्तत्वात् । तिसृचतस्रोस्तु स्त्रियामादेशतया विधानेऽपि प्रकृत्योस्त्रिचतुरोर्ऋदन्तत्वाभावात् ।

अन्यूप्रत्ययान्तो धातुः । अनिप्रत्ययान्त ऊप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । अवनिः । चमूः । प्रत्ययग्रहणं किम् ? देवयतेः क्विप् द्यूः । विशेष्यलिङ्गः ।

अशनिभरण्यरणयः पुंसि च ॥ इयमयं वा अशनिः ।

मिन्यन्तः ॥ मिप्रत्ययान्तो निप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । भूमिः । ग्लानिः ।

वह्निवृष्ण्यग्नयः पुंसि ॥ पूर्वस्यापवादः ।

श्रोणियोन्यूर्मयः पुंसि च ॥ इयमयं वा श्रोणिः ।

क्तिन्नन्तः ॥ स्पष्टम् । कृतिरित्यादि ।

ईकारान्तश्च ॥ ईप्रत्ययान्तः स्त्री स्यात् । लक्ष्मीः ।

ऊङाबन्तश्च ॥ कुरूः ॥ विद्या ।

य्वन्तमेकाक्षरम् ॥ श्रीः । भूः । एकाक्षरं किम् ? पृथुश्रीः ।

विंशत्यादिरानवतेः ॥ इयं विंशतिः । त्रिंशत् । चत्वारिंशत् । पञ्चाशत् । षष्टिः । सप्ततिः । अशीतिः । नवतिः ।

दुन्दुभिरक्षेषु ॥ इयं दुन्दुभिः । अक्षेषु किम् ? अयं दुन्दुभिः, वाद्यविशेषोऽसुरो वेत्यर्थः ।

नाभिरक्षत्रिये ॥ इयं नाभिः ।

उभावप्यन्यत्र पुंसि ॥ दुन्दुभिर्नाभिश्चोक्तविषयादन्यत्र पुंसि स्तः । नाभिः क्षत्रियः । कथं तर्हि—

समुल्लसत्पङ्कजपत्रकोमलैरुपाहितश्रीण्युपनीविनाभिभिः ।

(किरा० ८-२५)

इति भारविः । उच्यते, दृढभक्तिरित्यादाविव कोमलैरिति सामान्ये नपुंसकं बोध्यम् । वस्तुतस्तु "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इतिभाष्यात्पुंस्त्वमपीह साधु । अत एव—

नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् ।
द्वयोः प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिकामदे ॥

इति मेदिनिः । रभसोऽप्याह--

मुख्यराट्क्षत्रिये नाभिः पुंसि प्राण्यङ्गके द्वयोः ।

चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदे ॥ इति ।

एवमेवंविधेऽन्यत्रापि बोध्यम् ।

तलन्तः ॥ अयं स्त्रियां स्यात् । शुक्लस्य भावः शुक्लता । ब्राह्मणस्य कर्म ब्राह्मणता । ग्रामस्य समूहो ग्रामता । देव एव देवता ।

भूमिविद्युत्सरिल्लतावनिताभिधानानि ॥ भूमिर्भूः । विद्युत्सौदामनी । सरिन्निम्नगा । लता वल्ली । वनिता योषित् ।

यादो नपुंसकम् ॥ यादःशब्दः सरिद्वाचकोऽपि क्लीबं स्यात् ॥

भाःस्रुक्स्रग्दिगुष्णिगुपानहः ॥ एते स्त्रियां स्युः । इयं भा इत्यादि ।

स्थूणोर्णे नपुंसके च ॥ एते स्त्रियां क्लीबे च स्तः । स्थूणम्, स्थूणा । ऊर्णम्, ऊर्णा । तत्र स्थूणा काष्ठमयी द्विकर्णिका । ऊर्णा तु मेषादिलोम ।

गृहशशाभ्यां क्लीबे ॥ नियमार्थमिदम् । गृहशशपूर्वे स्थूणोर्णे यथासंख्यं नपुंसके स्तः । गृहस्थूणम् । शशोर्णम् । "शशोर्णं शशलोमनि" ( अ०को०२-९-१०८ ) इत्यमरः ॥

प्रावृड्विप्रुड्रुट्तृड्विट्त्विषः ॥ एते स्त्रियां स्युः ॥

दर्विविदिवेदिखनिशान्यश्रिवेशिकृष्योषधिकट्यङ्गुलयः । एते स्त्रियां स्युः । पक्षे ङीष् । दर्वी, दर्विरित्यादि ।

तिथिनाडिरुचिवीचिनालिधूलिकिकिकेलिच्छविरात्र्यादयः । एते प्राग्वत् । इयं तिथिरित्यादि । अमरस्त्वाह—"तिथयो द्वयोः" (अ०को० १-४-१) इति । तथाच भारविः—"तस्य भुवि बहुतिथास्तिथयः" इति । स्त्रीत्वे हि बहुतिथ्य इति स्यात् । श्रीहर्षश्च-"निखिलान्निशि पौर्णिमातिथीन्" इति ।

शष्कुलिराजिकुट्यशनिवर्तिभ्रकुटित्रुटिवलिपङ्क्तयः । एतेऽपि स्त्रियां स्युः । इयं शष्कुलिः ।

प्रतिपदापद्विपत्संपत्शरत्संसत्परिषदुषःसंवित्क्षुत्पुन्मुत्समिधः । इयं प्रतिपदित्यादि । उषा उच्छन्ती । उषाः प्रातरधिष्ठात्री देवता ।

आशीर्धूःपूर्गीर्द्वारः । इयमाशीरित्यादि ।

अप्सुमनस्समासिकतावर्षाणां बहुत्वं च ॥ अबादीनां पञ्चानां स्त्रीत्वं स्याद्बहुत्वं च । आप इमाः । "स्त्रियः सुमनसः पुष्पम्"(अ०को० २-४-२७) । "सुमना मालती जातिः" (अ० को० २-४-७२) । देववाची तु पुंस्येव । "सुपर्वाणः सुमनसः" (अ० को० १-१-७) । बहुत्वं प्रायिकम् । "एका च सिकता तैलदाने असमर्था" इति अर्थवत्सूत्रे भाष्यप्रयोगात्

"समां समां विजायते" इत्यत्र समायां समायामिति भाष्याच्च ।"विभाषा घ्राधेट्" (पा० सू० २-४-७८) इति सूत्रे "अघ्रासातां सुमनसौ" इति वृत्तिव्याख्यायां हरदत्तोऽप्येवम् ॥

स्रक्त्वक्ज्योग्वाग्यवागूनौस्फिजः ॥ इयं स्रक् । त्वक् । ज्योक् । वाक् । यवागूः । नौः । स्फिक् ॥

त्रुटिसीमासंबध्याः ॥ इयं त्रुटिः । सीमा । सम्बध्या ॥

चुल्लिवेणिखार्यश्च ॥ स्पष्टम् ॥

ताराधाराज्योत्स्नादयश्च ॥

शलाका स्त्रियां नित्यम् ॥ नित्यग्रहणमन्येषां क्वचिद्व्यभिचारं ज्ञापयति ॥

इति स्त्र्यधिकारः ॥

पुमान् ॥ अधिकारोऽयम् ॥

घञबन्तः । पाकः । त्यागः । करः गरः । भावार्थ एवेदम्, नपुंसकत्वविशिष्टे भावे क्तल्युड्भ्यां स्त्रीत्वविशिष्टे तु क्तिन्नादिभिर्बाधेन परिशेषात् । कर्मादौ तु घञाद्यन्तमपि विशेष्यलिङ्गम् । तथाच भाष्यम्—"सम्बन्धमनुवर्तिष्यते" इति ।

घाजन्तश्च ॥ विस्तरः । गोचरः । चयः । जयः इत्यादि ।

भयलिङ्गभगपदानि नपुंसके ॥ एतानि नपुंसके स्युः । भयम् । लिङ्गम् । भगम् । पदम् ।

नङन्तः ॥ नङ्प्रत्ययान्तः पुंसि स्यात् । यज्ञः । यत्नः ॥

याच्ञा स्त्रियाम् ॥ पूर्वस्यापवादः ।

क्यन्तो घुः ॥ किप्रत्ययान्तो घुः पुंसि स्यात् । आधिः । निधिः । उदधिः । क्यन्तः किम् ? दानम् । घुः किम् ? जाग्निर्बीजम् ॥

इषुधिः स्त्री च ॥ इषुधिशब्दः स्त्रियां पुंसि च । पूर्वस्यापवादः ।

देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानि ॥ एतानि पुंसि स्युः । देवाः सुराः । असुरा दैत्याः । आत्मा क्षेत्रज्ञः । स्वर्गो नाकः । गिरिः पर्वतः । समुद्रोऽब्धिः । नखः कररुहः । केशः शिरोरुहः । दन्तो दशनः । स्तनः कुचः । भुजो दोः । कण्ठो गलः । खड्गः करवालः । शरो मार्गणः । पङ्कः कर्दम इत्यादि ।

त्रिविष्टपत्रिभुवने नपुंसके ॥ स्पष्टम् । तृतीयं विष्टपं त्रिविष्टपम् । स्वर्गाभिधानतया पुंस्त्वे प्राप्ते अयमारम्भः ।

द्यौः स्त्रियाम् ॥ द्योदिवोस्तन्त्रेणोपादानमिदम् ।

इषुबाहू स्त्रियां च ॥ चात्पुंसि ।

बाणकाण्डौ नपुंसके च ॥ चात्पुंसि। त्रिविष्टपेत्यादिचतुःसूत्री देवासुरेत्यस्यापवादः।

नान्तः ॥ अयं पुंसि। राजा। तक्षा। न च चर्मवर्मादिष्वतिव्याप्तिः, "मन्नद्व्यच्कोकर्तरि"(लिं०सू०१४५) इति नपुंसकप्रकरणे वक्ष्यमाणत्वात्।

क्रतुपुरुषकपोलगुल्फमेघाभिधानानि ॥ क्रतुरध्वरः। पुरुषो नरः। कपोलो गण्डः। गुल्फः प्रपदः। मेघो नीरदः।

अभ्रं नपुंसकम् ॥ पूर्वस्यापवादः ॥

उकारान्तः ॥ अयं पुंसि स्यात्। प्रभुः। इक्षुः।

"हनुर्हट्टविलासिन्यां नृत्यारम्भे गदे स्त्रियाम् ॥

द्वयोः कपोलाऽवयवे" इति मेदिनी। "करेणुरिभ्यां स्त्री नेभे" (अ० को० ३-३-५९) इत्यमरः। एवंजातीयकविशेषवचनानाक्रान्तस्तु प्रकृतसूत्रस्य विषयः। उक्तं च—

लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः। इति।

एवमन्यत्रापि।

धेनुरज्जुकुहूसरयुतनुरेणुप्रियङ्गवः स्त्रियाम ॥ समासे रज्जुःपुंसि च। कर्कटरज्ज्वा, कर्कटरज्जुना ॥

श्मश्रुजानुवसुस्वाद्वश्रुजतुत्रपुतालूनि नपुंसके ॥ वसु चार्थवाचि। अर्थवाचीति किम्? वसुर्मयूखाग्निधनाधिपेषु।

मद्गुमधु (१)शीधुसानुकमण्डलूनि नपुंसके च ॥ चात्पुंसिं। अयं मद्गुः। इदं मद्गु।

रुत्वन्तः ॥ मेरुः। सेतुः।

दारुकसेरुजतुवस्तुमस्तूनि नपुंसके ॥ रुत्वन्त इति पुंस्त्वस्यापवादः। इदं दारु।

सक्तुर्नपुंसके च ॥ चात्पुंसि। सक्तुः। सक्तु।

प्राग्रश्मेरकारान्तः ॥ "रश्मि दिवसाभिधानम" (लिं०सू०१००) इति वक्ष्यति, प्रागेतस्मादकारान्त इत्यधिक्रियते।

कोपधः ॥ कोपधोऽकारान्तः पुंसि स्यात्। स्तबकः। कल्कः।

चिबुकशालूकप्रातिपदिकांशुकोल्मुकानि नपुंसके ॥ पूर्वसूत्रापवादः ॥

कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतडाकनिष्कशुष्कवर्चस्कपिनाकभाण्डकपिण्डककटकशण्डकपिटकतालकफलकपुलाकानि नपुंसके च ॥ चात्पुंसि। अयं कण्टकः। इदं कण्टकमित्यादि।

टोपधः ॥ टोपधोऽकारान्तः पुंसि स्यात्। घटः। पटः।

---

(१) 'सीधु' इत्यधिकं कौमुद्याम्।

किरीटमुकुटललाटवटवि(१)टशृङ्गाटकराटलोष्टानि नपुंसके । किरीटमित्यादि ।

कुटकूटकपटकवाटकर्पटनटनिकटकीटकटानि नपुंसके च ॥ चात्पुंसि । कुटः कुटमित्यादि ।

णोपधः ॥ णोपधोऽकारान्तः पुंसि स्यात् । गुणः । गणः । पाषाणः ।

ऋणलवणपर्णतोरणरणोष्णानि नपुंसके ॥ पूर्वसूत्रापवादः ॥

कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च ॥ चात्पुंसि ॥

थोपधः ॥ रथः । प्रस्थः ॥

काष्ठपृष्ठरि(२)कथोकथानि नपुंसके ॥ इदं काष्ठमित्यादि ।

काष्ठा दिगर्था स्त्रियाम् ॥ इमाः काष्ठाः ।

तीर्थप्रोथयूथगाथानि नपुंसके च ॥ चात्पुंसि । अयं तीर्थः इदं तीर्थम् ।

नोपधः ॥ अदन्तः पुंसि । इनः । फेनः ।

जघनाजिनतुहिनकाननवनवृजिनविपिनबेतनशासनसोपानमिथुनश्मशानरत्नानिम्नचिन्हानि नपुंसके ॥ पूर्वस्यापवादः ।

मानयानाभिधान(३)नलिनोद्यानशयनासनस्थानचन्दनालानसमानभवनवसनसम्भावनविभावनविमानानि नपुंसके च ॥ चात्पुंसि । अयं मानः । इदं मानम् ।

पोपधः ॥ अदन्तः पुंसि । यूपः । दीपः । सर्पः ॥

पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके ॥ इदं पापमित्यादि ।

शूर्पकुतपकुणपद्वीपाविटपानि नपुंसके च ॥ अयं शूर्पः ।इदं शूर्पमित्यादि ।

भोपधः ॥ स्तम्भः । कुम्भः ।

तलभं नपुंसकम् ॥ पूर्वस्यापवादः ।

जृम्भं नपुंसके च ॥ जृम्भम् । जृम्भः ।

मोपधः ॥ सोमः । भीमः ।

रुक्मसिध्म(४)युग्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके ॥ इदं रुक्ममित्यादि ।

सङ्ग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुंसके च । चात्पुंसि । अयं संग्रामः । इदं संग्रामम् ।

---

(१) 'वीट' इति कौमुद्याम् । (२) 'सिक्थ' इति कौमुद्याम् ।
(३) 'नलिनपुलिनोद्यान' इति कौमुद्याम् । (४) 'युध्म' इति कौमुद्याम् ।

योपधः ॥ समयः । हयः ।

किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके ॥ स्पष्टम् ।

गोमयकषायमलयान्वयाव्ययानि नपुंसके च ॥ गोमयः । गोमयम् ।

रोपधः ॥ क्षुरः । अङ्कुरः ।

द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रच्छिद्र(१)नीरतीरदूरकृच्छ्ररन्ध्राश्रश्वभ्रभीर(२)गभीरक्रूरविचित्रकेयूरकेदारोदाराजस्रशरीरकन्दरमन्दारपञ्जरजठराजिरवैरचामरपुष्करगह्वरकुहरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयन्त्रक्षत्रक्षेत्रमित्रकलत्रचित्रमूत्रसूत्रवक्त्रनेत्रगोत्राङ्गुलित्रभलत्रशस्त्रशास्त्रवस्त्रपत्रपात्रच्छत्राणि नपुंसके ॥ इदं द्वारमित्यादि ।

शुक्रमदेवतायाम् ॥ इदं शुक्रं रेतः ।

चक्रवज्रान्धकारसारावारपारक्षीरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुंसके च ॥ चात्पुंसि । चक्रः । चक्रमित्यादि ।

षोपधः ॥ वृषः । वृक्षः ।

शिरीषर्जीषाम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके ।

यूषकरीषमिषविषवर्षाणि नपुंसके च ॥ चात्पुंसि । अयं यूषः । इदं यूषमित्यादि ।

सोपधः ॥ वत्सः । वायसः । महानसः ।

पनसबिसबुससाहसानि नपुंसके ।

चमसांसरसनिर्यासोपवासकार्पासवासभा(३)सकासकांसमांसानि नपुंसके च ॥ इदं चमसम् । अयं चमस इत्यादि ।

कंसं चाप्राणिनि ॥ कंसोऽस्त्री पानभाजनम् । प्राणिनि तु कंसो नाम कश्चिद्राजा ।

रश्मिदिवसाभिधानानि ॥ एतानि पुंसि स्युः । रश्मिर्मयूखः । दिवसो घस्रः ।

दीधितिः स्त्रियाम् ॥ पूर्वस्यापवादः ।

दिनाहनी नपुंसके ॥ अयमप्यपवादः ।

मानाभिधानानि ॥ एतानि पुंसि स्युः । कुडवः । प्रस्थः ।

द्रोणाढकौ नपुंसके च ॥ इदं द्रोणम् । अयं द्रोणः ।

खारीमानिके स्त्रियाम् ॥ इयं खारी । इयं मानिका ।

दाराक्षतलाजासूनां बहुत्वं च ॥ इमे दाराः ॥

(१) 'च्छिद्र' इति नास्ति कौमुद्याम् । (२) 'भीर' इति कौमुद्याम् ।
(३) 'भास' इति कौमुद्याम् ।

नाड्यपजनोपपदानि व्रणाङ्गपदानि ॥ यथासंख्यं नाड्याद्युपपदानि व्रणादीनि पुंसि स्युः। अयं नाडीव्रणः। अपाङ्गः। जनपदः । व्रणादीनामुभयलिङ्गत्वेऽपि क्लीबत्वनिवृत्त्यर्थं सूत्रम्।

मरुद्गरुत्तरदृत्विजः ॥ अयं मरुत।

ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिबलिकौलिमौलिरविकविकपिमुनयः ॥ एते पुंसि स्युः। अयमृषिः ॥

ध्वजगजमुञ्जपुञ्जाः ॥ एते पुंसि।

हस्तकुन्तान्तव्रातवातदूतधूर्तसूतचूतमुहूर्ताः ॥ एते पुंसि। अमरस्तु–"मुहूर्तोऽस्त्रियाम्" इत्याह।

षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः ॥ अयं षण्डः।

वंशांशपुरोडाशाः ॥ अयं वंशः। पुरो दाश्यते पुरोडाशः। कर्मणि घञ्। भवव्याख्यानयोः प्रकरणे "पौरोडाशपुरोडाशात्ष्ठन्" (पा०सू० ४-३-७०) इति विकारप्रकरणे "व्रीहेः पुरोडाशे" (पा० सू० ४-३-१४८) इति च निपातनात्प्रकृतसूत्र एव निपातनाद्वा दस्य डत्वम्। "पुरोडाशभुजामिष्टम्" इति माघः।

ह्रदकन्दकुन्दबुद्बुदशब्दाः ॥ अयं ह्रदः।

अर्घपथिमथ्यृभुक्षिस्त(१)म्बपूगाः ॥ अयमर्घः।

पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्गगन्धस्कन्धमृदङ्गसङ्गसमुद्रपुङ्खाः ॥ अयं पल्लव इत्यादि।

सारथ्यतिथिकुक्षिवस्तिपाण्यञ्जलयः ॥ एते पुंसि। अयं सारथिः।

॥ इति पुल्लिङ्गाधिकारः ॥

नपुंसकम् ॥ अधिकारोऽयम् ॥

भावे ल्युडन्तः ॥ हसनम्। भावे किम्? पचनोऽग्निः। इध्मव्रश्चनः कुठारः।

निष्ठा च ॥ भावे या निष्ठा तदन्तं क्लीबं स्यात्। हसितम्। गीतम्।

त्वष्यञौ तद्धितौ ॥ शुक्लत्वम्। शौक्ल्यम्। ष्यञः षित्त्वसामर्थ्यात्पक्षे स्त्रीत्वम्। चातुर्यम्। चातुरी। सामग्र्यम्। सामग्री। औचित्यम्। औचिती।

कर्मणि च ब्राह्मणादिगुणवचनेभ्यः ॥ ब्राह्मणस्य कर्म ब्राह्मण्यम्।

यद्यढग्यगञ्ण्वुञ्छाश्च भावकर्मणि ॥ एतदन्तानि क्लीबानि। "स्तेनाद्यन्नलोपश्च" (पा० सू० ५-१-१२५)—स्तेयम्। "सख्युर्यः" (पा०

---

(१) 'स्तम्बानतम्ब' इति कौमुद्याम्।

सू० ५-१-१२६ )—सख्यम् । "कपिज्ञात्योर्ढक्" ( पा० सू० ५-१-१२७ )—कापेयम् । "पत्यन्तपुरोहितादिभ्यो यक्" ( पा० सू० ५-१-१२८ )—आधिपत्यम् । "प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्" ( पा० सू० ५-१-१२९)—औष्ट्रम् । "हायनान्तयुवादिभ्योऽण्" (पा० सू० ५-१-१३० )—द्वैहायनम् । "द्वन्द्वमनोज्ञादिभ्यो वुञ्" ( पा० सू० ५-१-१३३ )—पितापुत्रकम् । "होत्राभ्यश्छः" (पा० सू० ५-१-१३५)-अच्छावाकीयम् ॥

अव्ययीभावः ॥ अधिस्त्रि ।

द्वन्द्वैकत्वम् ॥ पाणिपादम् ।

अभाषायां हेमन्तशिशिरावहोरात्रे च ॥ स्पष्टम् ।

अनञ्कर्मधारयस्तत्पुरुषः ॥ अधिकारोऽयम् ।

अनल्पे छाया ॥ शरच्छायम् ।

राजामनुष्यपूर्वा सभा ॥ इनसभमित्यादि ।

सुरासेनाच्छायाशालानिशा स्त्रियां च ॥

(१)परवत् । अन्यस्तत्पुरुषः परवल्लिङ्गः स्यात् ।

रात्रान्हाहाः पुंसि ॥

अपथपुण्याहे नपुंसके ॥

संख्यापूर्वा रात्रिः । त्रिरात्रम् । सङ्ख्यापूर्वेति किम् ? सर्वरात्रः ।

द्विगुः स्त्रियां च ॥ व्यवस्थया । (२)पञ्चमूली । त्रिभुवनम् ।

इसुसन्तः ॥ हविः । धनुः ।

अर्चिः स्त्रियाञ्च ॥ इसन्तत्वेऽपि अर्चिः स्त्रियां नपुंसके च स्यात् । इयमिदं वा अर्चिः ।

छदिः स्त्रियामेव ॥ इयं छदिः । छद्यतेऽनेनेति छादेश्चुरादिण्यन्तात् "अर्चिशुचि" इत्यादिना इस् । इस्मन्त्रित्यादिना ह्रस्वः । "पटलं छदिः" (अ०को०२-२-१५) इत्यमरः । तत्र पटलसाहचर्याच्छदिषः क्लीबतां वदन्तोऽमरव्याख्यातार उपेक्ष्याः ।

मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि । एतेषामभिधायकानि क्लीबे स्युः ॥ मुखमाननम् । नयनं लोचनम् । लोहं कालम् । वनं गहनम् । मांसमामिषम् । रुधिरं रक्तम् । कार्मुकं शरासनम् । विवरं बिलम् । जलं वारि । हलं लाङ्गलम् । धनं द्रविणम् । अन्नमशनम् । अस्यापवादानाह त्रिसूत्र्या—

सीरार्थौदनाः पुंसि ।

---

(१) 'शिष्टः परवत्' इति कौमुद्याम् । (२) 'पञ्चमूली' इति कौमुद्याम् ।

वक्रनेत्रारण्यगाण्डीवानि पुंसि च ॥ वक्रो वक्रम् । नेत्रो नेत्रम् । अरण्योऽरण्यम् । गाण्डीवो गाण्डीवम् ।

अटवी स्त्रियाम् ॥

लोपधः ॥ कुलम् । कूलम् । स्थलम् ।

तूलोपलतालकुसूलतरलकम्बलदेवलवृषलाः पुंसि ॥ अयं तूलः ।

शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालबालनिगलपलालबिडालखिलशूलाः पुंसि च । चात् क्लीबे । इदं शीलमित्यादि ।

शतादिः संख्या ॥ शतम् । सहस्रम् । शतादिरिति किम् ? एको द्वौ बहवः । संख्येति किम् ? शतशृङ्गो नाम पर्वतः ।

शतायुतप्रयुताः पुंसि च ॥ अयं शतः । इदं शतमित्यादि ।

लक्षा कोटिः स्त्रियाम् ॥ इयं लक्षा । इयं कोटिः । "वा लक्षा नियुतं च तत्" इत्यमरात् क्लीबेऽपि लक्षम् ।

(१)सहस्रः पुंसि ॥ अयं सहस्रः ।

मन् द्व्यचकोऽकर्तरि ॥ मन्प्रत्ययान्तो द्व्यचकः क्लीबः स्यान्न तु कर्तरि । वर्म । चर्म । द्व्यचकः किम् ? अणिमा । महिमा । अकर्तरि किम् ? ददाति इति दामा ।

ब्रह्मन् पुंसि च ॥ अयं ब्रह्मा । इदं ब्रह्म ।

नामरोमणी नपुंसके । मन्द्व्यचक इत्यस्यायं प्रपञ्चः ।

असन्तो द्व्यचकः ॥ यशः । मनः । तपः । द्व्यचकः किम् ? चन्द्रमाः ।

अप्सराः स्त्रियाम् ॥ एता अप्सरसः । प्रायेणायं बहुवचनान्तः ।

त्रान्तः ॥ पत्रम् । छत्रम् ।

यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव ॥

भृत्रामित्रछात्रपुत्रमन्त्रवृत्रमेढ्रोष्ट्राः पुंसि ॥ अयं भृत्रः । न मित्रममित्रः । "तस्य मित्राण्यमित्रास्ते" (मा०का०२-१०१) इति माघः । "स्याताममित्रौ मित्रे च" इति च । यत्तु "द्विषोऽमित्रे" (पा०सू०३-२-१३१) इति सूत्रे हरदत्तेनोक्तम्—"अमेर्द्विषति चित्"(उ०सू०६२३) इत्यौणादिक इत्रच् । अमेरमित्रम् । "मित्रस्य व्यथयेत्" इत्यादौ मध्योदात्तस्तु चिन्त्यः । नञ्समासेऽप्येवम् । परवल्लिङ्गतापि स्यादिति तु तत्र दोषान्तरमिति, तत्प्रकृतसूत्रापर्यालोचनमूलकम् । स्वरदोषोद्भावनमपि "नञो जरमरमित्रमृताः" (पा०सू०६-२-११६) इति षाष्ठसूत्रास्मरणमूलकमिति दिक् ।

पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि च ॥

---

(१) 'शङ्कुः पुंसि । सहस्रः क्वचित् । अयं सहस्रः । इदं सहस्रम्' । इति कौमुद्याम् ।

बलकुसुमशुल्बयु(१)द्धपत्तनरणाभिधानानि ॥ बलम्। वीर्यम्।

पद्मकमलोत्पलानि पुंसि च ॥ पद्मादयः शब्दाः कुसुमाभिधायित्वेऽपि द्विलिङ्गाः स्युः। अमरोऽप्याह—"वा पुंसि पद्मं नलिनम्"(अ० को० १–१०–४०) इति। एवं चार्धर्चादिसूत्रे तु जलजे पद्मं नपुंसकमेवेति वृत्तिग्रन्थो मतान्तरेण नेयः।

आहवसङ्ग्रामौ पुंसि ॥

आजिः स्त्रियामेव ॥

फलजातिः ॥ फलजातिवाची शब्दो नपुंसकं स्यात्। आमलकम्। आम्रम्।

वृक्षजातिः ॥ स्त्रियामेव। क्वचिदेवेदम्। हरीतकी।

वियज्जगत्सकृत्शकन्पृषत्शकृद्यकृदुदश्वितः ॥ एते क्लीबाः स्युः।

नवनीतावतानानृतामृतनिमित्तवित्तचित्तपित्तव्रतरजतवृत्तपलितानि॥

श्राद्धकुलिशदैवपीठकुण्डाङ्गदधिसक्थ्यक्ष्यास्यास्पदाकाशकण्वबीजानि ॥ एतानि क्लीबे स्युः।

दैवं पुंसि च ॥ दैवम्। दैवः।

धान्याज्यसस्यरूप्यपण्यवर्ण्यधृष्यहव्यकव्यकाव्यसत्यापत्यमूल्यशिक्य(२)कुड्यहर्म्यतूर्यसैन्यानि ॥ इदं धान्यमित्यादि।

द्वन्द्वबर्हदुःखवडिशपिच्छबिम्बकुटुम्बकवचवरशरवृन्दारकाणि ॥

अक्षमिन्द्रिये ॥ इन्द्रिये किम्? रथाङ्गादौ मा भूत्।

इति नपुंसकाधिकारः।

स्त्रीपुंसयोः ॥ अधिकारोऽयम्।

गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः ॥ इयमयं वा गौः।

मृत्युसीधुकर्कन्धुकिष्कुकण्डुरेणवः ॥ इयमयं वा मृत्युः।

गुणवचनमुकारान्तं नपुंसकं च ॥ त्रिलिङ्गमित्यर्थः। पटु। पटुः। (३)पट्वी।

।इति स्त्रीपुंसाधिकारः।

पुन्नपुंसकयोः ॥ अधिकारोऽयम्।

घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः ॥ अयं घृतः। इदं घृतम्।

---

(१) 'युद्ध' इति नास्ति कौमुद्याम्। (२) 'कुड्य मद्य' इति कौमुद्याम्। (३) पट्वी। अपत्यार्थस्तद्धिते। औपगवः। औपगवी।' इति कौमुद्याम्।

शृङ्गार्घनिदाघोद्यमशल्यदृढाः। अयं शृङ्गः। इदं शृङ्गम्।

व्रजकुञ्जकुथकूर्चप्रस्थदर्पार्भार्धर्चदर्भपुच्छाः॥ अयं व्रजः। इदं व्रजम्।

कबन्धौषधायुधान्ताः॥ स्पष्टम्।

दण्डमण्डखण्डशवसैन्धवपार्श्वाकाशकुशकाशाङ्कुशकुलिशाः॥ एते पुन्नपुंसकयोः स्युः॥

कुशो रामसुते दर्भे योक्त्रेऽधीपे कुशं जले।

इतिविश्वः। शलाकावाची तु स्त्रियाम्। तथाच "जानपद" (पा०सू०४-१-४२) इत्यादिसूत्रेणायोविकारे ङीषि कुशी। दारुणि तु टापा कुशा। "वानस्पत्याः स्थ ता मा यात" इति श्रुतिः। "अतः "कृकमि" (पा० सू०८-३-४६) इति सूत्रे कुशाकर्णीष्विति प्रयोगश्च। व्याससूत्रे च "हानौ तूपायनशब्दे शेषत्वात्कुशाच्छन्दः" इति। तत्र शारीरकभाष्येऽप्येवम्। एवञ्च श्रुतिसूत्रभाष्याणामेकवाक्यत्वे स्थिते आच्छन्द इत्याङ्प्रश्लेषादिपरो भामतीग्रन्थः प्रौढिवादमात्रपर इति विभावनीयं बहुश्रुतैः।

गृहमेहदेहपट्टपटहाष्टापदाम्बुदककुदाश्च।

॥ इति पुन्नपुंसकाधिकारः॥

अविशिष्टलिङ्गम्॥

अव्ययं कतियुष्मदस्मदः॥

ष्णान्ता संख्या॥

शिष्टा परवत्। एकः पुरुषः। एका स्त्री। एकं कुलम्।

गुणवचनं च॥ शुक्लः पटः। शुक्ला शाटी। शुक्लं वस्त्रम्।

कृत्याश्च॥ करणा।

करणाधिकरणयोर्ल्युट् च॥

सर्वादीनि सर्वनामानि। स्पष्टार्थेयं त्रिसूत्री।

॥ इति पाणिनीयलिङ्गानुशासनं समाप्तम्॥

प्रासङ्गिकं समाप्य प्रकृतमनुसरामः।

इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ (पा०सू०२-४-३२)। अन्वादेशविषयस्येदमोऽनुदात्तोऽश् आदेशः स्यात्तृतीयादौ। प्रते बभ्रूविचक्षणं शंसामि, माभ्याङ्गा अनु। इह बभ्रूशब्देनोक्तयोरिदमा परामर्शेऽप्यन्वादेशो भवत्येव "अन्वादेशश्च कथितानुकथनमात्रम्, न तु इदमा कथितस्येदमैवानुकथनम् इति भाष्योक्तेः। न चैवम् "ईषदर्थे" इति श्लोके यच्छब्देनोक्तस्य पुनः कथनात् 'एतम् आतम्' इत्यत्रैनादेशः स्यादिति वाच्यम्, किञ्चिद्विधायान्यद्विधातुमनुकथनस्यैवान्वादेशत्वात्। ईषदर्थादिवृत्तेस्त्वनुवादेऽप्यविधानात्। अशादेशवचनं साकच्का-

र्थम्। अन्यथाऽन्वादेशेऽज्ञातार्थविवक्षायाम् 'इमकाभ्याम्' इत्यपि प्रसज्येत। ननु त्यदाद्यत्वेन सिद्धौ विधानसामर्थ्यात्सर्वादेशोऽस्तु किं शित्त्वेन? मैवम्, 'आभ्याम्' 'एभिः' इत्यादौ विकाराभावार्थतापत्तेः, मोराजीतिवत्। ननु 'आभ्यामिन्द्रपक्कम्' इत्यादावन्वादेशत्वविवक्षाविरहे यथा "ऊडिदम्" (पा०सू०६-१-१७१) इति विभक्तेरुदात्तता, तथा "माभ्यां गाः" इत्यत्रापि कुतो नेति चेत्? न, तत्र प्रकृतेरनुदात्तविधानात् "ऊडिदम्" इति सूत्रे च "अन्तोदात्तादुत्तरपदात्" (पा०सू०६-१-१६९) इति सूत्रादन्तोदात्तादित्यस्यानुवर्त्तनात्। तथाचान्वादेशे 'आभ्याम' इत्यादेः सर्वानुदात्तता, इतरत्र त्वन्तोदात्ततेति विवेकः।

स्यादेतत्, "सावेकाचः" (पा०सू०६-१-१६८) इत्युदात्तेनेह भाव्यम्, "सुः सप्तमीबहुवचनम्" इति भाष्ये वृत्तौ चोक्तत्वात्। यत्तु "ऊडिदम" इति सूत्रे हरदत्तेनोक्तम्—इह "अन्तोदात्तात्" (पा० सू०६-१-१२९) इत्यनुवृत्तिसामर्थ्यात् 'सावेकाचः' (पा०सू०६-१-१६८) इत्यपि न प्रवर्त्तते। न च "यदीमेनाउशतः" इतिशसो व्यावृत्तौ सामर्थ्योपक्षयः, एकाज्ग्रहणेनैव तद्व्यावृत्तेः। एकाच इत्यस्य चावश्यानुवर्त्यत्वात्। अन्यथा "ग्रीवायां बद्धो अपि कक्ष आसनि" "मत्स्यं नदीन उदनि क्षिपन्तम्" इत्यत्रातिप्रसङ्गात्। 'आसन्' इत्यादयो ह्यन्तोदात्ता एवादेशाः सूत्रे पठिता इति।

अत्रेदं वक्तव्यम्—'आभ्याम्' इत्यत्र "सावेकाचः" (पा०सू०६-१-१६८) इत्यस्य प्राप्तिरेव नास्ति सप्तमीबहुवचनेषु 'एषु' इति रूपं न तादृगिहास्ति। तथाचात्रैवान्तोदात्तग्रहणस्य चरितार्थत्वात्सामर्थ्यविरहः। तथा च "माभ्याङ्गाः" "तदस्य प्रियम्" "तदस्मै नव्यम्" इत्यादेः सिद्धावपि भिसादौ दोषस्तदवस्थ एव। "एभिरग्ने" 'सुन्वन्ति सोमान्वचसि त्वमेषाम्" "एणा तदेषां निहितम्" "एषु धावीरवत्" इत्यादौ हि ए इत्येव रूपमस्त्येव। तथाच तत्र विभक्तेरुदात्तप्रसङ्गः। न च "सावेकाचः" (पा०सू०६-१-१६८) इत्येतत्सूत्रस्थकैयटपर्यालोचनयेष्टापत्तिरिति वाच्यम्, अन्येत्विति वदता कैयटेन तन्मतेऽस्वरसाविष्करणात्। तद्बीजन्तु बहुतरवैदिकप्रयोगविरोध एव।

अथोच्येत—"सावेकाचः" (पा०सू०६-१-१६८) इति सूत्रे हरदत्तोक्तरीत्या सुः प्रथमैकवचनमेव। न च 'त्वया' इत्यत्रातिप्रसङ्गः, सावर्णेति निषेधात्। शेषेलोपाष्टिलोप इति पक्षे तु सावेकाच्त्वाभावात्प्राप्तिरेव नास्ति। रूपाविवक्षापि विफला। एवञ्च 'एभिः' इत्यादौ प्रा-

भिरेव नास्तीति । तदपि न, रूपविवक्षाभावे 'दोषभ्याम्' इत्यत्राति-प्रसङ्गात् । तैत्तिरीये हि "अंसाभ्यां स्वाहा दोषभ्यां स्वाहा" इति मध्योदात्तं पठ्यते । एवं स्थिते सुः सप्तमीबहुवचनमेव ग्राह्यम् । अन्यथा "इन्द्रो या तो वसितस्य राजा" इत्यत्र या इत्यन्तोदात्तं न स्यात् । नहि प्रथमैकवचनं यद्रूपं यानिति तदिहास्ति । अत एव गोश्वनोः प्रतिषेधः सार्थकः । तदेवमन्तोदात्तानुवृत्तिसामर्थ्यं प्रथमैकवचनग्रहणं वा शरणमित्येवंरूपस्य षाष्ठहरदत्तग्रन्थबललब्धस्य समाधानद्वयस्यापि दुष्टत्वात् 'एभिः' इत्यादि कथन्निर्वाह्यमिति फलितः पूर्वपक्षः ।

अत्रोच्यते, "सावेकाचः" (पा०सू०६-१-१६८) इत्यत्रापि "अन्तोदात्तात्" (पा०सू०६-१-१६९) इत्यस्यापकर्षान्नोक्तदोषः । वृत्यादावननुवर्त्तितस्याप्यनुवृत्तिस्तु बहुधा दृष्टैव । अत एव "तुरुस्तु" (पा० सू०७-३-५) सूत्रे 'स्तुवीत' इत्यादिसिद्धये पितीत्यस्य निवृत्त्यै सार्वधातुकग्रहणमिति स्थिते 'शाम्यति' इति श्यन्निदं वारयितुं तिङीत्यस्यानुवृत्तिर्वक्ष्यते ।

एतदस्त्रतसोस्त्रतसौ चानुदात्तौ (पा०सू०२-४-३३) । अन्वादेशविषये एतदोऽश् स्यात्स चानुदात्तस्त्रतसोः परतः तौ चानुदात्तौ स्तः । एतस्मिन् ग्रामे सुखं वसामः, अथोऽत्राधीमहे, अतो न गन्तास्मः । 'अत्र''अतः' इति पदे सर्वानुदात्ते । ननु पञ्चमे "एतदोऽन्"(पा०सू०५-३-५) इति भाष्यसम्मतः पाठः । न्यासरीत्या वृत्तिपाठोऽप्येवमेव । पदमञ्जरीरीत्या तु "एतदोऽश्" इति वृत्तिपाठः । उभयथापि अकारे सिद्धे किमनेनेति चेत् ? पाञ्चमिकस्योदात्ततयाऽनुदात्तार्थमिह पुनर्वचनमिति गृहाण । 'त्रतसोः' इति वचनं निमित्तभावार्थम् । अन्यथा "त्रतसौ चानुदात्तौ" इत्यन्वाचयो विज्ञायेत ।

स्यादेतत्, त्रतसोः कृतयोः प्रकृतेर्लित्स्वरः । ततः शेषनिघातेन त्रतसोरनुदात्तत्वं सिद्धम् । अश्मात्रस्य त्वनुदात्तत्वं विधीयताम् । मैवम्, त्रतसोर्हि कृतयोः "येननाप्राप्ति"न्यायेनापवादत्वाल्लित्स्वराच्चानुदात्तोऽशादेशः स्यात् । ततस्तद्विधानसामर्थ्याल्लित्स्वरस्याप्रवृत्तावुत्सर्गः प्रत्ययस्वर एव त्रतसोः स्यात् । यथा-'गोष्पदम्' इत्यत्र णमुलोपेन सहविधानाल्लित्स्वराप्रवृत्तौ प्रत्ययाद्युदात्तत्वे सति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तं पदं भवति । तस्मात् "त्रतसौ चानुदात्तौ" इति कर्तव्यमेव ।

द्वितीयाटौस्स्वेनः (पा०सू०२-४-३४) । द्वितीयायाण्टौसोश्च परत

इदमेतदोरेनादेशः स्यात्स चानुदात्तः अन्वादेशे । इदमोऽत्र मण्डूकप्लुत्याऽनुवृत्तिः । अथैनमद्रेः । एनेन, एनयोः । कथन्तर्हि-"अइउण्" (मा०सू०१-१-१) इत्यत्रोदाहृते "हे रोहिणि" इति श्लोके एनादेश इति चेत् ? "अयं श्रोणीतटं स्पृशति, एनं निवारय" इति व्यत्यासेन योज्यम् ।

आशीविषेण रदनच्छददंशदान-
मेतेन ते पुनरनर्थतया न शक्यम् ।

इत्यादौ त्वन्वादेशत्वस्याविवक्षा बोध्या । 'अभून्नृप' इत्यादावनद्यतनत्वस्य यथा । अथ कथं "प्रक्षालयैतत्परिवर्तयैनत्" इति ? नपुंसकैकवचने एनदिति वक्तव्यात् । वस्तुतस्तु सूत्र एवैनद्वक्तव्यः । एनम् एनौ इत्यादि तु त्यदाद्यत्वेन सिद्धम् । 'एनं श्रित' इति द्वितीयासमासे तु 'एतच्छ्रित' इत्येव भवति; नत्वेन एनद्वा, "सुपो धातु" (पा०सू०२-४-७१) इति लुका बहिरङ्गेणाप्यन्तरङ्गाणां बाधनात् । न चैवं 'प्रक्षालयैनत्' इत्यपि न स्यादिति वाच्यम्, अमो लुका लुप्तत्वेऽपि तकारोच्चारणसामर्थ्यादेनदादेशप्रवृत्तेः । न चैवमेतच्छ्रितेऽपि एनदापत्तिः, एकपदाश्रयत्वेनान्तरङ्गे स्वमोर्लुकि चरितार्थत्वेन बहिरङ्गे समासलुकि अप्रवृत्तेः ।

आर्धधातुके (पा०सू०२-४-३५) ॥ अधिकारोऽयं "ण्यक्षत्रिय" (पा०सू०२-४-५८) इति यावत् । विषयसप्तमी चेयम् । तेनार्धधातुकोत्पत्तेः प्रागेवादेशेषु प्रवृत्तेषु यथायथं प्रत्ययाः । तथाहि, अस्तेः-भव्यम् । परसप्तम्यान्तु ण्यति कृते भाव्यमिति स्यात् । अजेः-प्रवेयम् । ण्यति तु प्रवेयमिति स्यात् । चक्षिङ्-आख्येयम् । ण्यति युकि आख्यायमिति स्यात् । ब्रुवस्तु अजन्तत्वाद्यति वच्यमिति स्यात् । वाच्यमिति चेष्यते ।

स्यादेतत्, अङ्गाधिकारस्थे आर्धधातुकाधिकारे एव जग्ध्यादयो विधीयन्ताम् । मैवम्, 'जक्षतुः' 'अधिजगे' 'अध्यगीष्ट' 'बभूव' 'विव्यतुः' इत्यत्र घस्लाद्यादेशानामसिद्धतया उपधालोपाऽऽल्लोपेत्ववुग्यणामभावापत्तेः । न चाऽतोलोपादयोऽप्यत्रैव विधीयन्तामिति वाच्यम्, 'गतः' 'गतवान्' इत्यत्रानुनासिकलोपस्यासिद्धत्वाभावादतोलोपापत्तेः । यदि त्वार्धधातुकोपदेशकाले यदकारान्तमिति व्याख्यायतेऽसिद्धवत्सूत्रञ्च प्रत्याख्यायते, तदाऽन्यतर आर्धधातुकाधिकारः शक्योऽकर्तुम् । नन्वेकश्चेदार्धधातुकाधिकारस्तर्हि विषयसप्तमीत्वपरसप्तमीत्वे कथं व्यवतिष्ठेयातामिति चेत् ? न, सूत्रद्वयारम्भपक्षेऽप्याङ्गस्यैकस्यैव ज्ञापक-

चलेनोभयरूपताश्रयणात्। यथा चैतत्तथा "न पदान्त" (पा०सू०१-१-५८) सूत्रे उपपादितम्।

अदोजग्धिर्ल्यप्ति किति (पा०सू०२-४-३६) ॥ ल्यबिति लुप्तसप्तमीकं पृथक् पदम्। अत्तेर्जग्धिरादेशः स्याल्ल्यपि तादौ किति च। इकार उच्चारणार्थो न त्वनुबन्धः, नुमप्रसङ्गात्। एवं "ब्रुवो वचिः" (पा०सू०२-४-५३) इत्यादौ। प्रजग्ध्य, जग्धम्।

जग्धौ सिद्धेऽन्तरङ्गत्वात्तिकितीति ल्यबुच्यते।
ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम् ॥

तथाहि, पदद्वयसापेक्षं समासं प्रतीक्षमाणो ल्यब्बहिरङ्गः, ततः प्राक्तिकितीति सिद्धौ जग्धेर्ल्यब्ग्रहणन्तु हित्वदत्वात्वेत्वदीर्घत्वशूडिठामन्तरङ्गाणामपि बाधं ज्ञापयति। "दधातेर्हिः"(पा०सू०७-४-४२) "जहातेश्च क्त्वि" (पा०सू०७-४-४३) हित्वा। नेह—विधाय। "दो दद् घोः"(पा०सू०७-४-४६) दत्त्वा। नेह-प्रदाय। "जनसनखनां सञ्झलोः" (पा०सू०६-४-४२)खात्वा। नेह-प्रखन्य, प्रखाय। इह हि "ये विभाषा" (पा०सू०६-४-४३) इति विकल्पः। "द्यतिस्यतिमास्थामित्ति किति" (पा०सू०७-४-४०) स्थित्वा। नेह-प्रस्थाय। "अनुनासिकस्य क्विझलोः" (पा०सू०६-४-१५) इति दीर्घः, क्रान्त्वा। नेह-प्रक्रम्य। "च्छ्वोः शूठ्" (पा०सू०६-४-१९) पृष्ट्वा। द्यूत्वा। नेह—आपृच्छ्य। प्रदीव्य। इट्—देवित्वा। नेह-प्रदीव्य। वस्तुतस्तु ल्यब्ग्रहणं नान्तरङ्गबाधं ज्ञापयितुं, किन्तु विध्यर्थं व्यर्थमेव वा इति निरूपितम् "अचः परस्मिन्" (पा०सू०१-१-५७) इति सूत्रे।

लुङ्सनोर्घस्लृ (पा०सू०२-४-३७)॥ अदो घस्लृ स्याल्लुङि सनि च। लृदित्वादङ्। अघसत्। जिघत्सति। यद्यपि घसिः प्रकृत्यन्तरमस्ति, तथापि अदेः 'आत्सीत' 'अदित्सति' इत्यनिष्टं रूपं वारयितुं सूत्रम्।

अच्युपसङ्ख्यानम् (का०वा०) ॥ प्रात्तीति प्रघसः। इदमपि अदेः पचाद्यचि 'अदः' इति रूपं वारयितुम् 'प्रघसः' इत्यस्य प्रकृत्यन्तरेणैव सिद्धेः।

घञपोश्च (पा०सू०२-४-३८)॥ घञि अपि चादेर्घस्लादेशः स्यात्। घासः। प्रघसः। "उपसर्गेऽदः" (पा०सू०३-३-५९) इत्यप्।

बहुलञ्छन्दसि (पा०सू०२-४-३९)॥ अदो बहुलं घस्लादेशः स्याच्छन्दसि। घस्तान्नूनम्। लुङि "मन्त्रे घस" (पा०सू०२-४-७०) इत्यादिना च्लेर्लुक्। "बहुलञ्छन्दस्यमाङ्योगे" (पा०सू०६-४-७५) इत्यडभावः। सग्धिश्च मे। क्तिनि "घसिभसोर्हलि च" (पा०सू०६-४-१००)

इत्युपधालोपः । "समानस्य छन्दसि" (पा०सू०६-४-८४) इति सभावः। न च भवति-अत्ताम् । प्रकृत्यन्तरेण सिद्धे सूत्रस्य प्रयोजनं मृग्यम् ॥

लिट्यन्यतरस्याम् (पा०सू०२-४-४०) ॥ अदेर्घस्लृ वास्याल्लिटि । जघास, जक्षतुः, जक्षुः । आद, आदतुः, आदुः । प्रकृत्यन्तरस्यासर्वविषयत्वज्ञापनार्थमिदं सूत्रम् । तेन यत्र लिङ्गं वचनञ्च नास्ति तत्र तस्य प्रयोगो न । तत्र लृदित्करणं लुङि प्रयोगस्य लिङ्गम् । घसिश्च सान्तेष्विति अनुदात्तपाठो वलादावार्द्धधातुके । "सृघस्यदः क्मरच्"(पा०सू०३-२-१६०) इति वचनं क्मरचि । भूवादौ परस्मैपदिषु पाठाच्छापि परस्मैपदेषु प्रयोगः । अत एवाशीर्लिङि कर्त्तरि नास्य प्रयोग इति माधवादयः ।

वेञो वयिः (पा०सू० २-४-४१) ॥ वेञो लिटि परे वयिर्वा स्यात् । उवाय, ऊयतुः, ऊयुः । "लिटि वयो यः" (पा०सू०६-१-३८) इति निषेधाद्यकारस्य न सम्प्रसारणम् । "वश्चास्यान्यतरस्यां किति" (पा०सू०६-१-३९) इति वकारादेशपक्षे ऊवतुः, ऊवुः । वयेरभावे-ववौ, ववतु, ववुः । "वेञः" (पा०सू० ६-१-४०) इति सम्प्रसारणनिषेधः ।

हनो वध लिङि (पा०सू०२-४-४२) ॥ हन्तेर्वध इत्यादेशः स्यादार्द्धधातुके लिङि । वध्यात् ।

लुङि च (पा०सू०२-४-४३) ॥ हनो वधः स्याल्लुङि । अवधीत् । वधादेशोऽदन्तः । अल्लोपस्य स्थानिवद्भावात् "अतो हलादेर्लघोः" (पा० सू०७-२-७)इति वृद्धिर्न ॥

आत्मनेपदेष्वन्यतरस्याम् (पा०सू०२-४-४४) ॥ हनो वधः स्याद्वा आत्मनेपदं यो लुङ् तत्परे आर्धधातुके । आवधिष्ट, आवधिषाताम्, आवधिषत । आहत, आहसाताम्, आहसत । "आङो यमहनः"(पा०सू० १-३-२८) इत्यात्मनेपदम् । "हनः सिच्" (पा०सू०१-२-१४) इति कित्वम । "अनुदात्तोपदेश" (पा०सू०६-४-३७) इति नलोपः ।

इणो गा लुङि (पा०सू०२-४-४५) ॥ इणो गा स्याल्लुङि । अगात्, अगाताम्, अगुः । अगायि भवता ।

इणवदिक इति वक्तव्यम् (का०वा०) ॥ अध्यगात् । न केवलमादेशमात्रस्यातिदेशः, किन्तु सकलकार्यस्य । तेन इणो यण् स्यात् । अधियन्ति । अधीत्य । "एतिस्तुशास्वृ" (पा०सू०३-१-१०९) इति क्यबिति हरदत्तः । अन्ये तु गादेशस्यैवातिदेशमास्थाय "ससीतयोराघवयोरधीयन्" इति भट्टिप्रयोगं समर्थयन्त इति तृतीये स्फुटीकरिष्यामः ।

णौ गमिरबोधने (पा०सू०२-४-४६) ॥ अबोधनार्थस्य इणो गमिरादेशः स्याण्णौ ॥ गमयति । बोधने तु प्रत्याययति । "इण्वदिकः" (का०वा०) । अधिगमयति ।

सनि च (पा०सू०२-४-४७) ॥ अबोधनार्थस्य इणो गमिः स्यात्सनि । जिगमिषति । बोधने तु प्रतीषिषति । "इण्वदिकः" (का० वा०) जिगमिषति ।

इङश्च (पा०सू०२-४-४८) । इङो गमिः स्यात्सनि । अधिजिगांसते ।

गाङ् लिटि (पा.सू.२-४-४९) । इङो गाङ् स्याल्लिटि । अधिजगे । वार्त्तिकमते लिटीति परसप्तमी । "द्विर्वचनेऽचि" (पा०सू०१-१-५९) इति स्थानिवद्भावस्तु न भवति, लिटीति द्विलकारकनिर्देशेन लावस्थायामेव गाङः प्रवृत्तेः । भाष्यमते तु आर्धधातुकीयाः सामान्येन भवन्तीत्यभ्युपगमात्परनिमित्तता नास्तीति प्रागेवोक्तम् । यद्यपि स्थानिवद्भावेन ङित्वात्तङ् सिद्धः, तथापि "गाङ्कुटादि" (पा०सू०१-२-१) सूत्रे ऽस्यैव ग्रहणार्थं ङित्करणम् । न हि स्थानिवद्भावेन गाङिति रूपं लभ्यते । "गाकुटादिभ्यः" इति तूच्यमाने "कै गै रै शब्दे" (भ्वा०प० ९४१-९४२-९४३) "इणो गा लुङि" (पा०सू०२-४-४५) इत्येतयोरपि ग्रहणं स्यात् । ततश्च 'अगासीष्टः' 'अगासातां ग्रामौ देवदत्तेन' इत्यत्र "घुमास्था" (पा०सू०६-४-६६) इतीत्वं स्यात् । "गाङ् गतौ" (भ्वा०आ०९७५) इत्यनेन सह सामान्यग्रहणार्थोऽयं ङकार इति तु न भ्रमितव्यम् । 'गाते' इत्यादौ तङं प्रवर्त्य तदीयङकारस्य निवृत्ताकाङ्क्षतया उल्लिखितप्रक्षाप्यशरीरात्तु, यत्र सानुबन्धकात्षष्ठी उच्चार्यते तत्राकृतायामेवेत्संज्ञायामादेश इति । सत्यामपि वा तस्यां तत्र स्थानिवद्भावेनानुबन्धकार्यं नेति । प्रयोजनन्तु 'नन्दना' 'कारिका' इत्यत्रोगिल्लक्षणङीबभावः । तथाहि 'युवोरनाकौ' (पा०सू०७-१-१) इति सूत्रेऽनुनासिकोकारौ युवू निर्दिष्टौ । अन्यथा 'भुजयः शंयुः' इत्यत्रातिव्याप्तेः । तथाच स्थानिवद्भावेनोगित्वात् 'नन्दना' 'कारिका' इत्यत्रोगिल्लक्षणो ङीप् स्यात् । 'नन्दः' 'कारकः' इत्यत्र चोगिल्लक्षणो नुम् स्यात् ।

ननु नुम् स्यादिति सत्यं, ङीप् तु कारिकायामापाद्यताम् । नन्दनायान्तु कथम् ?

ल्युः कर्त्तरीमनिज् भावे को, घोः किः प्रादितोऽन्यतः

(अ०को०३-५-१५)

इत्यमरेण पुंस्त्वस्योक्तत्वादिति चेत् ? न, एतत्सूत्रे "युवोः" (पा०

सू०७-१-१) इति सूत्रे च 'नन्दना' इति भाष्योदाहरणबलेन "ल्युः कर्त्तरि" इत्यमरस्य प्रायिकत्वात्। तथाच श्रीहर्षः प्रायुङ्क्त "विशिष्य सा भीमनरेन्द्रनन्दना" इति। तस्मान् ङीप्नुमोरभावो ज्ञापनफलमिति।

अत्रोच्यते, "युवोः" (पा०सू०७-१-१) इत्यत्रानुनासिकयणावेव युवू, न त्वनुनासिकोकारौ। अतो ङीब्नुमौ न। तथा 'यजमानः' इत्यत्र टेरेत्वाभावोऽपि न ज्ञापनफलम्। "टित आत्मनेपदानाम्" (पा०सू०३-४-७९) इत्यत्र प्रकृतानामेवात्मनेपदानां ग्रहणात्। तदङ्गमित्येव वाऽस्तु। अन्यान्यपि सम्भावितानि ज्ञापकफलानि प्रत्याख्यातानि भाष्ये। प्रत्युत ज्ञापनाभ्युपगमे बाधकान्यपि सन्ति। तथाहि, 'अचिनवम्' इत्यत्र अमादेशस्य पित्त्वसिद्ध्यर्थं "तस्थस्थमीनाम्" इति वक्तव्यम्। "अणिञोरनार्षयोः" (पा०सू०४-१-७८) "त्कोल्यप्" (पा०सू०७-१-३७) इत्यादौ स्थानिनि अनुबन्धस्त्यक्तव्यः। 'वाराह्या' 'प्रकृत्य' इत्यादौ वृद्धिर्गुणप्रतिषेधश्च यथा स्यात्। तदेवं बहुसूत्रभङ्गापत्तेर्नेदं ज्ञापकं सूत्रकृतोऽभिप्रेतं, किन्तु पूर्वोक्तमेव ङित्त्वस्य फलं बोध्यम्।

विभाषा लुङ्लृङोः (पा०सू०२-४-५०)॥ इङो गाङ् वा स्यात् लुङि लृङि च। "गाङ्कुट" (पा०सू०१-२-१) इति ङित्वम्। "घुमास्था" (पा०सू०६-४-६६) इतीत्वम्। अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत। अध्यैष्ट, अध्यैषाताम्, अध्यैषत। अध्यगीष्यत। अध्यैष्यत॥

णौ च संश्चङोः (पा०सू०२-४-५१)॥ गाङ् वा स्यात् सन्परे चङ्परे च णौ। अधिजिगापयिषति। अध्यापिपयिषति। "क्रीङ्जीनां णौ" (पा०सू०६-१-४८) इत्यात्वम्। अध्यजीगपत्। अध्यापिपत्।

अस्तेर्भूः (पा०सू०२-४-५२)॥ अस्तेर्भूरादेशः स्यादार्धधातुके। भविता। भवितुम्। भवतिनैवाभिमते रूपे सिद्धेऽस्तेः 'आसिता' इत्यादिनिवृत्तये योगारम्भः। कथन्तर्हि 'ईहामास' इत्यादि? अत्राहुः, अनुप्रयोगसामर्थ्यादस्तेर्भूभावो नेति। अन्यथा "कृञ् चानुप्रयुज्यते" इति "कृभ्वनुप्र" इति वा ब्रूयादिति तदाशयः। अथ कथं "तेनाऽऽस लोकः पितृमान्विनेत्रा" "प्रादुरास बहुलक्षयाच्छविः" इत्यादि? उच्यते, तिङन्तप्रतिरूपकमव्ययमिदमासेति। यद्वा, "अस गतिदीप्त्यादानेषु" (भ्वा०धा०८८६) इति भ्वादेः स्वरितेतो रूपमिदम्। भूभावस्तु नास्य शङ्क्यः, अस्तेरिति लुका निर्देशात्॥

ब्रुवो वचिः (पा०सू०२-४-५३)॥ ब्रुवो वचिरादेशः स्यादार्धधातुके। "वच परिभाषणे" (अ०धा०१०६३) इत्यनेन सिद्धे ब्रुवोऽनिष्ट-

प्रयोगवारणार्थं सूत्रम्, क्रियाफलस्य कर्तृगामितायां स्थानिवद्भावेनात्मनेपदार्थञ्च। 'शास्त्रार्थं वक्ष्यते मुनिः'।

चक्षिङः ख्याञ् (पा०सू०२-४-५४)॥ आर्धधातुके विवक्षिते। तृजादौ 'चक्षिता' इत्यादिनिवृत्तये सूत्रम्, कर्त्रभिप्राये फले आत्मनेपदार्थञ्च। मुनिर्वेदं व्याख्यास्यते। 'आख्याता' इत्यादि तु "ख्या प्रकथने" (अ०प०१०६०) इत्यनेनापि सिद्धम्। अत्र वार्तिकानि—

चक्षिङः ख्याञ्क्शाञौ (का० वा०)। आक्शाता।

ख्शादिर्वा (का०वा०)।

असिद्धे शस्य यवचनं विभाषा (का० वा०)। अस्यार्थः। खकारशकारादिरादेशोऽनेन विधेयः। असिद्धकाण्डे तु णत्वप्रकरणानन्तरं "ख्शाञः शस्य यो वा" इति वचनं कर्तव्यम्। तथाच चर्त्वे यत्वं सिद्धमिति खर्परत्वाभावेन "खरि च" (पा०सू०८-४-५५) इत्यस्याप्रवृत्तेर्यत्वपक्षे 'आख्याता' इति सिद्धम्। यत्वाभावपक्षे तु चर्त्वेन 'आक्शाता' इति रूपम्।

प्रयोजनं सौप्रख्ये वुञ्विधिः (का०वा०)॥ सुप्रचष्टे सुप्रख्यः। "आतश्चोपसर्गे" (पा०सू०३-१-१३६) इति कः। तस्य भावः सौप्रख्यम्। ष्यञ्। "योपधाद्गुरूपोत्तमात्" (पा०सू०५-१-१३२) इति वुञ् तु न भवति, यत्वस्यासिद्धत्वादित्यर्थः। तथा सुप्रख्येन निर्वृत्तो देशः सौप्रख्यः। तत्र भवः सौप्रख्यीयः "वृद्धाच्छः" (पा०सू०४-२-११४) न तु "धन्वयोपधात्" (पा०सू०४-२-१२१) इति वुञ्।

प्रयोजनान्तरमाह—निष्ठानत्वमाख्याते॥ (का०वा०) 'आख्याते' इत्यत्र "संयोगादेरातो धातो र्यण्वतः" (पा०सू०८-२-४३) इति न भवति, यत्वस्यासिद्धया यण्वत्ताविरहात्। एवञ्च "न ध्याख्या" (पा०सू०८-२-५७) इति सूत्रे ख्याग्रहणं न कर्त्तव्यं भवति।

रुविधिः पुङ्ख्यानम् (का०वा०)॥ यत्वस्यासिद्धतयाऽम्परत्वाभावात् "पुमः खयि" (पा०सू०८-३-६) इति रुत्वं नेत्यर्थः।

णत्वं पर्याख्यानम् (का०वा०)॥ यत्वस्यासिद्धतया शकारेणाऽनटा व्यवायात् "कृत्यचः" (पा०सू०८-४-२९) इति णत्वं नेत्यर्थः।

सस्थानत्वं नमःख्यात्रे (का०वा०)॥ "शर्परे विसर्जनीयः" (पा०सू०८-३-३५) इति विसर्गः सिध्यतीत्यर्थः। 'सस्थान' इति जिह्वामूलीयस्य प्राचां संज्ञा। सस्थानत्वं त्विह नेति योज्यम्, णत्वादीनामप्यभावस्यैव प्रक्रान्तत्वात्। तस्माद् वुञ्नत्वरुत्वणत्वानि सस्थानञ्चेति पञ्चकं प्राप्तं वारयितुं शस्य यत्वं कृतमिति स्थितम्।

स्यादेतत्, "ख्या प्रकथने" (अ०प०१०६०) इति धातुमादाय वुञादिपञ्चकं दुर्वारम्। सत्यम्, सोऽपि खशादिः। यत्तु 'अविधिरप्युभयसाधारणे बोध्यः' इति हरदत्तमाधवादयः, कैयटस्तु नैतन्मेने। भाष्ये ख्याधातोः खशादित्वानुक्तेः, चक्षिङः ख्याआदेशमेवोपक्रम्य यत्वविधानात्। "न ख्याख्या" (पा०सू०८-२-५७) इति सूत्रे ख्याग्रहणन्तु कर्तव्यमेव 'व्याख्यातः' इत्यत्र नत्वाभावाय। ख्याआदेशस्तु लाक्षणिकत्वात्तत्र न गृह्यत इति, यत्वस्यासिद्धत्वात्प्राप्तिरेव नास्तीति च बोधयितुं प्राङ् नत्वग्रहणम्। णत्वं तु "लुब्योगाप्रख्यानात्" (पा०सू०१-२-५४) इति निपातनान्न भवति। वुरुत्वसस्थानत्वानि तु ख्यातौ स्युरेव। ख्याआदेशे तु नेति तत्र रूपद्वयं बोध्यम्। अस्मिन्मते आदेशे प्रख्यानादिति प्रयोगोपपत्तेः कथं निपातनमुपन्यस्तमिति चिन्त्यम्। वुञादाविव णत्वांशेऽपि रूपद्वये इष्टापत्तिः, अनिष्टत्वे वाऽनभिधानात्कृत्यल्युटोबहुलग्रहणाच्च तत्र ल्युडेव नेति न्याय्यः पन्थाः।

परमार्थस्तु ख्याधातुः सार्वधातुकमात्रविषयः। "सस्थानत्वं नमः ख्यात्रे" (का०वा०) इति वार्त्तिकं तद्भाष्यं चेह प्रमाणम्, आर्धधातुकेऽपि तत्प्रयोगे उक्तप्रयोजनासङ्गतेः। एवं "णत्वं पर्याख्यानम्" (का०वा०) इत्यपि। तथा च "न ख्याख्या" (पा०सू०८-५-७) इति सूत्रे ख्याग्रहणं न कर्तव्यमेव। माधवहरदत्ताद्युत्प्रेक्षा तु गौरवग्रस्ता उपक्रमादिविरुद्धा। सार्वधातुकेऽपि कशाप्रयोगे प्राप्तेऽनभिधानमात्रालम्बना चेत्यवधेयम्।

वर्जने प्रतिषेधः (का०वा०)॥ दुर्जनाः सञ्चक्ष्याः, वर्जनीया इत्यर्थः।

असनयोश्च (का०वा०)॥ नृचक्षा रक्षः। छान्दसो वर्णविकारः। भाषायान्तु 'नृचक्षो रक्षः' इति भवतीति कैयटहरदत्तौ। माधवस्तु "हे अग्ने नृचक्षाः मनुष्याणां द्रष्टा त्वं रक्षः परिपश्य" इति वेदभाष्ये व्याख्यत्। विचक्षणः। "अनुदात्तेतश्च हलादेः" (पा०सू०३-२-१४९) इति युच्। अत एवान्तोदात्तः पठ्यते-'विचक्षणः प्रथयन्' इति। 'यत्रामृतस्य चक्षणम्' इत्यादौ तु ल्युट्। अत एव लित्स्वरेणाद्युदात्तता। कथं तर्हि 'पुंख्यानं' 'पर्याख्यानम्' इति प्रागुदाहृतमिति चेत्? वक्ष्यमाणबाहुलकादित्यवेहि।

बहुलन्तणय्यन्नवधकगात्रविचक्षणाजिराद्यर्थम् (का०वा०)। सर्वप्रकरणापेक्षमेतत्। तणिति संज्ञाछन्दसोर्ग्रहणम्। तत्र अन्नशब्दे जग्ध्यभावः। "अन्नाण्णः" (पा०सू०४-४-८५) इति निपातनाद्वा सिद्धम्। 'वधकः' इति। ण्वुलि वधादेशः। अल्लोपस्य स्थानिवत्त्वाद्वृद्ध्यभावः। "क्वुन् शिल्पिसंज्ञयोः" (उ०सू०२००) इत्यधिकारे "हनो वध च"

( उ०सू०२०४ ) इत्युणादिसूत्रेण गतार्थमेतत् । गात्रमिति । इणः औणादिके ष्ट्रनि गादेशः । गाङ्धातुना वा सिद्धम् । अजिरमिति । वीभावो न । "अजिरशिशिर"(उ०सू०५६)इति निपातनात् सिद्धम् ।

वा लिटि (पा०सू०२-४-५५) ॥ चक्षिङः ख्याञ् वा स्याल्लिटि । चख्यौ । चकशौ । चचक्षे ।

अजेर्व्यघञपोः ( पा०सू०२-४-५६ ) ॥ अजेर्धातोर्वी इत्यादेशः स्यादार्द्धधातुके घञमपञ्च वर्जयित्वा । प्रवयणीयः । प्रवायकः । अघञपोः किम् ? समाजः । उदाजः । समजः । उदजः । "समुदोरजः पशुषु" (पा०सू०३-३-६९) इत्यप् । दीर्घव्याख्यानं किमर्थम् ? संवीतिः ।

घञपोः प्रतिषेधे क्यप उपसङ्ख्यानम् । (का०वा०) ॥ समज्या । "संज्ञायां समज" (पा०सू०-३-३-९९) इति क्यप् । इह पूर्वसूत्राद्वेत्यनुवर्त्तते । सा च व्यवस्थितविभाषा । तेन घञप्क्यप्सु न । समाजः, समजः, समज्या, इति ।

वलादावार्धधातुके ल्युटि च वा ( का०वा० ) ॥ प्राजिता, प्रवेता । प्राजनं, प्रवयणम् । एवञ्च नार्थो घञपोः प्रतिषेधेन, नापि क्यप उपसङ्ख्यानेन, नापि "वा यौ" (पा०सू०२-४-५७) इति सूत्रेण । तस्मात्-अजेर्वी वेति घञपोः क्यपि चायं न सम्मतः ।

वलादौ यौ च वाऽन्यत्र नित्यमित्येष निर्णयः (का०वा०) ॥

आर्धधातुके इत्यस्य विषयसप्तमीत्वात् प्रागेव प्रत्ययोत्पत्तेर्वीभावे हलादित्वाद्यङ् । वेवीयते । नात्र यङ्लुगस्ति यतो लुका यङ आर्धधातुकस्य विषयत्वापहारात्सार्द्धधातुकव्यक्त्यभिव्यक्तिरिति वीभावस्य नैव प्रसङ्गः । उक्तञ्च "न लुमताऽङ्गस्य" (पा०सू०१-१-६३) इति सूत्रे कैयटेन–लुका यङो विषयत्वापहाराद्विषयसप्तम्याश्रयणेऽप्यसिद्धिरिति ।

वा यौ (पा०सू०२-४-५७) ॥ अजेर्वी वा स्यात् यौ । प्रवयणम् । प्राजनम् । इदञ्च पूर्वसूत्रे एव प्रत्याख्यातम् ।

आर्द्धधातुकाधिकारः समाप्तः ।

ण्यक्षत्रियार्षञितो यूनि लुगणिञोः (पा०सू०२-४-५८) ॥ क्षत्रियशब्दः क्षत्रियगोत्रपरः । ऋषेरपत्यमार्षम् । "इतश्चानिञः" (पा०सू०४-१-१२२) इति ढकि प्राप्ते शिवादिपाठादण् । ढगपीष्यते, 'आर्षेयं वृणीते' इति दर्शनात् । तस्माच्छुभ्रादिष्वपि पठनीयः । ण्यप्रत्ययान्तात् क्षत्रियगोत्रापत्यप्रत्ययान्तादृष्यभिधायिनो गोत्रप्रत्ययान्तात् ञितश्च परयोः युवाभिधायिनोरणिञोर्लुक् स्यात । "कुर्वादिभ्यो ण्यः" (पा०सू० ४-१-१५१) । तस्माद्यूनि इञ् । तस्य लुक् । कौरव्यः पिता,

कौरव्यः पुत्रः। ननु कौरव्यशब्दस्तिकादिषु पठ्यते। ततः 'कौरव्यायणिः' इति हि फिञा भाव्यमिति चेत्? न, तत्र हि "कुरुनादिभ्यो ण्यः" (पा०सू०४-१-१७२) इत्यनेन विहितस्य क्षत्रियगोत्रस्य ग्रहणम्। इदन्तु ब्राह्मणगोत्रम्। "ऋष्यन्धकवृष्णिकुरुभ्यश्च" (पा०सू०४-१-११४) इत्यण्। तस्माद्यूनि इञ्। तस्य लुक्। श्वाफल्कः पिता, श्वाफल्कः पुत्रः। क्षत्रियवसिष्ठादृष्यण् तत इञ्। तस्य लुक्। वासिष्ठः पिता, वासिष्ठः पुत्रः। आर्षः बिदाद्यञ् तस्माद्यूनीञ्। तस्य लुक्। बैदः पिता, बैदः पुत्रः। तैकायनिः पिता, तैकायनिः पुत्रः। कुत्सातः सौवीरगोत्राद्वाऽन्यत्रेदम्। अन्यथा "फेश्छ च" (पा०सू०४-१-१४९) इति छप्रसङ्गात्। यमुन्दश्चेत्यादिपरिगणनस्य भाष्यविरुद्धत्वात्। एभ्यः किम्? "शिवादिभ्योऽण्" (पा०सू०४-१-११२)। ततो यूनि इञ्। कौहडः पिता, कौहडिः पुत्रः। यूनि किम्? वामरथ्यस्य छात्राः वामरथाः। "कुर्वादिभ्यो ण्यः" (पा०सू०४-१-१५१)। तस्मात् "कण्वादिभ्यो गोत्रे" (पा०सू०४-२-१११) इति शैषिकोऽण्। वामरथस्य कण्वादिवत्स्वरवर्जमिति कुर्वादिषु पाठात्। अत्र शैषिकस्याणो न लुक्। अणिञोः किम्? दाक्षेरपत्यं युवा दाक्षायणः।

अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसङ्ख्यानम् (का०वा०)॥ मात्रशब्दः कार्त्स्न्ये। क्षत्रियादिजातिं विनापि अब्राह्मणत्वमात्रेण ततः परस्य अणिञन्ताभ्यां भिन्नस्यापि लुगित्यर्थः। माण्डजङ्घकर्णखरकौ वैश्यौ, ताभ्यामतइञ्, तदन्तात्फको लुक्। माण्डिजङ्घिः पिता पुत्रश्च। एवं कार्णखरकिः॥

पैलादिभ्यश्च (पा०सू०२-४-५९)॥ एभ्यो युवप्रत्ययस्य लुक् स्यात्। "पीलाया वा" (पा०सू०४-१-११८) इत्यण्। तस्मात् "अणो द्व्यचः" (पा०सू०४-१-१५६) इति फिञ्, तस्य लुक्। पैलः पिता पुत्रश्च। आकृतिगणोऽयम्।

तद्राजाच्चाणः (ग०सू०)॥ इत्यन्तर्गणसूत्रम्। तद्राजसंज्ञकादणः परस्य युवप्रत्ययस्य लुक् स्यात्। "द्व्यञ्मगध" (पा०सू०४-१-१७०) इत्यणन्तादाङ्गशब्दात् "अणो द्व्यचः" (पा०सू०४-१-१५६) इति फिञो लुक्। आङ्गः पिता पुत्रश्च।

इञः प्राचाम् (पा०सू०२-४-६०)॥ गोत्रे य इञ् तदन्ताद्युवप्रत्ययस्य लुक् स्यात्तच्चेद्गोत्रं प्राचां भवति। इह "प्राचामवृद्धात्" (पा०सू०४-१-१६०) इत्यादिवत्प्राग्ग्रहणं विकल्पार्थं नेत्यत्र व्याख्यानं शरणम्। पन्नं प्राप्तम् अगारं येन स पन्नागारः। तत इञ् "यञिञोश्च" (पा०सू०

४-१-१०१) इति फक्। पान्नागारिः पिता पुत्रश्च। मन्थरा मन्दीभूता एषणा यस्य स मन्थरैषणः। मन्थरैषणिः पिता पुत्रश्च। प्राचां किम्? दाक्षिः पिता, दाक्षायणः पुत्रः।

न तौल्वलिभ्यः (पा०सू०२-४-६१)॥ तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य लुक् न स्यात्। पूर्वेण प्राप्तो निषिध्यते। तुल उपमाने (चु०प० ६६)। औणादिको वलच्। तुल्वलः। तत इञि फक्-तौल्वलिः पिता, तौल्वलायनः पुत्रः। तौल्वलि। तैल्वालि। धारयतिपारयतिभ्यो नन्द्यादित्वाल्ल्युः, तत इञ्-धारणि। पारणि। दैवलिपि। दैवामित्रि। दैवयज्ञि। देवा मित्रमस्य, देवेभ्यो यज्ञोऽस्येति विग्रहः। प्राणेहति। चापट्कि। आनराहनि। श्वाफल्कि। आनुमति। आहिंसि। आसुरि। आयुधि। नैमिषि। आसिबन्धकि। वैकि। पौष्कि। पुष्करे सीदतीति पुष्करसत्, अनुहरतीत्यनुहरत् बाह्वादी अनुशतिकादी च—पौष्करसादि। आनुहरति। पुष पुष्टौ (भ्वा०प०७००) यत्। पुष्यः पौष्यि। वैराकि। वैहति। विलक्षणौ कर्णावस्य विकर्णः—वैकर्णि। कामंलि। करेणुं पालयतीति करेणुपालः—कारेणुपालि॥

इति श्रीशब्दकौस्तुभे द्वितीयस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम्॥

तद्राजस्य बहुषु तेनैवास्त्रियाम्। (पा०सू०२-४-६२)॥ बहुष्वर्थेषु विद्यमानस्य तद्राजस्य लुक् स्यात्तेनैव लुग्भाग्जातीयेनैव कृतं चेद्बहुत्वं, न तु स्त्रियाम्। अङ्गाः। वङ्गाः। सुह्माः। पुण्ड्राः। मगधाः। "ते तद्राजाः"(पा०सू०४-१-१७४) इत्यञादीनामिह संज्ञा। लोहध्वजाः। व्रीहिमताः। इह तु "ञ्यादयस्तद्राजाः" (पा०सू०५-३-११९) इति। तद्राजस्येति किम्? औपगवाः। राघवाः। यादवाः। कथन्तर्हि "रघूणामन्वयं वक्ष्ये" इति "निरुध्यमाना यदुभिः कथंचित्" इति च?

उच्यते, रघ्वपत्ये रघुशब्दो लक्षणया वर्तते। एतच्च "बह्वच इञः" (पा०सू०२-४-६६) इति सूत्रे पदमञ्जर्यां स्पष्टम्। नन्वेवं "परश्च"(पा० सू०३-१-२) इति सूत्रे 'बभ्रुर्मण्डुर्लेमक' इत्यादीनामपशब्दत्वपरं भाष्यं विरुध्येतेति चेत्? न, भाष्यस्य शक्तिभ्रमप्रयुक्तपरत्वात्। इष्येते हि गोणीशब्दस्य गोणीसादृश्यशक्तिभ्रमाभ्यां गवि प्रयुक्तस्य साधुत्वासाधुत्वे। एतेन—

सोऽयमित्यभिसम्बन्धात्तद्धितेन विना यदि।
बभ्र्वादयः प्रयुज्येरन्नपत्यनियमो भवेत्॥

इति हरिश्लोकोऽपि व्याख्यातः। बहुषु किम्? आङ्गः। वाङ्गः। तेनैव किम्? आङ्गदेवदत्तयज्ञदत्ताः। यद्यपीह बहुत्वमाङ्गेऽप्यन्वेति तथापि नेदं लुग्भाजोऽर्थ एव विश्रान्तम्, देवदत्तादिगतत्वात्। नन्वेवं "भार्गवश्च वात्स्यश्च आग्रायणश्च भृगुवत्साग्रायणाः" इत्यत्र लुङ् न स्यात्, उत्तरसूत्रेष्वपि तेनैवेत्यधिकारात्। आग्रायणे च नडादिफको लुगभावात्?

सत्यम्, तेनैवेत्यस्य तज्जातीयेनेति व्याख्यातत्वाददोषः। अपत्यतयेह साजात्यात्। यद्येवं 'गार्ग्यश्च काश्यपश्च गालवश्च' इत्यत्र गालवे ऋष्यणो लुगभावेऽपि अपत्यतया साजात्याद्यञञोर्लुक्प्रसङ्गः।

अत्राहुः, लोप्यलोपिभिरपत्यप्रत्ययैः कृते बहुत्वे विकल्पः। "भृगुवत्साग्रायणेषु" "अगार्ग्यकाश्यपगालवानाम्" इत्युभयथापि सूत्रनिर्देशात्। अस्त्रियां किम्? आङ्ग्यः स्त्रियः।

स्यादेतत्, आङ्गस्यापत्यानि बहूनि—"अणो द्व्यचः" (पा०सू०४-१-१५६) इति फिञ्। तस्य "तद्राजाच्चाणः" इति गणसूत्रेण "अब्राह्मणगोत्रमात्रात्" (का०वा०) इति वार्त्तिकेन वा लुक्। अङ्गाः। बैदस्यापत्यानि बहूनि—"अत इञ्" (पा०सू०४-१-९५)। "ण्यक्षत्रिय" (पा०सू०२-४-५८)इति लुक्। बिदाः। अत्र यूनि बहुत्वान्वयेऽपि गोत्रस्य तद्राजवाच्यस्यैकत्वाल्लुङ् न स्यात्। किञ्च बिदानामपत्यं माणवकः बैदः, बैदौ। अत्र युवबहुत्वाभावेऽपि गोत्रबहुत्वादातिव्याप्तिः।

सत्यम्, "गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक्" "एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि" इति वार्त्तिकद्वयेन सिद्धम्।

यद्वा, अव्याप्त्युद्धारः सूत्रेणापि सुकरः। तथाहि, तद्राजान्तं यद्बहुष्विति व्याख्यास्यामः। न चैव प्रतिकृतिबहुत्वेऽतिप्रसङ्गः, तेनैवेत्यस्य 'लोपिप्रत्ययार्थजातीयेन' इत्यर्थात्। गोत्रयूनोरपत्यतया सजातीयत्वेऽपि प्रतिकृतेर्विजातीयत्वात्। नापि 'बैदः' 'बैदौ' इत्यत्रातिव्याप्तिः। "गोत्रेऽलुगचि" (पा०सू०४-१-८९) इति सूत्रेण इञि विवक्षित एवालुक्प्रवृत्तेः। न च यून्युपसङ्क्रमानन्तरं पुनर्युवबहुत्व इव तद्व्द्वित्वैकत्वस्थले लुकः प्राप्तिरस्ति युवबहुत्वे तु पुनर्लुक्। न च पुनरलुक् शङ्क्यः, "समर्थानां प्रथमात्" (पा०सू०४-१-८२) इत्यधिकारात्। विभक्तिविपरिणामेन हि गोत्रप्रत्ययस्य प्रथमस्य अलुगित्यर्थः। प्राथम्यं च अर्थान्तरेऽनुपसङ्क्रान्तत्वम्। अत एव 'आत्रिभरद्वाजिका' इति सिद्ध्यति। अत्रेरपत्यानि "इतश्चानिञः" (पा०सू०४-१-१२२) इति ढक्। भरद्वाज-

स्यापत्यानि बिदाद्यञ् । तत उभयत्र युवबहुत्वे "अत इञ्" (पा० सू०४-१-९५) तस्य "ण्यक्षत्रिय" (पा०सू०२-४-५८) इति लुक् । ढकां "अत्रिभृगु" (पा०सू०२-४-६५) इति, अञो "यञञोश्च" (पा०सू०२-४-६४) इति । ततो अत्रिभरद्वाजानां मैथुनिकेति द्वन्द्वाद् वुन् , तस्याकादेशः । यदि द्वितीयमर्थमुपसंक्रान्तस्यापि अलुक् स्यात्तदा इहाप्यञः स स्यात् । गोपवनादिगणे गर्गभार्गविकाग्रहणं चेह ज्ञापकम् । गर्गशब्दाद्यञ्, तस्य लुक् । भृगुशब्दादृष्यण् , तदन्ताद्यूनि "अत इञ्"-(पा०सू०४-१-९५), तस्य लुक् । गर्गभृगूणां मैथुनिकेति वुन् । अत्रात्रिभृगिवति प्राप्तलुकं निषेद्धुं हि गोपवनादिषुपाठः । स च द्वितीयार्थोपसङ्क्रमेऽप्यलुगिति पक्षे व्यर्थः स्यात् ।

इदं त्ववधेयम् , आङ्गी च वाङ्गश्च सौह्मश्चेति द्वन्द्वे आङ्गशब्देन स्त्रीत्वयुक्तानामर्थानामभिधानात्तदणो लुक् न भवति । अन्यस्य तु स्यादेव । आङ्गीवङ्गसुह्मा इति । इह भाष्ये तेनैवेति प्रत्याख्यातम् । अतो गार्ग्यश्च चैत्रश्च मैत्रश्चेत्यत्रापि लुग्भवतीति प्रतीयते, तज्जातीयत्वस्यानुक्तेश्च । तथापि सूत्रशेषे "अथ यो लोप्यलोपिनां समास" इति भाष्यं व्याचक्षाणेन कैयटेन तेनैवेति वचनादलोपिसान्निधिकृतं बहुत्वमिति माकारि लुगित्युक्त्या तेनैवेत्यंशस्य भाष्याभ्युपगतत्वं लभ्यते । अत एवाजन्तं यद्बहुष्विति पक्षे "काश्यपस्य प्रतिकृतयो बह्व्यः काश्यपाः" इत्यत्रापत्यबहुत्वाभावान्मा भूत् । आङ्गस्य प्रतिकृतयो बह्व्य इत्यत्र तु स्यादेव । इह गोत्रग्रहणाभावादित्याशङ्क्य तेनैव ग्रहणबलेन समाहितं हरदत्तेनेति ध्येयम् । ननु 'आङ्गश्च'इत्यादिविग्रहे भाष्यादिसम्मतोऽपि लुक् दुरुपपादः, तद्राजान्तस्य बहुष्ववृत्तेरिति चेत् ? न, अजहत्स्वार्थायां बहुषु वृत्तेः स्पष्टत्वात् । कथं तर्हि "सेयं दुःखा च" इत्यादि प्रागुक्तमिति चेत् ? द्विवचनबहुवचनान्तैर्विग्रहो नेत्याशयेनेति गृहाण । तथाहि, लौकिके विग्रहवाक्ये स्वार्थमात्रवृत्तिता स्पष्टा । प्रक्रियावाक्येऽपि वृत्तिप्रवेशात्प्राक् प्रवृत्तमेकवचनं दुर्वारमेव । राजपुरुषादौ षष्ठ्यादिवत् । अथ कथं--

कौरव्याः पशवः क्रियापरिभवक्लेशोपशान्तिः फलम् ।

इति वेणीसंवरणम् ?

उच्यते, "कुर्वादिभ्यो ण्यः" (पा०सू०४-१-१७२) इति कौरव्यशब्दं व्युत्पाद्य "तत्र साधुः" (पा०सू०४-४-९८) इति यत् कार्यः । एतेन "तस्यामेव रघोः पाण्ड्याः" (र०वं०४) इति व्याख्यातम् । "वृद्धेत्कोसल" (पा०सू०४-१-१७१) इत्यत्र "पाण्डोर्ड्यण्" (का०वा०) इत्युपलक्षणा-

नात् ष्यणस्तद्राजत्वेऽपि 'पाण्ड्ये साधवः पाण्ड्याः' इति यत्प्रत्यया-न्तत्वेन साधुत्वनिर्वाहात् ।

यस्कादिभ्यो गोत्रे (पा०सू०२-४-६३)। एभ्यः परस्य गोत्रप्रत्यय-स्य लुक् स्यात् । बहुषु तेनैवार्थास्त्रियामित्यनुवर्तते । "गोत्रे कुञ्जादिभ्य-श्च्फञ्"(पा०सू०४-१-९८) इतिगोत्रप्रत्ययप्रकरणं, ततोऽन्यत्र लौकिक-स्य गोत्रस्य ग्रहणम् । अपत्याधिकारे तु गोत्रग्रहणसामर्थ्यादेव पा-रिभाषिकस्य ग्रहणम् । यद्यपि कृत्रिमस्यैवाऽन्यत्र ग्रहणं प्राप्तं तथापि लौकिकस्य ज्ञापकं वक्ष्यते । तेनानन्तरापत्येऽपि लुक् । यस्काः लह्याः। बहुष्विति किम् ? यास्कः । लाह्यः । स्त्रियां तु यास्काः स्त्रियः । गोत्रे इति किम् । यास्काः छात्राः । यस्क, लह्य, द्रुह्य, अयःस्थूण, तृणकर्ण, एते पञ्च शिवादिषु पठ्यन्ते । ततः परेभ्यः षड्भ्य इञ् । सदामत्त, कम्बल(१)भार, अ(२)हियौग, कर्णाटक, पिण्डीजङ्घ, बकसक्थ । ततः परेभ्यश्चतुर्भ्यः "शुभ्रादिभ्यश्च" (पा०सू०४-१-१२३) इति ढक् । (३)बि-स्ति,कुद्रि, अजबस्ति, मित्रयु । ततः परेभ्यो द्वादशभ्य इञ् । रक्षोमुख, जङ्घारथ, म(४)न्थक, उत्कास, कटुक, पुष्करसत्, (५)विषपत्, उप-रिमेखल, क्रोष्टुमान, क्रोष्टुपाद, क्रोष्टुमाय, शीर्षमाय । नन्विह पु-ष्करसदः पाठो व्यर्थः । स हि बाह्वादित्वादिञन्तः । "बह्वच इञः प्रा-च्यभरतेषु" (पा०सू०२-४-६६) इत्येव सिद्धम् । न चायं प्राच्यो नेति भ्रमितव्यम्, तौल्वल्यादिष्वेतत्पाठस्य वैयर्थ्यापत्तेः । तस्य हि "इञः प्राचाम्" (पा०सू०२-४-६०) इति प्राप्तस्य लुकः प्रतिषेधः फलम् ।

अत्राहुः, "न गोपवनादिभ्यः" (पा०सू०२-४-६७) इति प्रतिषेधं बाधितुमिहास्य पाठः । गोपवनादिगणे हि तौल्वल्यादय इति केश्चि-त्पठ्यत एव । यैर्न पठ्यते तैरप्यत एव ज्ञापनात् तौल्वल्यादिप्रकृतिभा-गानां तुल्वलादीनां गोपवनाद्यन्तर्भावोनुमेय इति । (६)खरपद, अस्य नडादित्वात्फक् । पदक । क्रमक । आभ्यामतइञ् । भलन्दन । अस्माच्छि-वाद्यण् । भडिल । भडिक । भडित । भण्डित । एभ्यश्चतुर्भ्यः "अश्वादि-भ्यः फञ्" (पा०सू०४-१-११०) ।

---

( १ ) 'हार' इति कौमुद्याम् ।

( २ ) 'बाहियौग' 'कर्णाढक' इति कौमुद्याम् ।

( ३ ) 'विश्रि' इति कौमुद्याम् । ( ४ ) 'मथक' इति कौमुद्याम् ।

( ५ ) 'विषपुट' इति कौमुद्याम् ।

( ६ ) 'खरप यदक वर्षुक भलन्दन भडिल भण्डिल भडित भण्डित' इति कौमुद्याम् ।

यञञोश्च (पा०सू०२-४-६४)। गोत्रे यौ यञञौ तदन्तं यद्बहुषु तदवयवयोर्यञञोर्लुक् स्यान्न तु स्त्रियाम्। गर्गाः। वत्साः। बिदाः। उर्वाः। स्त्रियां तु गार्ग्यः स्त्रियः। गोत्रे किम्? "द्वीपादनुसमुद्रं यञ्" (पा०सू०४-३-१०) द्वैप्याः। "उत्सादिभ्योऽञ्"(पा०सू०४-१-८६) औत्साः। अथ कथं-'पौत्राः' 'दौहित्राः' बिदाद्यञन्तत्वात्?

उच्यते, अपत्याधिकारादन्यत्र लौकिकं गोत्रन्तच्चेऽह प्रवराध्यायप्रसिद्धम। न च पौत्रादिस्तथा। इदं च "स्त्रीपुंसाभ्याम्"(पा०सू०४-१-८७) इति सूत्रे कैयटेन स्फुटीकृतम।

यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम (का०वा०)। एकद्वयोरिति भावप्रधानो निर्देशः। गार्ग्यस्य गार्ग्ययोर्वा कुलं गर्गकुलं, गार्ग्यकुलं वा। यञादीनां किम्? आङ्गकुलम। एकद्वयोः किम्? गर्गाणां कुलं गर्गकुलम्। तत्पुरुषे किम? गार्ग्यस्य समीपमुपगार्ग्यम्। षष्ठ्याः किम्? परमगार्ग्यः।

अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च (पा०सू०२-४-६५)॥ एभ्यो गोत्रप्रत्ययस्य लुक् स्यात् बहुत्वे। अत्रिशब्दात् "इतश्चानिञः" (पा०सू०४-१-१२२) इति ढक्। इतरेभ्य ऋष्यण्। अत्रयः भृगव इत्यादि।

बह्वच इञः प्राच्यभरतेषु (पा०सू०२-४-६६)॥ बह्वचः परो य इञ् प्राच्यगोत्रे भरतगोत्रे च वर्त्तमानस्तस्य लुक् स्यात्। पन्नागाराः। मन्थरैषणाः। भरतापत्ये तु युधिष्ठिराः। अर्जुनाः। युधिष्ठिरार्जुनशब्दाभ्यां कुर्वादिण्यापवादो बाह्वादिलक्षण इञ्। भरतापत्ये अभेदोपचाराद्भरतशब्दः। ते च भरताः प्राच्या एव। द्वन्द्वस्तु गोबलीवर्दन्यायेन। सामान्यविशेषवाचिनोर्वाचनिकद्वन्द्वनिषेधो यद्यप्युक्तस्तथापि तस्यानित्यता अनेनैव ज्ञाप्यते। तत्फलं तूक्तमेव। प्राग्ग्रहणेनैव सिद्धे भरतानां पृथगुपादानमन्यत्र प्राग्ग्रहणे एषां ग्रहणं नेति ज्ञापनार्थम्। तेन "इञः प्राचाम्"(पा०सू०२-४-६०) इति लुक् भरतयुवप्रत्ययस्य न भवति। आर्जुनिः पिता, आर्जुनायनः पुत्रः।

न गोपवनादिभ्यः (पा०सू०२-४-६७)॥ एभ्यो गोत्रप्रत्ययस्य लुक् न स्यात्। बिदाद्यन्तर्गणोऽयम्। स च हरितात्प्रागेव। तथा च वार्तिकम्-गोपवनादिप्रतिषेधः प्राग्घरितादिभ्यः (का०वा०) इति। आगणान्ताग्रहणे प्राप्ते हरितात्प्राक् वृत्करणं कर्त्तव्यमिति भावः। गौपवनाः। शैग्रवाः। नेह—हरिताः।

तिककितवादिभ्यो द्वन्द्वे (पा०सू०२-४-६८)॥ एभ्यो गोत्रप्रत्ययस्य बहुषु लुक् स्याद् द्वन्द्वे। यद्यपि द्वन्द्वरूपाण्येव गणे पठ्यन्ते तिका-

दीनि पूर्वपदानि कितवादीन्युत्तरपदानि, तथापि "तिकादिभ्यः" (पा० सू०४-१-१५४) इत्युक्तेः पूर्वपदेष्वेव लुगाशङ्क्येत। इष्यते तूत्तरपदेष्वपि। अतः 'तिकाकितवादिभ्यः' इत्युक्तम्। तैकायनयश्च कैतवायनयश्च "तिकादिभ्यः फिञ्" (पा०सू०४-१-१५४)। तस्य लुक्। तिककितवाः।

उपकादिभ्योऽन्यतरस्यामद्वन्द्वे (पा०सू०२-४-६९)॥ एभ्यो गोत्रप्रत्ययस्य बहुत्वे लुक् वा स्यात् द्वन्द्वे चाद्वन्द्वे च। सूत्रशेषस्य अद्वन्द्वे इत्यस्य तु द्वन्द्वग्रहणमिह नानुवर्त्तते इत्यर्थः। एषां मध्ये त्रयो द्वन्द्वास्तिककितवादिषु पठ्यन्ते। औपकायनाश्च लामकायनाश्च "नडादिभ्यः फक्" (पा०सू०४-१-९९)। तस्य लुक्। उपकलमकाः। भ्राष्ट्रककपिष्ठलाः। कृष्णाजिनयः। कृष्णसुन्दराः। एषां पूर्वेण नित्यमेव लुक्। अद्वन्द्वे त्वनेन विकल्पः। उपकाः। औपकायनाः। लमकाः। लामकायनाः। भ्राष्ट्रकाः। भ्राष्ट्रकयः। कापिष्ठलाः। कापिष्ठलयः। कृष्णाजिनाः। कार्ष्णाजिनयः। कृष्णसुन्दराः। कार्ष्णसुन्दरयः। शेषाणान्तु द्वन्द्वेऽपि विकल्प इति वृत्तिः। भाष्ये तु 'भ्राष्ट्रकिकापिष्ठलयः' इत्युदाहरणात्तिककितवादिष्वस्य पाठोऽनार्ष इति कैयटः।

आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् (पा०सू०२-४-७०)॥ एतयोरवयवस्य गोत्रप्रत्ययस्य अणो यञश्च बहुषु लुक् स्यात् अवशिष्टस्य प्रकृतिभागस्य यथासङ्ख्यमगस्ति कुण्डिनच् एतावादेशौ स्तः। अगस्तयः। कुण्डिनाः। कुण्डिनीशब्दस्य यञि "भस्याढे"(का०वा०) इति पुंवद्भावे "नस्तद्धिते" (पा०सू०६-४-१४४) इति टिलोपे 'कौण्ड्यः' इति प्राप्तम्। अस्मादेव तु निपातनान्न पुंवत्। ईकारस्य "यस्य" (पा० सू०६-४-१४८) इति लोपः। तस्य स्थानिवत्त्वादाभीयत्वेनासिद्धत्वाद्वा टिलोपो न। चकारः स्वरार्थः। मध्योदात्तो हि कुण्डिनीशब्दः। 'कुण्डमस्त्यस्याः' इति मत्वर्थीयस्य इनेरुदात्तत्वात्। तदादेशोऽपि आन्तरतम्यात्तथा स्यात्। कथं तर्हि—

वासिष्ठकुण्डिनौ तद्वदुपमन्युपराशराः।
चतुर्णामेकगोत्रत्वान्न विवाहः परस्परम्॥ इति?

उच्यते, नायं कुण्डिनजादेशः, किन्तु "कुडि दाहे" (भ्वा०आ०२७१) इत्यस्मादौणादिके इनच्प्रत्यये उज्ज्वलदत्तादिभिर्व्युत्पादितः स्वतन्त्र एवायं शब्दः। अत एव "वासिष्ठमैत्रावरुणकौण्डिन्येति होता कुण्डिनवन्मित्रावरुणवद्वसिष्ठवदित्यध्वर्युः" इति बौधायनसूत्रं सङ्गच्छते।

आपस्तम्बसूत्रमप्येवम्। एतेन—

वसिष्ठमित्रावरुणौ कुण्डिनश्च महातपाः।

इति मत्स्यपुराणप्रवराध्यायप्रयोगोऽपि व्याख्यात इति दिक्।

इह यदि लुकं निवर्त्य विशिष्टयोरेवादेशौ क्रियेते, तदा 'कौण्डिनाः' इत्यस्य सिद्धावपि 'आगस्तीयाः' इति न सिध्यति। तथाहि, अगस्त्यशब्दादृष्यणि आगस्त्यः। ततो बहुवचनान्ताद्वृद्धाच्छे विवक्षिते "गोत्रेऽलुगचि" (पा०सू०४-१-८९) इति लुक्प्रतिषेधः। प्रत्ययविशिष्टस्यागस्त्यादेशपक्षे तु तन्निषेधाभावाद्वृद्धत्वापगमे शैषिकोऽणेव स्यात्। उपपादितं चेदं "प्रत्ययस्य लुक्श्लुलुपः" (पा०सू०१-१-६१) सूत्रे।

सुपो धातुप्रातिपदिकयोः (पा०सू०२-४-७१) ॥ एतयोरवयवस्य सुपो लुक् स्यात्। पुत्रीयति। राजपुरुषः।

अदिप्रभृतिभ्यः शपः (पा०सू०२-४-७२) ॥ एभ्यः शपो लुक् स्यात्। अत्ति। कथं तर्हि—

"वासुदेवं परित्यज्य योऽन्यं देवमुपासते" इति ?

उच्यते, 'अस गतिदीप्त्यादानेषु'(भ्वा०उ०९११) इति भ्वादेरुभयपदिनो रूपमिदम्, उपादत्ते इत्यर्थात्। अथ कथम् "आश्वसेयुर्निशाचराः" इति भट्टिः "न विश्वसेत्पूर्वविरोधितस्य" इति च पञ्चतन्त्रम् ? पचाद्यजन्तादाचारक्विपि भविष्यति। "गणकार्यमनित्यम्" इति तु जयमङ्गला। तत्र ज्ञापकं तु "घटादयः षितः" इत्यत एव सिद्धे "क्षमूष् सहने"(भ्वा० आ०४४३) इति षित्करणम् ॥

बहुलं छन्दसि (पा०सू०२-४-७३) ॥ छन्दसि बहुलं शपो लुक् स्यात्। वृत्रं हनति। अहिः शयते। अन्येभ्योऽपि भवति। त्राध्वं नो देवाः ॥

यङोऽचि च (पा०सू०२-४-७४) ॥ यङोऽच्प्रत्यये परे लुक् स्यात् चकाराद्बहुलमन्यत्रापि। लोलुवः। पोपुवः। पचाद्यच्। इदमेव अचि लुग्विधानं ज्ञापकं "सर्वधातुभ्यः पचाद्यच्" इति। बाहुलकात् 'बेभिदीति' 'चेच्छिदीति' इत्यादि। इह अजिति प्रत्याहारो न गृह्यते। तथाहि सति "अणि" इत्येवावक्ष्यत्, यङन्तादन्यस्याचोऽसम्भवात् इति हरदत्तः। न च 'पापच्ये' 'पापच्यै' इत्यत्र सम्भवः, शपा व्यवधानात्, एकादेशस्य स्थानिवद्भावात्। "लिटस्तझयोः"(पा०सू०३-४-८१) इत्येशः सम्भवोस्तीति चेत् ? न, आम्प्रसङ्गात्। यदि तु "अमन्त्रे" इति निषेधात् मन्त्रे कथंचित्तत्संभवस्तर्हि यङा साहचर्यादिति युक्त्यन्तरमन्वेषणीयम्।

जुहोत्यादिभ्यः श्लुः (पा०सू०२-४-७५) ॥ एभ्यः शपः श्लुः स्यात् । जुहोति । मण्डूकप्लुत्येह शबनुवर्तते । न त्वनन्तरोपि यङ्, "श्लौ" (पा०सू०६-१-१०) इति सूत्रारम्भात् । अन्यथा यङो लुकीव श्लावपि "सन्यङोः" (पा०सू०६-१-९) इत्येव सिद्धे किं तेन ?

बहुलं छन्दसि (पा०सू०२-४-७६) ॥ दाति प्रियाणि । अन्येभ्यश्च भवति—पूर्णां विवष्टि । जनिमा सं विविक्तः ।

गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु (पा०सू०२-४-७७) ॥ एभ्यः सिचो लुक् स्यात्परस्मैपदेषु । इह मण्डूकप्लुत्या लुगनुवर्तते न त्वनन्तरोऽपि श्लुः, व्याख्यानात् । यद्यपि गामादाग्रहणेष्वविशेषस्तथापि 'गाति' इति निर्देशादिह "इणो गा लुङि" (पा०सू०२-४-४५) इत्यस्य ग्रहणम् । गादेशस्यैव ह्ययं श्तिपि शब्लुका निर्देशः ।

ननु नायं गादेशः, लुङ्येव तद्विधानात् । सत्यम्, तथापि "प्रकृतिवदनुकरणम्" इति स्थानिवद्भावातिदेशाच्छब्लुक् । "भवतेरः" (पा०सू०७-४-७३) इत्यादौ तु अस्त्यादेशानुकरणे अतिदेशातिदेशेन प्राप्तोऽपि शब्लुक् "प्रकृतिवत्" इत्यस्यानित्यत्वान्नेत्यवधेयम् । हरदत्तस्तु स्थानिवद्भावात् "प्रकृतिवदनुकरणम्" इति वा गातीत्यत्र शब्लुगित्याह । तत्र शब्दस्यासङ्गतिः स्पष्टैव । वस्तुतस्तु 'गापोर्ग्रहणे इण्पिबत्योः' (का०वा०) इति वार्तिकमेवात्र शरणम् । निर्देशादेव व्यक्तम् । लुग्विकरणग्रहणमिति तु भाष्ये प्रौढिवादमात्रम्, निर्देशस्य सन्दिग्धत्वात् । गायतेरपि हि सिचि कृतात्वस्यानुकरणं गातीति सम्भवत्येवेत्यवधेयम् । अगात् । अस्थात् । अदात् । अधात् । पिबतेरेवेह ग्रहणं न तु पातेः, "लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव" (प०भा०) इति परिभाषया । अपात् । अभूत् । भूधातोः स्वतन्त्रस्यास्त्यादेशस्य चेदं रूपं तुल्यम् । न चादेशस्य लुग्विकरणत्वात्पातिवद्ग्रहः शङ्क्यः । आर्धधातुकैकविषयतया हेतोः स्वरूपासिद्धेः गापोर्ग्रहणेन इणादेशपिबत्योरेव ग्रहणमित्युक्तम् । नेह—'कै गै रै शब्दे' । अगासीत् । 'पा रक्षणे' । अपासीत् । "यमरम" (पा०सू०७-२-७३) इतीट्सकौ । 'पै शोषणे' इत्यस्यापि लाक्षणिकत्वादग्रहणं बोध्यम् । परस्मैपदेषु किम् ? अगासातां ग्रामौ देवदत्तेन । अत्र कश्चित् सूत्रे भीधातोर्ङसौ निर्देशः । "एरनेकाचः" (पा०सू०६-४-८२) इति यण् । तेन 'मा भैः शशाङ्क मम शीधुनि नास्ति राहुः' इति प्रयोगः सङ्गच्छत इत्याह । एवं तु

"मा स्म भैषीस्त्वयाऽद्यैव कृतार्थो द्रक्ष्यते यतिः"

इति भट्टिर्विरुध्येत । मा भैरिति तु प्रामादिकम् । यद्वा, आगमशा-

द्भिर्भाष्यकारैर्हलन्तात्क्यषोऽनङ्गीकृतत्वात् । कथमन्यथा "क्यस्य विभाषा" (पा०सू०६-४-५०) इत्यत्र सामान्यग्रहणार्थं ककारं प्रत्याचक्षीरन्नित्यवधेयम् । अर्चिरिवाचरति अर्चिष्यते । "नः क्ये" (पा०सू०१-४-१५) इति नियमेन पदान्तत्वाभावात्षत्वम् । त्वद्यते, मद्यते । अनेकार्थत्वे तु युष्मद्यते, अस्मद्यते । कुमारीवाचरति कुमारायते । हरिणीव गौरीव गुर्वीवाचरति हरिणायते, गौरायते, गुरूयते । "क्यङ्मानिनोश्च" (पा०सू०६-३-३६) इति पुंवत् । सपत्नीवाचरति सपत्नीयते । अत्र पुंवद्भावो नेति न्यासकारः । यदाह-"नित्यं सपत्न्यादिषु" (पा०सू० ४-१-३५) इत्यत्र समुदायोच्चारणं पुंवद्भावबाधनार्थमिति, तदेतद्युक्तिविरुद्धं भाष्यविरुद्धं च । तथाहि, समुदायनिपातनं रूढ्यर्थं समानस्य सभावार्थं चेति न त्वदुक्तार्थज्ञापकम् । तथा "तसिलादिषु" (पा०सू०६-३-३५) इति सूत्रे भाष्यकारः--सपत्नीशब्दाच्छिवाद्यणि "भस्याढे" (का०वा०) इति पुंवद्भावे 'सापतः' इति प्राप्तस्य अढग्रहणमपनीय अनपत्य इति विवक्षया परिहृत्य गार्ग्यायण्या अपत्ये तु कुत्सिते "गोत्रस्त्रियाः कुत्सने ण च" (पा०सू०४-१-१४०) इति णप्रत्यये गार्ग्यायण इति स्यात्, गार्ग्य इति चेष्यत इति दोषमुद्भाव्य "भस्याढे" (का०वा०) इति यथान्यासं स्थापयित्वा "नित्यं सपत्न्यादिषु" (पा०सू०४-१-३५) इति समुदायनिपातनं परिहारत्वेनानभिधाय शत्रुपर्यायात्सपत्नशब्दात् "शार्ङ्गरवादि" (पा०सू०४-१-७३) ङीनन्तात् शिवाद्यण् इति सापत्नशब्दं साधितवान् । शिवादिषु समानः पतिर्यस्या इति व्युत्पादितस्य समानस्वामिकाभिधायिनो भाषितपुंस्कस्य केवलयौगिकत्वाद्ग्रहणं नेष्टमिति तदाशयः । एवं स्थिते तस्मात् "लिङ्गविशिष्ट"(प०भा०७३) परिभाषया पत्युत्तरपदलक्षणे ण्ये सापत्य इति भवति, भावकर्मणोः पत्यन्तलक्षणे यकि सापत्यमिति सुब्धातुवृत्तौ माधवः । तस्मात्क्यङ्यपि प्रकृतिभेदेन 'सपत्नायते' 'सपतीयते' इति द्वयमपि साधु । यत्तु पा रक्षणे(अ०प०४६)इति धातौ माधवेनोक्तम्-भावकर्मणोः पत्यन्तलक्षणे यकि सापत्न्यम्, अभाषितपुंस्कत्वात्पुंवद्भावो नेत्यादि, तत्तु विवाहजन्यसंस्कारविशेषनिमित्तकं पतिशब्दमाश्रित्य, इतरत्तु स्वामित्वमात्रपरमित्यविरोधः । एवं च शिवादौ नित्यस्त्रीलिङ्गस्यापि योगरूढस्य ग्रहणात्सापत्नशब्दो द्व्यर्थः, 'सपत्नीयते इति च तृतीयमपि रूपं साधिवत्यवधेयम् । युवतिरिवाचरति युवायते । यत्तु "ङ्याप्" (पा०सू०४-१-१) सूत्रभाष्ये 'युवतितरा'इत्युदाहरणात् यौवनं जातिः, अन्यथा "जातेश्च"इति निषेधा-

भावात्तसिलादिष्विति पुंवद्भावः क्रियेतेति । तन्न, वयसोऽनित्यत्वेन अजातित्वात् । कथमन्यथा "अचः परस्मिन्" (पा०सू०१-१-५७) इति सूत्रे युवजानिरिति भाष्यं सङ्गच्छेत । युवतितरेति तु भाष्यनिर्देशादेव न पुंवदिति कैयटे स्पष्टम् ।

पट्वी च मृद्वी च पट्वीमृद्व्यौ । ते इवाचरति पट्वीमृदूयते । पूर्वपदस्य क्यङ्परत्वाभावान्न पुंवत् । पाचिकायते, "न कोपधायाः" (पा०सू०६-३-३७) । चतुर्थीयते, "सञ्ज्ञापूरण्योश्च" (पा०सू०६-३-३८) । स्रौघ्नीयते, "वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे" (पा०सू०६-३-३९) । काषायीयते कन्था । रक्तार्थत्वान्नेह पुंवद्भावनिषेधः । खदिरस्य विकारः खादिरी । "पलाशादिभ्यो वा" (पा०सू०४-३-१४१) इति विकारे अणञोरन्यतरस्मिन् ङीप् । खादिरायते इत्यादि ।

"आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा" (का०वा०) ॥ क्यङपवादोऽयम् । पक्षे वाग्रहणात्क्यङपि । गल्भ धार्ष्ट्ये (भ्वा०आ०३९२) । क्लीबृ अधार्ष्ट्ये (भ्वा०प०३८१) । होडृ अनादरे (भ्वा०आ०२८६) । एते पचाद्यजन्ताः । अचोऽकारस्य इहैव वार्तिके अनुदात्तत्वानुनासिकत्वे प्रतिज्ञायेते । तेन क्विबन्तादात्मनेपदं सिध्यति । क्विप्सन्नियोगेनानुनासिकत्वप्रतिज्ञानात्क्यङ्पक्षे इत्सञ्ज्ञा न भवति । स्यादेतत्, उक्तधातूनामनुदात्तेत्त्वादवगल्भते, क्लीबते, होडते, इति सिद्धम् । तेभ्य एव पचाद्यजन्तेभ्यः क्यङि अवगल्भायत इत्यादि । न च अवगल्भते इत्यादीनां धार्ष्ट्यादिकमेवार्थः स्यान्न त्वाचार इति वाच्यम्, धातूनामनेकार्थत्वेनाचारार्थतया अपि लाभात् । तत्किमनेन वार्तिकेनेति चेत् ? सत्यम् । 'अवगल्भाञ्चक्रे' 'क्लीबाञ्चक्रे' 'होडाञ्चक्रे' इत्यत्र प्रत्ययान्तत्वादाम् यथा स्यादित्येवमर्थमिदं वार्तिकम् । अवगल्भेति किम् ? अनुपसर्गादुपसर्गान्तरविशिष्टाच्च क्यङेव यथा स्यात् 'गल्भायाञ्चक्रे' इति माधवादयः । प्रक्रियायां तु अवेत्यपहाय केवलस्य पाठः । तदनुगामिप्रसादादिग्रन्थश्च प्रामादिक एव । धातुभ्य एव लिटि तु-जगल्भे, चिक्लीबे, जुहोडे ।

"सर्वप्रातिपदिकेभ्यः" (का०वा०) ॥ न केवलमवगल्भादिभ्य एव किन्तु सर्वेभ्य एव आचारे क्विब्वक्तव्य इत्यर्थः । पूर्ववार्तिकन्तु अनुबन्धासंगार्थं स्थितमेव । प्रातिपदिकग्रहणादिह सुप इति न सम्बध्यते । तेन पदत्वाभावादुदाहरणेषु पदकार्याणि न । कृष्ण इवाचरति कृष्णति । "अतो गुणे" (पा०सू०६-१-९७) इति शपा सह पररूपम् । एतेन 'चर्मेवाचरति चर्मति' इति प्रक्रियाग्रन्थः परास्तः, अपदान्तत्वेन

नलोपायोगात् । कथमन्यथा इहैव शपा सह पररूपं स्यादिति यत्किञ्चिदेतत् । इह द्वितीयवार्तिके वाग्रहणं नानुवर्त्यम्, प्रातिपदिकविषयकेणानेन क्विपा सुबन्तविषयस्य क्यङो भिन्नविषयत्वादेव बाधस्याप्रसङ्गाद्वचनद्वयप्रामाण्याद्विकल्पोपपत्तेश्च । पूर्ववार्तिकेऽपि एतत्सिद्धक्विबनुवादेनानुबन्धासङ्गमात्रे तात्पर्यस्य भाष्ये स्थितत्वेन प्रातिपदिकविषयता वाशब्दवैयर्थ्यं चेति तत्त्वम् । तस्य सुबन्तविषयत्वे हि अन्तर्वर्तिविभक्त्या पदत्वात् गल्भतेः संयोगान्तलोपो दुर्वारः ।

अथ क्विबन्तेषु रूपाणि लेशत उदाह्रियन्ते । अइवाचरति अति, अतः, अन्ति । णलि "अचोऽञ्णिति" (पा०सू०७-२-११५) इति वृद्धौ "आत औ णलः" (पा०सू०७-१-३४), औ । तथाच कशब्दस्य चकाविति हरदत्तः । माधवस्तु "ण्यल्लोपौ" इति वचनाण्णलि वृद्धिम्बाधित्वा अतोलोपात् 'चक' इत्युदाजहार । तन्मतेऽपि अशब्दस्य औ, अतुः, उः । सर्वत्रात्र द्विर्वचने अतोलोपादन्तरङ्गत्वादतोगुणे पररूपत्वे तस्याङ्गग्रहणेन प्राप्तादतोलोपात्परत्वादभ्यासग्रहणेन ग्रहणाद् "अत आदेः" (पा०सू०७-४-७०) इति दीर्घः । "आतो लोप इटि च" (पा०सू०६-४-६४) इत्यालोपः क्किति, णलस्तु औ वृद्धिः । स्यादेतत्, इह प्रत्ययान्तत्वादामा भाव्यम् । न च "कास्यनेकाज्ग्रहणम्" इति वार्तिकेन प्रत्ययग्रहणस्थानेऽनेकाज्ग्रहणस्य कृतत्वात्प्रत्ययान्तेभ्योऽप्येकाज्भ्य आम्नेति वाच्यम्, चुलुम्पादीनामप्रत्ययान्तानां संग्रहार्थमनेकाज्ग्रहणमधिकं कर्तव्यमित्येतावन्मात्रपरतयाऽपि वार्तिकस्य कृतार्थत्वे सौत्रस्य प्रत्ययग्रहणस्यापनयने कारणाभावात् । अत एव वार्तिककृता चुलुम्पाद्यर्थमित्युक्तं न त्वेकाज्निवृत्त्यर्थमिति । अत एव "अवगल्भाञ्चक्रे" इत्यादि भाष्याद्युदाहृतं सङ्गच्छते । न हि तत्रानेकाच्त्वमस्ति, आत्मनेपदार्थमनुबन्धासङ्गस्य निर्विवादत्वात् । अत एव स्वामास स्वाञ्चकारेति प्रक्रियाकारोदाहृतं निर्बाधमिति चेत्? मैवम्, हरदत्तादिग्रन्थेषु कशब्दाद् अशब्दाद्गागादिभ्यश्चाचारक्विबन्तेभ्य एकाज्भ्योऽपि प्रत्ययान्तत्वादाम् स्यात्, चुलुम्पादिभ्यश्च न स्यात्, अतोऽव्याप्त्यतिव्याप्तिपरिहाराय प्रत्ययग्रहणमपनीय तत्स्थाने अनेकाज्ग्रहणं कर्त्तव्यमित्यर्थकतया वार्तिकस्य व्याख्यातत्वात् माधवादिभिरपि तदनुसारेणैव रूपाणामुदाहृतत्वाच्च । युक्तं चैतत्, कास्यनेकाज्ग्रहणमिति वार्तिकाक्षरस्वरसात् । अन्यथा हि अनेकाच उपसंख्यानमित्येव ब्रूयात्, न तु प्रत्ययशब्दावरुद्धकास्युत्तरभागमनेकाचं निवेशयेत्, आगन्तूनामन्ते निवेशस्य न्याय्यत्वात् । चुलुम्पाद्यर्थमिति वार्तिकशेषस्वरसो ममाप्यनुकूलोऽस्तीति चेत् ?

न, तदपेक्षया उपक्रमस्य प्राबल्यात । न चैवं गल्भाञ्चावाम् न स्यादिति वाच्यम्, तेषां क्विप्सन्नियोगेन एकाच्त्वेऽपि प्रागनेकाच्त्वात् । कास्यनेकाच इत्यत्र भूतपूर्वगतेराश्रयणात् । आचारेऽवगल्भेत्यादिवार्तिकस्यैव च भूतपूर्वगत्याश्रयणे प्रमाणत्वात् । तद्धि आम्प्रत्ययो यथा स्यादित्येवमर्थमिति भाष्यादौ स्पष्टम् । इह ज्ञापकस्य सामान्यविषयत्वे घटपटप्रभृतिभ्यस्तत्करोतिण्यन्तेभ्य: "क्विप् च" (पा०सू०३-२-७६) इति क्वौ तत आचारक्वौ लिटि आमा भाव्यम् । गल्भादिविशेषमात्रविषयत्वे तु नेत्यन्यदेतत् ।

इदं त्ववशिष्यते--"सर्वप्रातिपदिकेभ्य:" (का०वा०) इति क्विपि परस्मैपदे प्राप्ते आत्मनेपदप्रवृत्त्या चरितार्थं वचनं कथमाम्प्रवृत्तिं साधयेदिति ।

अत्रोत्तरम्, वाक्याभ्यनुज्ञानार्थं कृतस्यापि इच्छासनि वाग्रहणस्य पूर्वसूत्रद्वये व्यवस्थापकत्वमाश्रित्य गुपादेर्निन्दाक्षमादिष्वेव सन्नान्यत्रेति यथा सिद्धान्तितं, तथेहापि तद्बलेनैव "सर्वप्रातिपदिकेभ्य:" (का० वा०) इति क्विप् गल्भादेर्न करिष्यते इति परस्मैपदनिवृत्तिस्तावत्सिद्धा आत्मनेपदमपि स्वतन्त्रधातुभ्योऽस्त्येव । आचारार्थताऽप्यनेकार्थत्वात्सुलभा । तथाच वचनस्य नान्यत्र चरितार्थतेति ज्ञापकत्वं सुस्थमेव । एवं च सकलमहाग्रन्थविरुद्धं 'स्वामास'इति प्रक्रियोदाहरणं न श्रद्धेयमिति स्थितम् । इण: अयतेर्वा णिजन्तात् "क्विप् च" (पा०सू०३-२-७६) इति क्विप् आययतीति: आ:, आयमाचक्षाण आ:, स इवाचरति आति । "यमरम" (पा०सू०७-२-७३) इतीट्सकौ, आसीत्, आसिष्टाम् । एकादेशस्य पूर्वान्तत्वात् "लिङ्गविशिष्ट"(प०भा०७३) परिभाषया च मालेवाचरति मालाति । अमालासीत् । अमालासिष्टाम् । अस्माल्लुङि–अमालात्, अमाला: । अत्र हल्ङ्याब्भ्यो दीर्घादिलोपस्तु न भवति, ङीसाहचर्यादापोऽपि सोरेव लोपविधानात् । कविरिव कवयति । कवयाञ्चकार । आशीर्लिङि कवीयात् । "सिचि वृद्धि:"(पा०सू०७-२-१) इत्यत्र "ऋत इद्धातो:"(पा०सू०७-१-१००)इत्यतो धातोरित्यनुवृत्तेर्धातुरेव यो धातुरिति विज्ञानान्नामधातोर्न वृद्धिरिति कैयटहरदत्तौ । तन्मते गुणे अकवयीत् । वर्धमानोऽप्येवम् । माधवस्तु इक्परिभाषारम्भपक्षे धात्वनुवृत्ते: कैयटेन प्रदर्शितत्वादिगन्ते नामधातावपि वृद्धिमिच्छति । तन्मते अकावायीत् । विरिव वयति । विवाय, विव्यतु: । अवयीत्, अवायीत् । इरिव अयति । इयाय, इयतु:, इयु: । इययिथ, इयथु: । इय । इयाय, इयिव, इयिम । अत्र कित्सु सवर्णदीर्घे कृते इयङ् । यद्वा

दीर्घात्परत्वेनोत्तरखण्डे "एरनेकाचः" (पा०सू०६-४-८२) इति यण्। गुणवृद्धिविषये तु अयायोः "द्विर्वचनेऽचि" (पा०सू०१-१-५९) इति स्थानिवत्त्वाद् एदैतोर्द्वित्वम्, अभ्यासह्रस्वः। "अभ्यासस्यासवर्णे" (पा० सू०६-४-७८) इतीयङ्। एदैतोरपि स्थानिवत्त्वादिकारस्य द्वित्वमिति पक्षे तु सवर्णदीर्घात्परत्वादुत्तरखण्डस्य पुनर्गुणवृद्धी, ततोऽभ्यासस्येयङ्। लक्ष्मीरिव लक्ष्मयति। लक्ष्मयाञ्चकार। श्रीरिव श्रयति। शिश्राय, शिश्रियतुः, शिश्रियुः। उरिव अवति। अवाञ्चकार। "इजादेश्च" (पा०सू०३-१-३६) इत्याम्। कुरिव कवति। चुकाव। भ्रूरिव भ्रवति। बुभ्राव, बुभ्रुवतुः। "अचि श्नुधा" (पा०सू०६-४-७७) इत्युवङ्। गुणवृद्धिविषये तु ताभ्यां बाध्यते। पितेव पितरति। पित्तराञ्चकार। आशीर्लिङि "रिङ्शयग्लिङ्क्षु" (पा०सू०७-४-२८) इति रिङादेशः। पित्रियात्। नेव नरति। ननार। एवाचरति अरति। "पाघ्रा" (पा०सू०७-३-७८) इत्यादौ नायं गृह्यते। "अभिव्यक्तपदार्था ये" इति न्यायेन धातुपाठस्थस्यैव ग्रहात्। एवञ्चास्मादृशब्दाल्लिटि "ऋच्छत्यृताम्" (पा०सू०७-४-११) इति न प्रवर्तते। तत्र धात्वभ्यासयोः सवर्णदीर्घे धातुग्रहणेन ग्रहणादृदकारान्तलक्षणे गुणे 'अरतुः' इत्यादीत्येके। अन्ये तु अभ्यासग्रहणेन ग्रहणात् "उरत्" (पा०सू०७-४-६६) अत्वं "हलादिः शेषः" (पा०सू०७-४-६०)। "अत आदेः" (पा०सू०७-४-७०) इति दीर्घः। "आतो लोप इटि च" (पा०सू०६-४-६४) इत्यालोपः। अतुः, उः, इति प्रत्ययमात्रमवशिष्यत इत्याहुः। द्रुरिवाचरति द्रवति। अनभिव्यक्तपदार्थत्वेन "णिश्रिद्रुस्रुभ्यः" (पा०सू०३-१-४८) इति चङोऽभावात्सिचि-अद्रावीत्। भूरिवाचरति भवति। अत्र "गातिस्था" (पा०सू०२-४-७७) इति न प्रवर्तते। अभावीत्, अभाविष्टाम्, अभाविषुः। बुभावेत्यादि। एवं पिबतेर्विचि पाः। ततः क्विपि "पाघ्राध्मा" (पा०सू०७-३-७८) इति "गातिस्था" (पा०सू०२-४-७७) इति च न प्रवर्त्तते। पाति। अपासीत्। एवं प्रतिपदोक्तानामन्येषामपि इहाप्रवृत्तिरुन्नेया। कथं तर्हि बुभ्रुवतुरिति प्रागुवङुदाहृत इति चेत्? धातुत्वप्रयुक्तोऽसौ न तु भ्रुत्वप्रयुक्त इत्यवधेहि। पॄरिवाचरति परति। पपार, पपरतुरित्यादि। अयं पॄशब्दानुकरणं न पुनः क्र्यादौ जुहोत्यादौ वा पठ्यमान इति श्ना श्लुश्च न भवति। किति लिटि "ऋच्छत्यॄताम्" (पा० सू०७-४-११) इति ॠकारान्तलक्षणो गुणः। "शॄदॄप्राम्" (पा०सू०७-४-१२) इति ह्रस्वविकल्पस्तु न भवति, अनभिव्यक्तपदार्थत्वात्। ॠरिवाचरति अरति। अराञ्चकार। "इजादेश्च" (पा०सू०३-१-३६) इत्या-

म् । ऌ इवाचरति । अलति । लिटि द्विर्वचनम् । ऌवर्णस्य दीर्घाभावा-त्सवर्णदीर्घाभावः । उत्तरखण्डस्य यणि अभ्यासस्योरदत्वादेव आल, आलतुरित्यादीति माधवः।तत्र यणीति किंविषयं, पित्सु तु गुणवृद्धी बोध्ये। सवर्णदीर्घाभाव इति तु गुणवृद्धिस्थले भवतु नाम, अवर्णस्य ऌकारं प्रत्यसवर्णत्वात् । गुणवृद्ध्योः स्थानिवद्भावेन ऌकारद्विर्वचनेऽपि सवर्ण-दीर्घात्परत्वेन पुनरुत्तरखण्डे गुणादिप्रवृत्तेः । न चान्तरङ्गत्वात्सवर्ण-दीर्घः, "अभ्यासस्यासवर्णे" (पा०सू०६-४-७८) इत्यस्य निर्विषयताप-त्तेः । न च 'इयर्ति' 'इयृतः' इत्यादिरवकाशः, एवं हि "अभ्यासस्यर्त्तौ" त्येव ब्रूयात् । न च एषेः इयेष, ओणेःउवोणेत्यवकाशः,भाषायाम् "इजा-देः" (पा०सू०३-१-३६) इत्याम्प्रत्ययस्योचितत्वात् । छन्दसि तु तन्वा-दीनामुपसंख्यानात् 'त्रियम्बकं सुवर्ग' इत्यादिवदियङुवङोरुपपत्तेस्त-थापि ऌवर्णस्य दीर्घाभावादिति माधवोपन्यस्तो हेतुरसङ्गत एव, 'हो-तृकारः' इत्यादाविव ऋकारस्य दुर्वारत्वात् । तथा च ऋशब्दात्क्विपी-व एकादेशस्य धातुग्रहणेनाभ्यासग्रहणेन वा ग्रहणमिति मतभेदेन— अरतुः, अरुः; अतुः, उः, इति रूपद्वयमेवोचितम् । "ऌति ऌ वा" इति वाष्ट्वार्तिकविधेयस्य वर्णान्तरस्य प्रवृत्तौ तु ऌअतुः ऌउरित्युचितम् । सर्वथाऽपि 'अलतुः' अलुरिति माधवोदाहृतं दुरुपपादमेवेति विभा-व्यतां भाष्यज्ञैः ।

हेरिवाचरति हयति । जिहाय । अहयीत् । यान्तत्वान्न वृद्धिः' । परिवाचरति अयति । "इजादेः (पा०सू०३-१-३६) इत्याम् । अयाञ्च-कार । "नेटि" (पा०सू०७-२-४) इति वृद्धिनिषेधान्मा भवानयीत् । गौरिवाचरति गवति । अपदान्तत्वादवङ्पूर्वरूपे न स्तः । जुगाव । 'अगवीत्' अगावीत् । "अतो हलादेः" (पा०सू०७-२-७) इति वा वृद्धिः । ओकारात्-अवति । अवाञ्चकार । मा भवानवीत् । रै-राय-ति । रिराय । नौ-नावति । नुनाव । औ-आवति । आवाञ्चकार । गोधुगिवाचरति गोदोहति । पय इवाचरति पयति । पपाय । लुङि या-न्तत्वाद्वृद्ध्यभावात् अपयीदिति माधवः ।

अत्रेदं वक्तव्यम् । अयपयहयधातुषु "क्विप् च" (पा०सू०३-२-७६) इति क्विपि अत् पत् हत् इति तावत्त्वयैवोदाहृतम् । आचारक्विपि तु अकृत्त्वात्तुगागमो मा भूत् । यकारस्तु कथं न लुप्येत ? तस्मात्कश-ब्दवदेवात्र रूपमुचितम् ! द्यौरिवाचरति 'देवति'इति-माधवः । अत्र ऊ-ठि 'द्यवति'इत्युचितम् । फलेणौ "क्विप् च"(पा०सू०३-२-७६)इति क्विप्। तत आचारक्विप् । फलति । यङ्लुकि पम्फलयते । अपम्फालीत् ।

एकदेशविकृतस्यानन्यत्वात् अभ्यासस्य नुक् इति "चरफलोश्च" (पा० सू०७-४-८७) इति सूत्रे न्यासविस्तरौ। यद्यपि प्रतिपदोपात्तत्त्वाभिव्यक्तपदार्थानामेव ग्रहणं, तथापि "उत्परस्यातः" (पा०सू०-७-४-८८) इति सूत्रे अत इति तपरनिर्देशेन दीर्घनिवृत्त्यर्थं क्रियमाणेन इहास्यापि ग्रहणं ज्ञाप्यत इति तदाशयः। इदमिवाचरति इदामति। यङ्विव याङति। आणिव आणति। राजेव राजानति। "अनुनासिकस्य क्वि" (पा०सू०६-४-१५) इति दीर्घः। यत्तु कश्चिज्झलादिः क्ङित् धातोरेव सम्भवतीति तत्साहचर्याद्धातुविहित एव क्विप् गृह्यत इति आचारक्वौ नानेन दीर्घ इत्याह। तन्न, अस्य क्विपः ककारस्यात्रैव सामान्यग्रहणार्थत्वात्। पकारस्य च तदविघातार्थत्वात्साहचर्यस्य च सर्वत्रानियामकतायाः द्विस्त्रिश्चतुरितिकृत्वोऽर्थग्रहणेन ज्ञापितत्वात्। एतेन इह क्विपि अनुबन्धयोः फलं चिन्त्यमिति वदन्न्यासकारः प्रत्युक्त इति दिक्।

एवं च पथिमथ्यृभुक्षां परमप्युपधागुणं बाधित्वाऽन्तरङ्गत्वाद्दीर्घे सति पथीनति मथीनति ऋभुक्षीणतीत्यादि बोध्यम्। इदं च माधवादिमतमनुसृत्यानुनासिकान्तानां दीर्घः प्रपञ्चितः। अपरं मतं कृत्येव दीर्घो न त्वाचारक्विपि साहचर्यस्य नियामकत्वेनापि क्वचिदाश्रयणात्। न चैवमनुबन्धवैयर्थ्यम्, "वेरपृक्तस्य" (पा०सू०६-१-६७) इत्यत्रास्यैव ग्रहणं मा भूदिति ककारासङ्गात्। पित्त्वसामर्थ्यात्तु प्रकृतिः सर्वानुदात्तेति केषाञ्चिन्मतस्य न्यासग्रन्थे स्पष्टत्वात्। युक्तं चैतत्, कौमारव्याकरणसंवादात्। तत्र हि क्यङ एव वैकल्पिको लोपो विहितो न तु क्विपः, तत्र च क्विबाश्रयस्य दीर्घस्याप्रसङ्गात्। गुणे सति 'पथेनति' मथेनतीत्याद्युदाहृतम्। न्यायसाम्येन "च्छ्वोः शूठ्" (पा० सू०१-४-१९) इत्यत्रापि अस्य क्विपोऽग्रहणात् द्यौरिवाचरति देवतीत्यपि माधवोदाहृतमस्मिन्पक्षे निर्वहति, वलोपस्य भाष्ये प्रत्याख्यानात्। अत एव पदमञ्जर्यां बहुषु पुस्तकेषु राजनतीति ह्रस्वपाठः सङ्गच्छते। अत एव च "न पदान्त' (पा०सू०१-१-५८) सूत्रे 'प्रातिदीव्नः'इत्यत्र "उपधायां च" (पा०सू०८-२-७८) इति दीर्घ इति काशिकाऽपि सङ्गच्छते, आचारक्विबन्ताद्विच् प्रत्यय इति तदाशयात्। चर्मेवाचरति चर्मतीति प्रक्रिया तु अत्रापि पक्षे अशुद्धैव। नलोपपररूपयोः पदान्तापदान्तत्वप्रयुक्तयोः समावेशस्य दुर्घटत्वादिति दिक्।

अप्रसिद्धा ये हलन्तास्तेषां कारितणौ कृते टिलोपे च णिलोपे च तद्धलन्तत्वमुह्यताम। मठं मखं कफं रथं चाचक्षाणः कुर्वन् वा मट्,

मक्, कप्, रत् । स इवाचरति मठति । मखति । कफति । रथति इत्यादिक्रमेण यथालक्षणमप्रयुक्तेऽप्यूह्यामित्यर्थः ।

प्रकृतमनुसरामः—

भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः (पा०सू०३-१-१२) ॥ अत्राच्वेरित्येकवचनं भृशाद्यवयवापेक्षं, सौत्रो वा वचनव्यत्ययः । पर्युदासात्सदृशग्रहः । अभूततद्भावविषयेभ्यो भृशादिभ्यो भवत्यर्थे क्यङ् स्यात्, हलन्तानां त्वेषां लोपोऽपि स्यात् । अभृशो भृशो भवति भृशायते । चशब्दोऽन्वाचये न तु सन्नियोगे, अजन्तानां गणे पाठस्य वैयर्थ्यापत्तेः । अच्वेरिति यदि प्रसज्यप्रतिषेधः स्यात्तर्हि असमर्थसमासो वाक्यभेदश्च स्पष्ट एव । किंच भवतियोगे च्वेर्विधानादनुप्रयुज्यमानेन भवतिनैव उक्तार्थत्वात्क्यङोऽप्रसक्तौ निषेधवैयर्थ्यम् । अतः पर्युदास एवोचितः । तथाच नञिवयुक्तन्यायेन सादृश्यलाभादभूततद्भावविषयेभ्य इत्युक्तम् । तेनेह न-क्व दिवा भृशा भवन्ति । ये रात्रौ भृशा नक्षत्रादयः ते दिवा क्व प्रदेशे भवन्तीत्यर्थः । इह सुमनस् उन्मनस् दुर्मनस् अभिमनस् इति पठ्यते । तत्र शङ्क्यते-समासात्क्यङि विशिष्टस्य धातुत्वादड्ल्यब्द्विर्वचनेषु दोषः । तथाहि, स्वमनायत, उदमनायत इत्यादीष्यते । असुमनायत, औन्मनायत इत्यादि प्राप्नोति । तथा 'सुमनाय्य' इत्यादौ ल्यबिष्टः । सु उद् इत्यादीनां क्त्वान्तशरीरप्रवेशे तु तद्व्यतिरिक्तपदाभावादसति समासे ल्यपोऽभावात् 'सुमनायित्वा' इत्यादि प्राप्नोति । तथा क्यङन्तात्सनि सन्नन्तस्य प्रथमस्यैकाचो द्वित्वे सुसुमनायिषते इत्यादि प्राप्नोति । सुमिमनायिषते इत्यादीष्यते ।

अत्राहुः-चुरादिषु "संग्राम युद्धे" इति पठ्यते स न पाठ्यः । संग्रामशब्दाद्युद्धवाचिनः "तत्करोति" (ग०सू०) इत्येव णिचः सिद्धेरिति तत्पाठो नियमार्थः—धातुसंज्ञानिमित्तः प्रत्ययः सोपसर्गाच्चेद्भवति संग्रामयतेरेव नान्यस्मादिति, ज्ञापनार्थो वा—सोपसर्गात्संघाताद्धातुसंज्ञानिमित्ते प्रत्यये विधित्सिते उपसर्गाः पृथक् क्रियन्ते परिशिष्टादेव तु प्रत्यय इति । संग्रामशब्दो हि चुरादौ पठ्यमानः सोपसर्गः संघात एव न तूपसर्गसदृशावयवम् 'आप्लृ' व्याप्तावितिवच्छब्दान्तरम् । तथाच "वा पदान्तस्य" (पा०सू०८-४-५९) इति परसवर्णविकल्पो भवति । संघातपाठफलं तु असंग्रामयत शूरः, संग्रामयित्वा, सिसंग्रामयिषते इत्यादि । ततश्चोक्तरीत्या नियमो ज्ञापनं वा निष्कृष्टं फलमिति ।

अत्र हरदत्तः—अनुदात्तेदयं संग्रामयतिरिष्यते । ततश्च आत्मनेप-

दार्थं गल्भत्यादीनामिवानुबन्धासञ्ज्ञार्थः पाठः स्यादिति कथं नियमो ज्ञापकं वा भवेदिति । न चानुबन्धासञ्जनार्थे पाठे 'ग्राम युद्धे' इत्येव पठ्येत । संशब्दस्तु द्योतकः प्रयोगदर्शनवशादेव लभ्यते । यथा इङिकोराधिः । तस्माद्विशिष्टपाठः प्रागुक्तफलक एवेति वाच्यम्, एवं हि यथा इङिकोरधेः पूर्वमाङ् न भवति तथाऽस्यापि न स्यादिति ।

अत्र माधवः—अस्यानुदात्तेत्त्वमपाणिनीयमिति पाठस्यैतदर्थतया न ज्ञापकभङ्ग इति । एतत्तु "संग्रामयतिरनुदात्तेद्बोद्धव्यः" इति कैयटेन विरुध्यते । यदपि हरदत्तेन सिद्धान्तितं-मनःशब्दस्य स्वादिभिर्न समासः, किन्त्वसमस्ता एवैते प्रत्ययार्थविशेषणम्, मनःशब्दश्च वृत्तिविषये तद्वति वर्त्तते, मनस्वी सुष्ठु भवतीत्यादिरर्थ इति; तदपि "प्रभौ परिवृढः" (पा०सू०७-२-२१) इत्यत्र परिवृढमाचष्टे इति णिचि क्त्वाप्रत्यये कृते 'परिव्रढय्य' इति ल्यब् भवतीति भाष्यकारादिभिर्वक्ष्यमाणेन विरोधात्पराहतमेव । नह्यत्रेव तत्रापि प्रत्ययार्थविशेषणत्वं सम्भवति । कथं तर्हि इष्टार्थसिद्धिरिति चेत् ?

अत्रोच्यते--चुरादौ पठ्यमानं 'सङ्ग्राम' इत्येतत्प्रातिपदिकम्, "अर्तिस्तुसु' (उ०सू०१४५) इति मन्नधिकारे "ग्रसेरा च" (उ० सू०१४८) इति व्युत्पादनात्; न तु धातुः, तस्य च "तत्करोति" (ग०सू०) इति पूर्वप्रकान्तेन गणसूत्रेण णिचि सिद्धे तत्सन्नियोगे अनुबन्धासङ्ग एव फलं गल्भादिवत् । एवं स्थिते "युद्धे योऽयं ग्रामशब्द" इत्युक्तेऽपि केवलस्य ग्रामशब्दस्य युद्धे वृत्त्यभावात्सामर्थ्यात्सङ्ग्रामशब्दो लभ्यत एव । तत्र च 'सङ्ग्रामि इति विशिष्टस्य धातुत्वमपि सुलभम्, "सनाद्यन्ताः" (पा०सू०३-१-३२) इति सूत्रेण विधीयमानायाः सञ्ज्ञायाः प्रकृतिप्रत्ययसङ्घाते विश्रान्तेः । एतेन इङिकोः प्रतिबन्दिः परास्तः, तत्र हि पाठापेक्षा धातुसञ्ज्ञा विशिष्टं न स्पृशतीति वैषम्यात् । एवं च "सङ्ग्राम" इति विशिष्टपाठो ज्ञापयति "उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजकीभूते प्रत्यये चिकीर्षिते पृथक् क्रियते" इति । तद्धाजहत्स्वार्थायां वृत्तौ स्वोत्तरभागेन धातुसंज्ञानिमित्तप्रत्ययप्रकृतिभूतेन समानार्थकमिति तद्घटितविशिष्टार्थेनापि क्त्वान्तेन सह समर्थत्वात "कुगति" (पा०सू०२-२-१८) इति सूत्रेण प्रादिग्रहणात्समस्यत इति 'परिव्रढय्य' इत्यादिसिद्धिः । अवजिगलिभषते, अवागलभत, अवगलभ्य इत्यादावपीयमेव गतिः । न चैवम् "उस्योमाङ्क्ष्वाटः" (का०वा०) इति वार्त्तिकेन 'औढीयत्'

इति तद्भाष्येण च सह विरोधः, ज्ञापकस्य सजातीयविषयतया श्रूयमाणे पूर्वपदे प्रवृत्तिः, न त्वादेशेनापहृते इति स्वीकारात् । अत्र च भाष्यवार्तिकधातुवृत्त्यादिग्रन्था अनुकूला इति गुणगृह्यैर्विभाव्यताम् । एवंच 'प्रमाणयित्वा' 'विचारयित्वा' इत्यादयः केषांचित्प्रयोगाः प्रामादिका एव । अत एव प्रशस्यमाचष्टे 'श्रापयति' 'ज्यापयति' इति श्रज्यावुदाहरन्तः सुधाकरादयः 'श्रपयति' 'ज्यपयति' इत्युदाहरन्तः शाकटायनादयश्च प्रक्रियारत्ने निराकृताः, प्रशब्दस्य पृथक्करणेन शस्यशब्दादेव णिजुत्पत्त्या श्रज्ययोरप्राप्तेः । अत एव माधवादिभिः 'प्रशस्ययति' इत्येव स्वीकृतम् । एतेन 'प्रावृषमाख्यत् अपप्रावत्' 'वीरुधमाख्यत् अविवीरत्' इत्याद्युदाहरन्तो धातुचन्द्रोदयकारादयः परास्ताः । सङ्ग्रामयतेः पाठेन ज्ञापितस्यार्थस्य "उस्योमाङ्क्ष्वाटः" (का०वा०) इति षाष्ठभाष्यवार्तिकबलेन अनित्यताज्ञापनमाश्रित्य कथंचिद्वा समर्थनीया इति दिक् ।

भृशादयस्तु श्लोकगणपाठानुरोधेन माधवीये उदाहृताः । तद्यथा–भृशायते । चपलायते । मन्दायते । पण्डितायते । रेहायते । रेहशब्दो रहसि निर्घृणत्वे भिक्षाभिलाषस्य च निवृत्तौ वर्तत इति गणवृत्तिः । तृणायते, तृणश्चन्द्रः समुद्रश्च । वेहायते, वेहद् गर्भोपघातिनी । अधरायते, 'अधरो मूर्खः पुष्करश्च' इति गणवृत्तिः । ओजायते, वर्चायते, ओजोवर्चःशब्दौ वृत्तिविषये तद्वति वर्तेते । रेफायते, रेफः सरोष इति गणवृत्तौ । दुर्मनायते । सुमनायते । उन्मनायते । उत्सुकायते । शश्वायते, बृहायते, तान्तावेतौ । "सुबामन्त्रिते" (पा०सू०२-१-२) इत्यत्र मनस्युपसर्गस्य पराङ्गवद्भाव उपसंख्येयः । तेन 'सुमनायते' इत्यादौ "तिङ्ङतिङः" (पा०सू०८-१-२८) इति निघातो न भवति, 'देवदत्तः सुमनायते' इत्यादौ सोपसर्गस्य निघातश्च भवतीति प्रकृतसूत्रस्थभाष्यपर्यालोचनया लभ्यते । अमी श्लोका गणपाठस्था भृशादयः । गणवृत्तौ तु बृहच्छब्दो न पठ्यते । भद्रशब्दस्तु पठ्यते । कन्धरशब्दश्च त्वचोऽभ्यन्तरे स्थूलतन्त्वाभा असंयुक्ता स्नायुः कन्धरा, तद्वान् कन्धरः । मत्वर्थे अर्शआदिभ्योऽच् (पा०सू०५-२-१२७) ।

लोहितादिडाज्भ्यः क्यष् (पा०सू०३-१-१३) ॥ लोहितादिभ्यो डाजन्ताच्च भवत्यर्थे क्यष् स्यात् । "वा क्यषः" (पा०सू०१-३-९०) लोहितायति, लोहितायते । अत्र 'अच्वेः' इत्यनुवृत्त्या अभूततद्भावविषयत्वं लभ्यते । तच्च डाचो न विशेषणम्, असम्भवात् । अलोहितो लोहितो भवतीति विग्रहः । पटपटायति, पटपटायते । कृभ्वस्तियोगं विनाऽपि क्यषो डाजन्ताद्विधानसामर्थ्यादेवेह डाच् । भवत्यर्थे विधीयमानेन

कयषा उक्तार्थस्य भवतेरिह प्रयोगायोगात्। अत्र वार्तिकम्—

लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणीति॥ आदिशब्दप्रत्याख्यानपरमेतत्। लोहितशब्दात्परत्र पठ्यमानानि नीलहरितमन्द्रफेनदासमन्द इत्येतानि षट् भृशादिषु द्रष्टव्यानीत्यर्थः। कयषः ककारषकारावपि प्रत्याख्यातौ। तथाहि, ककारो गुणवृद्धिनिषेधार्थो नेति स्पष्टमेव, अप्रसक्तस्य प्रतिषेधायोगात्। नापि "नः क्ये"(पा०सू०१-४-१५) इति सामान्यग्रहणार्थः, नान्तादविधानात्। नापि "आपत्यस्य च तद्धितेनाति" "क्यच्व्योश्च"(पा०सू०६-४-१५१,१५२) इति, आपत्यादविधानात्। नापि "क्याच्छन्दसि" (पा०सू०३-२-१७०) इति, 'याच्छन्दसि' इत्येव सुवचत्वात्। युक्तं चैतत् 'शकुनम्भुरण्युम्' इति, कण्ड्वादियगन्तादपि दर्शनात्। नापि लोहितायते इत्यत्र "अकृत्सार्व" (पा०सू०७-४-२५) इति दीर्घप्रवृत्त्यर्थः, तत्र क्ङितीत्यस्यानुवृत्तेः। नन्वनुवृत्तिरावश्यकी 'उरुया' 'धृष्णुया' इत्येवमर्थमिति चेत्? न, इह हि तृतीयास्थाने "सुपां सुलुक्" (पा०सू०७-१-३९) इति यादेशः। स च छान्दसः। तत्र च ह्रस्वोऽपि छान्दस एव भविष्यति उपगायन्तु सापत्नयो गर्भिणय इतिवत्। नापि "क्यस्य विभाषा"(पा० सू०६-४-५०) इत्यत्र सामान्यग्रहणार्थः, हल इत्यनुवृत्तेः। नह्ययं हलन्तादस्ति, न च "वा क्यषः" (पा०सू०१-३-९०) इति विशेषणार्थः, "वा स्यात्" इत्येव सूत्रणात्। न चैवं "पाशादिभ्यो यः" (पा०सू०४-२-४९) पाश्या, अत्र प्रसङ्गः, सामान्यविहितानां तिङां नियमार्थं हि तत्प्रकरणम्। न च पाशादियान्तात्तिङः सन्ति। नन्वाचारक्विबन्तात्सन्तीति चेत्? न, टापा व्यवधानात्, पूर्वस्मादपि विधौ एकादेशस्य स्थानिवद्भावात्। न च दण्ड्यवध्यादिशब्देभ्य आचारक्विबन्तेभ्योऽतिप्रसङ्गः शङ्क्यः, तत्र "दण्डादिभ्य" (पा०सू०५-१-६६) इति सूत्रेण यदेव विधीयते "शीर्षच्छेदाद्यच्च"(पा०सू०५-१-६५) इति पूर्वसूत्राद्यदनुवृत्तेः न तु यप्रत्यय इति पञ्चमे वक्ष्यमाणत्वात्। अत एव षकारोऽपि व्यर्थः। स हि "वा क्यषः"(पा०सू०१-३-९०)इत्यत्र विशेषणार्थः "क्याच्छन्दसि" (पा०सू०३-२-१७०) "क्यस्य विभाषा" (पा०सू०६-४-५०) इत्यादौ सामान्यग्रहणाविघातार्थो वेति फलं सम्भाव्यते। तच्च सर्वं दूषितमेव। तस्मादादिशब्दं कषौ च हित्वा "लोहितडाज्भ्यो यः" इति भाष्ये स्थापितम्। यदि तु "सभाया यः"(पा०सू०४-४-१५०)-सभ्यः, स इवाचरतीत्यादेराचारक्विबन्तस्याभिधानमस्ति, तर्हि "वा यषः" इति सूत्र्यताम्। षकारमात्रं वाऽस्तु, अव-

शिष्टं तु व्यर्थमेव । वृत्तिकारस्तु वार्तिकस्यार्थमन्यथा मन्यते । तद्यथा-न किलानेनादिग्रहणं प्रत्याख्यायते, किन्तु यानि पठितानि नीलादीनि षट् तेषामेव इतोऽपकृष्य भृशादिषु निवेश उच्यते । अपठितानां तु क्यषेव । तानि चाकृतिगणत्वाल्लभ्यन्ते । आकृतिगणत्वे ज्ञापकं तु "नः क्ये" (पा०सू१-४-१५) इति सामान्यग्रहणार्थः क्यषः ककारः तदविघातार्थः षकारश्च, न हि पठ्यमानेषु लोहितादिषु नान्तः कश्चिदस्ति । तानि चाकृतिगणसिद्धानि गणवृत्तिकारः सञ्जग्राह ।

लोहितश्यामदुःखानि हर्षगर्वसुखानि च ।
मूर्छानिद्राकृपाधूमाः करुणानित्यचर्मणीति ॥

निद्राकरुणादयो वृत्तिविषये तद्वति वर्तन्ते । निद्रायति निद्रायते इत्यादि । तदेतत्सर्वं भाष्यविरुद्धत्वादुपेक्ष्यम् । किञ्च 'लोहितडाज्भ्यः' इति वदतो वार्तिककारस्यापि आदिशब्दप्रत्याख्यानमभिप्रेतमिति स्पष्टं लभ्यते । अन्यथा हि 'लोहितात्' इत्येव ब्रूयात् । अत एव "विद्धस्यमान इत्यत्र लोहितादिडाज्भ्यः क्यष्" इति कल्पतरुग्रन्थो वृत्तिकाररीत्या सम्भवन्नपि भाष्यविरुद्धत्वात्प्रौढिवादमात्रमिति क्यङ्विधाववोचाम ।

स्यादेतत्, "क्यष् च" इति सूत्रमस्तु, चात्क्यङ् । तत्र क्यष्पक्षे परस्मैपदम्, क्यङ्पक्षे त्वात्मनेपदमिति "वा क्यषः" (पा०सू०१-३-९०) इति सूत्रं मास्त्विति चेत्? मैवम्, "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" (प०भा०७३) इति लोहिनीशब्दात् क्यषि 'लोहिनीयति' 'लोहिनीयते' इति रूपद्वयमिष्यते । क्यङि तु "क्यङ्मानिनोश्च" (पा०सू०६-३-३६) इति पुंवद्भावे सति 'लोहितायते' इति स्यादिति फले भेदात् ।

कष्टाय क्रमणे (पा०सू०३-१-१४) ॥ कष्टं कृच्छ्रम् । "कृच्छ्रगहनयोः कषः" (पा०सू०७-२-२२) इति कृच्छ्रे इडभावः । तेन च तत्करणं पापं कर्म लक्ष्यते । क्रमणमुत्साहः, "वृत्तिसर्गतायनेषु" (पा०सू०१-३-३८) इति सूत्रे हि 'सर्ग उत्साह' इत्युक्तम् । तदयमर्थः-चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात् । कष्टाय क्रमते कष्टायते । पापं कर्म कर्तुमुत्सहत इत्यर्थः ।

सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम (का०वा०) ॥ कण्वं पापम् । सत्रादयो वृत्तिविषये पापपर्यायाः । तेभ्यो द्वितीयान्तेभ्यः चिकीर्षायां क्यङ् । पापं चिकीर्षतीत्यस्वपदेन विग्रहः । सत्रायते । कक्षायते । कष्टायते । कृच्छ्रायते । गहनायते ।

कर्मणो रोमन्थतपोभ्यां वर्तिचरोः (पा०सू०३-१-१५) ॥ कर्मण इति पञ्चमी, रोमन्थतपोभ्यामित्यनेन सामानाधिकरण्यात् । प्रत्येकं सम्बन्धादेकवचनम् । वर्तीति ण्यन्ताद्वृतेः "ण्यासश्रन्थोयुच्"(पा०सू०३-३-१०७) इति युचि प्राप्ते अत एव निपातनात् क्तिन् । चरतेः सम्पदादित्वाद्भावे क्विप् । रोमन्थतपोभ्यां कर्मभ्यां यथासङ्ख्यं वर्तिचरोरर्थयोः क्यङ् स्यात् । रोमन्थं वर्तयति रोमन्थायते ।

हनुचलन इति वक्तव्यम् (का०वा०) ॥ हनुचलनेनात्र चर्वितस्य मुखप्रदेशे आकृष्य चर्वणं लक्ष्यते । नेह—कीटो रोमन्थं वर्तयति । अपानप्रदेशान्निःसृतं द्रव्यं कीटो वर्तुलं करोतीत्यर्थ इति न्यासकारहरदत्तौ । अपानप्रदेशान्निःसृतमश्नातीत्यर्थ इति तु कैयटो व्याख्यत् । तपस्यति, इह तङ् प्राप्तः । तस्मात्—

तपसः परस्मैपदं च (का०वा०)। इति वक्तव्यम् । एवं च "नमोवरिव" (पा०सू०३-१-१९) इत्यादिसूत्र एव तपःशब्दः पठितुमुचितः । तथा तु न कृतमित्येव ।

बाष्पोष्मभ्यामुद्वमने (पा०सू०३-१-१६) कर्मणः ॥ क्यङिति वर्तते । बाष्पमुद्वमति बाष्पायते । ऊष्माणमुद्वमति ऊष्मायते ।

फेनाच्चेति वक्तव्यम् (का०वा०) ॥ फेनायते ॥

शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे (पा०सू०३-१-१७) ॥ एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात् । शब्दं करोति शब्दायते । एवं वैरायते । कलहायते । अभ्रायते । कण्वायते । मेघायते । "तत्करोति" ( ग०सू० ) इति णिचि प्राप्तेऽयमारम्भः । पक्षे णिजपीष्यते-'शब्दयति' इति । तदर्थं मण्डूकप्लुत्या "भृशादिभ्यो भुवि" (पा०सू०३-१-१२) इति सूत्राच्चकारोऽत्रानुवर्तत इति न्यासकारः । अत्र वार्तिकम्—

सुदिनदुर्दिनाभ्यां च (का०वा०) ॥ सुदिनायते । दुर्दिनायते ।

नीहाराच्च (का०वा०) ॥ नीहारायते ।

अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणं कर्तव्यम् (का०वा०)॥ पोटा स्त्रीपुंसलक्षणा । अतोऽन्ये क्रियावचना इति क्षुधातुवृत्तौ माधवः । अट गतौ (भ्वा०प०२९६) । अटतीत्यटा । अचि टाप् , तां करोति अटायते । अट्ट अतिक्रमहिंसयोः (चु०उ०२८) "गुरोश्च हलः" (पा०सू० ३-३-१०३) इत्यकारः—अट्टा, तां करोति अट्टायते । शीकृ सेचने (भ्वा० आ०७५) तालव्यादिः । दन्त्यादिरिति तु धनपालकाश्यपौ । गुरोश्चेत्यकारः—शीका, तां करोति शीकायते इति तद्धातुव्याख्यायां माधवः । कुट कौटिल्ये ( तु०प०८६ ) तुदादिः, हेतुमण्णिच् ।

कुट छेदने (चु०आ०१६५) आकुस्मीयः । कोटयति कोटयते वा कोटा, तां करोति कोटायते। पोटोक्ता, पोटायते। 'सोटा'इति पाठे धात्वर्थोऽन्वेषणीयः। 'मोटा'इति पाठे तु मुट सञ्चूर्णने(चु०प०८१)चुरादिः, प्रदर्शने भ्वादिः। प्रदर्शनाक्षेपयोस्तुदादौ (तु०प०९४)। मोटयतीति मोटा, मोटायते। प्रुष प्लुष दाहे (भ्वा०प०५५,५६)। कर्मणि क्तः, प्रुष्टा प्लुष्टातां करोति प्रुष्टायते, प्लुष्टायते। उज्ज्वलदत्तस्तु"अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्" (उ०सू०१५७) इति सूत्रे 'प्रुष्वः स्याद्दतुसूर्ययोः' 'प्रुष्वा जलकणिका'इति रत्नमतिः। प्रुष स्नेहनादाविति धातुः 'प्रुष्वायते' इत्युदाहरन् इह वार्तिके 'प्रुष्वा'इति पाठमुपन्यस्तवान् ।

सुखादिभ्यः कर्तृवेदनायाम् (पा०सू०३-१-१८)॥ कर्तृ इति पृथक्पदं लुप्तषष्ठीकम् । वेदना ज्ञानम् । "विद चेतनाख्याननिवासेषु" (चु०आ० १७५) इत्यस्माच्चुरादिण्यन्ताद् भावे "ण्यासश्रन्थो युच्"(पा०सू०३-३-१०७)। "घट्टिवन्दिविदिभ्यश्च" (का०वा०) इति औपसङ्ख्यानिको वा। कर्तृत्वं च श्रुतवेदनाक्रियापेक्षम् । तदयमर्थः-वेदनक्रियायाः कर्तुराधेयभावेन सम्बन्धिभ्यः सुखादिभ्यः कर्मभ्यो वेदनायामर्थे क्यङ् स्यात् । सुखं वेदयते सुखायते। कर्तृग्रहणं किम् ? सुखं वेदयते प्रसाधको राज्ञः। अयं वेदिः आकुस्मीयः। एवं च 'वेदयति'इति केषांचित्परस्मैपदपाठः प्रामादिकः। अत्र श्लोकगणकारः--

सुखदुःखगहनकृच्छ्रास्तृप्रालीकप्रतीपकरुणाश्च ।
कृपणः सोढ इतीमे सुखादयो दश गणे पठिताः ॥

सोढं सहनमभिभवो वा । गणरत्नमहोदधौ तु आस्रशब्दोऽपीह पठ्यते ।

नमोवरिवश्चित्रङः क्यच् (पा०सू०३-१-१९)॥ करणग्रहणमनुवृत्तमभिधानशक्तिस्वाभाव्यादिह क्रियाविशेषपरम् । तेन नमसः पूजायां, वरिवसः परिचर्यायां, चित्रङ आश्चर्ये, क्यच् स्यात् । नमस्यति देवान्, नमस्कारेण पूजयतीत्यर्थः। वरिवस्यति गुरून्। शुश्रूषत इत्यर्थः। चित्रीयते। 'विस्मयते इत्यर्थः, 'विस्माययते' इत्यन्ये। तथा च मायामृगं प्रकृत्य भट्टिराह-"ततश्चित्रीयमाणोऽसौ" इति। अत्र चित्रङो ङित्करणादवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवतीति वाच्यम्। तथा सति क्यजन्तादात्मनेपदम् । न चैवं शब्दवैरादिसूत्रे चित्रशब्दोऽपि पठ्यतां क्यङेव तङ् भविष्यतीति वाच्यम्, तथा सति हि

"क्यचि च" (पा०सू०७-४-३३) इति ईत्वं न स्यात् । तस्मात्क्यजेव कार्यो ङित्वं च ।

पुच्छभाण्डचीवराण्णिङ् (पा०सू०३-१-२०) ॥ करण इत्यनुवृत्तेः क्रियाविशेषे पुच्छादुदसने व्यसने पर्यसने च । उदसनमुत्क्षेपणम् । व्यसनं-विविधं विरुद्धं वाउत्क्षेपणम् । पर्यसनं-परितः क्षेपणम् । उत्पुच्छयते । विपुच्छयते । परिपुच्छयते ।

भाण्डात्समाचयने (का०वा०) ॥ समाचयनं राशीकरणम् । सम्भाण्डयते । भाण्डानि समाचिनोतीत्यर्थः ।

चीवरादर्जने परिधाने वा (का०वा०) ॥ संचीवरयते भिक्षुः । चीवराण्यर्जयति परिधत्ते वेत्यर्थः । णिङो णकारः सामान्यग्रहणार्थो न तु वृद्ध्यर्थः, असम्भवात् । ङकारस्तदविघातार्थः आत्मनेपदार्थश्च । अत एव पुच्छादय उत्तरसूत्रे न निवेशिताः ।

मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् (पा०सू० ३-१-२१) ॥ एभ्यो दशभ्यः कृञर्थे णिच् स्यात् । मुण्डं करोति मुण्डयति । मिश्रयति । श्लक्ष्णयति । लवणयति ।

व्रताद्भोजने तन्निवृत्तौ च (का०वा०) ॥ पयः शूद्रान्नं वा व्रतयति ।

वस्त्रात्समाच्छादने (का०वा) ॥ संवस्त्रयति । इह भोजनतन्निवृत्ती व्रतशब्दस्यार्थौ । समाच्छादनं तु वस्त्रशब्दस्य । प्रत्ययस्तु कृञर्थे । श्रूयते च भोजने व्रतशब्दः-"यदस्य पयो व्रतं भवति । आत्मानमेव तद्वर्धयति । त्रिव्रतो वै मनुरासीत् । द्विव्रता असुराः । एकव्रता देवाः" इति । पस्पशायां च-"शक्यश्चानेन श्वमांसादीन्यपि व्रतयितुम्" इति । अयमेव व्रतशब्दो दर्शादिवद्विपरीतलक्षणया तन्निवृत्तौ वर्तते । 'संवस्त्रयति प्रावारम्' इत्यत्र प्रावारमाच्छादयतीत्यर्थ इति माधवः ।

हलादिभ्यस्त्रिभ्यो ग्रहणे प्रत्ययः । हलिं गृह्णाति हलयति । कलिं गृह्णाति कलयति । कृतं गृह्णाति कृतयति ।

तूस्तानि विहन्ति वितूस्तयति । 'तूस्तं केशः' इति श्रीभद्रः । जटीभूताः केशा इति न्यासः । पापमिति वैजयन्ती ।

स्यादेतत्, "प्रातिपदिकाद्धात्वर्थे" (ग०सू०) इत्येव सर्वमिदं सिद्धम् । न च "तत्करोति" (ग०सू०) इत्यादिना तत्र धात्वर्थनियमः, राजानमतिक्रान्तवान् अत्यरराजदित्यादेरपीष्टत्वात् । तत्किं मुण्डादिसूत्रेणेति चेत् ?

अत्राहुः, मुण्डयति माणवकं, मिश्रयत्यन्नं, श्लक्ष्णयति वस्त्रं, लव-

णयति व्यञ्जनमिति सापेक्षेभ्योऽपि णिजर्थमिदम् । हलिकल्योरत्व-निपातार्थम् । तथा च वार्तिकम्--

हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थमिति । तथाहि, 'हलिइ' 'कलिइ'इति स्थिते"अचो ञ्णिति"(पा०सू०७-२-११५)इति वृद्धिः प्राप्नोति, णाविष्ठवदिति टिलोपश्च । तत्र लोपः शब्दान्तरप्राप्त्या अनित्यः, वृद्धिस्तु टिलोपे सत्यप्राप्तेः । उभयोरनित्ययोः परत्वाद् वृद्धौ कृतायां ऐकारस्य आयादेशात्पूर्वमेव परत्वात् वार्णादाङ्गस्य बलीयस्त्वाच्च लोपेऽनग्लोप्ययस्भवतीति "सन्वल्लघुनि" (पा०सू०७-४-९३) इति सन्वद्भावः स्याद् "दीर्घो" (पा०सू०७-४-९४) इति दीर्घश्च । न च टिलोपस्य "अचः परस्मिन्" (पा०सू०७-१-५७) इतिस्थानिवद्भावात्तेन व्यवधानान्न दोष इति वाच्यम्, चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरः तस्य सन्वत् लघोर्दीर्घश्चेति हरदत्तादिभिः पुरस्कृते कैयटेनैकीयमततयोपन्यस्ते व्याख्याने स्थानिवद्भावस्याकिञ्चित्करत्वात् । चङ्परे णौ यल्लघु तत्र परतो योऽभ्यासः तस्येति भाष्यकैयटमतेऽपि अभ्यासस्य टिलोपाद्यनन्तरं जातत्वेन(१)आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वाप्रसङ्गात् । अत्वनिपातने तु यद्यपि परत्वाद् वृद्धिस्तथापि अगेव लुप्यत इति सन्वद्भावदीर्घौ न भवतः । एवं च बलिपटुप्रभृतिभ्यो णिचि अबीबलत् अपीपटत् इति भवति न तु अबबलत् अपपटत् इति ।

स्यादेतत्, "णौ चङि" (पा०सू०७-४-१) इत्यत्रत्यभाष्येण सहैतद्विरुध्यते । तत्र हि वृद्धेर्लोपो बलीयानिति स्थितम् । युक्तं चैतत्, शब्दान्तरप्राप्तौ सत्यामपि कृताकृतप्रसङ्गित्वमात्रेण क्वचिन्नित्यत्वाभ्युपगमात् । यदाह—भुवोवुकोनित्यत्वादित्यादीति. ज्ञापकं चात्र "नाग्लोपिशास्" (पा०सू०७-४-२) इति सूत्रे अगिति प्रत्याहारग्रहणम् । तथाहि, अवर्णान्तेष्ववर्णोपधेषु ऋवर्णान्तेषु च वृद्धावप्यवर्ण एव लुप्यते । तत्र अलोपिनां नेत्येव वाच्यम् । इवर्णोवर्णान्तयोस्तु वृद्धौ कृतायामौकारो लुप्यते न त्वक् । न च स्वामिनमाख्यत् असस्वामत्, गोमिनमाख्यत् अजुगोमत्,प्रादुराख्यत् अपप्रादत्, यादृशमाख्यत् अययादत्, तादृशमाख्यत् अततादत् इत्यादौ यत्र वृद्धेरप्रसङ्गादिको लोपस्तत्र ह्रस्वनिवृत्तये अग्ग्रहणमिति वाच्यम्, अनभिधानात्तत्र णिच एवानुत्पत्तेः ।

---

(१) आदिष्टादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये विहितस्य स्थानिवत्त्वस्याप्रसङ्गादित्यर्थः ।

एतच्च भाष्यकारेण ज्ञापकत्वस्य समर्थनादवसीयते। न चैवमपि स्रग्विणमाख्यद् असस्रजत् इत्यत्र विन्मतोर्लुकि उपधाया वृद्धौ ह्रस्वनिवृत्त्यर्थं अग्लोपग्रहणं स्यात्, अस्ति ह्यत्राभिधानम् "टेः" इत्यत्र भाष्ये 'स्रजयति' इत्युदाहणादिति वाच्यम्, एवमपि स्रजयतीत्यत्र वृद्ध्यभावस्य सिद्धान्तसम्मतत्वेन टेरित्यत्र भाष्यकारेण स्रजयतीति निर्देशात् "अङ्गवृत्ते" (प०भा०९४) इति परिभाषया वा वृद्धेरप्रसङ्गेन ह्रस्वभाविन्या उपधाया एव अभावात्। अतः प्रत्याहारग्रहणं ज्ञापकं वृद्धेः पूर्वं टिलोप इति। तत्कथमिहोच्यते वृद्धौ सत्यां टिलोप इतीति चेत्?

अत्र माधवः—परत्वाद् वृद्धिरिति मुख्यः पक्षः, वृद्धेर्लोपो बलीयानिति तु प्रौढिवादमात्रमित्येकं मतम्। तद्विपरीतं मतान्तरम्। भाष्यद्वयप्रामाण्याद् वृद्धेः पूर्वं पश्चाद्वा कामचारेण टिलोप इति अपपटत् अपीपटदिति रूपद्वयमपि साध्विति चापरं मतमिति मतत्रयमपि सुधातुवृत्तावुपनिबद्धवान्। तत्राद्यं मतं हरदत्तस्य, द्वितीयं कैयटस्य, तृतीयं त्वन्येषामिति विवेकः। एतद्बलाबलचिन्ता तु करिष्यते। अयं च भेदो णिभिन्नविषयः, णेर्णिचि तु ण्यल्लोपाविति विप्रतिषेधात् निष्कर्षरीत्याऽपवादत्वाद्वा प्रागेव णिलोपः। उपधाह्रस्वत्वे सन्वद्भावदीर्घयोश्च णेर्णिचीत्युपसंख्यानाण्ण्याकृतिनिर्देशाद्वा अवीवददित्येव रूपमिति सप्तमे वक्ष्यामः।

प्रकृतमनुसरामः। मुण्डादिसूत्रे केषांचिद्ग्रहणं प्रपञ्चार्थम्। मुण्डादयः सर्वेऽपि "सत्यापपाश" (पा०सू०३-१-२५) इत्यत्रैव पठितुं युक्ताः। एवं हि एकवाक्यता लभ्यते। द्विर्णिज्ग्रहणं च न कर्तव्यमिति लाघवम्। तथा तु न कृतमित्येव।

धातोरेकाचो हलादेः क्रियासमभिहारे यङ् (पा०सू०३-१-२२)॥ एकाच् हलादिः समभिह्रियमाणक्रियावृत्तिर्यो धातुः तस्मात्स्वार्थे यङ् स्यात्। समभिहारोऽत्र पौनःपुन्यं भृशार्थो वा। यद्यपि विप्रकीर्णानामेकत्र राशीकरणं समभिहारशब्दस्य मुख्योऽर्थः, तथाप्यसौ धान्यादीनामेव सम्भवति, न तु धातुवाच्यायाः क्रियायाः, अमूर्तत्वात्। अतो गौणोऽर्थो गृह्यते। स च न प्रत्ययस्य वाच्यः, प्रकृत्यर्थं प्रति विशेष्यतापत्तेः, किन्तु द्योत्योऽर्थः। अत एव टाबादयस्तरबादयश्च स्वार्थिका एवेति निरूढः पन्थाः। यदा तु प्रकृत्यर्थप्राधान्यमौत्सर्गिकम् आख्यात इव टाबादिष्वपि त्यज्यते तदा टाबादयो वाचका इत्यपि पक्षः सम्भवत्येव। स्वीकृतश्चायं लिङ्गादिविधौ भाष्येऽपीति तत्रतत्र स्फुटम्। पुनः पुनरतिशयेन वा पचति पापच्यते। "दीर्घोऽकितः" (पा०सू०७-४-८३)

इति दीर्घः । देदीप्यते । "गुणो यङ्लुकोः" (पा०सू०७-४-८२) इति गुणः । ननु "क्रियासमभिहारे च" (का०वा०) इति वार्तिकेन "नित्यवीप्सयोः" (पा०सू०८-१-४) इति वा पदद्विर्वचनमिह कुतो नेति चेत्? यङैव क्रियासमभिहारस्य द्योतितत्वात् । न चैवं लुनीहिलुनीहीत्यत्रापि न स्यादिति वाच्यम्, केवलेन लोटा तुल्यरूपो हिः क्रियासमभिहारं द्योतयितुं सहायतया द्वित्वमपेक्षते, अन्यथा संशयापत्तेः; यङ् तु न तथेतिवैषम्यात् । धातोरिति किम्? आर्धधातुकत्वं यथा स्यात् । तेन "ब्रुवो वचिः" इत्यादि सिध्यति । एकाचः किम्? पुनःपुनर्जागर्ति । हलादेः किम्? भृशमीक्षते । यङो ङित्वं बोभूयते मरीमृज्यते इत्यादौ गुणवृद्धिनिषेधार्थम् । न चैवमवयवे चरितार्थस्य समुदायं प्रत्यविशेषकत्वात् यङन्तादात्मनेपदं न स्यादिति वाच्यम्, ङिदन्ताद्धातोस्तदिति "अनुदात्तङित" (पा०सू०१-३-१२) इति सूत्र एव प्रपञ्चितत्वात् । 'भृशं शोभते' 'भृशं रोचते' इत्यत्रानभिधानाद्यङ् नेति भाष्यम् । कथं तर्हि "रुच दीप्तौ" (भ्वा०आ०७४६) "शुभ शोभायाम्" । (तु०प०४१) इति धातू व्याचक्षाणैः धातुवृत्तिकारैः 'रोरुच्यते' 'शोशुभ्यते' इत्युदाहृतमिति चेत्? भाष्ये भृशार्थोपादानात् पौनःपुन्ये भवत्येवेत्याशयेनेत्याहुः । शोभत इति शविकरणस्योदाहरणात्तौदादिकस्य यङ् भवत्येवेति धातुचन्द्रोदये । "सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णुग्रहणम्" (का०वा०) । सूच पैशुन्ये (चु०प०३४१) सूत्र अवमोचने (चु०प०३७६) मूत्र प्रस्रवणे" (चु०प०३७७)चुरादिण्यन्ताः । अट गतौ (भ्वा०प०२९६)। ऋ गतौ (भ्वा०प०९६१) । अश भोजने(क्र्या०प०५१) अशू व्याप्तौ (स्वा० आ०१८) द्वयोरपि ग्रहणम् । अत्र आद्यानां त्रयाणामनेकाच्त्वात् ततोऽन्येषां अहलादित्वात्, ऊर्णोतेस्तु अनेकाच्त्वादहलादित्वाच्चाप्राप्तौ वचनम् । अत्र ऊर्णोतेर्वक्ष्यमाणेन णुवद्भावेनापि सिद्धम् । सोसूच्यते । सोसूत्र्यते । सूचिसूत्री अदन्तौ, चुरादिणिच्, अतोलोपः, यङ्, णिलोपः, द्वित्वं, "हलादिः शेषः" (पा०सू०७-४-६०), अभ्यासस्य गुणः । अभ्यासात्परस्य षत्वं तु न भवति, अनादेशत्वात् । न चेमौ षोपदेशौ, अदन्तत्वेनानेकाच्त्वात् । षोपदेशलक्षणे हि सेकसृवादिपर्युदासात् तत्साहचर्यमेकाच्त्वं विवक्षितमिति निष्कर्षः । 'सोसूच्यते' 'सोसूत्र्यते' इति भाष्योदाहरणं चात्र प्रमाणम् । षोपदेशलक्षणे एकाच्त्वं विशेषणं देयमिति वदतो माधवस्याप्ययमेवाशयः । सोसूत्र्यते । अटाट्यते । "अजादेर्द्वितीयस्य" (पा०सू०६-१-२) इति ट्यशब्दस्य द्वित्वं, "सन्यङोः" (पा०सू०६-१-९) इति षष्ठीति वक्ष्यमाणत्वात् । अरार्यते । "गु-

णोऽर्तिसंयोगाद्योः" "यङि च" (पा०सू०७-४-१२९,१३०) इति गुणः, यँशब्दस्य द्वित्वम्। न च "नन्द्राः संयोगादयः" (पा०सू०६-१-३) इति रेफस्य द्वित्वनिषेधः, "यकारपरस्य नायं निषेधः" इति षष्ठे वृत्तिकारोक्तेः। न चैतदप्रामाणिकम्, प्रकृतसूत्रस्थस्य अरार्यत इति भाष्यस्यैव तत्र प्रमाणत्वात्। अशाश्यते। ऊर्णोनूयते। ऊर्णुञ् आच्छादने (अ० उ०२९)। नोपधोयम्। तस्याष्टमिकं णत्वम्। तस्यासिद्धत्वान्नुशब्दस्य द्वित्वम्। "पूर्वत्रासिद्धीयमद्विर्वचने" (प०भा०१२८) इत्यनित्यम् "उभौ साभ्यासस्य" (पा०सू०८-४-२१) इति लिङ्गात्। स्यादेतत्, लुनीहिलुनीहीत्येवायं लुनाति। अत्र यङा लोट् बाध्येत। अन्तरङ्गो हि यङ्, क्रियासमभिहारमात्रापेक्षत्वात्। लोट् तु बहिरङ्गः, क्रियाभेदाश्रये धातुसम्बन्धे भावकर्मकर्तृषु विधानात्। तथा लोट् सावकाशोऽपि क्व? अनेकाचि अजादौ च-जागृहिजागृहीत्येवायं जागर्ति, ईक्षस्वेक्षस्वेत्येवायमीक्षते।

अत्राहुः,वेत्यनुवर्तते। यदा न यङ् तदा लोट् भविष्यति।

नित्यं कौटिल्ये गतौ (पा०सू०३-१-२३)॥ गतौ वर्तमानाद्धातोः कौटिल्ये एव द्योत्ये यङ् स्यात् न तु क्रियासमभिहारे। क्रमु पादविक्षेपे (भ्वा०प०४७४) द्रम गतौ (भ्वा०प०४६७) चङ्क्रम्यते। दन्द्रम्यते। अवधारणार्थान्नित्यग्रहणान्नेह-भृशं क्रामति। ननु यथा "वडवाया वृषे वाच्ये" इत्यनेन अपत्ये प्राप्तस्ततोऽपकृष्य विधीयते, यथा वा ञीतः क्तो भूते प्राप्तः ततोऽपकृष्य वर्तमाने विधीयते, एवमत्रापि धातुमात्रात् क्रियासमभिहारे यङ् विहितो गतिवचनात्तु कौटिल्य इति तक्रकौण्डिन्यन्यायेनैव बाधः सिद्धः। सत्यम्, अत एव नित्यग्रहणं भाष्यवार्तिकयोः प्रत्याख्यातम्।

लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् (पा०सू०३-१-२४)॥ एभ्यो यङ् स्यात् धात्वर्थगर्हायां द्योत्यायाम्। लुप्लृ च्छेदने (तु०उ०१५१)। षद विशरणादौ (भ्वा०प०८७९)। यस्तु "आङः सदिः पद्यर्थे" (चु०प०२९९) इति चौरादिको णयन्तः स इह न गृह्यते 'एकाच' इत्यनुवृत्तेरिति हरदत्तः; तच्चिन्त्यम्, प्रकृतिग्रहणे ण्यधिकस्याप्राप्तेः। अन्यथा लुपादेरपि हेतुमण्ण्यन्तस्य वारणीयतया सदेरेवोपन्यासे बीजाभावाच्च। चर गतौ (भ्वा०प०५६०) जप व्यक्तायां वाचि(भ्वा०प०३९६) जभी गात्रविनामे (भ्वा०आ०३८८) दह भस्मीकरणे (भ्वा०प० १०१६)। अत एव दशीति निपातनात् यङ्लुकि नलोपः—दन्दशीति। गॄ निगरणे (तु०प०१३०) तुदादिः। गॄ शब्दे (क्र्या०प०२६) क्र्यादिः।

तत्र अदन्तविकरणसाहचर्यात्तुदादेरेव ग्रहणमित्येके। द्वयोरपीत्यन्ये। गर्हितं लुम्पति लोलुप्यते। सासद्यते। चञ्चूर्यते। "चरफलोश्च" (पा० सू०७-४-८७) इति नुक् "उत्परस्यातः" (पा०सू०८-४-८८) "हलि च" (पा०सू०९-२-७७) इति दीर्घः। जञ्जप्यते। जञ्जभ्यते। दन्दह्यते। दन्दश्यते। जपादीनां चतुर्णामभ्यासस्य "जपजभदहदशभञ्जपशाञ्च" (पा०सू०७-४-८६) इति नुक्। निजेगिल्यते। "ऋत इद्धातोः" (पा०सू०७-१-१००), रपरत्वं, द्विर्वचनम्, अभ्यासस्य गुणः, जेगिर् य इति स्थिते "ग्रो यङि" (पा०सू०८-३-२०) इति लत्वम्। न च परत्वात् "हलि च" इति दीर्घः, तस्यासिद्धत्वात्। लत्वे कृते तु न विहतनिमित्तत्वाद्दीर्घः। भावेति किम्? साधनगर्हायां मा भूत्—मन्त्रं जपति वृषलः। अत्र स्वरवर्णादिभ्रंशाभावाद् गर्हा नास्ति। कर्त्राख्यसाधनं तु गर्हितं शूद्रस्य वेदे अनधिकृतत्वात्। नित्यग्रहणमवधारणार्थमिहानुवर्तते। तस्य व्याख्यानं च पूर्ववत्।

सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् (पा०सू०३-१-२५)॥ एभ्यो णिच् स्यात्। सत्यादेभ्यश्चूर्णान्तेभ्यः प्रातिपदिकाद्धात्वर्थे इत्येव सिद्धे सत्यस्यापुगर्थं वचनम्, अन्येषां प्रपञ्चार्थम्, मालिन्या उपश्लोकयतीत्यादौ सापेक्षादुत्पत्त्यर्थं च। धात्वर्थे इत्यविशेषोक्तावपि स्वभावलभ्योऽर्थविशेषो वृत्तिकारादिभिर्निर्दिश्यते। तद्यथा—सत्यमाचष्टे सत्यापयति। सत्यं करोतीति तु भाष्यम्।

अर्थवेदसत्यानामापुग्वक्तव्यः (का०वा०)॥ आपुग्वचनसामर्थ्याट्टिलोपो न। अर्थापयति। पुकैव सिद्धे आकारोच्चारणमन्यतो विधानार्थं, तेन लिखापयतीत्यादि सिद्धमिति कश्चित्। तन्न, 'पुगेव कार्यते' इति भाष्यविरोधात्। तस्माल्लिखापयतीत्यपप्रयोग एवेत्याहुः।

पादौ प्रक्षालापयतीति गृह्यप्रयोगस्तु छन्दोवदृषयः कुर्वन्तीति समाधेय इति हरदत्तादयः। पाशं विमुञ्चति विपाशयति। रूपं पश्यति रूपयति। वीणयोपगायति उपवीणयति। तूलेनानुकुष्णाति अनुतूलयति तृणाग्रम्। अनुकुष्णाति अनुघट्टयतीत्यर्थ इति हरदत्तः। श्लोकैरुपस्तौति उपश्लोकयति। सेनया अभियाति अभिषेणयति, "उपसर्गात्सुनोति" (पा०सू०८-३-६५) इति षत्वम्। अभ्यषेणयत्, "प्राक् सितादड्व्यवायेऽपि" (पा०सू०८-२-६३ इति षत्वम्। त्वच संवरणे (तु०प० २१) "पुंसि सञ्ज्ञायाम्" (पा०सू०३-३-११८) इति घः। त्वचं गृह्णाति त्वचयति। टिलोपस्य स्थानिवत्त्वादुपधावृद्धिर्न। उक्तादेव

धातोः क्विपि हलन्तात् "तत्करोति" (ग०सू०) इति णौ 'त्वाचयति' इत्युपधावृद्धिर्भवत्येव । "प्रकृत्यैकाच्" (पा०सू०६-४-१६३) इति टिलोपाभावः । तस्मात्सूत्रे त्वचेत्यकारो विवक्षितो न तु सत्यापेतिवदुच्चारणार्थ इत्यवधेयम् । वर्मणा सन्नह्यति संवर्मयति । वर्णं गृह्णाति संवर्णयति । चूर्णैरवध्वंसयति अवचूर्णयति । चुरादिभ्यः स्वार्थे, चोरयति । चिन्तयति ।

हेतुमति च (पा०सू०३-१-२६) ॥ हेतुः कर्तुः प्रयोजकः, तद्व्यापारः प्रवर्तनारूपो हेतुमान्, तस्मिन्वाच्ये धातोर्णिच् ...त् । पाचयति देवदत्तो यज्ञदत्तेन । यज्ञदत्तनिष्ठविक्लित्त्यनुकूलव्यापारविषयिणी प्रवर्तना देवदत्ताश्रयेत्यर्थः । प्रवर्तनाऽनेकधा–प्रेषणमध्येषणं तत्समर्थाचरणं चेति । भृत्यादेर्निकृष्टस्य प्रवर्तना प्रेषणम्, आज्ञेत्यर्थः । गुर्वादेराराध्यस्य प्रवर्तना अध्येषणम्, प्रार्थनेत्यर्थः । तत्समर्थाचरणमपि बहुधा अनुमतिरुपदेशोऽनुग्रह इति । तत्र यस्यानुमतिं विना क्रिया न निष्पद्यते सोऽनुमतिमात्रे प्रयोजकः । यथा राजादिः । वैद्यादिस्तु ज्वरितः कषायं पिबेदिति उपदेशमात्रेण प्रवर्तकः । यस्तु केनचिद् जिघांसितं पलायमानं रुणद्धि सोऽपि हन्तुरनुग्राहकत्वात् प्रयोजक एव । तदिह अर्थप्रकरणादिगम्या अमी विशेषाः । सर्वानुगतं प्रवर्तनासामान्यं तु णिचोऽर्थः । स च णिचः शक्य इति मुख्यः पक्षः । द्योत्य इति पक्षान्तरमध्याकरे स्थितम् । यद्यपि हेतुशब्दस्य सम्बन्धिशब्दत्वात् हेतुमानित्युक्ते यं प्रति प्रयोजकत्वं स एव लभ्यते, यथा पितृमानित्युक्ते पुत्रः, तादृशश्चेह कर्ता कारकाधिकारे हेतुसंज्ञोक्तेः क्रिया च, तथाच पक्तुः पाकस्य वा हेतुमत्त्वं युक्तम्, तथापि करणे इत्यधिकारात् नेह कर्ता गृह्यते, प्रकृत्यैवोक्तत्वाच्च न पाकः, किन्तु पाकपक्तपेक्षया यो हेतुस्तद्विषयव्यापार एव स्वभावतो लोके णिजर्थतया प्रसिद्धो हेतुमच्छब्देनोच्यते इति सिद्धान्तः । एवं च हेतोरित्येव सूत्रं युक्तम् । हेतोः करणे व्यापारे णिजित्यर्थः । तथा तु न कृतमित्येव । इह यद्यपि फलव्यापारयोर्धातुवाच्यत्वाद्विक्लित्त्यनुकूलव्यापारत्वस्य च प्रेषणादावपि सुलभत्वात्तस्यापि पच्यर्थतामाश्रित्य णिचो द्योतकतेति वर्णितं भाष्यादौ, तथापि प्रौढिवादमात्रमेतत् । तथाहि, अधिश्रयणादिरेव व्यापारविशेषः पचेरर्थः । न तु ततः प्राचीनोऽपि क्रयणाद्यवस्थायां पचतीत्यप्रयोगात्, अन्यथाऽतिप्रसङ्गात्, क्वाचित्कप्रयोगस्य भाक्तत्वेनाप्युपपत्तेश्च, पचतिपाचयत्योरर्थवैलक्षण्यस्य अनुभवसिद्धत्वाच्च, अणौ कर्तुर्णौ कर्मत्वमित्याद्यवस्थाभ्युपगमाच्च, 'प्रणाययति' 'अभिषाव-

यति' इत्यादौ उपसर्गस्य प्रकृत्यर्थगतविशेषद्योतकत्वे णत्ववत्वे स्तः,
णिचा सम्बन्धे तु नेत्यष्टमे स्फुटत्वाच्च । अतोऽत्र पक्षे नातीवाभिनि-
वेष्टव्यम् । स्यादेतत्, प्रवर्त्तनामात्रस्य णिजर्थत्वे णिचो लोडादीनाञ्च
पर्यायप्रसङ्गः । ततश्च पृच्छतु मां भवानिति वक्तव्ये णिजपि प्रयुज्येते-
ति चेत् ? कर्त्तुः प्रयोजको हि हेतुः, प्रैषविषयस्तु नाद्यापि कर्तृत्वेना-
वधारितः । तथाच प्रयोज्यप्रवृत्त्युपहिता प्रवृत्तिर्णिजर्थः । केवला तु
लोडर्थ इति विवेकः । उक्तं च—

वक्तव्यमात्रस्य तु प्रैषे पृच्छादेर्लोड् विधीयते ।

सक्रियस्य प्रयोगस्तु यदा, स विषयो णिचः ॥ इति ।

किञ्च प्रयोक्तृधर्मः प्रयुक्तिर्लोडर्थः । अनियतकर्तृका तु णिजर्थः ।
पचेति हि वक्तुरेव प्रेरणा गम्यते । पाचयतीत्यत्र तु वक्तृभिन्नस्य ।

तत्करोतीत्युपसंख्यानं सूत्रयत्याद्यर्थं (का०वा०) ॥ गणपाठसिद्ध
एवायमर्थ उपसंख्यानेनापि प्रदर्शितः । इह करोतीत्यत्र प्रकृत्यर्थमात्रं
विवक्षितं न प्रत्ययार्थः, तेन ण्यन्तात् भावकर्मणोः भूतभविष्यतोः छित्वब-
हुत्वयोश्च लः सिध्यति । अयं णिच् प्रातिपदिकादेव न तु सुबन्तादिति
माधवः । युक्तश्चैतत्, सुप इत्यधिकारस्येह विच्छिन्नत्वात् । किञ्च चु-
रादिषु ह्येवं पठ्यते—"प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" (ग०सू०)
"तत्करोति तदाचष्टे" (ग०सू०) "तेनातिक्रामति" (ग०सू०) "कर्तृ
करणाद्धात्वर्थे" (ग०सू०) इति । अस्यार्थः प्रातिपदिकाद्धातोरर्थवि-
शेषरूपे वाच्ये णिच् स्यात् इष्ठनीव चास्मिन् बहुलं कार्यं स्यादिति ।
कूलमुद्रुजयति उत्कूलयति । अस्यैव प्रपञ्चः—तत्करोतीत्यादिः ।
एवञ्च प्रातिपदिकादित्युपक्रमान्नेदं सुबन्ताद्विधायकम् । तथा च प्रकृ-
तवार्त्तिकमपि तत्समानार्थकत्वात्तथैव । "तेनातिक्रामति" (का०वा०)
इत्येतत्तु कर्तृकरणादित्यस्यैव प्रपञ्चः । कर्तृग्रहणञ्च करणस्यैव विशेष-
णं करणत्वेन लोके प्रसिद्धानां चक्षुरादीनामेव ग्रहणमितिशङ्काव्युद-
सनाय । अन्यथा चक्षुषा पश्यति चक्षयतीत्यादावेव स्यान्न तु करि-
भिरवबध्नाति अवकरयतीत्यादौ । एवञ्च, तत्तेनेतिशब्दौ कर्मकरणयोरु-
पलक्षकौ । करणस्य कर्मणश्च समर्पकात्प्रातिपदिकादित्यर्थः । सुबन्ता-
दुत्पत्तौ तु हस्तिनाऽतिक्रामति अतिहस्तयतीत्यादौ णौ सुपो लोपे
टिलोपे च कृते अन्तर्वर्त्तिविभक्त्या पदत्वाज्जश्त्वं स्यात् । न च टिलो-
पस्य स्थानिवत्त्वम्, अज्झलादेशत्वात् । हरदत्तस्तु सुबन्तात्णिचम-
भिप्रैति । यदाह—तदिति द्वितीयान्तोपलक्षणमिति । न चास्मिन्पक्षे पद-

कार्यप्रसङ्गः, इष्ठवदित्यतिदिष्टया भसंज्ञया पदत्वस्य बाधात्। अत एव हि पटिष्ठ इत्यादौ सुबन्तादिष्ठनि जश्त्वादिपदकार्याप्रवृत्तिः। किञ्च स्रग्विणमाचष्टे स्रजयतीत्यादौ माधवमतेऽप्येषैव गतिः। सुबन्तादुत्पन्नयोर्विन्मतोर्लुकि तत्प्रकृतेः सुबन्तत्वात्प्रत्ययलक्षणेन पदकार्यप्रसङ्गस्य स्पष्टत्वात्। तदिह मतभेदेन प्रातिपदिकात्सुबन्ताद्वा णिजिति स्थितम्। आद्यपक्षेऽपि यथाकथञ्चित् प्रातिपदिकग्रहणे लिङ्गविशिष्टग्रहणाद् ङ्याबन्तादपि भवति। अत एव णाविष्ठवदित्यत्र भाष्ये इष्ठवदित्यतिदेशस्य "पुंवद्भावटिलोपयणादिलोपविन्मतोर्लुगर्थम्" इति पुंवद्भावोऽपि प्रयोजनतयोक्तः। इदञ्च दिङ्मात्रं न तु परिगणनमिति षष्ठ एवाकरे स्पष्टम्। उदाहरणानि तु प्रपञ्चयामः—एनीमाचष्टे एतयति। हरिणीमाचष्टे हरितयति। न चात्र पुंवद्भावस्य इष्ठनि विशिष्याविधानात्कथमतिदेश इति वाच्यम्, विशेषातिदेशे सामान्यस्याप्यतिदेशात्। वसिष्ठवदत्र वर्त्तितव्यमित्युक्ते हि ब्राह्मणत्वं सामान्यनिबन्धनमप्यतिदिश्यत एव। तथेह भसंज्ञानिमित्ततद्धितत्वप्रयुक्तः पुंवद्भावोऽपीत्यदोषः। नन्वेतयतीत्यादौ टिलोपेन ङीपि निवृत्ते तत्सन्नियोगशिष्टत्वान्नकारोऽपि निवर्त्यताम। तथा च टिलोपेनैव गतार्थत्वे किमर्थं पुंवद्भावोऽपि पृथक् प्रयोजनतया भाष्ये गणित इति चेत्?

अत्र कैयटः, "सन्नियोगशिष्ट" (प०भा०८८) परिभाषाया अनित्यत्वज्ञापनायेदम्। तेन 'एनेयः' 'श्यैनेयः' इत्यत्र "यस्य" (पा०सू०६-४-४९) इति लोपे कृतेऽपि नकारो न निवर्तते इत्याह। हरदत्तस्तु फलान्तरमपि मतान्तरत्वेनाह—इडबिडमाचष्टे ऐडबिडयति। दरदं दारदयति। इडबिडशब्दो जनपदस्य क्षत्रियजातेश्च वाचकः। तस्मात् "जनपदशब्दात् क्षत्रियादञ्" (पा०सू०४-१-१६८) दरच्छब्दात् "द्व्यञ्मगध" (पा०सू०४-१-१७०) इत्यण्। अञणोस्तद्राजसंज्ञा "ते तद्राजाः" (पा०सू०४-१-१७४) इति सूत्रेण। अञादीनामापादपरिसमाप्तेस्तद्विधानात् "अतश्च" (पा०सू०४-१-१७७) इति लुक्। अकाररूपस्य तद्राजप्रत्ययस्य स्त्रियां लुगिति हि सूत्रार्थः। ततश्च इडबिट्, दरत् स्त्री। ऐडबिडो दारदश्च पुमान्। पुंवद्वचनेन च स्त्रीशब्दस्य पुंशब्देऽतिदिष्टे सिद्धमिष्टम्। न चैवं गोत्रत्वेन जातित्वात् "जातेश्च" (पा०सू० ६-३-४१) इति पुंवद्भावनिषेधः शङ्क्यः, औपसंख्यानिकस्य नायं निषेध इति वक्ष्यमाणत्वात्। न चैवमप्यजादी गुणवचनादेवेत्युक्तेरिष्ठन एवाभ्यामसम्भवेन कथं तद्वदित्यतिदेश इति वाच्यम्, नहीष्ठनि दृष्टस्यैवा-

तिदेशः किन्तु सम्भावितस्य । अन्यथा अतिराजयतीत्यादौ टिलोपो न स्यात् ।

नन्वस्मिन्पक्षे 'एनेयः' 'श्यैनेयः' इति कथं सिद्ध्येदिति चेत् ?

अत्र माधवः--अनन्यथासिद्धमपि एडबिडयतीत्याद्युदाहृत्य एतयति श्येतयतीत्युदाहरन् भाष्यकारः "सान्नियोगशिष्ट" (प०भा०८८) परिभाषाया अनित्यत्वं ज्ञापयतीत्याह । वस्तुतस्तु पुंवद्भावस्यैकाच्सु टिलोपस्याभाषितपुंस्केषु च चारितार्थ्येऽपि एतयतीत्यादावन्तरङ्गत्वेन पुंवद्भाव एव प्राप्यः "सिद्धश्च प्रत्ययविधौ" इत्युक्तत्वेन प्रत्ययोत्पत्तेः पूर्वमेव प्रवृत्तत्वात् । अत एव नकाररहितप्रयोगसिद्धिः । न चात्र टिलोपेऽपि सन्नियोगशिष्ट न्यायेन नकारनिवृत्तिः सुलभेति वाच्यम्, उक्तन्यायेन नकारनिवृत्तौ कर्तव्यायाम् "अचः परस्मिन्" (पा० सू०१-१-५७) इति स्थानिवद्भावस्य दुर्वारत्वात् । अत एव 'पञ्चेन्द्राण्यो देवता अस्येति पञ्चेन्द्रः' इत्यादौ स्थानिवद्भावेनानुगादिश्रवणे प्राप्ते स्थानिवद्भावनिषेधार्थे "क्विलुगुपधा" इतिवार्त्तिके लुग्ग्रहणमिति भाष्यवार्त्तिकादौ स्पष्टम् । अत एवाभ्यासेकारसहितमैतदिति रूपं सिद्धम् । टिलोपे तु प्रक्रियादशायां परिनिष्ठिते रूपे वाऽवर्णपरत्वाभावेन स्थानिवद्भावानतिप्रसक्ताद्युक्तरूपासिद्धिः । नचाल्लोपस्यापि स्थानिवद्भावः, तस्य ङीनिमित्तत्वेऽपि णिजानिमित्तत्वादिति ध्येयम् ।

पृथुमाचष्टे प्रथयति । चङि वृद्धेः पूर्वं टिलोप इति पक्षे अग्लोपित्वात् "सन्वल्लघुनि" (पा०सू०७-४-९३) इत्यस्याप्रवृत्तेः-अपप्रथत् । परत्वाद् वृद्धौ आवादेशात्पूर्वं टिलोपे अनग्लोपित्वात्-अपिप्रथत् । पक्षद्वयमपीदं "मुण्डमिश्र" (पा०सू०३-१२१) इति सूत्रे प्रपञ्चितम् । एवं मृदुमाचष्टे म्रदयति । अमम्रदत्, अमिम्रदत् । भ्रशयति, क्रशयति, द्रढयति । एषां चङि सर्वथाऽप्यग्लोपित्वात्--अबभ्रशत्, अचक्रशत्, अदद्रढत् इत्येकमेव रूपम् । परिव्रढयति । अत्रोपसर्गस्य पृथक्करणात्पर्यव्रढयत, पर्यवव्रढत् ।

> पृथुं मृदुं भृशं चैव कृशं च दृढमेव च ।
> परिपूर्वं वृढश्चैव षडेतान् रविधौ स्मरेत् ॥

कविं पटुं वा आचष्टे कवयति, पटयति । अचकवत, अचीकवत् । अपपठत, अपीपठत । कुमारीमाख्यत अचुकुमारत् । अत्र एकमेव रूपम्, "सन्वल्लघुनि" (पा०सू०७-४-९३) इति "दीर्घो लघोः" (पा० सू०७-४-९४) इति च सूत्रे चङ्परे णौ परे अचा अव्यवहितं यल्लघु तस्मिन्परे योऽभ्यासः तस्येति कैयटादिसम्मते सूत्रार्थे यदत्राभ्यासात्परं

लघु न तच्चङ्परणिपरमिति दीर्घत्वस्याप्रसङ्गात्, चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरः तस्येति हरदत्तादिपक्षेऽपि कुमारीशब्दस्य पुंवद्भावेन वृद्धावप्यग्लोपित्वात्। नदीमाख्यत् अननदादित्यादि। ननु कैयटमते "येननाव्यवधानम्" इतिन्यायेन एकव्यञ्जनव्यवहिते अजीहरदित्यादौ सन्वद्भावोऽस्तु नाम, अचिक्षणदित्यादौ तु कथमिति चेत्? असस्मरदित्यादावित्वाभावार्थम् "अत्स्मृदृत्वर" (पा०सू०७-४-९५) इति अत्वविधानेन संयोगव्यवधानेऽपि भवतीति ज्ञापनात्। ऊढमाख्यत् औजढत्। ऊढिमाख्यत् औजिढत्। कर्तारमाचष्टे करयति। भर्तारं भरयति। दोग्धारन्दोहयति। "तुरिष्ठेमेयस्सु"... "तुश्छन्दसि" (पा०सू०५-३-५९) इति तृशब्दलोपोऽपि णावतिदिश्यत इत्येके। अन्ये तु छन्दस्युपदिष्टोऽसौ णावपि छन्दस्येवातिदिश्यतां नाम। भाषायान्तु कथं भवेत्? तस्माट्टिलोपे कर्त्तयतीत्याद्येव रूपमित्याहुः। त्वां मां वा आचष्टे त्वापयति, मापयति। इह "प्रत्ययोत्तरपदयोश्च" (पा०सू०७-२-९८) इति एकार्थयोर्युष्मदस्मदोर्मपर्यन्तस्य त्वमौ। "अतो गुणे" (पा०सू०६-१-९७) इति पररूपात्पूर्वं नित्यत्वाट्टिलोपे वृद्धौ पुगित्येके मतम्। वस्तुतस्तु परादप्यन्तरङ्गस्य बलीयस्त्वात्पररूपत्वे "प्रकृत्यैकाच्" (पा०सू०६-४-१६३) इति टिलोपाभावादुपधावृद्धौ त्वादयति मादयतीत्येव रूपमिति बहवः। "प्रकृत्यैकाच्" (पा०सू०६-४-१६३) इत्येतत्प्रत्याख्यानभाष्यन्तूदाहरणविशेषेऽन्यथासिद्धिरित्येतावन्मात्रपरम्। तद्यथा–वृत्तिकारोदाहृतेषु मध्ये प्रेष्ठादय आभात्सूत्रेण सिद्धाः। तस्यागेऽपि ज्येष्ठवदकारोच्चारणसामर्थ्यात्।

इष्ठेमेयःस्वनेकाचोऽप्यवशिष्टस्य नेष्यते।
टिलोपो भाष्यकारेण प्रवृत्ते विन्मतोर्लुकि॥
लुकोऽपवादभूतस्य तस्मिन्पक्षे प्रवर्तनात्।
कनिष्ठादाविदं तुल्यं तृलोपस्य प्रवर्तनात्॥

कैयटमाधवादिग्रन्थाश्चेहानुकूला इति वक्ष्यामः। "अङ्गवृत्त" (पा०भा०९४) परिभाषया वृद्धिमकृत्वा त्वदयति मदयतीत्यन्ये प्रतिपन्नाः। युवामावां वा आचष्टे युष्मयति अस्मयति। "युवावौ द्विवचने" (पा०सू०७-२-९२) इत्यत्र यद्यपि द्विवचने इत्यर्थग्रहणं तथाऽपीह युवावौ न स्तः, विभक्तिपरत्वाभावात्। प्रातिपदिकादेव हि णिजिति माधवादयः। सुबन्तादिति हरदत्तपक्षेऽपि "अन्तरङ्गानपि" (प०भा०५२) इति न्यायेन विभक्तेर्लुकापहारात्। त्वामतिक्रान्तमतिक्रान्तौ वा अतित्वाम्। अतिक्रान्तान् अतित्वान्। आचष्टे अतित्वयति, अतिमयति। युष्मद-

स्मदोरेकार्थत्वेन "प्रत्ययोत्तरपदयोश्च" (पा०सू०७-२-९८) इति त्वमौ । अन्तरङ्गत्वात्पूर्वरूपं, ततष्टिलोप इति माधवः । तच्चिन्त्यम् , उपसर्गस्य पृथक्करणेन "प्रकृत्यैकाच्" (पा०सू०६-४-१६३) इति प्रकृतिभावात् । तस्मादतित्वादयति अतिमादयतीत्येव बोध्यम् । अत्रापि पररूपात्पूर्वं नित्यत्वाट्टिलोप इति मते अतित्वापयति अतिमापयति । युवामावां युष्मानस्मान्वा अतिक्रान्तमतिक्रान्तावतिक्रान्तान्वा आचष्टे अतियुष्मयति अत्यस्मयति ।

इदानीं ण्यन्तात्क्विपि कश्चिद्विशेष उच्यते । तत्र त्वां मां वा आचष्ट इति आख्येयैक्ये त्वाप् माप् , त्वाद् माद् , त्वद् मद् इति प्रागुक्तमतभेदेन त्रिधा प्रातिपदिकानि । युवामावां युष्मानस्मान् वा आचष्ट इति आख्येयस्यानेकत्वे त्वमयोरभावाण्णौ टिलोपे, क्वौ, णिलोपे, केश्चापृक्तलोपे युष्म् अस्म् इति मान्ते प्रातिपदिके भवतः । ततः स्वादयः । तत्र प्रातिपदिकाष्टकादपि विभक्तीनां यथायथं "ङेप्रथमयोरम्" (पा०सू०७-१-२८) "शसो न" (पा०सू०७-१-२९) "भ्यसोऽभ्यम्" (पा०सू०७-१-३०) "पञ्चम्या अत्" (पा०सू०७-१-३१) "एकवचनस्य च" (पा०सू०७-१-३२) "युष्मदस्मद्भ्यां ङसोऽश्" (पा०सू०७-१-२७) "साम आकम्" (पा०सू०७-१-३३) इति सूत्रसप्तकेन विहिता आदेशा भवन्ति । एवं "युष्मदस्मदोरनादेशे" (पा०सू०७-२-८६) "द्वितीयायाञ्च" (पा०सू०७-२-८७) "प्रथमायाश्च द्विवचने भाषायाम्" (पा०सू०७-२-८८) इति त्रिसूत्र्या विहितमात्वं "योऽचि" (पा०सू०७-२-९८) इति यत्वं च भवत्येव । "शेषे लोपः" (पा०सू०७-२-९०) तु आत्वयत्वनिमित्ततद्विभक्तौ परतोऽन्त्यलोप इति व्याख्याने भवत्येव । शेषशब्दस्य मान्ताच्छेषपरत्वमाश्रित्य टिलोप इति व्याख्याने तु न भवत्येवाख्येयस्यानेकत्वे । तत्र हि शेषलोपेनापहार्यं मान्तात्परं णाविष्ठवदित्यतिदिष्टेन टिलोपेनैवापहृतम् । आख्येयैक्ये तु भवत्येव, प्राक् टिलोपाभावात् । 'टिलोपं स्वीकृत्य पुका पान्तत्वम्' इति मते तु न भवत्येव । अजादौ यत्वविधानादात्वं हलादावेव पर्यवस्यति । "त्वाहौ सौ" (पा०सू०७-२-९४) "यूयवयौ जसि" (पा०सू०७-२-९३) "तुभ्यमह्यौ ङयि" (पा०सू०७-२-९५) "तवममौ ङसि" (पा०सू०७-२-९६) इति चतुःसूत्रीविहिताः प्रकृत्यादेशास्तु आख्येयैक्ये न भवन्त्येव, मपर्यन्ताभावात् । आख्येयद्वित्वबहुत्वयोस्तु वैकल्पिकाः । तथाहि-"मपर्यन्तस्य" (पा०सू०७-२-९१) इत्यत्र मान्तस्येत्येव सिद्धे परिग्रहणसामर्थ्याद्युष्मदस्मदोर्मान्तत्वावस्थायां नादेशाः इत्येकं मतम् । परिग्रहणा-

भावे मान्तस्यैव स्यात, सति तु तस्मिन् मान्ते ततोधिके च भवति इति मतान्तरम्। उभयमिदं तस्मिन्नेव सूत्रे व्युत्पादयिष्यते। मतभेदाने ह फलितो विकल्पः। तत्र आख्येयद्वित्वे सुजस्ङेङस्सु परत्वात् त्वाहादि प्रवृत्तावपि 'औ' 'अम्' इत्यादिषु वचनान्तरेषु विभक्तिपरत्वाद्युवावौ एकस्मिन्मते स्त एव, मतान्तरे तु न त्वाहादयो नापि युवौ इति विवेकः।

अथ रूपाणि-आख्येयैकये सौ त्वां, माम्। 'वृद्धिर्न' इतिवादिनां तु शेषे लोपे त्वम्, मम्। शेषेलोपष्टिलोपः, स चाचक्षाणे न प्रवर्त्तत इति पक्षेऽप्याख्येयैकयेऽस्त्येव दान्तयोरित्युक्तम्। पान्तयोस्तु पक्षे त्वापम्, मापम्,। इत्थं सङ्कलनया त्रीणि। औङि 'त्वां, माम्' इत्येकमेव। "प्रथमायाश्च द्विवचने" (पा०सू०७-२-८८) इत्यात्वम्। जसि साविव त्रीणि, शेष लोपस्य पान्तयोः पाक्षिकत्वात्। अमूऔटोः-त्वां, माम्। शसि-त्वान्, मान्। "द्वितीयायाञ्च" (पा०सू०७-२-७७) इत्यात्वम्। आङि-त्वाया, माया। अवृद्धौ तु-त्वया, मया। त्वाभ्यां, माभ्याम्। त्वाभिः, माभिः। ङयि अम, शेषे लोपः (पा०सू०७-२-९०)। वृद्धिपक्षे "आतो धातोः" (पा०सू०६-४-१४०) इत्यालोपः त्वम्, मम्। पक्षे त्वापम्, मापम्। त्वाभ्याम्, माभ्याम्। त्वाभ्यम्, माभ्यम्। भ्यमि शेषे लोपः। अभ्यमादेशपक्षे तु शेषे लोपे आल्लोपे च त्वभ्यम मभ्यम। अवृद्धिपक्षेऽप्येवम्। पान्तपक्षे त्वापभ्यम्, मापभ्यम। तत्र भ्यमि "अङ्गवृत्त" (प०भा०९४) परिभाषया "बहुवचने झल्येत्" (पा०सू०७-३-१०३) इत्येत्वं न। त्वत्, मत्। शेषे लोपे वृद्धिपक्षे आल्लोपः। त्वापत्, मापत्। त्वाभ्याम, माभ्याम्। त्वत्, मत। त्वापत्, मापत्। त्व, म। त्वाप, माप। त्वायोः, मायोः। अवृद्धौ तु-त्वयोः, मयोः। त्वाकम, माकम्। त्वापाकम, मापाकम्। त्वायि, मायि। त्वायोः, मायोः। अवृद्धौ तु-त्वयि मयि। त्वयोः, मयोः। त्वासु, मासु। एवञ्च—

आख्येयैकयेऽत्र सुजसोश्चतुर्थ्यां भ्यसि च त्रयम्।
टौसूङिदाम्भ्यस्सु रूपे द्वे निश्चिनुष्वैकमन्यतः॥

इदं त्ववधेयम्। कृतः कर्त्तर्यसंज्ञायामितिविशेष्यनिघ्नतोकेराचक्षाणस्य क्लीबत्वे सुजसोरसर्वनामस्थानत्वेन भत्वात "आतो धातोः" (पा०सू०६-४-१४०) इत्यालोपे त्वम्, मम् इत्येव रूपम्। अवृद्धिवादिनां सम्बोधने "एङ्ह्रस्वात" (पा०सू०६-१-६९) इति हल्मात्रलोपे हे त्व, हे म। स्त्रीत्वे तु टाप् प्राप्तः "सान्निपात" (प०भा०८७) परिभाषया समाधेयः। यत्तु केवले समाधानद्वयम् "अलिङ्गत्वाद्विलोपाद्वा" इति तदिह न भवतीति दिक्।

अथाख्येयद्वित्वे रूपाणि—सौ त्वम्, अहम्; प्रकृत्यादेशाभावे युषम्, असम् ; शेषे लोपस्याप्यभावे युष्मम्, अस्मम। इत्थं त्रीणि। युवाम्, आवाम्; युषाम्, असाम्। जसि-यूयं, वयम्; युषम्, असम्; युष्मम, अस्मम्। अमौटोः–युवाम, आवाम्; युषाम्, असाम्; युवान्, आवान्; युषान्, असान्। युवया, आवया; युष्या, अस्या। युवाभ्याम्, आवाभ्यां; युषाभ्याम्, असाभ्याम। युवाभिः, आवाभिः; युषाभिः, असाभिः। तुभ्यं, मह्यम; युषम् असम्; युष्मम्, अस्मम। युवाभ्याम, आवाभ्याम्; युषाभ्याम, असाभ्याम्—युवभ्यम्, आवभ्यम्; युष्मभ्यम्, अस्मभ्यम्। भ्यमादेशपक्षे तु–युष्म्भ्यम्। अत्र संयोगान्तलोपो न, भाष्ये "झल" इत्यनुवर्त्तनात्। अननुवृत्तिपक्षे तु–युङ्भ्यम्। अस्मदस्तु "स्कोः" (पा०सू०८–२–२९) इति सलोपे अम्भ्यम्। शेषे लोपे तु–ओभ्यम। युवत्, आवत्; युषत्, असत्; युष्मत्, अस्मत्। युवाभ्याम, आवाभ्याम्। युषाभ्याम्, असाभ्याम्। भ्यसि ङसिवत त्रीणि। तव मम; युष, अस; युष्म, अस्म। युवयोः, आवयोः; युष्योः, अस्योः। युवाकम्, आवाकम्; युषाकम्, असाकम्; युष्माकम्, अस्माकम्। युवयि, आवयि; युष्यि, अस्यि। युवयोः, आवयोः; युष्योः, अस्योः। युवासु, आवासु; युषासु, असासु। एवञ्च—

चतुर्थ्या भ्यसि चत्वारि व्याख्याने द्वे तथाऽन्यतः।
सुजस्ङेङस्ङसिभ्यस्सु आमि च त्रीणि निश्चिनु॥

अथाख्येयबहुत्वे रूपाणि–त्वम्, अहम; युषम् असम्; युष्मम्, अस्मम्। युषाम, असाम्। यूयं, वयम। युषम्, असम, युष्मम्, अस्मम्; युषाम्, असाम। युषान्, असान्। युष्या, अस्या। युषाभ्याम्, असाभ्याम्। युषाभिः, असाभिः। तुभ्यं, मह्यम; युषम्, असम्; युष्मम्, अस्मम्। युषाभ्याम्, असाभ्याम्। युषभ्यम्, असभ्यं, युष्म्भ्यम्, युङ्भ्यम्, अम्भ्यम, ओभ्यम्। युषत्, असत्; युष्मत, अस्मत। युषाभ्याम, असाभ्याम। युषत्, असत्; युष्मत्, अस्मत। तव, मम; युष, अस; युष्म, अस्म। युष्योः, अस्योः। युषाकम्, असाकम; युष्माकम्, अस्माकम्। युष्यि, अस्यि। युष्योः, अस्योः। युषासु, असासु। एवञ्च—

ङसिभ्यसाम्सु द्वे रूपे चतुर्थ्या भ्यसि तु त्रयम्।
सुजस्ङेङस्सु च तथाऽऽख्येयभूम्न्येकमन्यतः॥

इह सर्वत्र प्रकृत्यादेशयत्वात्वशेषलोपेषु कर्तव्येषु णिलोपो न स्थानिवत्, क्वौ लुप्तत्वादिति दिक्॥

श्वानमाचष्टे शावयति। 'श्वन् इ' इति स्थिते णाविष्ठवदित्यतिदेशेन द्वौ टिलोपौ प्राप्तौ "टेः" (पा०सू०६-४-१४३) इत्येकः, "नस्तद्धिते" (पा०सू०६-४-१४४) इत्यपरः। तत्र "प्रकृत्यैकाच्" (पा०सू०६-४-१६३) इति प्रकृतिभावो येननाप्राप्तिन्यायेन "टेः" (पा०सू०६-४-१४३) इत्यस्यैवेति तस्मान्निवृत्तेऽपि "नस्तद्धिते" (पा०सू०६-४-१४४) इति भवत्येव। तत इष्ठवदित्यतिदिष्टया भसंज्ञयैव वकारस्य सम्प्रसारणे वृद्धावावादेशः। न च 'दविष्ठः' इत्यादौ इष्ठनि "ओर्गुणः" (पा०सू०६-४-१४६) पूर्वस्य दृष्ट इति इहाप्यतिदिश्येतेति वाच्यम्, तस्मिन्कर्तव्ये सम्प्रसारणटिलोपयोः "असिद्धवदत्र" (पा०सू०६-४-२२) इत्यसिद्धत्वात्। अन्ये तु 'ब्रह्मिष्ठः' इत्यादौ नान्तलक्षणाट्टिलोपात्परत्वात् "टेः" (पा०सू०६-४-१५५) इत्येव प्रवर्त्तते। तदेह प्रकृतिभावेन निवृत्तम्। "नस्तद्धिते" (पा०सू०६-४-१४४) इति तु इष्ठनि क्वापि न दृष्टमिति तस्येहानतिदेशात् सम्प्रसारणपूर्वत्वयोः 'शुनयति' इति रूपमाहुः। न च टिलोपयोराभीयत्वेन अन्योन्यस्यासिद्धत्वात्कथं विप्रतिषेध इति वाच्यम्, विप्रतिषेधे आभीयमसिद्धत्वं नास्तीति वक्ष्यमाणत्वात्। विद्वांसमाचष्ट इत्यत्र णौ टिलोपे विद्वयतीति दीर्घाः। अत्र संप्रसारणाभावश्चिन्त्य इत्यात्रेयः। "अङ्गवृत्त" (प०भा०९४) परिभाषया चिन्त्योद्धारो बोध्यः। संप्रसारणे वृद्धावावादेशे च 'विदावयति' इत्येके। अन्ये तु 'विदयति' इत्याहुः। तथाहि, नित्यत्वाट्टिलोपात्प्राक् संप्रसारणं ततोऽन्तरङ्गत्वात्पूर्वरूपे पश्चाट्टिलोपः। न च टिलोपस्यापि नित्यत्वम्, शब्दान्तरप्राप्त्या अनित्यत्वात्। ननु सम्प्रसारणमात्रेण न शब्दान्तरप्राप्तिः किन्तु पूर्वरूपेण, "यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम्" (प०भा०४८) इति चेत्? न, यस्य चेत्यस्य असार्वत्रिकताया हरदत्तादिभिरुक्तत्वात्। उदञ्चमाचष्टे उदीचयति। अत्र उपसर्गस्य पृथक्करणात् लुप्तनकाराद्दञ्चशब्दाण्णिच्। "प्रकृत्यैकाच्" (पा०सू०६-४-१६३) इति टिलोपाभावे इष्ठवदित्यतिदेशेन भत्वे "अचः" (पा०सू०६-४-१३८) इत्यल्लोपे प्राप्ते तदपवाद "उद ईत्" (पा०सू०६-४-१३९) इतीत्वम्। चङि तु उदैचिचत्। अत्र णिलोपस्य "द्विर्वचनेऽचि" (पा०सू०१-१-५९) इति स्थानिवत्त्वात् "अजादेर्द्वितीयस्य" (पा०सू०६-१-२) इति चिशब्दस्य द्वित्वम्। अङ्गस्याऽऽट्, वृद्धिः। ल्यपि लघुपूर्वत्वाभावेन अयादेशाभावाण्णिलोपे उदीच्य। प्रत्यञ्चमाचष्टे प्रतीचयति। अत्र "अचः" (पा०सू०६-४-१३८) इत्यल्लोपः "चौ" (पा०सू०६-३-१३८) इति पूर्वपदस्य दीर्घः। चङि चिशब्दात्पूर्वमाटि यणादेशे प्रत्याचिचत्। "इकोऽस-

वर्णे" (पा०सू०६-१-१२७) इति प्रकृतिभावपक्षे प्रति अचिचत् । ल्यपि प्रतीच्य । सम्यञ्चमाचष्टे समीचयति । चङि-समचिचत्, समि आचिचत् । समीच्य । तिरोऽञ्चतीति तिर्यङ् । "तिरसस्तिर्यलोपे"(पा०सू०६-३-९४) इति तिर्यादेशः । तमाचष्टे तिरायति । इष्ठवद्भावेन टिलोपेनाञ्चतेरपहारे वृद्ध्यायौ । न चात्र अञ्चतेर्लोपात् तिरसस्तिरिः कथमिति वाच्यम्, अलोपे इति हि "अचः" (पा०सू०६-४-१३८) इति विधीयमाने लोपे तिर्यादेशो वार्यते, तस्यैवानन्तरत्वात् । इह तिरेरिकारस्य वृद्ध्यायोः कृतयोरकृतयोर्वा लोपः प्राप्तः "अकृतव्यूह" (प०भा०९४) परिभाषया न भवति । यद्वा चिणोलुङ्न्यायेन प्रथमप्रवृत्तटिलोपस्य "असिद्धवदत्र" (पा०सू०६-४-२२) इत्यसिद्धत्वात् पुनष्टिलोपो न । अत एव तिरेः स्थानिवत्त्वेनाव्ययत्वात् "अव्ययानां भमात्रे" (का०वा०) इति प्राप्तोऽपि टिलोपो न भवति । एवं "यस्य" (पा०सू०६-४-१४८) इति लोपोऽपि न भवति, परया वृद्ध्या बाधाद्वा । चङि अग्लोपित्वेन उपधाह्रस्वो न, अतितिरायत् । सह अञ्चतीति सध्र्यङ्, "सहस्य सध्रिः" (पा०सू०६-३-९५) । सध्र्यञ्चमाचष्टे सध्रायति । अससध्रायत् । पूर्ववत्पुनष्टिलोपो न ।

स्यादेतत्, यदि तिरिसध्र्योरिकारे टिलोपस्याप्रवृत्तौ चिणोलुङ्न्यायेनासिद्धत्वं मूलम्, तर्हि कुमारीमाचष्टे 'कुमारयति' इति न सिध्येत्, तत्रापि इष्ठवद्भावेन प्रवृत्तस्य पुंवत्त्वस्य तेनैव कुमाराकारलोपे असिद्धत्वापत्तेरिति चेत ? मैवम्, "अतिदिश्यमानानां कार्याणामुत्पत्तिदेश एव देशः" इत्यभ्युपगमात् पुंवत्त्वस्य च "भस्याढे तद्धिते"(का०वा०) इति आभीयेभ्यः प्रागेवोत्पत्तेः । अत एव भाष्यकारेण 'लोहिनीमाचष्टे लोहितयति' इत्युदाहृतम् । विष्वद्र्यञ्चमाचष्टे विष्वद्रायति । देवद्र्यञ्चमाचष्टे देवद्रायति । "विष्वग्देवयोश्च"(पा०सू०६-३-९२)इति चकारात् सर्वनाम्नोऽद्र्यादेशे सर्वद्रायति । अदसोऽद्र्यादेशे अमुमुआयति, अदमुआयति, अदद्रायति । चङि अजादित्वात् द्वितीयस्य द्वित्वम् । अग्लोपित्वान्नोपधाह्रस्वः । आमुमुमुआयत्, आददमुआयत्, आददद्रायत् । आद्ये "पूर्वत्रासिद्धीयमद्विर्वचने" इति मुत्वस्यासिद्धत्वाभावः । इमाचष्टे आययति, "प्रकृत्यैकाच्" (पा०सू० ६-४-१६३) इति प्रकृतिभावाट्टिलोपाभावे वृद्धौ आयादेशः । चङि उपधाह्रस्वे द्वित्वे यस्य द्वित्वे माभवान् आयियत् । न च द्वित्वे कर्तव्ये "णौ कृतं स्थानिवत्" इति वृद्ध्यादेः स्थानिवत्त्वं शङ्क्यम्, स्थानिरूपस्य यत्र द्विर्वचनं लभ्यते तत्र हि तत्, इह तु णेरेव द्विर्वचनमिति माधवः ।

वस्तुतस्तु अचिकीर्त्तदित्यत्र अतिव्याप्तिं वारयितुम् "ओः पुयण्जि" (पा० सू०७-४-८०) इति ज्ञापकस्य सजातीयविषयतामाश्रित्य अवर्णवदुत्तरखण्ड एव स्थानिवद्भावप्रवृत्तिरिति "द्विर्वचनेऽचि" (पा० सू०-१-१-५९) इतिसूत्र एवावोचाम। स्पष्टश्चैतदेवम् "उरत्" (पा०सू० ७-४-६६) इति सूत्रे रक्षितपदमर्यादिष्वपि। उत्तरखण्डस्थावर्णवत्तापि न प्रयोगपर्यवसायिन्येवेत्याग्रहः किन्तु प्रक्रियावस्थागताऽपि। तेन 'औजिढत' 'अपीप्यत्' इत्यत्र द्विर्वचनोत्तरकालं टिलोपेन "लोपः पिबतेः" (पा०सू०७-४-४) इत्यनेन च उत्तरखण्डे अवर्णापहारेऽपि न क्षतिः। भुवमाचष्टे भावयति। चङि—अबीभवत्। णौ कृतस्य स्थानिवत्वात् भूशब्दस्यं द्वित्वम्। पुनरुत्तरखण्डे वृद्ध्यावौ, ह्रस्वः। ततः सन्वद्भावे "ओः पुयण्जि" (पा०सू०७-४-८०) इतीत्वम्। "दीर्घो लघोः" (पा०सू०७-४-९४) इति दीर्घः। नन्विह भू इत्यस्य द्वित्वे सत्युत्तरखण्डे वृद्ध्यावह्रस्वत्वानि प्रवृत्तानि, एवञ्च अभ्यासस्यानादिष्टादचः पूर्वत्वात् तस्य सन्वद्भावेन पुयण्लक्षणे इत्वे कर्त्तव्ये "णौ चङि" (पा० सू०७-४-१) इति ह्रस्वस्य "अचः परस्मिन्" (पा०सू०१-१-५७) इति स्थानिवत्त्वे अलघुपरत्वात्कथमित्वमिति चेत्? उच्यते, "ओः पुयण्जि" (पा०सू०७-४-८०) इतीत्वस्य सन्वदतिदेशस्य च आरम्भसामर्थ्यात् स्थानिवद्भावस्येहाप्रवृत्तेः। भ्रुवमाख्यत् अबुभ्रवत्। अत्र यः अवर्णपरो यण्, नासावभ्यासात्परः। यश्च परः पवर्गः, नासावर्णपर इति इत्वाभावः। अशिश्रयत्। णौ कृतस्य स्थानिवत्त्वेन श्रिशब्दस्य द्वित्वम्। हेशब्दमाख्यत अजीहयत्। गाम् अजूगवत्। रायम् अरीरयत्। नावम् अनूनवत्। स्वश्वम् स्वाशश्वत्। स्वराचष्टेस्वयति। "अव्ययानां भमात्रे" (का०वा०) इति टिलोपः। "प्रकृत्यैकाच्" (पा० सू०६-४-१६३) इति प्रकृतिभावस्तु "येननाप्राप्ति" (प०भा०५९) न्यायेन आनन्तर्याच्च "टेः" (पा०सू०६-४-१५५) इत्यस्यैव टिलोपस्य नान्यस्येत्युक्तम्। णौ कृतत्वेन टिलोपस्य स्थानिवत्वात् स्वर्शब्दस्य द्वित्वे असस्वदित्येके। अजादेशस्यैव स्थानिवत्त्वम्, अयं त्वज्झलादेश इति स्थानिवत्त्वाभावात् स्विशब्दस्य द्विर्वचने असिस्वदित्यन्ये। बहूनाचष्टे भावयति। अत्र "इष्ठस्य यिट् च" (पा०सू०६-४-१५९) इति इष्ठनिविहितत्वाद् बहोर्भूभावः। यिडागमस्तु न भवति 'णौ' इत्युपमेये सप्तमीश्रवणेन "इष्ठवत्" इति उपमानादपि सप्तम्यन्ताद्वतिः। तेन इष्ठनि परे पूर्वस्य यत्कार्यं तस्यैवातिदेशो न त्विष्ठनः कार्यस्यापीति सिद्धान्तात् 'प्रातिपदिकस्य' इति वचनस्य प्रत्ययकार्यानतिदेशा-

र्धस्याऽरुच । "टेः" (पा०सू०६-४-१५५) इति सूत्रे कैयटेन 'भावयति' इत्युदाहृत्य: यिट्सन्नियोगशिष्टत्वाद् भूभावस्य यिडभावे अस्याप्यभावात् 'बहयति' इत्येकीयमतत्वेनोपन्यस्तम् । न तु लोपपाति-कत्वात्तत्रैव प्राबल्यमिति मन्यमानेन 'बम्' 'र' इति स्वपक्षत्वेनोक्त्वा भावयतीत्येकीयमतेनोक्तम् । अत एव पुरुषकारेऽपि भावयतीति चिन्त्यमित्युक्तम ।

वस्तुतस्तु कैयटपक्ष एव प्रबलः । तथा च इष्ठवदिति कार्यातिदेशः, कार्यस्यैव प्राधान्यात् । तथा च इष्ठवद्वचनमेव प्रकृतौ इष्ठानामिह विधायकमिति तदेव भूभावं विधत्त । तथा च सन्नियोगाभावः स्पष्ट एव । चान्द्रकौमारशाकटायनेषु तु इष्ठनि युग्वेति बहोरेव युकं विधाय 'भूययति' इति स्वीकृतम् । स्थूलमाचष्टे स्थवयति । दूरं दवयति । युवानं यवयति । ह्रस्वयति । क्षेपयति । क्षोदयति । अत्राद्येषु गुणस्य "अचो ञ्णिति" (पा०सू०७-२-११५) इति वृद्धिः प्राप्ता "अङ्गवृत्त" (प०भा०९४) इति वा "प्रातिपदिकाद्धात्वर्थे बहुलम्" (ग०सू०) इति बहुलग्रहणाद्वा न भवति । युवतिशब्दादपि इष्ठनि "लिङ्गविशिष्ट" (प०भा०७३) परिभाषया "स्थूलदूर" (पा०सू०६-४-११६) इति यणादिपरलोपादेः सत्त्वाण्णावपि तदतिदेशात् यवयतीत्येव रूपम् । यद्वा पुंवद्भावे कृते यणादिपरलोपात्तदेव रूपम् ।

शीकरव्यतिकरमरीचिभिर्दूरयत्यवनते विवस्वति ।

इति कालिदासप्रयोगस्तु चिन्त्य इति सुधाकरादयः । वस्तुतस्तु दूरमयते दूरात् तं करोतीति समाधेयम् । स्रग्विणमाचष्टे स्रजयति । अत्रातिदेशाद्विनो लुक् । "प्रकृत्यैकाच्" (पा०सू०६-४-१६३) इति टिलोपो न । "अत उपधायाः" (पा०सू०७-२-११६) इति वृद्धिस्तु "अङ्गवृत्त" (प०भा०९४) इति न भवतीति भाष्ये स्थितम् । गोमन्तमाचष्टे गावयति, मतुब्लुकि "अचो ञ्णिति" (पा०सू०७-२-११५) इति वृद्धिः । चङि अग्लोपित्वात्सन्वद्भावदीर्घत्वयोरभावे-अससजत्, अजुगवत् इत्यादि । युवानमल्पं वाऽऽचष्टे कनयति, "युवाल्पयोः कनन्यतरस्याम्" (पा०सू०५-३-६४) । पक्षे यवयति । युवतिमल्पां वेति विग्रहेऽप्येवम् । अन्तिकमाचष्टे नेदयति । बाढमाचष्टे साधयति । "अन्तिकबाढयोर्नेदसाधौ" (पा०सू०५-३-६३) । प्रशस्यमाचष्टे प्रशस्ययति । इह "प्रशस्यस्य श्रः" "ज्य च" (पा०सू०५-३-६०,६१) इति श्रज्यौ न भवतः, उपसर्गस्य पृथक्करणादिति माधवः । यत्तु सुधाकरेण 'श्रापयति' इत्युदाहृतम्, यच्च शाकटायनेन 'श्रयति' 'ज्ययति' इति, तत्सर्वं भाष्यविरोधा-

दुष्टमम्। वृद्धमाचष्टे ज्यापयति। अयञ्च ज्यादेशः वर्णादेशेन सह विकल्पते। "प्रियस्थिर" (पा०सू०६-४-१५७) इति प्रादयः। प्रियमाचष्टे प्रापयति, स्थिरं स्थापयति, स्फिरं स्फापयति, उरुम् वरयति इति लुब्धातौ माधवः। ऊर्णुधातौ तु वृत्तिं स एवोदाजहार। बहुलं बंहयति। गुरुं गरयति। वृद्धं वर्षयति। तृप्रं दुःखं, तदाचष्टे त्रपयति। दीर्घं द्राघयति। वृन्दारकं वृन्दयति।

इति इष्ठवद्भावोदाहरणप्रपञ्चः।

प्रकृतमनुसरामः—सूत्रङ्करोति सूत्रयति। इह व्याकरणस्य सूत्रङ्करोतीति वाक्ये द्रव्यरूपं सूत्रं सूत्रशब्देनोच्यते। लक्ष्यलक्षणसमुदायश्च व्याकरणशब्दार्थः। तयोरंशांशिभावात् षष्ठी। वृत्तौ तु "सूत्रशब्दोऽनर्थकः करोत्यर्थपरो वा" इति पक्षद्वयेऽपि सूत्रस्य पदार्थैकदेशत्वात् न तेन व्याकरणं सम्बध्यते, किन्तु करोत्यर्थेनैव, इति 'व्याकरणं सूत्रयति' इति द्वितीयैव भवति। तत्रापि सम्बन्धसामान्यविवक्षायां 'मातुः स्मरति' इतिवत् षष्ठी भवत्येवेति दिक्।

"आख्यानात्कृतस्तदाचष्टे इति णिच् कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्" (का०वा०)॥ आख्यायत इत्याख्यानम्, बाहुलकात्कर्मणि ल्युट्। आख्यानशब्देन च तदभिधायी शब्दो गृह्यते, अर्थे कृदन्तत्वासम्भवादिति प्राञ्चः।

वस्तुतस्तु करणे ल्युट्। कंसवधमाचष्टे कंसं घातयति। इह कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् (प०भा०२८) 'कंसवध' इति कृदन्त आख्यानवाचकः। ततो द्वितीयान्तात्प्रातिपदिकाच्च णिच्। कृतोऽप्प्रत्ययस्य लुक्। तस्यैव या प्रकृतिः 'हन्' इति, तस्याः विकारपरित्यागेन स्वेनैव रूपेणावस्थानम्। यद्यपि कृतो लुकि कृते तत्सन्नियोगशिष्टस्य वधादेशस्य निवृत्तिः सिद्धैव, "हनश्च वधः" (पा०सू०३-३-७६) इति सूत्रेण हि अप्प्रत्ययवधादेशौ सन्नियोगशिष्टौ। तथापि 'सीतायोगमाचष्टे सीतया योजयति' इत्यत्र कुत्वस्यासन्नियोगशिष्टत्वेन तन्निवृत्त्यर्थं प्रकृतिप्रत्यापत्तिवचनमिति कैयटहरदत्तमाधवादयः।

वस्तुतस्तु "निमित्तापाय" (प०भा०५७) न्यायेनैव तत्सिद्धेस्तस्या नित्यत्वज्ञापनार्थमिदम्। "नहीदं वचनं, नापि न्यायः" इति वदद्भिरपि "अकृतव्यूह" (प०भा०५७) परिभाषायाः तत्स्थानापन्नायाः पुरस्कृतत्वात्तस्या एवानित्यत्वमनेन ज्ञाप्यत इति निष्कर्षः। इदञ्च "अचः परस्मिन्" (पा०सू०१-१-५७) इति सूत्र एव प्रपञ्चितमस्माभिः। एवञ्च 'कंसहन्-इ' इति स्थिते भसंज्ञा धातुसंज्ञा च कंसविशिष्टस्यैव

प्राप्ता, ततश्चाड्द्विर्वचनयोर्दोषः स्यात्, अत उक्तं "प्रकृतिवच्चकारकम्" इति । अस्यार्थः-प्रकृतिर्हेतुमण्णिचः प्रकृतिः, षष्ठ्यन्तात्प्रकृतिः, वधादेः कृदन्तस्य यत्कारकं कंसादिकं तस्य कृत्प्रकृतेर्हन्यादेः हेतुमण्णौ धातावनन्तर्भूतं द्वितीयान्तं यद्रूपं तदेव भवतीति । अत एव 'राजागमनमाचष्टे राजानमागमयति' इत्यत्र नकारश्रवणमप्युपपन्नम् । अनेन चातिदेशेन कारकस्य धातावनन्तर्भावे लब्धे तद्व्यतिरिक्ताद्वधादेरेव णिच् । एतेन 'कंसमजीघतत्' इत्यड्द्विर्वचने यथाभिमतं सिध्यतः । नन्वेवमपि "हो हन्तेः"(पा०सू०७-३-५४) इति "हनस्तोऽचिण्णलोः"(पा०सू०७-३-३२) इति च कुत्वतत्वे न प्राप्नुतः, "धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्" (प०भा०९०) इति चेत् ?

अत्र हरदत्तमाधवादयः—"प्रकृतिवच्च" इति चकारो भिन्नक्रमः, 'कारकम्' इत्यस्यानन्तरं द्रष्टव्यः । कार्यशब्दश्चाध्याहार्यः । हेतुमण्णिच्प्रकृतौ यादृशङ्कारकं तथेहापि, यादृशञ्च तत्र कार्यं अड्द्विर्वचनतत्वकुत्वादि तदपीह तथैवेत्यर्थः। इह च अड्द्विर्वचने अतिदेशद्वयेनापि सिध्यतः । असङ्कीर्णोदाहरणन्तु द्वितीयादिकं कुत्वतत्वादिकञ्चेति विवेकः । इह कंसवधसुभद्राहरणादिनिरूढोपाख्यान एव णिजिति नाग्रहः, किन्तु प्रतिपादनमात्रे । तेन राजागमनमाचष्टे राजानमागमयति । यद्यपीह कृत्प्रकृतौ 'राजा' कर्तासीत्, तथापि गमेर्हेतुमण्णौ "गतिबुद्धि"(पा०सू०१-४-५२) इति कर्मीभूतः; तद्वच्चेहापि । 'राजानम्' इत्यस्य प्रकृतिभागो यद्यपि अन्तर्वर्तिन्या षष्ठ्या प्रत्ययलक्षणेन पदम्, तथापि नकारश्रवणं भवत्येव, रूपातिदेशबलात् । 'देवदत्तपाकमाचष्टे देवदत्तेन पाचयति' इति तृतीयैव भवति । "गतिबुद्धि"(पा०सू०१-४-५२) इति नियमेन कर्मत्वापहारे कर्तृत्वस्यैव स्थितेरिति दिक् ।

इष्ट्यर्थायां च प्रवृत्तौ (का०वा०)॥ मृगाणां रमणं मृगरमणम् । कर्तृषष्ठ्या समासः । तदाचष्टे मृगान् रमयति । यदा प्रतिपाद्यकर्तृकदर्शनार्थमाख्यातं तदेव णिजिष्यते नान्यदेत्येतदर्थं वचनम् । येयमाख्यातरूपा वृत्तिः सा यदि इष्ट्यर्थः । तेन 'स्वयं मृगरमणमनुभवन् अन्यस्मै दर्शयितुमाचष्टे' इत्यस्मिन्विषये 'मृगान् रमयति' इति प्रयोगः । यदा तु अरण्ये दृष्टं मृगरमणं ग्राममेत्याऽन्यस्मा आचष्टे-'एवं तत्र मृगा रमन्ते' इति, तस्मिन्नाख्याते बोधनीये 'मृगरमणमाचष्टे' इति वाक्यमेव भवति ।

अत्र कैयटादयः—'इष्ट्यर्थायामेव' इति नियमो मृगरमणादिविषयक एव, न तु सार्वत्रिकः । तेन राजागमनादौ इष्ट्यर्थप्रवृत्त्यभावेऽपि णिज् भवत्येवेत्याहुः ।

लोपश्च कालात्यन्तसंयोगे मर्यादायाम् (का०वा०)। इह आख्याना दिति न सम्बध्यते। शेषं पूर्ववत्। सन्निहितया आख्यानक्रियया सह कालस्य साकल्येन सम्बन्धे बोधनीये णिच्, मर्यादावचनस्याङो लोपश्चे त्यर्थः। उदाहरणन्तु विवसनं विवासः अतिक्रमणं, घञ्, रात्रेर्विवास इति कर्तृषष्ठ्या समासः। ततः "आङ् मर्यादाभिविध्योः" (पा०सू०२-१-१३) इत्याङा सहाव्ययीभावः। आरात्रिविवासमाचष्टे रात्रिं विवासयति। यावद्रात्रेरतिक्रमणं तावत्कथाः कथयतीत्यर्थः। वसिक्रियायां कर्तृभूतया रात्रेर्हेतुमण्णौ तावत्कर्मत्वं वसेरकर्मकत्वात्तद्वदत्रापि णौ कर्मत्वं 'रात्रिम्' इत्यस्य लुप्तषष्ठ्यन्तत्वेन प्रकृतिभागस्य पदत्वे "इकोऽसवर्णे" (पा०सू०६-१-१२७) इति पाक्षिकः प्रकृतिभावः प्राप्तः पूर्ववद्रूपातिदेशान्निवर्त्तते। इहाख्येयं णिच्प्रकृत्या अनुपात्तमपि अर्थाद्गम्यते। तद्वाचकस्तु 'भारतकथाम्' इत्यादिः शब्दो नेह प्रयोक्तव्यः। तत्समभिव्याहारे हि सति णिजेव नोत्पद्यते, अनभिधानात्। अत्र च प्रमाणं वक्ष्यमाणं भाष्यकारीयं प्रत्याख्यानमेव। नहि फलभेदे प्रत्याख्यानं सम्भवति। प्रत्याख्यानपक्षे च 'कथाम्'इत्यादेर्यथा न प्रयोगस्तथा प्रत्याख्यानावसर एव स्फुटीभविष्यति। तथा 'प्रकृतिवच्च कारकम्' इत्यस्य पूर्वोक्ते विपरीतक्रमाध्याहारव्याख्यानेऽपि भाष्यकारीयप्रत्याख्यानं प्रमाणमिति दिक्।

चित्रीकरणे प्रापि (का०वा०)॥ आख्यानादिति विहाय शिष्टं सम्बध्यते। कृदन्तादाश्चर्यकरणे गम्यमाने प्राप्नोत्यर्थे णिच् स्यात्, कृल्लुगादि पूर्ववत्। उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं प्राप्नोति सूर्यमुद्गमयति। इह उज्जयिन्या माहिष्मती दूरदेशस्थेति तावतो देशस्य प्रागुदयादतिक्रमणमाश्चर्यकरणम्।"प्रकृतिवच्च कारकम्"इति सूर्यस्य पृथग्भावः। सङ्ग्रामयतेरेव सोपसर्गादित्युक्तेरुच्छब्दस्यापि पृथक्करणम्। सूर्यस्य हेतुमण्णौ कर्मत्वात् इहापि कर्मत्वे सूर्यमुदगमयदित्यादि।

नक्षत्रयोगे ज्ञि (का०वा०)॥ नक्षत्रयोगवाचिनः कृदन्ताज्ज्ञानात्यर्थे णिच्, शेषं प्राग्वत्। पुष्येण योगः कर्तृकर्मकः योग इत्यर्थः। पुष्यो हि चन्द्रमसं युनक्ति सम्बध्नाति। इह कर्मणोऽपि गम्यमानत्वात् "उभयप्राप्तौ" (पा०सू०२-३-६६) इति नियमात्कर्तरि षष्ठ्यभावे तृतीया "अन्तर्द्धौ येनादर्शनमिच्छति" (पा०सू०१-४-२८) इतिवत्। पुष्ययोगं जानाति पुष्येण योजयति। युजेः कर्तुः पुष्यस्य गत्यादिकर्तृत्वानन्तर्भावेण हेतुमण्णौ न कर्मता किन्तु कर्तृत्वमेवेति इहापि तथा, तेन

तृतीयैव । इदञ्च "आख्यानात्कृतः" (का०वा०) इत्यादि वार्त्तिकजातं भाष्यवार्त्तिकयोरेव प्रत्याख्यातम् , तदीयलक्ष्यजातस्य आरोपेणापि सूपपादत्वात् । तथाहि, कंसं घातयतीति तावदारोपः । ये हि कंसाद्यनुकारिणां नटानां व्याख्यानोपाध्यायाः ते कंसानुकारिणं नटं सामाजिकैः कंसबुद्ध्या गृहीतं तादृशेनैव वासुदेवेन घातयन्तीव । येऽपि चित्रं व्याचक्षते इयं मथुरा, अयं प्रासादः, अयं भगवान् वासुदेवः प्रविष्टः इत्यादिक्रमेण, तेपि तथैव । येऽपि ग्रन्थं वाचयन्तः कंसवधमाचक्षते ग्रन्थिका नाम तेऽपि तत्तत्पदार्थविषयकनिश्चयोत्पादनात्तास्ताः क्रिया निर्वर्तयन्तीव । तथाच स्पष्ट आरोपः । किञ्च 'गच्छ हन्यते कंसः' 'गच्छ घानिष्यते' किं गतेनेह तेन हतः कंसः' इत्यादिषु निरूढेषु व्यवहारेषु तवाप्येषैव गतिः । नह्यत्र णिजिधिः किञ्चिदुपकरोति, उक्तोदाहरणेषु णिच्प्रवेशाभावात् । उक्तञ्च—

शब्दोपहितरूपांश्च बुद्धेर्विषयतां गतान् ।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते ॥ इति ।

एवं 'राजानमागमयति' इत्यादावपि बोध्यम् । 'राजानमानयति' इत्यादौ हि णिजभावाच्चवाप्येषैव गतिः । 'रात्रिं विवासयति' इत्यत्रापि विचित्रकथाऽऽख्यानेन रात्रिरनेनैव गमितेति आरोपः । 'निशान्निनाय' इत्यादौ च तवाप्येषैव गतिः । 'सूर्यमुद्गमयति' इत्यत्रापि प्रयोज्यप्रयोजकभावाध्यारोपः, तदालम्बनन्तु 'माहिष्मत्यां सूर्योद्गमनं लभेय' इत्येवंरूपस्य देवदत्ताभिप्रेतार्थस्य निर्वृत्तिरेव । यो हि यस्य प्रवर्त्यः स तस्याभिप्रेतं निर्वर्त्तयति । तत्र स्वभूत्यर्थं प्रवर्तमाना अपि शिष्यादयो गुर्वभिप्रेतमपि उद्दिशन्त्येव । सूर्यस्तु न देवदत्ताभिप्रेतोद्देशेन प्रवर्तत इति वैषम्यम् । तथापि अभिप्रेतार्थसम्पत्तिमात्रेण आरोपे न काचित् क्षतिः । एवं "पुष्येण योजयति" इत्यत्रापि ज्योतिःशास्त्रपरिशीलनेन पुष्ययोगस्य सर्वान्प्रत्याविष्करणात् योजयतीवेत्यारोपः ।

इति श्रीशब्दकौस्तुभे तृतीयस्याध्यायस्य प्रथमपादे द्वितीयमाह्निकम् ॥

कण्ड्वादिभ्यो यक् (पा०सू०३-१-२७) ॥ एभ्यो धातुभ्यो यक् स्यात्स्वार्थे । कण्डूञ् (क० उ०१) कण्डूयति । कण्डूयते । न च कण्ड्वादीनि प्रातिपदिकान्येवेति वाच्यम् , गुणनिषेधार्थेन यकः कित्त्वेन तेषां धातुत्वसिद्धेः । न चैवं धातोरित्यनुवृत्तेर्वैयर्थ्यमिति वाच्यम् , प्रातिपदिकानां वारणीयत्वात् । न चैते धातव एवेति वाच्यम् , कण्ड्वादिषु केषांचिद्दीर्घपाठेन प्रातिपदिकत्वसिद्धेः । यदि हि धातव एव ते स्युस्तर्हि वाग्रहणं निवर्त्य नित्यो यगिति तावदास्थेयम् , अन्यथा शबा·

वौ 'कण्डयति' इत्याद्यनिष्टरूपप्रसङ्गात्। एवं स्थिते ह्रस्वान्तादपि यकि 'मन्तूयति' इत्यादिवत् "अकृत्सार्व" (पा०सू०७-४-२५) इति दीर्घत्वे 'कण्डूयति' इत्यादिसिद्धेः किं दीर्घपाठेन ? तस्मात् कित्त्वदीर्घाभ्यां ज्ञापकाभ्यां धातवः प्रातिपदिकानि चेति द्विविधाः कण्ड्वादय इति स्थितम्। उक्तञ्च भाष्ये—

धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि।
आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः॥ इति।

तत्र धात्वधिकारात् धातुभ्य एव प्रत्ययः। स च नित्य इति सिद्धान्तः।

स्यादेतत्, एषां प्रातिपदिकत्वमेवास्तु, त्यज्यतां दीर्घपाठः प्रत्ययस्य कित्त्वञ्च। नचैवम् "अकृत्सार्व" (पा०सू०७-४-२५) इति दीर्घः ङ्किति विधीयमान इह न स्यादिति वाच्यम्, तत्र "ङ्किति" इत्यस्य निवृत्तेः। न चैवम् 'उरुया' 'धृष्णुया' इत्यादावतिप्रसङ्गः, तस्य छान्दसत्वात्। न च यको नित्यत्वे 'कण्डूः' इति न सिद्ध्येदिति वाच्यम्, कण्डूयशब्दात्सम्पदादित्वाद्भावे क्वौ अल्लोपे "लोपो व्योः" (पा०सू०६-१-६६) इति यलोपे च तत्सिद्धेः। न च यलोपेऽल्लोपस्य स्थानिवत्त्वं शङ्क्यम्, "न पदान्त" (पा०सू०१-१-५८) इति निषेधात्। न चैवमल्लोपस्य स्थानिवत्त्वादुवङ् स्यादिति वाच्यम्, सति स्थानिवत्त्वे अकारान्तस्यैव धातुतेति पूर्वदले उवङोऽप्राप्तेः। तर्हि यण् स्यादिति चेत् ? अस्तु, तस्य ऊठ् करिष्यते। न च ऊठि कर्तव्ये अल्लोपस्य स्थानिवत्त्वेन क्विप्परत्वं नास्तीति वाच्यम्, वकारस्य आदिष्टादचः पूर्वत्वात्। ननु स्थानिद्वारकमनादिष्टादचः पूर्वत्वमस्त्येव। न च तस्याशास्त्रीयत्वान्नातिदेश इति माधवोक्तं युक्तम्, अनादिष्टादचः पूर्वत्वमाश्रित्य कर्तव्यस्य "अचः परस्मिन्"(पा०सू०१-१-५७) इत्यतिदेशस्य शास्त्रीयतया "स्थानिवत्"(पा०सू०१-१-५६) सूत्रेण अतिदेशातिदेशस्य दुर्वारत्वात्। अन्यथा "न पदान्त" (पा०सू०१-१-५८) इति सूत्रे सवर्णग्रहणस्य वैयर्थ्यापत्तेरिति चेत्?न, स्थानिद्वारकस्य अनादिष्टादचः पूर्वत्वस्य असार्वत्रिकतायाः प्रागेव निर्णीतत्वात्। अत एव ऊठि कृते पुनरुवङ् न। यद्वा, "क्वौ लुप्तं न स्थानिवत्" (का०वा०) इति निषेधादेव मास्तु। नन्वेवमपि 'कण्ड्वौ' इत्यादौ संयोगपूर्वकत्वेन "ओः सुपि" (पा०सू० ६-४-८३) इत्यस्याप्रवृत्तौ उवङ् स्यादिति चेत् ? अस्तु, क्विपः प्रत्ययलक्षणेनोठं करिष्यामः। तस्मात् प्रातिपदिकान्येवैतानि दीर्घकित्त्वे च निष्फले इति चेत् ? मैवम्, उवङो बहिरङ्गत्वेनासिद्धतया ऊठो दुर्व-

लत्वात् । किञ्चोक्तरीत्या हि 'कण्डूः' इतिवत् 'मन्तूः' इत्यादि स्यात्, 'मन्तुः' इत्यादि च न सिध्येत् । अथ "धातोः कर्मणः" (पा०सू०३-१-७) इत्यतो वाग्रहणमनुवर्तेत, तर्हि यद्यपि 'मन्तुः' इत्यादि ह्रस्वं सिद्धं, तथापि 'कण्डूः' इतिवदल्लोपयलोपाभ्यां 'मन्तूः' इत्यपि स्यात् । तथा यगनुत्पत्तिपक्षे 'मन्तुः' इत्यादिवत् 'कण्डुः' इत्यपि स्यात् । किञ्च सुखादिभ्यो यप्रत्यये तस्य अनार्धधातुकत्वादतोलोपाभावे "अकृत्सार्व" (पा०सू०७-४-२५) इति दीर्घे 'सुखायति' इत्यादि स्यात् । 'सुखयति' इत्यादि चेष्यते । अथ हलन्तमेव पठ्येत, तर्हि 'सुखं' 'दुःखम्' इत्यकारान्तं न सिध्येत् । तस्माद्यथान्यासमेव मनोरमम् ।

नन्वेवमपि प्रातिपदिकैः 'कण्डुवौ' 'मन्तुः' इत्यादि यद्यपि सिद्धं, तथापि यगन्तेभ्यः क्वौ अनिष्टं स्यादेव । तद्यथा-कण्डूयतेः कण्डुवौ, कण्डुवः । मन्तूयतेः मन्तूः । सुखादेः सुक् इत्यादि हलन्तम् । नैष दोषः, यगन्तेभ्यः क्विप एवानुत्पत्तेः । उक्तं हि भाष्ये-"नैतेभ्यः क्विप् दृश्यते" इति । कथन्तर्हि कण्डूयतेरप्रत्ययः ? 'कण्डूः' इति "नपदान्त" (पा०सू०१-१-५८) सूत्रे उक्तमिति चेत् ? क्यजन्तात्क्विपोऽप्यवेहि । तत्र च 'कण्डुवौ' इत्युवङिष्ट एव । एवं प्रातिपदिकादाचारक्विबन्तात्क्यङन्ताद्वा क्विप्यपि बोध्यम् ।

स्यादेतत्, कण्ड्वादयः प्रातिपदिकान्येव, यथान्यासं दीर्घाश्च सन्तु, ककारस्तु त्यज्यतां, वाग्रहणञ्चानुवर्त्यताम्, यगन्तात्क्विपोऽनभिधानञ्च आद्ययोस्तुल्यं, तत्किं कण्ड्वादीनां धातुत्वेनेति चेत् ? उक्तरीत्या 'सुखयति' इत्याद्यसिद्धेः । प्रातिपदिकात्प्रत्यये तस्यानार्धधातुकत्वेन 'सुखायति' इति स्यादिति हि स्पष्ट एव दोषः । यत्तु कौमुद्याम्-कृञर्थे यक् स्यात्, धातवः प्रातिपदिकानि चेति कण्ड्वादयो द्विविधाः, कण्डूं करोति कण्डूयते, नामधातुत्वाद्यथेष्टं द्वित्वे प्राप्ते कण्ड्वादेस्तृतीयस्य इत्युक्तं; तदेतत्सर्वमाकरविरुद्धमनेकदोषग्रस्तञ्च । तथाहि, कृञर्थ इतिव्याख्यानेन 'करणे' इत्यस्यानुवृत्तिर्लभ्यते । तच्च व्यर्थम्, धात्वर्थमात्रस्यानुवृत्तिं विनाऽपि लाभात् । ततोऽतिरिक्तस्य चानन्वयात् । एवञ्च 'कण्डूं करोति' इति विग्रहप्रदर्शनमप्ययुक्तम् । नामधातुत्वादिति च सुतरामशुद्धम्, धात्वधिकाराद्धातुभ्य एव यगिति सिद्धान्तात् । अथ प्रातिपदिकादेव यकमभ्युपैषि, तर्हि लडादौ 'कण्डवति' इत्यादि स्यात् । अथ प्रातिपदिकान्येव कण्ड्वादीनीत्यभिप्रैषि, तर्हि 'सुखयति' इत्यादि न सिध्येत् "द्विविधाः कण्ड्वादयः" इति स्वोक्तिविरोधश्च । आकरविरोधस्तु स्पष्ट एवेत्यास्तां तावत् ।

भाष्यास्तु अनेकदोषदुष्टमपीमं प्रक्रियाप्रघट्टकं कथञ्चित् समर्थयन्ते। तद्यथा—प्रातिपदिका कण्ड्वादयः, तेभ्यश्च वैकल्पिको यक् इति पक्षेणायं ग्रन्थः। अत एवोक्तं 'कृञर्थे' इति। विगृहीतश्च 'कण्डूं करोति' इति च। नहि धातुभ्यो यकि प्रातिपदिकेभ्यो वा नित्ये यकि अयं विग्रहः सम्भवति। एवञ्च नामधातुत्वादित्याद्यपि सम्यगेव। कथन्तर्हि द्वैविध्यमुक्तमिति चेत्? यगन्ताः सन्तो धातवः। केवलास्तु प्रातिपदिकानीत्याशयात्। यद्वा, यगन्तधात्ववयवेषु तेषु धातुशब्दो गौणः। प्रत्ययसदसद्भावाभ्याम् अवस्थाभेदाद् द्वैविध्यम्। न चैवं 'सुख्यति' इत्यादौ "अतो लोपः" (पा०सू०६-४-६४) न स्यादिति वाच्यम्, यकः कित्त्वेन आवश्यकत्वाल्लाघवाच्चार्द्धधातुकत्वस्यैव ज्ञापनात्। अत एव 'द्विविधा' इत्येवोक्तं न तु धातुभ्य एव यगिति। तदिदं भाष्यादिविरुद्धमपि लक्ष्ये विसंवादाभावादस्तु कथञ्चित्।

अथोदाहरणानि—१ कण्डूञ् गात्रविघर्षणे। अवयवे कृतं लिङ्गं समुदायं विशिनष्टि। एवमग्रेऽपि। कण्डूयति, कण्डूयते। २ मन्तु अपराधे रोष इत्येके। मन्तूयति। चन्द्रस्तु ञितं पठित्वा मन्तूयते इत्यप्याह। ३ वल्गु पूजामाधुर्ययोः। वल्गूयति। तद्वल्गुना युगपदुन्मिमिषितेन। ४ असु उपतापे। असुयति। असूयुः। "मृगय्वादयश्च" (उ०सू०३९) इत्युप्रत्यय इति माधवः। एतेन—

सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः।

इति भट्टिप्रयोगो व्याख्यातः। केचित्तु 'अस्' ५ 'असूञ्' इति पठित्वा आद्यस्य सान्तस्य 'अस्यति' द्वितीयस्य दीर्घान्तस्य 'असूयति' 'असूयते' इत्याहुः। ६ लेट् ७ लोट् धौर्त्ये, पूर्वभावे, स्वप्ने च। लेट्यति, लोट्यति। लाटिता, लोटिता। अल्लोपयलोपौ। केचित् लट्लोटौ दीप्त्यर्थावाहुरिति माधवः। पूर्वभावः पूर्वत्वम्।

अत्र केचित् पूर्वशब्दं प्रकृतिनिर्देशार्थमाश्रित्य 'पूर्व्यति' इत्युदाहरन्ति। तथा चान्तःकरणवृत्तिवर्गे भट्टमल्लेनोक्तम्—

शेते द्रायति निद्राति सहित स्वपिति पूर्व्यति।
निद्रायते संविशति निद्रायां संहित मन्दते॥ इति।

अस्यार्थो धातुचन्द्रोदये उक्तः। शेतप्रभृतीनि दशाख्यातानि निद्रायाम्। षस स्वप्ने (अ०प०६८) अदादिः। 'षसि शयने' इत्येके पेठुरिति तत्रैव क्षीरस्वामी। पूर्व्यतीति कण्ड्वादियगन्त इत्यादि। तथा देवेनाप्युक्तम्—

पूर्व्यतीति तु यत्स्वप्ने तत् कण्ड्वादिषु दर्शनात् इति।

एतच्च अमोघायां शाकटायनधातुवृत्तौ अर्थनिर्देशरहिते गणपाठे पूर्वस्य पाठाभावादयुक्तमिति पुरुषकारैरेव दूषितम् । युक्तश्चैतत्, जयादित्येनापि 'लेट्' 'लोट्' इत्येव पाठात्, हरदत्तेन च धौर्त्ये पूर्वभावे स्वप्ने चेति तद्विवरणात् । एतेन बुद्धिवर्गे—

मनसागोचरीकारे मनस्वित्वे मनस्यति ।

इति भट्टमल्लोक्तिरपि प्रत्युक्ता,न्यायसाम्यात्। जयादित्येन हि 'असु' इत्येव निर्दिष्टम् । हरदत्तेन तु अथ कण्ड्वादीनामर्थनिर्देश इत्युपक्रम्य कण्ड्वादीन् विवृण्वता'असु'इति प्रतीकमुपादाय 'मानस उपतापे' इति विवृतम् । अत एव 'असु मनस उपतापे' इति पठतामपि 'मनस' इति षष्ठ्यन्तमुपतापविशेषणम् , न तु प्रकृतिनिर्देशः वृत्तिपदमञ्जर्यादिविरोधात्। धातुचन्द्रोदयकारस्य तु 'मनस्यति इति कण्ड्वादिगन्तम्'इति भूयसा ग्रन्थसन्दर्भेण व्याचक्षाणस्यापि तत्रापरितोषोऽस्त्येव । अत एव 'मनस्यते' इति पाठमाश्रित्य मनःशब्दाद्वृत्तिविषये तद्वति वर्तमानात् क्यङ्श्चोक्त्वा 'इदं शोभतेतराम्' इत्युपसञ्जहार ।

८ लेला दीप्तौ । "ध्यायतीव लेलायतीव"इति श्रुतिः । ९ इरस् १० इरज् ११ इरञ् ईर्ष्यायाम् । इरस्यति । इरज्यति । ईर्यति, ईर्यते ।"हलि च" (पा०सू०८-२-७७) इति दीर्घः । एषां त्रयाणां यथायथमन्येऽप्यर्थाः सन्ति । तथाहि—"इरज्यन्नग्ने प्रथयस्व जन्तुभिः" इति मन्त्रे दीप्त्यर्थोऽयमिति भट्टभास्करादयः । "इरज्यन्तावसव्यस्य भूरेः" इति मन्त्रे ऐश्वर्यार्थ इति । ईर्यतिर्मार्गावस्थानेऽपि । उक्तञ्चामरेण-"चर्या त्वीर्या पथिस्थितिः"(अ०को०२-७-३८)इति ।'१२ इयस् ऐश्वर्ये'इति गणरत्नमहोदधौ । इयस्यति । १३ उषस् प्रभातीभावे । उषस्यति रात्रिः । १४ वेद धौर्त्ये स्वप्ने च । वेद्यति । १५ मेधा आशुग्रहणे । मेधायति । १६ कुषुभ क्षेपे । कुषुभ्यति । १७ मगध परिवेष्टने । नीचदास्य इत्यन्ये । मगध्यति । १८ तन्तस् १९ पम्पस् दुःखे । तन्तस्यति । पम्पस्यति । २० सुख २१ दुःख तत्क्रियायाम् । तच्छब्देन सुखदुःखार्थौ । सुखदुःखरूपायां क्रियायामित्यर्थः । सुख्यति । दुःख्यति । सुखं दुःखं चानुभवतीत्यर्थः । २२ सपर पूजायाम् । अकारान्तोऽयं महोदधौ । सपर्यति । २३ अरर आराकर्मणि । आरा प्रतोदः । अर्यति । २४ भिषज चिकित्सायाम् । भिषज्यति । २५ भिष्णज उपसेवायाम् । भिष्णज्यति । "सरस्वती त्वा मघवन्न भिष्णक्"। छान्दसो लुक् । २६ इषुध शरधारणे । इषुध्यति । २७ चरण २८ वरण गतौ । चरण्यति ।वरण्यति । २९ चुरण चौर्ये । चुरण्यति । ३० तुरण त्वरायाम् । तुरण्यति । ३१ भुरण धारणपोषणयोः ।

रणधारणयोरित्यन्ये । भुरण्यति । ३२ गद्गद वाक्स्खलने । गद्गद्यति । ३३ एला ३४ केला ३५ खेला विलासे । एलायति । केलायति । खेलायति । ३६ एला स्थाने । ३७ इलेत्यपरे । इलायति । ३८ लेखा स्खलने च । लेखायति । अकारान्तोऽयमित्यन्ये । तत्रातोलोपः, लेख्यति । ३९ लिट अल्पकुत्सनयोः । लिट्यति । ४० लाट जीवने । लाट्यति । ४१ हृणीङ् रोषणे लज्जायाञ्च । "कथं नपस्या धरणी हृणीयते" इति श्रीहर्षः । ४२ महीङ् पूजायाम् । अत्र पूजा पूज्यमानकर्तृका तेनायमकर्मकः । महीयते । पूजामधिगच्छतीत्यर्थः । "मातापितरौ चास्य स्वर्गे लोके महीयेते" इति भाष्यम् । ४३ रेखा श्लाघासादनयोः । आसादनं प्राप्तिः प्रापणं वा । रेखायति । श्लाघामनुभवत्यनुभावयति वेत्यर्थः । ४४ द्रवस् परितापपरिचरणयोः । द्रवस्यति । ४५ तिरस् अन्तर्धौ । तिरस्यति । ४६ अगद नीरोगत्वे । अगद्यति । ४७ उरस् बलार्थः । उरस्यति, बलवान् भवतीत्यर्थः । ४८ तरण गतौ । तरण्यति । ४९ पयस् प्रसृतौ । पयस्यति । ५० सम्भूयस् प्रभूतभावे । सम्भूयस्यति । ५१ अम्बर ५२ संवर संभरणे । अम्बर्यति । संवर्यति । गणरत्नमहोदधौ आकृतिगणत्वात् रैधवलादिभ्यो यकि रायति धवल्यतीत्याद्युक्तम् । कण्ड्वादीनां तृतीयस्य द्वे इति वक्ष्यते । तेन सनि 'कण्डूयियिषति' इत्यादि ।

गुपूधूपविच्छिपणिपनिभ्य आयः (पा०सू०३-१-२८)॥ एभ्य आयप्रत्ययः स्यात् स्वार्थे । गुपू रक्षणे (भ्वा०प०३९५) । गोपायति । धूप सन्तापे (भ्वा०प०३९६) । धूपायति । विच्छ गतौ ।(तु०प०१४३) विच्छायति । विच्छेस्तुदादिपाठसामर्थ्यादायप्रत्ययान्तादपि शो न तु शप् । तेन 'विच्छायन्ती' विच्छायती इति ।"आच्छी"(पा०सू-७-१-८०) इति नुमविकल्पः । अन्ये तु तुदादिपाठसामर्थ्यात्सार्वधातुकेऽप्यस्य आयप्रत्ययो वैकल्पिक इत्याहुः ।

पण व्यवहारे स्तुतौ च, पन च(भ्वा०आ०४४०,४४१) ।'पणपन' इति पठनीये 'पन च' इति पृथक्पाठसामर्थ्यात् स्तुतावेवायम्, तत्साहचर्यात्पणेरपि स्तुतावेवायप्रत्ययः । अनुबन्धस्य केवले चरितार्थत्वादायप्रत्ययान्तान्नात्मनेपदम् । पणायति । पनायति । स्तौतीत्यर्थः । व्यवहारे तु-'शतस्य पणते' इति जयादित्यादयः । अन्ये तु व्यवहारार्थादप्यायमिच्छन्ति । तथा च भट्टिः-"न चोपलेभे वणिजां पणायाम्" इति । अस्मिन्नपि पक्षे 'पणिष्यते' 'पणायिष्यति' इत्यादौ अनुबन्धः केवले चरितार्थ एव । अत एव पनेरपि आयप्रत्यये परस्मैपदमेव ।

ऋतेरीयङ् (पा०सू०३-१-२९) ॥ ऋतिः सौत्रः तस्मादीयङ् स्यात् । ऋतीयते । ईयङो ङित्त्वस्य गुणनिषेधेन चरितार्थत्वेऽपि धातोर्ङिदन्तत्वाद्यङन्तादिवात्मनेपदम् । यथा चैतत्तथा "अनुदात्तङितः" (पा०सू०१-३-१२) इति सूत्र एवावोचाम ।

ऋतेश्छङिति सिद्धे ईयङ्वचनं धातुप्रत्ययानामायन्नादयो नेति ज्ञापनार्थम् । तेन शमेः खः 'शङ्खः' इत्यादि सिध्यतीति वृत्तिकारादयः । हरदत्तस्तु "द्विवचनविभज्योपपदे तरप्छसुनौ" इति वक्तव्ये ईयसुन्वचनमधातुप्रत्ययेष्वपि आयन्नाद्यभावं ज्ञापयेदिति प्रतिबन्दिनमाह । तत्र ईयसुन्वचनं प्रक्रियालाघवार्थमेव न तु ज्ञापनार्थम्, आयन्नादीनां निर्विषयतापत्तेः । न च विनिगमनाविरहः, "ण्यक्षत्रिय" (पा०सू०२-४-५८) इत्यादिसौत्रनिर्देशानामेव विनिगमकत्वादिति समाधानं बोध्यम् । ऋतिः सौत्रो घृणायां वर्त्तत इति वृत्तिः । यद्यपि घृणाशब्दो नानार्थः "घृणा जुगुप्साकृपयोः" इतिवचनात्, तथापीह जुगुप्सार्थ एव, ऋतीयाशब्दस्य बीभत्सापर्यायतया निघण्टुषु पाठादिति हरदत्तादयः । भट्टमल्लस्तु आख्यातचन्द्रिकायां तृतीयकाण्डे नानार्थवर्गे "ऋतीयते धिग्घृणयोः" इति पठन् नानार्थतामियेष ।

"अर्तनं च ऋतीया च हृणीया च घृणार्थकाः" (अ०को३-२-३२)

इति वदन्नमरोऽप्यत्रानुकूलः । यदि हि जुगुप्सामात्रार्थत्वमिच्छेत्तर्हि "हृणीया च जुगुप्सने" इत्येव स्पष्टं पठेत् । नानार्थे घृणाशब्दं प्रयुञ्जानस्तु ऋतेरपि तथात्वमभिप्रैतीति पदचन्द्रिकाव्याख्याने धातुचन्द्रोदये कृष्णप्रबोधः । आर्धधातुकविवक्षायान्तु ईयङभावपक्षे शेषत्वात्परस्मैपदमेव । आनर्त । अर्तितासि । अर्तिष्यति । आर्तीत् । आर्तिष्यत् । अत्रात्मनेपदं समुदाहरन् प्रसादकारस्तु भ्रान्त एव ।

कमेर्णिङ् (पा०सू०३-१-३०) ॥ स्वार्थे । कामयते । नन्विह "अत उपधायाः" (पा०सू०७-२-११६) इति वृद्धेः "क्ङिति च" (पा०सू०१-१-५) इति निषेधः प्राप्नोति । न च णित्त्वसामर्थ्याद्वृद्धिः, "णेरनिटि" (पा०सू०६-४-५१) इति विशेषणेन चरितार्थत्वात् । न च ङकारोऽप्यात्मनेपदेन चरितार्थ इति वाच्यम्, तावता प्रतिषेधस्य बलीयस्त्वानपायात् । न च कमेर्मित्संज्ञाप्रतिषेधार्थं "न कम्यमिचमाम्' (ग० सू० ) इतिवचनं वृद्ध्यभावे व्यर्थं सत् वृद्धिमिह ज्ञापयतीति वाच्यम्, णिङन्ताच्चिचणमुलोः कृतयोः 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (पा०सू०६-४-९३) इति

वैकल्पिके दीर्घे प्राप्ते तन्निवृत्त्या मित्त्वप्रतिषेधस्य सार्थक्यात्। न च तत्र दीर्घग्रहणं परित्यज्य प्रकृतो ह्रस्व एव विकल्प्यताम्, तथाच कमेर्मित्संज्ञाप्रतिषेधोऽपि मास्त्विति वाच्यम्, णिजन्ताद्यङन्ताद्वा णिचि सति ततश्चिण्णमुलोः—अशमि, अशामि; शमं शमम्, शामम् शामम्; अशंशमि, अशंशामि; शंशमं शंशमम, शंशामं शंशामम इति रूपद्वयस्य दीर्घग्रहणं विना अनिर्वाहात्। दीर्घविधिम्प्रति हि णियङोर्लोपस्य न स्थानिवत्त्वं, "न पदान्त" (पा०सू०१-१-५८) इति निषेधात्। ह्रस्वविधिम्प्रति तु स्थानिवत्त्वे सति चिण्णमुल्परस्य णिचः णियङ्भ्यां व्यवधाने ह्रस्वविकल्पो न प्रवर्त्तेत। यथाश्रुतसूत्ररीत्या चेदम्। पूर्वत्रासिद्धीयेनेत्युक्त्या सवर्णानुस्वारादिग्रहणं न कर्तव्यमिति पक्षे तु णिजन्ताण्णिचि ण्याकृतेरैक्यात् सिद्धम्। 'शंशामं शंशामम्' इति तु यङ्लुगन्ताण्णमुलिति "न पदान्त" (पा०सू०१-१-५८) सूत्र एवावोचाम। अस्मिन्निष्कृष्टपक्षेऽपि "चिण्णमुलोः"(पा०सू०६-४-९३) इति सूत्रे दीर्घग्रहणं कर्तव्यमेव। तथाहि,'हेडृ अनादरे' घटादिः। (१)एत्र इक्, हिडयति। अत्र चिण्णमुलोः कृतयोः ह्रस्वे विकल्प्यमाने 'अहिडि, अहेडि' इति स्यात्। दीर्घे तु'अहिडि, अहीडि'इति भवति। एवञ्च कमेरपि चिण्णमुलोः दीर्घविकल्पे प्राप्ते तन्निवृत्त्या कृतार्थो मित्त्वनिषेधो वृद्धिं ज्ञापयितुं नालम्। किञ्च—"आयादय आर्द्धधातुके वा"(पा०सू०३-१-३१) इति णिङभावे णिचि कृते वृद्धौ सत्यां"मितां ह्रस्वः"(पा०सू०६-४-९२) इति ह्रस्वे वारयितुं मित्संज्ञाप्रतिषेधः सर्वथाऽपि नायं वृद्धेर्ज्ञापकः। तस्मात् "क्ङिति च" (पा०सू०१-१-५) इति निषेधं वारयितुं कश्चिदुपायो वक्तव्य इति चेत्? सत्यम्, उक्त एवासौ तद्धितकाण्डयोरिकप्रकरणादिति।

आयादय आर्धधातुके वा (पा०सू०३-१-३१)॥ आर्द्धधातुकविवक्षायामायादयो वा स्युः। जुगोप, गोपायाञ्चकार। आनर्त, ऋतीयाञ्चक्रे। कामयाञ्चक्रे, चकमे। इह'आर्द्धधातुक'इति यदि परसप्तमी स्यात् तदा प्रवृत्ता आयादय आर्द्धधातुके परे पक्षे निवर्तेरन्त इत्यर्थः स्यात्। तत्र बहवो दोषाः। तथाहि—आयप्रत्ययान्तात् स्त्रीभावविवक्षायाम् "अ प्रत्ययात्" (पा०सू०३-३-१०२) इत्यकारप्रत्यये कृते आयनिवृत्तिपक्षे 'गोपा'इत्यनिष्टं स्यात् 'गुप्तिः'इति चेष्टं न सिध्येत्। तथा ऋतीयशब्दाल्लिटि प्रत्ययान्तत्वेनाम्भि ईयप्रत्ययस्य निवृत्तौ 'ऋताञ्चकार' इति स्यात्, 'आनर्त' इति च न स्यात्।

(१) 'मितां ह्रस्वः' इत्यनेन।

तथा अर्तितासि, अर्तिष्यति, ऋत्यात्, आर्तीत् इत्यादौ परस्मैपदं न स्यात् । तथा तास्यादेरार्द्धधातुकस्य इयङ्निवृत्तिं प्रति निमित्तत्वेन "न धातुलोप" (पा०सू०१-१-४) इति निषेधात् तन्निमित्तो गुणो न स्यात् ।

अथोच्येत–'नानेन निवृत्तिर्विकल्प्यते किन्तु प्रवृत्तिरेव'इति । तत्रापि आयादिविधिभिः सहास्यैकवाक्यता भिन्नवाक्यता वा ? आद्ये गुपादिभ्य आर्द्धधातुके परे आयो वेत्यर्थः स्यात् । एवमुत्तरत्रापि । ततश्च आर्द्धधातुक एव विकल्पेनायादयः, सार्वधातुके तु नैव स्युः ।

अथोच्येत–गुपादिसूत्र एव आर्धधातुके वेति वक्तव्ये आयादय इति न कर्तव्यमिति लाघवे स्पष्टे सति गौरवं सोढ्वा "आयादय आर्धधातुके वा" इति पृथक्सूत्रकरणसामर्थ्याद् व्यापारभेदेनैकवाक्यता । ततश्चायमर्थः–गुपादिभ्य आयादयो नित्यं भवन्तीत्युत्सर्गः, आर्द्धधातुके परे तु वा भवन्तीति । एवञ्च विकरणवत् प्रत्यये परे आयादयः प्रवर्तेरन् । ततश्च गुपेः क्तिनि आयपक्षे अल्लोपयलोपयोः 'गोपातिः' इत्यनिष्टं स्यात 'गोपाया' इति चेष्टं न सिध्येत् । तस्माद् दुष्ट एवात्र परसप्तमीपक्षः ।

सनाद्यन्ता धातवः (पा०सू०३-१-३२) ॥ सनादयो णिङन्ताः प्रत्यया अन्ताश्चरमावयवा येषान्ते संघाता धातुसंज्ञाः स्युः । जुगुप्सते । कामयते । "सुप्तिङन्तम्" (पा०सू०१-४-१४) इत्यत्र अन्तग्रहणेन "संज्ञाविधौ प्रत्ययग्रहणे प्रत्ययग्रहणपरिभाषा न प्रवर्त्तते" (प०भा० २७) इति तत्प्रतिप्रसवार्थमिहान्तग्रहणं न स्वयमपूर्वविधिः, गौरवात् 'देवदत्तश्चिकीर्षति'इत्यादौ देवदत्तादेः समुदायस्य संज्ञाप्रसङ्गाच्च । प्रतिप्रसवे तु लाघवमुक्तदोषाभावश्चेति स्पष्टमेव । "भूवादयः" (पा० सू०१-३-१) इत्यस्यानन्तरमेव "सनाद्यन्ताश्च" इति न सूत्रितं, सनादीनामियत्तानवगमात् । णिङो ङकारेण प्रत्याहारमाश्रित्य "सङन्ताश्च" इति कुतो न सूत्रितमिति चेत् ? चङादिष्वपि ङकारसत्त्वेन सन्देहापत्तेः । इहैव "सनाद्यन्ताः" इत्यस्यानन्तरं "भूवादयश्च" इति सूत्रयितुमुचितं, तथा न कृतमित्येव ।

एतत्सूत्रं भाष्ये प्रत्याख्यातम् । तथाहि—जहत्स्वार्थायां वृत्तौ चिकीर्ष जिहीर्ष इत्यादिसङ्घाता एवार्थवन्तः तदवयवा अनर्थकाः, "सर्वे सर्वपदादेशाः" इत्यत्र च अर्थवत्येव स्थान्यादेशभावविश्रान्तेः । "एरुः" (पा०सू०३-४-८६) इत्यादौ तेस्तुरिति पर्यवस्यतीत्युक्तम । एवञ्चेहापि करणविशिष्टव्यर्थस्येषेः प्रसङ्गे चिकीर्षशब्दः, तथा हरणविशिष्टेच्छार्थवृत्तेः प्रसङ्गे जिहीर्षशब्दः, गुपेः प्रसङ्गे गोपायशब्दः, पुत्रविशिष्टेच्छावृत्तेरिषेः प्रसङ्गे पुत्रीयशब्द इत्यादिपर्यवसाने स्थानिवद्भावेन

सिद्धं धातुत्वम्, जग्ध्यादिवत् 'पचतु' इत्यत्र तोस्तिङ्त्ववच्च ।

स्यादेतत्, स्थानिवत्सूत्रे आदेशशब्देन चिकीर्षादयो ग्रहीतुं न शक्यन्ते, आदेशशब्दस्य षष्ठीनिर्दिष्टस्थानिनिवर्त्तकेष्वेव रूढत्वादिति चेत् ? न, स्थानिवदित्युक्त्यैव आदेशस्य लाभे पुनस्तद्ग्रहणसामर्थ्येन अनुमीयमानस्य तेस्तुरित्यादेरिव 'आदिश्यते' इति यौगिकार्थपुरस्कारेण चिकीर्षादेरपि सुग्रहत्वात् । न च पुत्रीयादिरादेशः सुबन्तस्यैव न त्विषेरिति वाच्यम्, "अणुरपि विशेषः" इति न्यायेन प्रधानसमर्पकस्य इषेरेव तदभ्युपगमात् । "वा क्यषः"(पा०सू०१-३-९०) इत्यादिलिङ्गैरपि धातुत्वस्यावश्यकत्वे स्थिते तन्निर्वाहाय इच्छायामाचारे भुवीत्यादिक्रियासमर्पकाणामेव स्थानित्वनिर्णयाच्चेति दिक् ।

स्यतासी ललुटोः(पा०सू०३-१-३३) ॥ ल इति लृङ्लृटोः सामान्यग्रहणम् । धातोः ल इत्यस्मिन् लुटि च परे यथासङ्ख्यं स्यतासी प्रत्ययौ स्तः । अकरिष्यत्, करिष्यति । श्वः कर्त्ता । तासेरिकार इत्संज्ञक इति जयादित्यः । तथाहि, 'मन्ता हन्ता' इत्यत्र 'मन् तास् आ' 'हन् तास् आ' इति स्थिते टिलोपे कृते डाप्रत्ययस्प्रति तान्तमङ्गं तस्य उपधानकारः, तस्य "अनिदिताम्" (पा०सू०६-४-२४) इति लोपः प्राप्तः, तं वारयितुं तासेरिदित्वमेषितव्यम् । न चाभीयत्वेन टिलोपस्यासिद्धत्वात् नकार उपधा नेति वाच्यम्, "आभात्" (पा०सू०प०६-४-२२) सूत्रस्य भाष्ये प्रत्याख्यानात् । सूत्रमतेऽपि आभीयस्य असिद्धत्वस्य अनित्यत्वाच्च । तत्र च "श्नसोरल्लोपः" (पा०सू०६-४-१११) इति तपरकरणं लिङ्गम् । तद्धि 'आस्ताम्' 'आसन्'इत्यादौ मा भूदित्येवमर्थम् । तत्राटोऽसिद्धत्वादेव लोपाप्रसक्तौ तपरत्वं व्यर्थं सद् असिद्धत्वस्यानित्यतां ज्ञापयति। तेन 'देभतुः' 'देभुः' इत्यत्र श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वान्नलोपे तस्यासिद्धत्वाभावाद् एत्वाभ्यासलोपौ स्तः । एवञ्चेहापि टिलोपस्यासिद्धताविरहे प्राप्तो नलोप इदित्त्वेन वार्यते । न चैवं नुम्विधौ धातुग्रहणस्य तासिव्यावृत्त्या कृतार्थत्वेन धातूपदेशावस्थायामेव नुम् भवतीत्ययमर्थो न साधितः स्यादिति वाच्यम्, "नुम्विधावुपदेशिवद्वचनं प्रत्ययसिद्ध्यर्थम्" इति वचनस्यैव शरणीकरणात्, "धिन्विकृण्व्योः" (पा०सू०३-१-८०) इति सनुम्कनिर्देशाज् ज्ञापकाद्वा । वामनस्तु 'तासेरिकार उच्चारणार्थ' इत्याशयेन "इदितो नुम् धातोः" । ( पा०सू० ७-१-५८ ) इति धातुग्रहणं धातूपदेशावस्थायामेव नुम् यथा स्यादित्येवमर्थं मन्यते । तन्मते 'मन्ता' 'हन्ता' इत्यत्र टिलोपस्यासिद्धत्वान्नलोपो नेति बोध्यम् ।

इदमिदानीं विचार्यते—लकारं निमित्तत्वेनाश्रित्य विधीयमानाः स्यादयो विकरणाः किं लावस्थायामेव स्युः, उत लादेशेषु कृतेष्विति । आद्ये पक्षे लावस्थायां तासौ कृते तस्य प्रत्ययाद्युदात्तत्वे कृते लादेशाः स्युः, ततश्च तेषां स्वरः सतिशिष्टः । ततश्च तासेः परस्य लसार्वधातुकस्यानुदात्तवचनमप्राप्तविधिरेव स्यात् । एवञ्च 'सतिशिष्टोऽपि विकरणस्वरो लसार्वधातुकस्वरं न बाधते' इत्यस्यार्थस्य ज्ञापकमेतदिति बाष्टः सिद्धान्तो भज्येत । ततश्च—"या दम्पती समनसा सुनुते" इत्यत्र सतिशिष्टस्य विकरणस्वरस्य बलीयस्त्वापत्तौ मध्योदात्तं तिङन्तं स्यात् । इष्यते त्वन्तोदात्तम् । एवं "प्रीणीताश्वान्" "हिन्वन्ति सूरम्" इत्यादिष्वपि स्पष्टो दोषः ।

द्वितीये तु पक्षे तासिस्वरः सतिशिष्ट इति शेषनिघातेनैव लसार्वधातुकानुदात्तत्वे सिद्धे तासिग्रहणं ज्ञापकमिति सिध्यति । किन्तु गमिष्यति' 'पठिष्यति' इत्यादि न सिध्यति । तथा हि, "सार्वधातुके यक्"(पा०सू०३-१-६७) उत्सर्गः, तस्यापवादाः शबादयः स्यादयश्च । तत्र शबादीनामवकाशः—'गच्छति' 'पठति' । स्यादीनान्तु 'गंस्यते' 'पठिष्यते' इति । 'गमिष्यति' 'पठिष्यति' इत्यत्रोभयप्रसङ्गे परत्वाच्छप् प्राप्नोति ।

अथोच्येत—यकः शबादीनाञ्च नोत्सर्गापवादभावः, विविक्तविषयत्वात् । यग्विधौ हि भावकर्मग्रहणमनुवर्त्तते । तच्चावश्यमनुवर्त्यम्, 'पचति' 'पठति' इत्यादौ शपि परे यङ् मा भूदिति । एवमपि 'गमिष्यति' 'पठिष्यति' इत्यादि सिध्यतु नाम, यक्शपोरुत्सर्गयोः स्यादिभिरपवादैर्बाधसम्भवात् । किन्तु 'देविष्यति' 'सेविष्यति' इत्यादि न सिध्येदेव । तथाहि, विकरणानां यक्शपावुत्सर्गौ, तदपवादाः श्यनादयः स्यादयश्च । श्यनादीनामवकाशः—'दीव्यति' 'सीव्यति' । स्यादीनान्तु 'पक्ष्यते' । 'देविष्यति' 'सेविष्यति' इत्यत्रोभयप्रसक्के परत्वात् श्यनादयः स्युरिति ।

अत्र बहुधा समाहितं भाष्ये । तथाहि, शबादेशाः श्यनादयः करिष्यन्ते, "दिवादिभ्यः" (पा०सू०३-१-६९) इति पञ्चम्या अनुवृत्तायाः कर्त्तरि शबिति प्रथमायाः षष्ठीप्रकल्पनात् । एवञ्च दिवादिभ्यः स्यादिविषये शबेव नास्ति, स्यादिभिरपवादैर्बाधात् । तदादेशाः श्यनादयस्तु दूरापास्ता एव । अथवा "दिवादिभ्यः श्यन्" (पा०सू०३-१-६९) इत्यादिषु स्यादयोऽनुवर्तिष्यन्ते । दिवादिभ्यः श्यन् भवति लृलुटोस्तु स्यतासी भवतः । दिवादिभ्य इत्येव । एवमग्रेऽपि । एतेन

लावस्थायामेव प्राप्नुवन्तः स्यादयः सार्वधातुकोत्पत्तिं किमर्थं प्रतीक्षन्ताम्, ततश्च कथं तासेर्लसार्वधातुकानुदात्तवचनस्य उक्तार्थज्ञापकत्वं सङ्गच्छतामिति दूषणं प्रत्युक्तम्, "सार्वधातुके यक्" (पा०सू०३-१-६७) इत्यादौ अनुवृत्तिबलादेव सार्वधातुकोत्पत्तेः प्रतीक्षणीयत्वात्। अथवा श्यनादयः शबादेशा मा भूवन् मा वानुवर्तन्तामुत्तरत्र स्यादयः। किन्तु 'देविष्यति' इत्यादौ स्यादीन् बाधित्वा परत्वाच्छ्यनादयः। न चानित्यास्ते, आतृतीयाध्यायसमाप्तेर्धात्वधिकारात् स्यादिभिर्व्यवधाने धातोः परस्य लस्याभावेन आदेशाप्राप्तेरिति वाच्यम्, धातोर्विहितस्य लस्येति विहितविशेषणाश्रयणेन लादेशानां नित्यत्वात्। एवञ्च कृतेषु लादेशेषु उभये प्रसक्ताः,स्यादयः श्यनादयश्च। तत्रान्तरङ्गत्वात्स्यादय एव भविष्यन्ति न तु श्यनादयः, सार्वधातुकत्वं कर्त्तरीत्यर्थविशेषञ्च अपेक्षमाणानान्तेषां बहिरङ्गत्वात्।

सिब्बहुलं लेटि (पा०सू०३-१-३४)॥ धातोः सिप्प्रत्ययो बहुलं स्यात् लेटि परे। जोषिषत्। जुषी प्रीतिसेवनयोः (तु०आ०८)। अनुदात्तेत्। व्यत्ययेन परस्मैपदम्। सिप इट्। "लेटोऽडाटौ" (पा०सू०३-४-९४) इति तिपोऽट्। "इतश्च लोपः" (पा०सू०३-४-९७) इतीकारलोपः। बहुलग्रहणान्नेह-पताति दिद्युत्।

सिब्बहुलञ्छन्दसि णिद्वक्तव्यः (का०वा०)॥ "प्रण आयूंषि तारिषत्" "अयामिवां सविता साविषत्" णित्वाद्वृद्धिः। "देवस्य हेडोऽवयासिसीष्ठाः" इह यातेरवपूर्वाल्लिङ्। बहुलवचनात् सिप् थास् सीयुट् सुट् इट्। "एकाच उपदेशेऽनुदात्तात्" (पा०सू०७-२-१०) इति निषेधस्तु न भवति, सिपा व्यवधानात्। सीयुटः सस्य षत्वाभावश्छान्दसः। "तिङ्ङतिङः" (पा०सू०८-१-२८) इति निघातः। यच्छब्दयोगे तु 'यासिसीष्ठाः' इति पदमाद्युदात्तमेवेष्यते। यद्यपि प्रत्ययस्वरेण थास उदात्तत्वादन्तोदात्तं पदम्प्राप्तं, तथापि सूत्रभङ्गेन सिपन्त्यक्त्वा सब्वयं कर्तव्य इति भाष्योक्तेः सपि कृते अदुपदेशात् परत्वेन "छन्दस्युभयथा" (पा०सू०३-४-११७) इति सार्वधातुकत्वेन च लसार्वधातुकानुदात्तत्वादिष्टसिद्धिः। सपः पित्त्वाभावे उदात्तनिवृत्तिस्वरेण इट उदात्तत्वं स्यात्। तस्मादिह सपः पित्त्वादन्तत्वे स्वरार्थे इति स्थितम्। यथाश्रुतसूत्ररीत्या तु पित्वं व्यर्थमेव। तथाच वार्तिकं—"पित्करणानर्थक्यं चानच्कत्वात्। इटोऽनुदात्तार्थमिति चेत्? आगमानुदात्तत्वात्सिद्धम्" इति।

"कास्प्रत्ययादाममन्त्रे लिटि" (पा०सू०३-१-३५) कास्धातोः

प्रत्ययान्तेभ्यश्च आम् स्याल्लिटि न तु मन्त्रे । कासृ शब्दकुत्सायाम् ( भ्वा०आ०६२४ ) । कासाञ्चक्रे । लोलूयाञ्चक्रे । अमन्त्रे किम् ? कृष्णो नोनाव । अच्छन्दसीति तु नोक्तम्, ब्राह्मणे इष्टत्वात् । "पुत्रमामन्त्रयामास" । "अथ ह शुनः शेप ईक्षाञ्चक्रे" (ऐ०ब्रा७-३) इत्यादि ।

कास्यनेकाच इति वक्तव्यं चुलुम्पाद्यर्थम् ( का० वा० ) । चुलुम्पाञ्चकार । चुलुम्पतिर्धात्विककारवचनबलात्साधुः । इहान्याप्तव्याप्तिपरिहाराय प्रत्ययग्रहणमपनीय तत्स्थाने अनेकाज्ग्रहणं कर्तव्यमिति प्रागेव व्याख्यातम् । चकासाञ्चकार । दरिद्राञ्चकार । "आत औ णलः" ( पा० सू० ७-१-३४ ) इत्यत्र ओकारे विधातव्ये औकारविधानं "दरिद्रातेरार्धधातुके लोपः" (का०वा०) इत्याकारस्य लोपेऽपि औकारस्य श्रवणार्थम् । तेन 'ददरिद्रौ' इत्यपि भवतीत्याहुः ।

ऊर्णोतेस्तु न भवति, नुवद्भावातिदेशात् । न चैवमपि "इजादेः" ( पा० सू० ३-१-३६ ) इत्युत्तरसूत्रेणानेकाच्त्वनिरपेक्ष आम स्यादेवेति वाच्यम्, "आमश्च प्रतिषेधार्थम्" इति नुवद्भावफलेषु पाठसामर्थ्यात्तस्या अप्रवृत्तेः भाष्यकारेण संहितया सूत्रपाठमाश्रित्य 'अनृच्छोदयायासः' इत्यत्र अनृच्छ उ इत्युकारप्रश्लेषेण उकारान्तस्यामनिषेधाच्च । नन्वेवमुशब्दादाचारक्विपि "इजादेः" इत्याम पूर्वोदाहृतो माधवादिसम्मतश्चानेन भाष्येण विरुध्येतेति चेत् ? न, प्रथमपक्षेण तत्सम्भवात् । द्वितीयपक्षे तु मा भूदाम्, यथालक्षणमप्रयुक्त इत्यभ्युपगमात् ।

यद्वा—उश्चासौ उश्चेति प्रश्लिष्टानिर्देशेन उदन्तस्यैव गुरुमतः पर्युदासः । स च "इजादेः" ति सूत्रस्यैव शेषः । तेन वल्गुफल्गुप्रभृतिभ्यः क्विबन्तेभ्योऽनेकाच्त्वप्रयुक्त आम् भवत्येवेति सर्वं सुस्थम् । अत्र काशिका—

आमोऽमित्त्वमदन्तत्वादगुणत्वं विदेस्तथा ।
आस्कासोराम्विधानाच्च पररूपं कतन्तवत् ॥

अस्यार्थः—मित्त्वाभावोऽमित्त्वम् । आमो मकारस्य "हलन्त्यम" (पा०सू०१-३-३) इतीत्संज्ञा न भवति कुतः ? अत् अन्ते समीपे यस्य तथात्वात् । सूत्रे विधानवेलायां समीपे अकारवत्त्वादिति यावत् ।

प्रसङ्गादाह—विदेरामि गुणाभावोऽपि तथा । अदन्तत्वादेवेत्यर्थः । "उषविदजागृभ्यः" (पा०सू०३-१-३८) इति सूत्रे हि आम्प्रत्ययसन्नियोगेन विदेरदन्तत्वं निपात्यते । तत्रालोपस्य स्थानिवत्त्वात् गुणो न भवति । यदि तु 'विद ज्ञाने' इति धातुपाठ एव अकारो विवक्ष्यते तदा 'वेत्ति' इत्यादि न सिध्येत्, अकारश्रवणप्रसङ्गात् । इदानीमाम्प्रत्ययस्य

मान्तत्वमङ्गीकृत्यापि मित्त्वाभावे ज्ञापकमाह—आस्कासोराम्विधाना-देति। आमः अमित्त्वमित्यनुषङ्गः। "दयायासश्च" (पा०सू०३-१-३७) "कास्प्रत्ययात्" (पा०सू०३-१-३५) इति सूत्रस्थयामास्कासोराम्विधानादमित्त्वमामोऽनुमीयते। सति हि मित्त्वे आस्कासोराम् भवन् अचामन्त्यादाकारात्परः स्यात्। तथा च सवर्णदीर्घत्वे सति अकिञ्चित्करः स्यादिति भावः। नन्वदन्तत्वपक्षे आमामन्त्र इति निर्देशः स्यादत आह—पररूपमिति। यथा "सर्वत्र लोहितादिकतन्तेभ्यः" (पा०सू०४-१-१८) इति सूत्रे पररूपं निपातनात्, शकन्ध्वादित्वाद्वा, एवमिहापीति भावः।

इजादेश्च गुरुमतोऽनृच्छः (पा०सू०३-१-३६)॥ इजादिर्यो धातुर्गुरुमान् ऋच्छतिभिन्नस्तस्मादाम् स्याल्लिटि नतु मन्त्रे। ईहाञ्चक्रे। ऊहाञ्चक्रे। इजादेरिति किम्? ततक्ष। गुरुमतः किम्? इयेषिथ। नन्विह गुणे कृते गुरुमत्त्वाऽप्यस्त्येवेति चेत्? सत्यम्। गुरुमद्ग्रहणे सति "सन्निपात"(प०भा०८७) परिभाषया इहाम्न, लिडाश्रयगुणनिमित्तकत्वाद् गुरुमत्तायाः। यद्वा, 'लिटि' इति विहितविशेषणम्। इजादेर्गुरुमतो विहितो यो लिट् तस्मिन्निति। तेन लिण्निमित्ता या गुरुमत्ता तस्मान्न भविष्यति। अनृच्छः किम्? आनर्च्छ, आनर्च्छतुः, आनर्च्छुः। 'अनृच्छ' इति शक्यमकर्तुम्, "ऋच्छत्यृताम्" (पा०सू०७-४-११) इति लिटि परे गुणविधानाल्लिङ्गादेव आमोऽप्रवृत्तेः। न च तत्र 'ऋच्छति'इत्यनेन अर्तेरेव श्तिपा निर्देश इति वाच्यम्, "ऋच्छत्यृताम्" (पा०सू०७-४-११) इति सवर्णदीर्घेण स्वरूपेणैवार्त्तेः प्रश्लेषात्। प्रश्लेषे च बहुवचनं प्रमाणम्। अत्र श्लोकवार्त्तिकम्—

वाच्यमूर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्।
आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात्॥

अत्र यङि भावातिदेशः। आमिटोस्त्वभावातिदेशः, मौ तयोरभावात्। इडुपग्रह इट्प्रतिषेधः। "विभाषाऽगुणे" पा०सू०२-३-२५) इति पञ्चमी। फलस्य चात्र हेतुत्वम् 'अध्ययनेन वसति'इतिवत्। 'एकाच' इति वर्त्तमाने "श्र्युकः किति" (पा०सू०७-२-११) इति य इट्प्रतिषेधः ततोऽपि हेतोर्णुवद्भावो वाच्य इत्यर्थः। प्रोर्णोनूयते। प्रोर्णुनाव। प्रोर्णुतः। प्रोर्णुतवान्।

दयायासश्च (पा०सू०३-१-३७)॥ एभ्य आम् स्याल्लिटि। दय दानगतिरक्षणेषु (भ्वा०आ०४८२) अय गतौ (भ्वा०आ०४७५)। आस उपवेशने (अ०आ०११। अयोऽप्यनुदात्ततः। दयाञ्चक्रे। पलायाञ्च

के। "उपसर्गस्यायतौ" (पा०सू०८-२-१९) इति लत्वम्। आसाञ्चक्रे।

उषविदजागृभ्योऽन्यतरस्याम् (पा०सू०३-१-३८)॥ एभ्य आम् वा स्याल्लिटि। उष दाहे (भ्वा०प०६९८)। विद ज्ञाने (अ०प०५४)। सत्ताविचारणार्थयोस्तु आत्मनेपदिनोर्लाभार्थस्य चोभयपदिनो नेह ग्रहणम्, परस्मैपदिभ्यामुषजागृभ्यां साहचर्यात्। ओषाञ्चकार, उवोष। विदेरिह आम्सन्नियोगेनादन्तत्वनिपातनाद् गुणो न, विदाञ्चकार, विवेद। जागराञ्चकार, जजागार।

भीह्रीभृहुवां श्लुवच्च (पा०सू०३-१-३९)॥ एभ्यो लिट्याम्वा एषां श्लाविव कार्यं च। किं पुनस्तत्? द्वित्वमित्वञ्च। बिभयाञ्चकार, बिभाय। जिह्रयाञ्चकार, जिह्राय। बिभराञ्चकार, बभार। जुहवाञ्चकार, जुहाव। इह द्वित्वम् सर्वेषाम्, इत्वन्तु बिभर्तेः, "भृञामित्" (पा०सू०७-४-७६) इति श्लौ विधानात्।

कृञ् चानुप्रयुज्यते लिटि (पा०सू०३-१-४०)॥ आमः पश्चात् लिट् परः कृञ् प्रयुज्यते। कृञिति प्रत्याहारः "कृभ्वस्ति" (पा०सू०५-४-५०) इत्यतः "कृञो द्वितीय" (पा०सू०५-४-५८) इति ञकारेण। तेन कृभ्वस्तयो ग्राह्याः।

अत्र च प्रमाणम्—"आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य" (पा०सू०१-३-६३) इति सूत्रे कृञ्ग्रहणम्। अनुप्रयोगसामर्थ्यादस्तेर्भूभावो न। अन्यथा हि "कृभ्वनुप्रयुज्यते" इत्येव ब्रूयात्। याचयांचकार। याचयाम्बभूव। याचयामास। इहानुप्रयुक्तस्यास्तेर्भावकर्मणोस्तङ्। तत्र एशि इटि च रूपे विप्रतिपद्यन्ते। तथाहि—उभयत्रापि "ह एति" (पा०सू०७-४-५२) इति हादेशे कृते 'ईक्षामाहे' इति केचित्। तासिसाहचर्यादिट्येव हत्वमित्यन्ये। तत्साहचर्यादेव सार्वधातुक एव एति हत्वम्। तेनोभयत्रापि 'ईक्षामासे' इति रूपमित्यपरे।

स्यादेतत्, आमन्तमेतदनभिव्यक्तपदार्थकं, नह्यस्मात् कारकविशेषः सङ्ख्याविशेषो वाऽवगम्यते। तत्र विशेषसमर्पणाय न्यायत एवानुप्रयोगलाभात्किमनेन सूत्रेणेति चेत्?

अत्रोच्यते—क्रियामात्रविवक्षायां कारकतत्सङ्ख्ययोश्चाविवक्षायां पाकप्रेरणा जातेत्यादिप्रयोगास्तावत्सर्वसम्मताः। तत्र तथैव 'पाचयाम्'इत्येतावन्मात्रप्रयोगे प्रसक्ते तं वारयितुमिदम्। किञ्चास्तिभवत्योरिव विद्यतेरपि प्रयोगे न्यायतः प्रसक्ते तमपि वारयितुमेतत्। किञ्च निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिचि सामान्यवाचकानुप्रयोगार्थं सूत्रमेतत्। अपिच पश्चादेव प्रयोगो यथा स्यात् न तु पूर्वमिति। तेन

चक्रे 'ईक्षाम्' इत्यादि न भवति। अपिच अव्यवहित एव पश्चाद्भावो मुख्यः। तथा च व्यवहितनिवृत्त्यर्थमपीदम्। तेन 'ईक्षां राजा चक्रे' इत्यादि न भवति। कथन्तर्हि बह्वृचब्राह्मणे-"तान् ह राजा मदयामेव चकार" (ऐ०ब्रा०६) इति? छान्दसत्वादित्यवेहि। कथन्तर्हि भट्टिकाव्ये-"उक्षाम्प्रचक्रुर्नगरस्य मार्गान्" "विभयाम्प्रचकारासौ" इति, कथञ्च रघुकाव्ये—"तं पातयां प्रथममास पपात पश्चात्" "प्रभ्रंशयां यो नहुषञ्चकार" इति? प्रमाद एवायम्, "विपर्यासनिवृत्त्यर्थं, व्यवहितनिवृत्त्यर्थञ्च" इति वार्तिकविरोधादित्याहुः।

इहाम्प्रकृतेः कृभ्वस्तीनाञ्च सामान्यविशेषवचनतया तदर्थयोरभेदान्वयो बोध्यः। अत एव प्रत्याहारेऽन्तर्भूतस्यापि सम्पदोऽनुप्रयोगो न भवति, अनन्वितार्थकत्वात्। यत्तु "सनाद्यन्ता" (पा०सू० ३-१-३२) इत्यतो धात्वधिकारात् धातूपसर्गसमुदायस्य नानुप्रयोग इति। तन्न, एवमपि योऽत्र धातुः पदिः तन्मात्रस्य उक्तरीत्यैव वारणीयत्वात्। एवञ्च सामान्यस्य सन्निहिते विशेषे पर्यवसानात् तद्गतसाधनादिविशेषाभिधानम् आमन्तगतविशेषाभिधानमेवेति सम्पद्यते। अत एव अनुप्रयुज्यमानयोर्भवस्त्योरामन्तवशेन सकर्मकत्वात् ताभ्यां कर्मणि लिट्। तथाच माघः—"तस्यातपत्रं बिभरांबभूवे" इति। श्रीहर्षश्च—

नपर्तुपूर्तावपि नेदसाम्भरा विभावरीभिर्बिभराम्बभूविरे। इति।

विदाङ्कुर्वन्त्वित्यन्यतरस्याम् (पा०सू०३-१-४१)॥ वेत्तेर्लोट्याम्, गुणाभावः, लोटो लुक्, लोट्परस्य कृञोऽनुप्रयोगश्च वा निपात्यते। इतिशब्दः सर्वेषां लाड्वचनानामुपलक्षणार्थः। सूत्रे प्रथमपुरुषबहुवचनप्रयोगस्तु प्रचुरप्रयोगत्वमात्रेण। विदाङ्करोतु। विदाङ्कुरुताम्। विदाङ्कुर्वन्तु।

अभ्युत्सादयाम्प्रजनयाञ्चिकयांरमयामकः पावयाङ्क्रियाद्विदामक्रन्निति च्छन्दसि (पा०सू०३-१-४२)॥ एते छन्दसि वा निपात्यन्ते। सदिजनिरमीणां ण्यन्तानां लुङ्याम्प्रत्ययः। चिनोतेरपि शुद्धस्य लुङ्याम्, द्विर्वचनं, कुत्वञ्च। 'अकः' इत्यनुप्रयोगः प्रत्येकं चतुर्भिः सम्बध्यते। पवतेः पुनातेर्वा ण्यन्तस्य आशीर्लिङि आम्, 'क्रियात्' इत्यनुप्रयोगश्च। विदेर्लुङ्याम्, गुणाभावः, 'अक्रन्' इत्यस्यानुप्रयोगश्च। 'अकः' इति कृञो लुङि तिप्। "मन्त्रे घस" (पा०सू०२-४-८१) इति च्लेर्लुकि तिपो "हल्ङ्याब्भ्यो" (पा०सू०६-१-६८) लोपः। 'अक्रन्' इति तत्रैव बहुवचनम्। अभ्युत्सादयामकः। 'अभ्युदसीषदत्' इति पक्षे भाषायां

च । प्रजनयामकः, प्राजीजनत् । चिकयामकः, अचैषीत् । रमयामकः, अरीरमत् । पावयांक्रियात्, पाव्यात् । विदामक्रन्, अवेदिषुः ।

इति श्रीशब्दकौस्तुभे तृतीयाध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥

च्लि लुङि (पा०सू०३-१-४३) ॥ धातोश्च्लिप्रत्ययः स्यात् लुङि परे । इकारो लेरिति सामान्यग्रहणार्थः । चकारः स्वरार्थ इत्युत्तरसूत्रे स्फुटीभविष्यति । अस्यादेशाः सिजादयो वक्ष्यन्ते । नन्वेवं किं च्लि-प्रत्ययेन ? सिजेवोत्सर्गः प्रत्ययोऽस्तु, तदपवादाश्च क्सादयः सन्तु । न च—"मन्त्रे घस" (पा०सू०२-४-८१) इतिसूत्रे सर्वधातुषु लेरित्येकेनैव नि-र्वाहे लाघवार्थं च्लिः कर्त्तव्यः । अन्यथा हि घस्लृह्वरणशमर्थमङो ग्रहणम् । आकारान्तेषु धेटोऽन्तर्भावात्तदर्थं चङो ग्रहणम् । तस्य हि "विभाषा धेट्श्व्योः" (पा०सू०३--१-४९) इति चङस्ति । धात्वन्तरार्थं सिचो ग्रहणम् । यदि तु जनेः "दीपजन" (पा०सू-३-१-६१) इति विहितस्य चिणो लुक् छन्दसि दृश्यते ततस्तस्यापीति त्रीणि चत्वारि वा ग्रह-णानि कर्तव्यानि स्युरिति वाच्यम्, च्लिपक्षेऽपि "च्लि लुङि" "च्लेः सिच्" (पा०सू०३-१-४३,४४) "मन्त्रे घस" (पा०सू०२-४-८१) इति सूत्रेषु मिलित्वा च्लिच्लेर्लेरिति त्रयाणां ग्रहणस्य तुल्यत्वात् । न चो-क्तरीत्या साम्येऽपि च्लिपक्षे लाघवान्तरमस्ति, "गातिस्था" (पा०सू० २-४-७७) इति सूत्रे 'सिच' इत्यपनीय तत्स्थाने 'लेः' इत्यभिधाय म-न्त्रेघसादिसूत्रे तस्यैवानुवर्तनादिति वाच्यम्, एवं हि वदन् अकृतेष्वेव सिजाद्यादेशेषु तदपवादो लेरेव लुगित्यभिप्रैषि, किं वा आदेशेषु कृतेषु स्थानिवद्भावो नेति ?

नाद्यः, 'अगुः' 'अस्थुः' इत्यादौ सिचः परत्वाभावेन "सिजभ्यस्त" पा०सू०३-४-१०९) इति जुसोऽप्रवृत्तिप्रसङ्गात् । न च "आतः" (पा० सू०३-४-११०) इति जुस्, तत्रापि 'सिच' इत्यस्यानुवृत्तेः ।

अथोच्येत, "आतः" इति सूत्रे सिज्ग्रहणं नानुवर्त्तते, तथाच 'अगुः' इत्यादौ विध्यर्थं तत् न तु नियमार्थम्, व्यावर्त्याभावात् । न च 'अभूवन्' इति व्यावर्त्यम्, तत्र जुसः प्राप्तेरेवाभावात् । न च "सिजभ्य-स्त" (पा०सू०३-४-१०९) इति प्राप्तिः, लावस्थायामेव लुगिति पक्षस्य इदानीं परिगृहीतत्वात् । न चैवम् 'अयान्' इत्यत्रापि "आतः" (पा० सू०३-४-११०) इति नित्यो जुस् स्यादिति वाच्यम्, "लङः शाकटायन-स्यैव" (पा०सू०३-४-१११) इति नियमाद्विकल्पोपपत्तेरिति । एवमपि 'मा हि गातां' 'मा हि स्याताम्' इत्यादिषु "आदिः सिचोऽन्यतरस्याम्"

(पा०सू०६-१-१७८) इत्येष स्वरो न सिद्ध्येत् । तस्माल्लावस्थायां लोप इति प्रथमः पक्षो दुष्ट एवेति स्थितम् ।

न द्वितीयः, एवं हि सति "विभाषा घ्राधेट्" (पा०सू०२-४-७८) इति सूत्रेणापि च्ल्यादेशानामेव लुक्, इति धेटश्चङोऽपि स स्यात् । तत्र यदा "विभाषा धेट्श्व्योः" (पा०सू०३-१-४९) इति चङो विकल्पितत्वेन पक्षे सिचि कृते तस्य लुगलुकौ, तदा अधात्, अधाताम्, अधुः । अधासीत्, अधासिष्टाम्, अधासिषुः इति सिद्धमिष्टम् । चङोऽपि लुगभावपक्षे अदधत्, अदधताम्, अदधन् । इति सिद्धम् । लुक्पक्षे तु "न लुमता" (पा०सू०१-१-६३) इत्यङ्गाधिकारनिर्देश इति मते प्रत्ययलक्षणेन द्विर्वचने 'अदधात्' इत्यपि चतुर्थं रूपं स्यात् । "न लुमता" (पा०सू०१-१-६३) इति नाङ्गाधिकारनिर्देशः, किं त्वाङ्गमनाङ्गं वा लुमता लुप्ते प्रत्यये परे पूर्वस्य प्राप्तं सर्वं निषिध्यत इति मुख्यपक्षे तु चङो लुकि द्वित्वाप्रवृत्तौ सिज्लुका तुल्यमेव रूपमिति 'अधात्' इत्यादौ यद्यपि न दोषः, तथापि बहुवचने 'अधान्' इत्यनिष्टमपि चतुर्थं रूपं स्यादेव, इष्यते तु त्रैरूप्यम् 'अधुः, अधासिषुः, अदधन्' इति । न च चङो लुकि "आतः" (पा०सू०३-४-११०) इति जुस् भविष्यतीति वाच्यम्, तत्र 'सिचः' इत्यस्यानुवृत्तेः । अन्यथा तस्य नियमार्थताऽनुपपत्तौ 'अभूवन्' इत्यत्र प्रत्ययलक्षणेन "सिजभ्यस्त" (पा०सू०३-४-१०९) इति जुस्प्रसङ्गात् । ननु "च्ल्यभ्यस्तविदिभ्यश्च" इति वक्ष्यामि । एवञ्च चङ्लुक्यपि च्लेः परत्वाज्जुस् भविष्यति । "आतः" (पा०सू०३-४-११०) इति सूत्रेऽपि लिग्रहणानुवृत्त्यैव नियमात् 'अभूवन्' इत्यत्र जुस् न भविष्यति । 'मा हि गाताम्' इत्यादौ "आदिः सिचः" (पा०सू०६-१-१८७) इति स्वरोऽपि सिद्धः । एवञ्च कृतेष्वादेशेषु लुगिति पक्षो निर्बाध एवेति चेत् ? न, यदि "च्ल्यभ्यस्त" इति ब्रूषे तर्हि क्साङ्चङ्क्षु दोषापत्तेः अधुक्षन्, अवोचन्, अदधन्, अत्रापि हि जुस् प्राप्नोति । तस्मात्सिजभ्यस्तेत्येव वक्तव्यम् । "आतः" (पा०सू०३-४-११०) इत्यत्र च सिज्ग्रहणमनुवर्त्तनीयम् । एवञ्च चङ्लुकि बहुवचने 'अधान्' इति प्राप्नोतीति दोषः स्थित एव । तस्मात् "गातिस्था" (पा०सू०२-४-७७) इत्यत्र सिच इत्येव वक्तव्यम् । ततश्च च्लिपक्षेऽपि किं च्लेर्लुगिति त्रयाणां ग्रहणं तुल्यमेवेति स्थितम् । प्रत्युत च्लेरकरणे महल्लाघवम् । "मन्त्रे घस" (पा०सू०२-४-८१) इत्यादिसूत्रे हि अङ एव ग्रहणं कर्तव्यम् । सिच् तु "गातिस्था" (पा०सू०२-४-७७) इति सूत्रादनुवर्त्यः । धेटो जनेश्च चङ्क्त्रिणौ वैकल्पिकौ, तत्र यानि लुगुदाहरणानि

तानि सिच एव लुका सिद्धानि । न चैवम् "आदिः सिचोऽन्यतरस्याम्" (पा०सू०६-१-१८७) इति स्वरः स्यादिति वाच्यम्, चङ्चिणोर्ग्रहणेऽपि पाक्षिकस्य तस्य दुर्वारत्वात् । तस्मात् "च्लि लुङि" इतिसूत्रं व्यर्थमेवेति चेत् ?

अत्राहुः, असति च्लौ "मन्त्रे घस" (पा०सू०२-४-८१) इत्यत्र येभ्यः सिचो लुक् तेषाम् "आदिः सिचः" (पा०सू०६-१-१८७) इतिस्वरः स्यात् । सति त्वस्मिन् 'लेः' इति लावस्थायामेव लुकि सिजभावाद्यथायथं स्वरः । किञ्च आकारान्तेभ्यः सिचो लुकि जुस प्राप्नोति लेस्तु लुकि अन्तिभाव एव भवति । अपि च, "शल इगुपधात्" (पा०सू०३-४-४५) इति सूत्रे अनिटः इत्यनेन च्लिं विशेषयितुमपि च्लिरेष्टव्यः । असति हि च्लौ 'अनिटः' इति धातोरेव विशेषणं स्यात् । ततश्च 'अघुक्षत' इति न सिध्येत् । ननूदित्वादिड्विकल्पे पाक्षिकेणेडभावेन अनिड्वायमिति चेत् ? तर्हि नित्यं क्सः स्यात् । ततश्च 'अगुहीत्' इति न सिध्येत् । 'अनिटः' इति च्लेर्विशेषणे तु यदा च्लिरनिट् तदा क्सः, यदा सेट् तदा सिजिति सिद्धमिष्टम् । तस्मात् यथायथं स्वरोऽन्तिश्चागुहीदिति च्लेः फलमिति स्थितम् ।

भाष्ये तु च्लिः प्रत्याख्यातः । यत्तूक्तम्, "आदिः सिचः" (पा०सू०६-१-१८७) इति स्यादिति, तन्न, तस्य वैकल्पिकतया इष्टस्वरस्य निर्बाधत्वात्, सर्वविकल्पानां छन्दसि व्यवस्थितत्वेन अनिष्टस्यानापाद्यत्वात् । यदपि आकारान्तेभ्यो जुस् स्यादिति । तदपि न, मन्त्रे तादृशस्योदाहरणस्याभावात् । अत्र च भाष्यकारीयप्रत्याख्यानमेव प्रमाणम् । यदपि 'अगुहीत्' इति न सिद्ध्येदिति । तदपि न, गुहादयो विकल्पितेट इटो भावाऽभावाभ्यां भिद्यन्ते । तत्र ये सेटः तेभ्यः सिच्, अनिड्भ्यस्तु क्स इति भगवद्भाष्यकाराशयस्य कैयटेन वर्णितत्वात् ।

च्लेः सिच् (पा०सू०३-१-४४) ॥ च्लेः सिजादेशः स्यात् । इकार उच्चारणार्थ इत्संज्ञको वेति पक्षद्वयमपि "हनः सिच् (पा०सू०१-२-१४) इत्यत्र प्रतिपादितम् । चकारः स्वरार्थः । मा हि लावीत् । अत्र हि "आगमा अनुदात्ता" इति इटोऽनुदात्तत्वं प्राप्तं स्थानिन्यादेशे च द्वित्वस्करणाद्बाध्यते । यत्तु केचित्—प्रत्ययस्वरस्य द्वावपवादौ आगमानुदात्तत्वं चित्स्वरश्च । तत्र आद्यं यासुड्विधौ ज्ञापितं तद्देशम्, चित्स्वरस्तु षाष्ठः । तत्रापवादविप्रतिषेधे परत्वाच्चित्स्वर एव सिद्ध्यति तर्हि किं सिचश्चित्त्वेनेति । तन्न, आगमानुदात्तत्वं हि आनुगादिषु प्रकृत्यागमेष्वपीष्यते । कुण्डिनजादीनाञ्च चित्स्वरः, तत्कथमिमौ प्रत्यय-

स्वरस्यापवादौ स्याताम्? किञ्च इह चित्स्वरस्य परत्वमपि नास्ति, स्थानिवदित्यस्य कार्यातिदेशत्वात्। तस्मादागमानुदात्तत्वेन अविशेषात्सर्वः स्वरो बाध्यत इति तद्बाधनाय सिचश्चित्त्वम्। न च च्लेश्चित्त्वसामर्थ्यादेव तद्बाधः, "मन्त्रे घस" (पा०सू०२-४८१)इति सूत्रे 'लेः'इति सामान्यग्रहणेन तस्य चरितार्थत्वात् । अन्यथा हि निरनुबन्धकस्वादस्यैव ग्रहणं स्यात्, न लिटः। ततश्च "आमः" (पा०सू०२-४-८१) इति सूत्रे निरनुबन्धकस्य लेरसम्भवात् लेरिति नानुवर्त्तेत । ततश्च परत्वादन्तरङ्गत्वाच्च तिबादिषु पश्चाल्लुकि 'कारयाम्' इत्यस्य प्रत्ययलक्षणेन तिङन्तत्वात 'देवदत्तः कारयाञ्चकार, इत्यत्र आमन्तस्य निघातः ततः परस्य चानिघातः स्यात्। तस्मात् "आमः" इत्यत्र 'लेः' इत्यनुवर्त्यमेव। तदर्थञ्च पूर्वत्र सामान्यग्रहणं वाच्यम्, तदविघाताय च्लेश्चकारश्चरितार्थः।. च्लेः प्रत्याख्यानपक्षे तु सिच एव चित्त्वनानन्यार्थेन आगमानुदात्तत्वं बाध्यते।

स्पृशमृशकृषतृपदृपः सिज्वेति वक्तव्यम् (का०वा०) ॥ स्पृश स्पर्शने (तु०प०१४२), मृश आमर्शने (तु०प०१४५), कृष विलेखने (भ्वा०प०१०१५) एभ्यः क्से प्राप्ते तृप प्रीणने, दृप हर्षविमोचनयोः (दि०प०८९,९०) आभ्यां पुषादित्वादङि प्राप्ते सिजपि पक्षे अभ्यनुज्ञायते । अस्प्राक्षीत्, अस्पार्क्षीत्, अस्पृक्षत्। अम्राक्षीत्, अमार्क्षीत्, अमृक्षत्। अक्राक्षीत्, अकार्क्षीत, अकृक्षत्। अत्राप्सीत, अतार्प्सीत्, अतृपत् । अद्राप्सीत, अदार्प्सीत, अदृपत् । प्रक्रियाकौमुद्यान्तु प्रकृतवार्त्तिके सृपिमपि प्रक्षिप्य 'अस्राप्सीत्, 'असार्प्सीत्,' इत्यपि रूपद्वयमुदाहृतम् । तत्तु अप्रामाणिकत्वादुपेक्ष्यम्।

शल इगुपधादनिटः क्सः (पा०सू०३-१-४५) ॥ शलन्त इगुपधो यो धातुः तस्मात्परस्य अनिटश्च्लेः क्सः स्यात्। दुह्-अधुक्षत्। लिह्-अलिक्षत्। शलः किम्? अभैत्सीत्। इगुपधात्किम्? अधाक्षीत्। अनिटः किम्? अकोषीत्। च्लेः प्रत्याख्यानपक्षे तु 'अनिटः' इति धातोरेव विशेषणमिति प्रागेवोक्तम्। यद्यपि अकृत एव क्से लावस्थायां गुणः प्राप्नोति, तथापि इगुपधादिति विशेषणसामर्थ्यान्न भवति। न च कृतेऽपि गुणे भूतपूर्वगत्या विहितविशेषणाश्रयणेन वा क्सोऽस्त्विति वाच्यम्, कित्करणवैयर्थ्यापत्तेः। न च "क्सस्याचि" (पा०सू०७-३-७२) इत्यत्र विशेषणार्थं तत्, "सस्याचि" इत्येव सिद्धेः। न चैवं वृतृवदिहनिकमिकषिभ्यः से 'वत्से' 'वत्सा' इत्यत्र प्रसङ्गः स्यादिति वाच्यम्, "लुग्वा दुह" (पा०सू०७-३-७३) इत्यत्रापि हि 'सस्याचि' इत्यतः 'स-

स्य' इत्यनुवर्तते । एवञ्च दुहादिषु यस्य सम्भवः तस्यैव पूर्वसूत्रेऽपि ग्रहणमिति सुवचत्वात् । तस्मात्कित्करणसामर्थ्याद् गुणो नेति स्थितम् ।

श्लिष आलिङ्गने (पा०सू०३-१-४६) ॥ अत्र योगो विभज्यते—

श्लिषः ॥ श्लिषः परस्य अनिटश्च्लेः क्सः स्यात् । पूर्वेणैव प्राप्तस्य क्सस्य पुषाद्यङा बाधे प्राप्ते इदमारभ्यते । पुषादिपाठसामर्थ्यात्पक्षे अङ् । एवञ्च अङ्क्सयोः सर्वत्र विकल्पे प्राप्ते आलिङ्गनानालिङ्गनयोरविशेषेण क्से च प्राप्ते नियमार्थं द्वितीयो योगः—

आलिङ्गने ॥ श्लिषः परस्यानिटश्च्लेर्योऽयं क्सादेशः स आलिङ्गने एव, न त्वर्थान्तरे । एवं चार्थान्तरे सावकाशोऽङ् आलिङ्गने क्सेन बाध्यते । अश्लिक्षत् कन्यां देवदत्तः । आलिङ्गन एवेति किम् ? समाश्लिषज्जतु काष्ठम् । इह अङेव । प्रत्यासत्तौ ह्यत्र श्लिषिर्वर्तते न तूपगूहनपरिष्वङ्गापरपर्याये आलिङ्गने । उपाश्लिक्षातां जतुना काष्ठे । नन्विह "शल इगुपधात्" (पा०सू०३-१-४५) इति क्सो दुर्वारः । आलिङ्गने एवेति नियमेन हि 'अनन्तरस्य' (पा०भा०६३) इति न्यायेन श्लिष इति या प्राप्तिः अङ्बाधनार्था सैव नियम्यते न तु ततः प्राचीनमपीति चेत् ? न, योगविभागसामर्थ्येन सर्वस्याः क्सप्राप्तेः नियमनात् । आत्मनेपदे च अङोऽप्राप्तेः सिजेव पर्यवस्यति । नन्वेवमपि आलिङ्गनएवेति आदेशनियमोऽयमिति कुतः, अर्थनियम एवायं किं न स्यात् आलिङ्गने क्स एवेति । ततश्चालिङ्गने अङ् मा नाम भूत् । आत्मनेपदे तु अनालिङ्गनेऽपि पूर्वेण क्सो दुर्वार एवेति चेत् ? सत्यम्, उभयथेह नियमसम्भवेऽपि प्रत्ययनियम एवाश्रीयते, लक्ष्यानुरोधात् विधेयविभक्तिनिर्देशेन प्रधानत्वाद्वा भाष्यकारोक्तव्याख्यानाद्वेति न कश्चिद्दोषः । श्लिष इति योगे अनिटः किम् ? 'श्लिष आलिङ्गने' (दि०प०८०) इत्यस्यैव ग्रहणं यथा स्यात् । 'श्लिषु प्लुषु प्लुषु दाहे' (भ्वा०प०७०३) इत्यस्य सेटो ग्रहणं मा भूत् । सानुबन्धकत्वादेव तद्ग्रहणे तु 'अनिटः' इति नावश्यकमिति दिक् ।

श्लिष इति योगविभागसिद्धश्च क्सः "पुरस्तादपवाद" (प०भा० ६१) न्यायेन अङमेव बाधते न तु चिणन्तेन 'समाश्लेषि कन्या देवदत्तेन' इति चिणेव भवति ।

न दृशः (पा०सू०३-१-४७) ॥ दृशः च्लेः क्सो न स्यात् । अदर्शत । अद्राक्षीत् । "इरितो वा" (पा०सू०३-१-५७) इत्यङ्पक्षे "ऋदृशोऽङि" (पा०सू०७-४-१६) इति गुणः । सिच्पक्षे "सृजिदृशोर्झलि" (पा० सू०६-१-५८) इत्यम् ।

णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ् (पा०सू०३-१-४८) ॥ एभ्यश्च्लेश्चङ् स्यात् कर्तृवाचिनि लुङि परे। 'णि' इति णिङ्णिचोः सामान्यग्रहणम्। अचीकमत। अचीकरत्। अशिश्रियत्। अदुद्रुवत्। असुस्रुवत्। कर्त्तरि किम्? अकारयिषातां घटौ देवदत्तेन। चङो ङकारो गुणनिषेधार्थः। चकारश्चङीति विशेषणार्थः। अङीत्युच्यमाने "अस्यतिवक्ति" (पा०सू०३-१-५२) इत्यङि "षिद्भिदादिभ्यः" (पा०सू०३-३-१०४) इति चाङि अतिप्रसङ्गः। यदि तु "णिश्रि" (पा०सू०३-१-४८) इत्यादौ ङ एव क्रियेत तदा शक्यं चित्त्वमकर्तुम्।

कमेरुपसंख्यानम् (का०वा०)॥ "आयादय आर्द्धधातुके वा" इति यदा णिङ् नास्ति तदर्थमिदम्। अचकमत। अत्र भाष्यम्—

नाकमिष्ट सुखं यान्ति सुयुक्तैर्वडवारथैः।
अथ पत्काषिणो यान्ति येऽचीकमत भाषिणः॥

अस्यार्थः। अचकमताचीकमतेति शब्दयोः साधुत्वे तुल्येऽपि 'अचकमत' इत्यस्य विशेषलक्षणसापेक्षतया तत्प्रयोगे क्लेशाधिक्यात्फलाधिक्यम्। तेन कमेर्लुङि किं रूपमिति पृष्टे 'अचकमत' इति ये ब्रूयुस्ते सुयुक्तैः रथैः स्वर्गं यान्ति। यैस्तु 'अचीकमत' इत्युक्तं ते पादौ कषन्तीति पत्काषिणो यान्ति। "हिमकाषिहतिषु च" (पा०सू०६-३-५४) इति पादस्य पदादेशः।

अन्ये तु व्याचक्षते। अकामिष्टेति यैरुक्तं त एवोपचारादकमिष्टशब्देनोच्यन्ते। तेऽमी सुयुक्तैर्वडवारथैर्गच्छन्तोऽपि सुखं न प्राप्नुवन्ति, अपशब्दोच्चारणात्। अचीकमतभाषिणस्तु पत्काषिणोऽपि सुखं यान्ति।

विभाषा धेट्श्व्योः (पा०सू०३-१-४९)॥ आभ्यां च्लेश्चङ् वा स्यात्। अदधत्। सिच्पक्षे "विभाषा घ्राधेट्" (पा०सू०२-४-७८) इति वा लुक्। अधात्। अधासीत्। अशिश्वियत्। पक्षे "जॄस्तम्भु" (पा०सू०३-१-७८) इत्यङ्। "श्वयतेरः" (पा०सू०७-४-७८) अश्वत्। सिचि वृद्धेः प्रतिषेधे गुणः। अश्वयीत्। कर्तरीत्येव, अधिषातां गावौ वत्सेन। कर्मणि द्विवचनम्। "स्थाघ्वोरिच्च" (पा०सू०१-२-२७) इति कित्त्वेत्वे।

गुपेश्छन्दसि (पा०सू०३-१-५०)॥ गुपेः परस्य च्लेश्चङ् वा स्यात् छन्दसि। आयप्रत्ययाभावस्थल एवेदम्, सूत्रे केवलस्योच्चारणात्। इमान्नो मित्रावरुणौ गृहानजूगुपतं युवम्। गुपू रक्षणे (भ्वा० प०३९५) लुङ् थसस्तम्। "तुजादीनां दीर्घोऽभ्यासस्य" (पा०सू०६-

१-७) इति अभ्यासदीर्घ इति हरदत्तः। कल्पसूत्रेषु तु प्रायेण ह्रस्व एव पठ्यते। पक्षे अगौप्तम्, अगोपिष्टम्। ऊदित्वादिडभावे "वदव्रज" (पा०सू०१-२-३) इति वृद्धिः। "झलो झलि" (पा०सू०८-२-२६) इति सिचो लोपः। इट्पक्षे "नेटि" (पा०सू०७-२-४) इति वृद्धिनिषेधः, गुणः। आयप्रत्ययपक्षे-अगोपायिष्टम्। इति चत्वारि छन्दसि। भाषायान्तु चङन्तं वर्जयित्वा त्रीणि रूपाणि।

नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः (पा०सू०३-४-५१)॥ एभ्यो ण्यन्तेभ्यः च्लेश्चङ् न स्यात् छन्दसि। "मा त्वायतो जरितुः काममूनयीः"। त्वायतस्त्वामिच्छतो जरितुः स्तोतुः मम काममभिलाषं मा उनयीः ऊनं मा कार्षीरित्यर्थः। 'मा ऊननः' इति भाषायाम्। ऊन परिहाणे (चु०प०३५६)। चुरादावदन्तः। णिच् सिप् चङ् णौ कृतस्याल्लोपस्य स्थानिवद्भावात् "अजादेर्द्वितीयस्य" (पा०सू०६-१-२) इति नशब्दस्य द्विर्वचनम्। अग्लोपित्वान्न सन्वद्भावदीर्घोपधाह्रस्वत्वानि। इह वृत्तिपदमञ्जर्योः प्रायेण औनिनत् इति पाठः। तत्र अभ्यासे इकारः प्रामादिकः। इदञ्च "द्विर्वचनेऽचि" (पा०सू०१-१-५१) इति सूत्रे स्फुटीकृतमस्माभिः। "मा त्वाग्निर्ध्वनयीद् धूमगन्धिः"। ध्वन शब्दे (चु०प०३५७) चुरादिरदन्तः। घटादिर्नान्तश्च। भाषायां तु अग्लोपित्वान्न सन्वत्। अदध्वनत्। घटादेस्तु अनग्लोपित्वात् अदिध्वनत्। ऐलयीत्। ऐलिलत् इति भाषायाम्। इल प्रेरणे (चु०प०१२७) चुरादिः। आर्दयीत्। आर्दिदत् इति भाषायाम्। अर्द गतौ याचने च (भ्वा० प० ९२७) अर्द हिंसायाम् (चु०उ०२९६) हेतुमण्ण्यन्तौ। इह सूत्रे 'छन्दसि' इत्यस्यानुवृत्तिर्वृत्त्यादिमहाग्रन्थसंमता। तथा च भट्टिः—

अजिग्रहत्तं जनको धनुस्तद्येनार्दिदद्दैत्यपुरं पिनाकी। इति।

प्रक्रियाकौमुद्यां तु द्वयमपि लोके इत्युक्तम्। छन्दसीति नानुवर्तते, विभाषेति चानुवर्तत इति तदाशयः। इदञ्चाशुद्धम्, सूत्रे नञो वैयर्थ्यापत्तेः सकलमहाग्रन्थविरोधाच्चेत्यास्तान्तावत्।

अस्यतिवक्तिख्यातिभ्योऽङ् (पा०सू०३-१-५२)॥ असु क्षेपणे (दि०प०९३); वच परिभाषणे, (अ०प०५२) ब्रूञो (अ०उ०३४) वचिश्च; ख्या प्रकथने (अ०प०५०), चक्षिङः (अ०आ०७) आदेशश्चेति प्राञ्चः। वस्तुतस्तु सार्वधातुकमात्रविषयः ख्यातिः। इह त्वादेशस्यैव ग्रहणम्। एभ्यश्च्लेरङ् स्यात् कर्तृवाचिनि लुङि परे। अस्यतेः पुषादिपाठादेव अङि सिद्धे पुनर्ग्रहणमात्मनेपदार्थम्। पर्यास्थत, पर्यास्थेताम्, पर्यास्थन्त। "उपसर्गादस्यत्यूह्योर्वावचनम्" (का०वा०) इत्यात्मनेपदम्।

अङ्। अस्यतेस्थुक्। कर्मकर्तरि तु प्रत्यये परत्वाच्चिण्, अन्यत्र अङ्। पर्यासि, पर्यास्थेताम्, पर्यास्थन्त। अवोचत्, अवोचताम्, अवोचन्। "वच उम्" (पा०सू०७-४-२०)। अख्यत्, अख्यताम्, अख्यन् "आतो लोपः" (पा०सू०६-४-६४) कर्त्तरीति किम्? कर्मणि मा भूत्, चिण्-सिचावेव यथा स्याताम्। निरासि, निरासिषाताम्।

लिपिसिचिह्वश्च (पा०सू०३-१-५३)॥ एभ्यश्च्लेरङ् स्यात्। लिप उपदेहे (तु०उ०१५३) अलिपत्। षिच क्षरणे(तु०उ०१५४)। असिचत्। ह्वेञ् स्पर्द्धायां शब्दे च (भ्वा०उ०१०३३)। अह्वत्। "अस्यतिवक्तिख्याति-लिपिसिचिह्व" इति तु नोक्तम्, एकसूत्रत्वे हि अस्यत्यादीनामपि उत्त-रसूत्रे अनुवृत्तौ विकल्पः स्यात्।

आत्मनेपदेष्वन्यतरस्याम् (पा०सू०३-१-५४)॥ पूर्वेण नित्ये प्राप्ते विभाषेयम्। अलिपत, अलिप्त। असिचत, असिक्त। अङभावे सिच्। "झलो झलि" (पा०सू०८-२-२६) इति सलोपः। "लिङ्सिचौ" (पा० सू०३-७-५३) इति कित्त्वाद् गुणाभावः। अह्वत, अह्वास्त।

पुषादिद्युताद्य्लृदितः परस्मैपदेषु (पा०सू०३-७-५५)॥ श्यन्वि-करणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङादेशः स्यात्परस्मैपदेषु। पुष पुष्टौ, शुष शोषणे, (दि०प०७६,७७) इत्येवमादिरादिवादिगणसमाप्तेः पुषादिः। यत्तु मध्ये 'ष्णिह प्रीतौ (दि०प०९४) वृत् इति वृत्करणं तद्र-धादिसमाप्त्यर्थम्।"अस्यतिवक्ति"(पा०सू०३-१-५२) इति सूत्रे "अस्य-तिग्रहणमात्मनेपदार्थं पुषादित्वात्" इति वार्तिककारवचनं चात्र प्रमा-णम्। अपुषत्। अशुषत्। यस्तु भ्वादिः पुष पुष्टौ, श्रिषु श्लिषु प्रुषु प्लुषु दाहे (भ्वा०प०७१,-७५) इत्येवमादिः, सोऽत्र न गृह्यते, द्युतादीनां पृथक्करणाज्ज्ञापकात्। ते हि तत्र पुषेरुत्तरत्र पठ्यन्ते। योऽपि पुष पुष्टौ, मुष स्तेये (क्र्या०प०५७,५८) इति क्र्यादिषु पठितः, सोऽप्यत्र न गृह्यते। तत्र हि चत्वार एव धातवः। यदि च ते जिघृक्षिताः स्युर्लृ-दित एव ते क्रियेरन्। यत्तु स्वरितेत्त्वादेरपि तेनैव सिद्धत्वादिति हरदत्तेनोक्तम्, तत्र तेषां निरनुबन्धकत्वात् ग्रहेः स्वरितत्त्वेऽप्यादिश-ब्दार्थालाभात्। अङ आदिशब्दार्थत्वे तु अपिशब्दार्थालाभादिति दिक्।

अथ सिद्धान्तेऽपि पुषादयो द्युतादयश्च लृदित एव कुतो न पठि-ता इति चेत्? न, प्रत्येकं लृकारपाठे विपरीतगौरवापत्तेः।न चानुबन्धा-न्तरेण लृकारो निर्मातुं शक्यः, तत्तत्कार्यानिर्वाहप्रसङ्गात्। आदिता-मीदितामुदितामूदिताञ्च तत्र सत्त्वात्। तद्यथा—पुषादिषु ञिक्ष्विदा गात्रप्रस्रवणे(दि०प०८२), मदी हर्षे (दि०प०१२)। शमु उपशमे, (दि०प०

९५) ञिधृ संघर्षे (दि०प०८६) इति पठ्यन्ते। द्युतादिष्वपि श्विता वर्णे; ञिमिदा स्नेहने, ञिष्विदा स्नेहनमोचनयोः (भ्वा०आ०३४३,-३४५), स्रंसुध्वंसु अवस्रंसने (भ्वा०आ०३५५,३५६), स्यन्दू प्रस्रवणे, कृपू सामर्थ्ये(भ्वा०आ०७६२,७६३) इति पठ्यन्ते। अद्युतत्। अश्वितत्। "द्युद्भ्यो लुङि" (पा०सू०१-३-९१) इति पाक्षिकं परस्मैपदम्। गम्लृ (भ्वा०प०१००७) अगमत्। परस्मैपदेष्विति किम ? अद्योतिष्ट। इह "नन्दिग्रहिपचादिभ्यः" (पा०सू०३-१-१३४) इतिवत् पुषद्युतादीत्येक एवादिशब्दः पठितुं युक्तः। तथा तु न कृतमित्येव।

सर्तिशास्त्यर्तिभ्यश्च (पा०सू०३-१-५६)॥ एभ्यश्च्लेरङ् स्यात्। शासु अनुशिष्टौ (अ०प०६५) अस्यैव ग्रहणम्, सर्त्यर्तिभ्यां परस्मैपदिभ्यां साहचर्यात्। न तु 'आङः शासु इच्छायाम्' (अ०आ०१२) इत्यात्मनेपदिन इह ग्रहणम्। अर्तिसर्त्योरपि "ऋ सृ गतौ"(जु०प०१६,१७)इति जौहोत्यादिकयोरेवेह ग्रहणम्, अविद्यमानशपा शासिना साहचर्यात्। तेन भौवादिकयोः सिजेव। चकारेण 'परस्मैपदेषु' इत्यनुकृष्यते। तच्चोत्तरार्थं न त्विहाप्येति, पृथग्योगकरणसामर्थ्यात्। अन्यथा हि "पुषादिद्युताद्यॢदित्सर्तिशास्त्यर्तिभ्यः" इत्येव पठेत। एवं हि पृथग्विभक्तिनिर्देशश्चकारश्च न कर्त्तव्यो भवति। अथवा मण्डूकप्लुत्या उत्तरत्रैव परस्मैपदग्रहणं सम्बध्यते। यद्वा 'इहानुकृष्टं सत् परस्मैपदे दृष्टो यः शासि' इति व्याख्येयम्। "शास इदङ्हलोः" (पा०सू०६-४-३४) इति सूत्रे कैयटग्रन्थोऽप्येवं नेयः। सर्ति-असरत्। 'ऋदृशोऽङि" (पा०सू०७-४ १६) इति गुणः। अशिषत्। "शास इदङ्हलोः" (पा०सू०६-४-३४) "शासिवसि"(पा०सू०८-३-)इति षत्वम्। आरत। समन्यवो यत्समरन्त सेनाः। "समो गम्यृच्छिभ्याम्" (पा०सू०१-३-२९) इत्यत्र "अर्त्तिश्रुदृशिभ्यश्च" (का०वा०) इति वार्त्तिकेनात्मनेपदम्। "बहुलं छन्दस्यमाङ्योगेऽपि"(पा०सू०६-४-७५) इत्यडभावः।

समारन्त ममाभीष्टाः सङ्कल्पास्त्वय्युपागते।

इति भट्टिः। यत्तु "समो गम्यृच्छि" (पा०सू०१-३-२९) इत्यत्र भाष्ये सिजुदाहरणं तद्भौवादिकस्येति तत्रैवावोचाम।

इरितो वा (पा०सू०३-१-५७)॥ इरितो धातोश्च्लेरङ् वा स्यात् परस्मैपदेषु। अभिदत्। अभैत्सीत्। परस्मैपदेषु किम् ? अभित्त। स्वरितत्वात्तङ्।

जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च (पा०सू०३-१-५८)॥ एभ्यश्च्लेरङ् वा। अजरत्, अजारीत्। स्तम्भुः सौत्रो धातुः।

अस्तभत्, अस्तम्भीत्। म्रुचु म्लुचु गतौ (भ्वा०प०१९५।१९६) अम्रुचत—अम्रोचीत्। अम्लुचत, अम्लोचीत्। ग्रुचु ग्लुचु, स्तेयकरणे (भ्वा०प०१९७-१९८)। अग्रुचत्, अग्रोचीत्। ग्लुञ्चु षस्ज गतौ (भ्वा०प०२०१-२०२)। अग्लुचत,अग्लुञ्चीत्। अश्वत्, अश्वयीत्। अशिश्वियत्। "विभाषा धेट्श्व्योः" (पा०सू०३-१४१) इत्यत्र व्युत्पादितमेतत्। ग्लुचुग्लुञ्च्वोरेकतरोपादानेनापि रूपत्रयं यद्यपि सिद्धयति, तथापि ग्लुञ्चावुपात्ते 'अग्लुचत्' 'अग्लुंचीत्' इति द्वयम्। ग्लुचेस्तु सिचि अग्लोचीत्। तथा ग्लुचावुपात्ते तस्याग्लुचत्, अग्लोचीत्। ग्लुञ्चेस्त्वग्लुञ्चीदिति। तथापि अर्थभेदात्सूत्रकृता उभावुपात्तौ। भाष्यकृता तु धातूनामनेकार्थत्वेनेष्टसिद्धिमाश्रित्य अन्यतरो न कर्त्तव्य इत्युक्तम्। एतेन द्वयोरुपादानसामर्थ्यात् ग्लुञ्चेरनुनासिकलोपो न भवतीति जयादित्योपन्यस्तङ्केषां चिन्मतं परास्तम, भाष्यविरुद्धत्वात्।

कृमृदृरुहिभ्यश्छन्दसि (पा०सू०३-१-५९)॥ एभ्यश्च्लेरङ् वा स्याच्छन्दसि। अकरत्। अमरत्। व्यत्ययेनेह परस्मैपदम्। अदरत्। यत्सानोः सानुमारुहत्। यत्तु ऋग्भाष्ये इमामृचं व्याचक्षाणैरुक्तम्-रुहे र्लङि तिपि शपि "संज्ञापूर्वको विधिरनित्यः" (प०भा०२५) इति लघूपधगुणो न भवतीति, तत्प्रौढिवादमात्रमित्यवधेयम्। लोके तु-अकार्षीत्। अमृत। अदारीत्। अरुक्षत्।

चिण्ते पदः (पा०सू०३-१-६)॥ पद गतौ (दि०आ०६०) अस्मात् च्लेश्चिण् स्यात् तशब्दे परे। आत्मनेपदैकवचनमेवात्र गृह्यते न तु "तस्थस्थमिपाम्"(पा०सू०३-४-११) इति विहितः,धातोरात्मनेपदित्वेन तस्येहासम्भवात्। वेति निवृत्तम्, उत्तरत्र अन्यतरस्यांग्रहणात्। उदपादि सस्यम्। समपादि भैक्षम्। त इति किम्? उदपत्साताम्। उदपत्सत।

दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम (पा०सू०३-१-६१)॥ एभ्यश्च्लेश्चिण् वा स्यात्ते परे। अदीपि, अदीपिष्ट। अजनि, अजनिष्ट। अबोधि, अबुद्ध। अपूरि, अपूरिष्ट। अतायि, अतायिष्ट। अप्यायि, अप्यायिष्ट।। जनी प्रादुर्भावे (दि०आ ४३), बुध अवगमने इत्यनयोर्दिवाद्योरिह ग्रहणम्। यत्तु जन जनने (दि०आ०६६) भ्वादिः, बुध बोधने (भ्वा०प०८८३) बुधिर् बोधने (भ्वा०उ०१००) भ्वादी, तेषां नह ग्रहणं नित्यात्मनेपादिभ्यां दिवादिभ्याञ्च दीपिपूरिभ्यां साहचर्येण तादृशयोरेव जनिबुध्योर्ग्रहणात्। यत्तु अकर्मकसाहचर्यादकर्मकयोरेवेति माधवेनोक्तम्। तच्चिन्त्यम्, "क्रमादमुं नारद इत्यबोधि सः" "अबोधि

तज्जागरदुःखलाक्षिणी" इत्यादिप्रयोगविरोधात् । अयञ्च विकल्पः कर्तर्येव । भावकर्मणोस्तु नित्यश्चिण्, परत्वात्, इह कर्तरीत्यनुवृत्तेर्वा ।

अचः कर्मकर्तरि (पा०सू०३-१-६२) ॥ अजन्ताद्धातोश्च्लेश्चिण् वा स्यात्कर्मकर्त्तरि तशब्दे परे । प्राप्तविभाषेयम् । अकृत मा कटः स्वयमेव । अलावि अलविष्ट वा केदारः स्वयमेव । अच इति किम् ? अभेदि काष्ठं स्वयमेव । कर्मकर्तरीति किम् ? अकारि कटो देवदत्तेन ।

दुहश्च (पा०सू०३-१-६३) ॥ दुहश्च्लेश्चिण् वा स्यात्कर्मकर्त्तरि तशब्दे परे । अदोहि अदुग्ध वा गौः स्वयमेव । चिणभावे, "लुग्वा दुह" (पा०सू०७-३-७३) इति क्सस्य वा लुक् । पक्षे अधुक्षत । कर्मकर्तरीति किम् ? शुद्धकर्मणि चिणेव यथा स्यात् । अदोहि गौर्गोपालकेन । अप्राप्तविभाषेयम्, "न दुहस्नुनमां यक्चिणौ" (पा०सू०३-१-८९) इति चिणः प्रतिषेधात् । तत्र दुहिग्रहणं यक्प्रतिषेधार्थम् । चिण्ग्रहणन्तु स्नुनमर्थम् ॥

न रुधः (पा०सू०३-१-६४) ॥ रुधश्च्लेः कर्मकर्त्तरि चिण् न । अरुद्ध गौः स्वयमेव । शुद्धे कर्मणि तु-अरोधि गौर्गोपालकेन । रुधिर् आवरणे (रु०उ०१) इत्यस्यैवात्र ग्रहणं न तु अनो रुध कामे इत्यस्य, कर्तृस्थभावकत्वेन कर्मकर्तुरभावात् ।

तपोऽनुतापे च (पा०सू०३-१-६५) ॥ च्लेश्चिण् न स्यात् कर्मकर्त्तरि अनुतापे च । अनुतापः पश्चात्तापः, तस्य ग्रहणमकर्मकर्त्रर्थम् । तत्र हि भावकर्मणोरपि प्रतिषेधो भवति । "कर्मवत्कर्म"(पा०सू०३-१-८७) इति कर्मवद्भावातिदेशस्थलेऽपि-अतप्त तपस्तापसः, तप आर्जिजदित्यर्थः । अत्र "तपस्तपःकर्मकस्यैव" (पा०सू०३-१-८८) इति कर्मवद्भावातिदेशात्प्राप्तिः । अनुतापे-अन्वतप्त पापेन । पूर्वं यत्पापं कर्म कृतं तेन पश्चादभ्याहत इत्यर्थः । शुद्धे कर्मणि लकारः । पापेनेति कर्त्तरि तृतीया । कर्माविवक्षायां शोकार्थे वा तपो भावे लकारः । हेतौ तृतीया । यदा तु अभ्याहननार्थस्य तपेः कर्मस्थभावकस्य कर्मकर्त्ता विवक्ष्यते तदा "कर्मवत्कर्मणा" (पा०सू०३-१-८७) इत्यतिदेशादात्मनेपदम् । तदापि हेतौ तृतीया ।

चिण् भावकर्मणोः (पा०सू०३-१-६६) ॥ धातोश्च्लेश्चिण् स्यात् भावकर्मवाचिनि तशब्दे । अशायि भवता । अकारि कटस्त्वया । चिण्ग्रहणं स्पष्टार्थम्, "चिण् ते पदः" (पा०सू०३-१-६०) इत्यतस्ते इत्यस्येव चिण्ग्रहणस्याप्यनुवृत्तेः । यत्तु "दीपजन" (पा०सू०३-१-६०) इत्यत्र अन्यतरस्यांग्रहणं, तत् "न रुधः" (पा०सू०३-१-६४) इत्यत्रैव

निवृत्तम्। अन्यथा नञो वैयर्थ्यापत्तेः। न च प्रतिषेध एव इहानुवर्त्तेतेति वाच्यम्, तस्य प्राप्तिपूर्वकत्वात्, भावकर्मणोश्च केनापि चिणः प्राप्त्यभावात्। न च "श्लिषः" इति विभक्तेन योगेन विधीयमानः क्सः पुषाद्यङमिव इमं चिणमपि बाधेत, अतोऽत्र चिणेव यथा स्यात् क्सो मा भूदित्येतदर्थं पुनश्चिण्ग्रहणमिति प्रकृतसूत्रे भाष्यारूढं प्रयोजनमस्त्येवेति वाच्यम्, तस्यापि पाक्षिकत्वात्। समुदायापेक्षायां ह्येतदुक्तम्। अवयवापेक्षायां पुरस्तादपवादन्यायेन श्लिषेः क्सोऽङमेव बाधते न तु चिणमिति प्रागेवोक्तम्।

सार्वधातुके यक् (पा०सू०३-१-६७)॥ भावकर्मवाचिनि सार्वधातुके परे धातोर्यक् स्यात्। आस्यते। शय्यते त्वया। "अयङ् यि क्ङिति" (पा०सू०७-४-२२) इति शीङोऽयादेशः। क्रियते कटः।

इह कर्मणि यक् भवतीत्यस्यावकाशः शुद्धं कर्म-पच्यते ओदनः। कर्तरि शपोऽवकाशः शुद्धः कर्ता। कर्मकर्तर्युभयप्रसङ्गे—यग्विधाने कर्मकर्तर्युपसंख्यानम् तर्हि कर्तव्यम्। न कर्तव्यम्। कार्यातिदेशात्सिद्धम्। कर्मवत्कर्तरीत्यनेनैव हि यगात्मनेपदादीनि विधीयन्ते इति यगेव परः। शास्त्रातिदेशपक्षेऽपि "न दुहस्नुनमां यक्चिणौ" (पा०सू०३-१-८९) इति ज्ञापकात् कर्मकर्तरि यगेव भविष्यति।

अत्रेदमवधेयम्, भावकर्मकर्त्तारो लकारार्थाः। "लः कर्मणि च भावे चाकर्मकेभ्यः" (पा०सू०३-४-६९) इति सूत्रात्। तत्र हि चकारेण 'कर्तरि' इत्यनुकृष्यते। तच्च वाच्यार्थसमर्पकमिति पूर्वसूत्रे स्थितम्। उत्तरत्रापि "तयोरेव कृत्य"(पा०सू०३-४-७०) इत्यत्र तथैवेति सन्दंशात्प्रायपाठाच्च मध्येऽपि वाच्यसमर्पकतैवोचिता प्रधानभूतधात्वर्थाश्रयः कर्ता, फलाश्रयश्च कर्म, फलव्यापारयोश्च धातुनैवोपात्तत्वात्। आश्रयमात्रं लकारार्थः, अनन्यलभ्यस्यैव शब्दार्थत्वात्। ततश्च तिङामपि स एवार्थः, तेषां लादेशत्वात् स्थान्यर्थाभिधानसमर्थस्यैव चादेशत्वात्। विकरणास्तु द्योतकाः। तत्रापि शबादयो धात्वर्थे व्यापारे आश्रयस्य विशेषणतां द्योतयन्ति, यक्चिणौ तु फले। ननु विपरीतमेवास्तु, "कर्तरि शप्" (पा०सू०३-१-६८) इत्यादेरप्यनुशासनस्य स्वरसेन शबादय एव वाचकाः, लकारास्तु द्योतका इतीति चेत्? न, आशीर्लिङि लिटि च अदादिजुहोत्यादिषु च शबाद्यभावेऽपि तत्प्रतीतेः। यद्यपि—

क्वचित्तिङामभावेऽपि प्रतीयन्ते त्रयोऽप्यमी।

अशास्यकारिगच्छेति चिण्शप्सन्निधिमात्रतः ॥
अयोगविभरित्यादौ धातुमात्रेऽपि कर्तृधीः ।
तथाप्यासत इत्यादौ धात्वभावेऽपि कर्तृधीः ॥

तथापि तत्र परमते लुप्तस्मृतं बोधकम् । अस्माकन्तु यः शिष्यते स लुप्यमानार्थाभिधायीत्युक्ताभ्युपगमात् सर्वं सुस्थम् । तत्र कर्तृकर्मणी वदन् तिङ् तन्निष्ठां सङ्ख्यामपि प्रतिपादयतीति कर्तृकर्मणोर्द्वित्वे बहुत्वे च द्विवचनबहुवचने भवतः । भावे लस्तु असत्त्वावस्थापन्नां धात्वर्थभूतां क्रियामेव अभिधत्ते द्योतयति वेति तत्र प्रथमपुरुषैकवचनमेव भवति, न मध्यमोत्तमौ, युष्मदस्मत्सामानाधिकरण्याभावात् । नापि द्विवचनबहुवचने, द्वित्वबहुत्वयोरप्रतीतेः । एकवचनन्तु उत्सर्गः करिष्यत इति भाष्याद्भवति । अत्र बहुवचनेत्यप्युत्सर्गः, 'उष्ट्रासिका आस्यन्ते' 'हतशायिकाः शय्यन्ते' इत्यत्र भाष्ये तदभ्युपगमात् । उष्ट्राणां हि आसिकाः स्वरूपत एव विलक्षणाः, हताश्च नानाप्रकारं शेरते उत्ताना अवताना विकीर्णकेशा विस्रस्तवस्त्रा इत्यादि । तत्सादृश्यादाख्यातवाच्यस्यापि भावस्य स्वरूपगतभेदावभासाद्बहुवचनं भवत्येव । इवशब्दप्रयोगमन्तरेणापि इवार्थावगतिर्भवति, परत्र परशब्दः प्रयुक्त इति न्यायात् । तदयमर्थः—'यादृशानि हतानामनेकप्रकाराणि शयनानि तादृशानि देवदत्तादिभिः क्रियन्ते' इति । एवञ्चेह 'आसिकाः' 'शायिकाः' इति द्वितीयाबहुवचनान्तं, क्रियाविशेषणत्वेन कर्मत्वात् । न चैवं क्लीबत्वमेकवचनं च स्यादिति वाच्यम्, "स्त्रियां क्तिन्" (पा०सू०३-३-९४) इत्यधिकारात् स्त्रीत्वावधारणेन "सामान्ये नपुंसकम्" (का०वा०) इत्यस्याप्रवृत्तेः, बहुत्वावधारणेन च एकवचनाप्रवृत्तेरिति दिक् ।

केचित्तु 'कर्मण्ययं लकारः' इति मन्वाना आसिकाशायिकाशब्दौ प्रथमान्तावित्याहुः । तथाहि, आसिकाशायिकयोर्भावतया कालभावाध्वगन्तव्य इति कर्मत्वे 'गोदोहः सुप्यते' इतिवत् कर्मणि लः । उष्ट्रासिकाहतशायिकयोश्च आख्यातप्रकृत्युपस्थिते आसनशयने प्रति परिच्छेदकत्वेनान्वयः, गोदोहस्येव स्वापे । परिच्छेदकत्वं च आसिकाशायिकयोः सादृश्यद्वारकं, गोदोहस्य तु कालोपाधिनेत्यन्यदेतत् । एतच्च विवक्षान्तरे भवत्येवेति कैयटादयः ।

भाष्यकारैस्तु भावेऽपि लविधाने बहुत्वं स्वीकृतमित्युक्तम् । न चैवमाख्यातवाच्यस्य भावस्य असत्त्वावस्थापन्नतेति सिद्धान्तो भज्येतेति वाच्यम्, लिङ्गायोगस्य करणादिकारकायोगस्य चेह असत्त्वाव-

स्थात्वेन विवक्षितत्वात्। अत एव 'पचति भवति, पच्यते भवति, पश्य मृगो धावति' इत्यादौ वाक्यार्थभूतायाः क्रियायाः क्रियान्तरं प्रति कर्तृत्वकर्मत्वाभ्यामन्वयेऽपि न काचित् क्षतिः। न चैतावता घञादिसाम्यं, घञादिवाच्यो हि भावः सलिङ्गो यथायथं सकलकारकान्वितश्चेति वैषम्यस्य स्पष्टत्वात्। अत्र वैषम्ये अनुभवबलकल्प्यः शब्दशक्तिस्वभाव एव नियामकः। तदेतदुक्तम्—"कृदभिहितो भावो द्रव्यवत्प्रकाशते" इति। कृत्स्वपि तुमुनादौ न सत्त्वार्थकत्वम्। एतच्च "अव्ययकृतो भावे" इति वार्त्तिके स्फुटीभविष्यति। अनव्ययकृत्स्वपि 'शयितव्यं भवद्भिः' इत्यादौ एकत्वसंख्याया एवान्वयः, न तु द्वित्वादेरित्यादि यथानुभवं यथाकरञ्च विवेक्तव्यम्।

कर्त्तरि शप् (पा०सू०३-१-६८) ॥ कर्तृवाचिनि सार्वधातुके परे धातोः शप् स्यात्। पकारः स्वरार्थः ङित्त्वप्रतिषेधार्थश्च। शकारः सार्वधातुकार्थः "शप्श्यनोः" (पा०सू०७-१-८१) इत्यादौ विशेषणार्थश्च। पचति। पठति। कर्तृग्रहणं "कर्मवत्कर्मणा" (पा०सू०३-१-८७) इत्यत्रोपयोक्ष्यते। इह तु सार्वधातुके शप् भवतीति सामान्यविधानेऽपि न क्षतिः, भावकर्मणोर्यगादेरपवादत्वात् कर्तर्येव शपः पर्यवसानात्। न च यग्विधौ भावकर्मग्रहणं नानुवर्त्तत इति वाच्यम्, 'पचति' इत्यादौ शबादिमेव निमित्तत्वेनाश्रित्य यकः प्रसङ्गात्।

दिवादिभ्यः श्यन् (पा०सू०३-१-६९) ॥ शपोऽपवादः। दीव्यति। सीव्यति। मृग अन्वेषणे (चु०आ०३६८) इति चुरादावदन्तेष्वात्मनेपदी पठ्यते। तस्य—

पयःपारावारं परमपुरुषोऽयं मृगयते।

इत्यादि भवति। दिवादिष्वपि पाठात् 'मृग्यति' इति साधुः। 'कण्ड्वादिषु वा मृगशब्दो द्रष्टव्यः' इति हरदत्तादयः।

वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः (पा०सू०३-१-७०) ॥ एभ्यः श्यन् वा। टुभ्राशृ टुभ्लाशृ दीप्तौ (भ्वा०आ०८४९,८५०)। भ्रमु अनवस्थाने (दि०प०९९) भ्रमु चलने (भ्वा०प०८६५) द्वयोरपि ग्रहणम्। क्रमु पादविक्षेपे (भ्वा०प०४७४)। क्लमु ग्लानौ (दि०प०१०१)। त्रसी उद्वेगे (दि०प०११)। त्रुटी छेदने (तु०प०९५)। लष कान्तौ (भ्वा०उ०९१३)। इह अनवस्थानार्थो भ्रमिः क्लमित्रसी च दिवादयः। त्रुटिस्तौदादिकः। इतरे भौवादिकाः। अत उभयत्र विभाषेयम्। भ्राश्यते, भ्राशते। भ्लाश्यते, भ्लाशते। भ्राम्यति, भ्रमति। दैवादिकस्य भ्रमेः "शमामष्टानां दीर्घः श्यनि" (पा०सू०७-३-७४) इति श्यनि दीर्घः। भौवादिक-

स्य तु न भवति, अशमादित्वात् । क्लाम्यति, क्लामति । "क्रमः परस्मैपदेषु" (पा०सू०७-३-७६) इति दीर्घः । अयञ्च 'शिति' इत्यनुवृत्तेः शपि श्यनि च भवति । कौमुद्यान्तु 'क्रमो दीर्घः स्याच्छपि' इति व्याख्याय श्यनि ह्रस्व एवोदाहृतः । तदशुद्धमेव । क्लाम्यति, क्लामति । "ष्ठिवुक्लमुचमां शिति" (पा०सू०७-३-७५) इति दीर्घः । क्लमेर्दिवादिपाठः पुषादिकार्यार्थः । कौमुद्यान्तु भौवादिकस्य तु 'क्लमति' इत्युक्तं तदपाणिनीयमेव । त्रस्यति, त्रसति । त्रसेर्दिवादिपाठे फलं चिन्त्यमिति हरदत्तः । त्रुट्यति, त्रुटति । लष्यति, लषति ।

यसोऽनुपसर्गात् (पा०सू०३-१-७१) ॥ अनुपसर्गाद्यसेः श्यन् वा स्यात् । यस्यति, यसति । अनुपसर्गात्किम् ? आयस्यति । प्रयस्यति । इह नित्यं श्यन्, यसु प्रयत्ने(दि०प०१०४) इत्यस्य दैवादिकत्वात् ।

संयसश्च (पा०सू०३-१-७२) ॥ सम्पूर्वाद्यसेः श्यन्वा । संयस्यति, संयसति । इह "यसः संयसश्च" इत्येव वक्तुं युक्तम्, सोपसर्गाच्चेत् संयस एव न तु प्रयसादेः' इति नियमेनेष्टसिद्धेः ।

स्वादिभ्यः श्नुः (पा०सू०३-१-७३) ॥ स्पष्टम् । सुनोति । षिञ् बन्धने (स्वा०उ०२,क्र्या०उ०५) इत्यस्य स्वादौ क्र्यादौ च पाठात् 'सिनोति, सिनाति' इत्युभयं भवति ।

श्रुवः शृ च (पा०सू०३-१-७४) ॥ श्रुवः श्नुः प्रत्ययः स्यात्तत्सन्नियोगेन 'शृ' इत्ययमादेशश्च । शृणुतः, शृण्वन्ति ।

अक्षोऽन्यतरस्याम् (पा०सू०३-१-७५) ॥ अक्षू व्याप्तौ (भ्वा०प०६५५) भौवादिकः । अस्मात् श्नुर्वा स्यात् । अक्ष्णोति, अक्षति ।

तनूकरणे तक्षः (पा०सू०३-१-७६) ॥ श्नुर्वा स्यात् । काष्ठं तक्ष्णोति, तक्षति वा । तनूकरणे किम् ? सन्तक्षति, वाग्भिर्भर्त्सयतीत्यर्थः ।

तुदादिभ्यः शः (पा०सू०३-१-७७) ॥ तुदति । नुदति । 'तुद्-ति' नुद्-ति' इति स्थिते परत्वात्प्राप्तं गुणं नित्यत्वाच्छो बाधते ।

रुधादिभ्यः श्नम् (पा०सू०३-१-७८) ॥ एभ्यः श्नम् प्रत्ययः स्यात् । मित्त्वादन्त्यादचः परः । तक्रकौण्डिन्यन्यायेनायं शपं बाधते । शकारः "श्नान्नलोपः" (पा०सू०६-४-२३) इति विशेषणार्थः । "नान्नलोपः" इत्युच्यमाने 'यज्ञानां' 'यत्नानाम्' इत्यत्रापि स्यात् । न च "नामि" (पा०सू०६-४-३) इति दीर्घत्वे कृते "नात्" इति व्यपदेशाभावान्न भविष्यतीति वाच्यम्, एकदेशविकृतस्यानन्यत्वेन सत्यपि दीर्घे 'नात्' इति व्यपदेशसम्भवात् । किञ्च परत्वाल्लोपेनैव भाव्यम् । न च ततोऽपि परत्वात् "सुपि च' (पा०सू०७-३-१२) इति दीर्घोऽस्त्विति वाच्यम्;

"सन्निपात" (प०भा०८७) परिभाषया तस्य नाम्यप्रवृत्तेः न चैवं रामाणामित्यादौ "नामि" (पा०सू०६-४-३) इति दीर्घोऽपि न स्यादेवेति वाच्यम्, आरम्भसामर्थ्यान्नामीति दीर्घे कर्तव्ये सन्निपातपरिभाषाया अप्रवृत्तेः। "सुपि च" (पा०सू०७-३-१०२) इति दीर्घस्तु "रामाभ्याम्" इत्यादौ चरितार्थः सन्निपातपरिभाषां बाधितुं नेष्टे। यत्तु हरदत्तेनोक्तं 'कष्टाय' इति निर्देशात्सामान्यपेक्षज्ञापकाद्दीर्घो भविष्यति, एवमपि तस्य पूर्वस्माद्विधौ स्थानिवत्त्वान्नशब्द एवायमिति नलोपः स्यादेवेति। तच्चिन्त्यम्, सामान्यापेक्षेण हि ज्ञापकेन परिभाषायाः काचित्की अप्रवृत्तिरिति लक्ष्यानुरोधात्सिध्यतु नाम, औत्सर्गिकी तत्प्रवृत्तिः किमर्थमिह त्याज्या। 'यत्नानाम्' इत्यादिलक्ष्यसिद्ध्यर्थमेवेति चेत्? सत्यपि दीर्घे लक्ष्यं न सिध्यतीति समनन्तरमेवोक्तत्वात् स्वयमपि लक्ष्यासिद्धेर्वक्ष्यमाणत्वाच्च। किञ्च "पूर्वस्माद्विधौ" इति अतिस्थवीयः, तस्य हि पूर्वस्मान्निमित्तत्वेनाश्रितादित्यर्थः स्थितः। यच्चेहानादिष्टादचः पूर्वं नकारव्यञ्जनमात्रं न तन्निमित्तत्वेनाश्रितम्, यच्च निमित्तं नकाराकारसंघातः नासावनादिष्टादचः पूर्वं इति यत्किञ्चिदेतत्। तस्मात्प्रागुक्तविधया एकदेशविकृतस्यानन्यत्वात्प्राप्तिः। दीर्घात्प्रागेव वेति विशेषणार्थः शकारः। न चैवमपि 'विश्नानां' 'प्रश्नानाम्' इत्यत्रातिप्रसङ्गः, अनर्थकत्वात्। न च विकरणेऽप्येवमेवेति वाच्यम्, एकदेशिमते तस्य वाचकत्वात्। मुख्यमतेऽपि द्योत्येनार्थेनार्थवत्त्वात्। अत एव प्रत्ययसंज्ञाया अन्वर्थत्वेऽपि श्नमि तत्प्रवृत्तौ "लशकु" (पा०सू० १-३-८) इति शस्येत्संज्ञा सिध्यति। किञ्च "लक्षणप्रतिपदोक्त" (प०भा०११५) परिभाषयाऽपि 'विश्नानाम्' इत्यादौ नातिप्रसङ्गः। तस्मात् "श्नान्नलोपः" पा०सू०६-४-२३) इति विशेषणार्थः श्नमः शकार इति स्थितम्। न चार्धधातुकसंज्ञानिवृत्त्यर्थोऽपि सोऽस्तु, सत्यां हि तस्यां अनक्ति, भनक्ति, अतो लोपः स्यात्। रुणद्धि, भिनत्ति, गुणः स्यात्। हिनस्ति, तृणेढि, इडागमः स्यात्। "नेड् वशि" (पा०सू०७-२-८) इति तु नेह प्रवर्त्तते, अकृत्वादिति चेत्? न, सत्यप्यार्द्धधातुकत्वे क्षत्यभावात्। न च लोपो गुण इड् वेति त्रितयं स्यादित्युक्तमिति चेत्? न, त्रितयस्याप्यागमत्वात्, श्नमः पूर्वभागस्य चानङ्गत्वात्। तथाहि, "यस्मात्प्रत्ययविधिः" (पा०सू०१-४-१३) इत्यस्यायमर्थः-प्रत्यये विधीयमाने यत्पञ्चम्या निर्दिष्टं धातोः प्रातिपदिकादित्यादि तदादि तस्मिन्परतोऽङ्गमिति। इह तु यत्पञ्चमीनिर्दिष्टं रुधादिभ्यो धातुभ्य इति, न तस्मात् प्रत्ययः परः, यस्माच्च पूर्वभागात्प्रत्ययः परः, नासौ तस्मि-

न्विधीयमाने पञ्चम्या निर्दिष्ट इति दिक् ।

रुणद्धि । भिनत्ति ।

तनादिकृञ्भ्य उः (पा०सू०३-१-७९) ॥ तनादिभ्यः कृञश्च उप्रत्ययः स्यात् । तनोति । करोति । कृञ्ग्रहणं भाष्ये प्रत्याख्यातं, तनादित्वादेव सिद्धेः । ननु तनादिकार्यापेक्षनियमार्थं तदस्तु । तेन "तनादिभ्यस्तथासोः" (पा०सू०२-४-७९) इति वैकल्पिकस्य सिज्लुकोऽप्रवृत्तौ 'अकृत' 'अकृथाः' इत्यत्र द्वैरूप्यं न भवतीति चेत् ? मैवम्, सत्यपि लुग्विकल्पे तदभावे "ह्रस्वादङ्गात्" (पा०सू०८-२-२७) इति लोपेनेष्टसिद्धेः । न च विकल्पेन नित्यस्य बाधः, विकल्पं प्रति नित्यस्यासिद्धत्वात् । न च तनादिपाठसामर्थ्यादपवादो वचनप्रामाण्यादिति न्यायेनासिद्धत्वबाधनाद्विकल्पेन नित्यस्य बाधः, तनादिपाठस्य विकरणविधौ चरितार्थत्वात् । विकल्पोऽपि 'अतथाः'इत्यादौ चरितार्थः। प्रत्युत क्रियमाणे कृञ्ग्रहणे तनादिषु कृञः पाठस्य अन्यार्थत्वात् "येननाप्राप्ति" (प०भा०५९) न्यायेन विकल्पो नित्यविधिं बाधेत । कृञ्ग्रहणन्तु विकरणविधौ तनादिषु पाठश्चरितार्थो मा भूदित्येवमर्थं स्यात् । तस्मात्कृञ्ग्रहणपरित्याग एवोचितः ॥

धिन्विकृण्व्योर च (पा०सू०३-१-८०) ॥ धिवि प्रीणने (भ्वा०प० ५९४) कृवि हिंसाकरणयोः (भ्वा०प०५९९) अनयोरकारोऽन्तादेशः स्यादुप्रत्ययश्च । शपोऽपवादः । "अतो लोपः" (पा०सू०६-४-४८) । तस्य स्थानिवद्भावाल्लघूपधगुणो न । धिनोति । कृणोति । नुमनुषक्तयोर्ग्रहणं नुम्विधिरुपदेशावस्थायामेव प्रवर्त्तत इति ज्ञापनार्थम् । तेन नुम्विधावुपदेशिवद्वचनं प्रत्ययसिद्ध्यर्थमिति वचनं न कर्तव्यं भ‌वति । सिचस्तालेश्चेकार उच्चारणार्थ इति पक्षे नुम्विधौ धातुग्रहणमपि न कर्तव्यं भवति, तज्ज्ञाप्यस्यानेनैव ज्ञापनात् ।

क्र्यादिभ्यः श्ना (पा०सू०३-१-८१) ॥ स्पष्टम् । क्रीणाति । प्रीणाति । स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च (पा०सू०३-१-८२)॥ आद्याश्चत्वारः सौत्राः । स्कुञ् आप्रवणे (क्र्या०उ०६)। एभ्यः श्ना स्यात् श्नुश्च । स्तभ्नाति, स्तभ्नोति । हौ शानच्—स्तभान, स्तभ्नुहि । स्तुभ्नाति, स्तुभ्नोति । स्कभ्नाति, स्कभ्नोति । स्कुभ्नाति, स्कुभ्नोति । स्कुनाति, स्कुनोते । उदित्करणसामर्थ्यात्सौत्राणामपि धातूनां सार्थत्वं, न त्वेतद्विकरणमात्रविषयत्वम् ।

हलः श्नः शानज्झौ (पा०सू०३-१-८३) ॥ हलः परस्य श्नाप्रत्ययस्य शानच् स्याद्धौ परे । पुषाण । मुषाण । लोट्, सिप्, तस्य हिः ।

"क्र्यादिभ्यः श्ना" (पा०सू०३-१-८१)। तस्य शानच्, चित्त्वादन्तोदात्तः। "सन्निपात" (प०भा०८७) परिभाषाया अनित्यत्वाद्धेर्लुक्। हलः किम्? क्रीणीहि। हौ किम्? पुष्णाति। 'श्नः' इति स्थानिनिर्देश आदेशत्वलाभाय। इतरथा हि प्रत्ययान्तरमेवेदं स्यात्। ननु तथैवास्तु को दोष इति चेत्? न, 'पच' 'पठ' इत्यादावपि शपं बाधित्वा शानचप्रसङ्गात्। न च "क्र्यादिभ्यः" (पा०सू०३-१८७) इति अनुवर्त्तत इति वाच्यम्, 'स्तभान' 'स्तुभान' इत्यादिचतुर्णामसिद्ध्यापत्तेः। न च स्तम्भ्वादयोऽप्यनुवर्तयितुं शक्याः, विशेषविहितेन शानचा श्न इव श्नोरपि बाधे 'स्तभ्नुहि' इत्यादेरसिद्धिप्रसङ्गात्। न च 'श्नुश्च' इत्यप्यनुवर्त्यम्, क्र्यादेरपि श्नुप्रसङ्गात्। न च स्तम्भ्वादिभ्य एव श्नुः, शानच् तु तेभ्यः क्र्यादिभ्यश्चेत्यत्र प्रमाणमस्ति। तस्माद्यथान्यासमेवास्तु। शानचः शित्करणे प्रयोजनं चिन्त्यम्, स्थानिवद्भावेनैव सिद्धेरिति हरदत्तः।

अत्रेयं चिन्ता, अनुबन्धकार्येऽपि क्वचिदनल्विधाविति निषेधः प्रवर्त्तत इति ज्ञापनार्थमिदम्। तेन वार्त्तिकमते 'ब्रूतात्' इत्यत्र ईण्न। भाष्यमते तु 'भविषीष्ट' इत्यत्र ङित्त्वं नित्यं न भवति। एतच्च "क्ङिति च" (पा०सू०१-१-५) इति सूत्रे स्फुटीकृतमस्माभिः।

छन्दसि शायजपि (पा०सू०३-१-८४) ॥ अपिशब्दाच्छानच् हौ अहौ च। गृभाय जिह्वया मधु। बधान देवसावितः। "हृग्रहोर्भश्छन्दसि" (का०वा०) इति गृह्णातेर्हकारस्य भकारः। "अनिदिताम्" (पा० सू०६-४-२४) इति बध्नातेर्नलोपः। यो अस्कभायदुत्तरम्। अस्कभ्नादित्यर्थः।

व्यत्ययो बहुलम् (पा०सू०३-१-८५)॥ विकरणाः प्रक्रान्ताः, तेषां छन्दसि बहुलं व्यत्ययः स्यात्। व्यतिगमनं व्यत्ययः। व्यतिपूर्वादिणो (अ०प०३५) भावे एरच्। क्वचिदन्योन्यविषयावगाहनम्। क्वचित् द्वौ विकरणौ। क्वचित् त्रयः। आण्डा शुष्णस्य भेदति। शुष्णस्याण्डानि भेदाति। 'भिनत्ति' इति प्राप्ते। न ह्यस्या अपरञ्चन जरसा मरते पतिः। 'म्रियते' इति प्राप्ते।

जीवचामरवासाधो व्याघ्रमाजीवमामरः।

इत्यपि पुराणादौ छान्दसदर्शनात्समाधेयम्। इन्द्रो वस्तेन नेषतु। नयतेर्लोटि तिपि शप्सिपौ द्वौ विकरणौ। इन्द्रेण युजा तरुषेम वृत्रम्। 'तरेम' इत्यर्थः। तरतेर्विध्यादौ लिङ्, मस्, उः, सिप्, शप् इति त्रयो विकरणाः। धातोर्गुणः। तरुष् मस् इति स्थिते "नित्यङ्

ङितः" (पा०सू०३-४-११) इति सलोपः। यासुट्। "अतो येयः" (पा० सू०७-२-८०)। यलोपः।"आद् गुणः"(पा०सू०६-१-८७)। बहुलग्रहणं सर्वविधिव्यभिचारार्थम्। तथा च भाष्यम्—

सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन ॥

सुपां व्यत्ययः—युक्तामातासीद् धुरि दक्षिणायाः। दक्षिणस्याम् इति प्राप्ते। तिङां—चषालं ये अश्वयूपाय तक्षति। 'तक्षन्ति, इति प्राप्ते। लादेशव्यङ्ग्यः क्रियासाधनविशेषरूपः स्वार्थपरार्थत्वादिश्चोपग्रहशब्दस्य वाच्यः। यथोक्तम्—

य आत्मनेपदाद्भेदः क्वचिदर्थस्य गम्यते।
अन्यतश्चापि लादेशान् मन्यन्ते तमुपग्रहम् ॥ इति।

आत्मनेपदादिति लादेशादिति च हेतौ पञ्चमी। इह तु तत्प्रतीतिनिमित्ते परस्मैपदे आत्मनेपदे च उपग्रहशब्दो लक्षणया वर्तते। ब्रह्मचारिणमिच्छते। 'इच्छति' इति प्राप्ते। प्रतीपमन्य ऊर्मिर्युध्यति। 'युध्यते' इति प्राप्ते। मधोस्तृप्ता इवासते। मधुन इति प्राप्ते। भाषायान्तु यद्यप्यर्द्धर्चादित्वादुभयलिङ्गो मधुशब्दोऽस्ति तथापि अर्थविशेष एव। तथा—

मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः।
अर्द्धर्चादिगणे पाठात् पुन्नपुंसकयोर्मधुः ॥

इति शाश्वतकोशात्। अमृते तु नपुंसक एव। अत एव व्यत्ययोदाहरणं दत्तम्। माघस्तु—

सरसमकरन्दनिर्भरासु प्रसवविभूतिषु विरुधां विरक्तः।
ध्रुवममृतपनामवाञ्छयासामधरमधुं मधुपस्तवाजिहीते ॥

इत्यत्रामृतवाचकमधुशब्दं पुल्लिङ्गं प्रयुञ्जानश्चिन्त्यः, शाश्वतकोशात्। नरः पुरुषः। अधासवीरैर्दशभिर्वियूयाः। 'वियूयात्' इति प्राप्ते। यु मिश्रणे (अ०पा०२३) विपूर्वः आशिषि लिङ्। कालवाची प्रत्ययः कालः। श्वोऽग्नीनाधास्यमानेन। लुटो विषये लृट्। हल्—त्रिष्टुभौजः शुफितमुग्रवीरम्। शुभ शुम्भ शोभार्थे (तु०प०४१,४२) भकारस्य फकारः आश्वलायनसूत्रे। तैत्तिरीये भकार एव पठ्यत इति हरदत्तः। वस्तुतस्तु आश्वलायनसूत्रेऽपि भकार एव पठ्यते। हल्व्यत्ययोदाहरणन्तु सुहितमिति प्राप्त इति भाष्यानुरोधेन स्पष्टम्। अच्—उपगायन्तु मां पत्नयो गर्भिण्यः। दीर्घस्य ह्रस्वः स्वरव्यत्ययः"परादिश्छन्दसि बहुलम्" (पा०सू०६-२१-९९) इत्यत्र वक्ष्यते। कर्तृशब्दः कारकमा

त्रस्योपलक्षणं तद्वाचिनीनां विभक्तीनां व्यत्यय इति हरदत्तः। एवन्तु सुप्तिङ् इत्येव गतार्थता स्यात्, तस्मात्कारकवाचिनां कृत्तद्धितादीनामपि व्यत्यय उदाहार्यः। तथा च "कर्मण्यण्" (पा०सू०३-२-१) सूत्रे भाष्यम्—अन्नादायेति च कृतां व्यत्ययश्छन्दसीति। तच्च तत्रैवस्फुटीकरिष्यामः। यङिति प्रत्याहारः यको यशब्दादारभ्य "लिङ्याशिष्यङ्" (पा०सू० ३-१-८६) इति ङकारेण। तेषां व्यत्ययः प्रागेवोदाहृतः। एवं सुप्तिङ्प्रभृतीनां व्यत्ययं शास्त्रकृत्पाणिनिरिच्छति। स च बाहुलकेन सिध्यति। बहूनर्थान् लात्यादत्त इति बहुलं तस्य भावो बाहुलकम्। मनोज्ञादित्वाद् वुञ्।

लिङ्याशिष्यङ् (पा०सू० ३-१-८६)॥ छन्दसि धातोरङ् प्रत्ययः स्यात् आशिषि लिङि परे। स्थागागमिवचिविदिशकिरुहिष्वेवायमङ् प्रायेण दृश्यते। उपस्थेयं वृषभन्तुग्रियाणाम्। उपपूर्वात्तिष्ठतेराशिषि लिङ् मिपोऽम्, यासुट्, "छन्दस्युभयथा" (पा०सू०६-४-८६) इति सार्वधातुकसंज्ञाया अपि सत्त्वात् "लिङः सलोपोऽनन्त्यस्य" (पा०सू० ७-२-७१) इति सलोपः। अङि "आतो लोपः" (पा०सू०६-४-६४) "अतो येयः"(क०सू०७-२-८०)। सत्यमुपगेयम्। गमेम जानतो गृहान्। मन्त्रं वोचेमाग्नये। "वच उम्" (पा०सू०७-४-२०) विदेयमेनां मनासि प्रविष्टाम। व्रतं चरिष्यामि तच्छकेयम्। अस्तयन्तीमारुहेमास्वस्तये।

दृशेरग् वक्तव्यः (का०वा०)। पितरञ्च दृशेयं मातरञ्च। अङि तु सति "ऋदृशोऽङि" (पा०सू०७-४-१६) इति गुणः स्यात्। अथ कथं 'उपस्थेयाम शरणं बृहन्त' इति? स्थेमेति हि प्राप्नोति।

अत्र भाष्यम्—सार्वधातुकत्वाल्लिङः सलोप आर्द्धधातुकत्वादेत्वमिति। "एर्लिङि" (पा०सू०६-४-६७) इतिसूत्रेणेति भावः। अङ् चात्र न कार्यः, बाहुलकात्।

इति श्रीशब्दकौस्तुभे तृतीयाध्यायस्य प्रथमे पादे चतुर्थमाह्निकम्।

कर्मवत्कर्मणा तुल्यक्रियः (पा०सू०३-१-८७)॥ कर्मशब्देन स्वनिष्ठा क्रिया लक्ष्यते। कर्मस्थया क्रियया तुल्यक्रियो लकारवाच्यः कर्त्ता कर्मवत् स्यात्। "व्यत्ययो बहुलंल्लिङ्याशिष्यङ्" (पा०सू०३-१-८५,८६) इति छिलकारको निर्देशः। लुप्तनिर्दिष्टो वा लकारः। लोपस्तु "संयोगान्तस्य" (पा०सू०८-२-२३) इति "हलो यमाम्" (पा०सू०८-४-६४) इति वा। तच्च लग्रहणमिहानुवृत्तं षष्ठ्या विपरिणम्यते, लुप्तषष्ठीकं वा, षष्ठ्यर्थश्च वाच्यत्वम्। 'कर्त्तरि शप्' (पा०सू०३-१-६८) इति सूत्रात्कर्तृग्रहणमनुवृत्तं प्रथमया विपरिण-

ष्यते। तेनाभिमतार्थलाभः। यगात्मनेपदचिण्चिण्वद्भावाः प्रयोजनम्। भिद्यते काष्ठं स्वयमेव। अभेदि काष्ठं स्वयमेव। कारिष्यते कटः स्वयमेव। आत्मनेपदस्य त्रीण्यपि इमान्युदाहरणानि। यक्चिण्चिण्वद्भावानां तु क्रमेणेति विवेकः।

निवृत्तप्रेषणं कर्म स्वक्रियावयवे स्थितम्।
निवर्त्तमाने कर्मत्वे स्वे कर्तृत्वेऽवतिष्ठते॥

अस्याञ्चावस्थायामकर्मकत्वात् कर्त्तरि भावे च लकाराः। तत्र यदा कर्तरि तदा शुद्धे कर्त्तरीव रूपेषु प्राप्तेषु पूर्वावस्थायां भिदेः कर्मीभूते काष्ठे यादृशी क्रिया द्विधाभवनरूपा, करोतेः कर्मणि च कटे उत्पत्तिरूपा, तथा तुल्यक्रियोऽयं भिदिकृञोः कर्त्ता लकारवाच्यश्चेत्यतिदेशाद्यगादिचतुष्टयप्रवृत्तिः। यथा निवृत्तप्रेषणस्याकर्मकत्वं, यथा च क्रियायाः क्वचित्कर्मस्थत्वं, क्वचिन्न, तथा "णेरणौ" (पा०सू०१-३-६७) इति सूत्रे व्युत्पादितम्। कर्मणेति किम्? करणाधिकरणाभ्यां तुल्यक्रिये मा भूत्। साध्वसिश्छिनत्ति। साधु स्थाली पचति। नन्विह करणाधिकरणत्वावस्थायामसिस्थाल्योर्व्यापारो वस्तुतः सन्नपि धातुना नोपादीयत इति चेत्? किं ततः? नह्यस्मिन् सूत्रे सादृश्यप्रतियोगिभूतायाः क्रियाया धातूपात्तत्वं शब्देनाश्रितं, येन कर्मग्रहणं विनाऽप्यतिप्रसङ्गो न भवेत्। किञ्च कर्तृस्थक्रिया अप्यस्यैव व्यावर्त्या। गच्छति ग्रामः स्वयमेव, आरोहति हस्ती स्वयमेवेति।

अधिगच्छति शास्त्रार्थः स्मरति श्रद्धाति च। इत्यादि।

नन्वेवं करोत्यर्थस्य यत्नस्यापि ज्ञानेच्छादिवत्कर्तृस्थत्वात् कारिष्यते कटः स्वयमेवेति कथमुदाहृतमिति चेत्? न, करोतेरुत्पादनार्थत्वस्य प्रागेव वर्णितत्वात्। लकारवाच्यः किम्? भावे लकारोत्पत्तौ मा भूत्, भिद्यते कुसूलेन। इह सत्यतिदेशे कुसूलाद् द्वितीया स्यात्। किञ्च लकारवाच्यत्वविशेषणाभावे कृत्याः खलर्थाश्च अस्मिन् कर्तरि स्युः-भेत्तव्यः कुसूलः स्वयमेवेति। ईषद्भेदः कुसूलः स्वयमेवेति। इष्यते तु भाव एव-भेत्तव्यं कुसूलेन कुसूलस्य वा। "कृत्यानां कर्त्तरि वा" (पा०सू०२-३-७१) इति वा षष्ठी। ईषद्भेदं कुसूलेन। यत्त्विह वार्त्तिके "कृत्यक्तखलर्थेषु प्रतिषेधः" इत्युक्तम्, तत्र क्तग्रहणमविवक्षितम्, अन्यत्र सह पाठात्त्विह पठितम्। भवत्येव हि एभ्योऽकर्मकत्वात "गत्यर्थाकर्मक" (पा०सू०३-४-७२) इति सूत्रेण कर्त्तरि क्तः। तथा च "सिनोतेर्ग्रासकर्मकर्तृकस्य" (का०वा०) इति निष्ठानत्वे "सिनो ग्रासः स्वयमेव" इति कर्तरि क्त उदाहरिष्यते।

अन्ये त्वाहुः-क्तग्रहणं विवक्षितमेव, 'गवा दुग्धं पय' इत्युदाहरणसम्भवात्। अत्र हि गोः कर्मकर्तृत्वात् तत्र कर्मवदतिदेशे सति क्तः स्यात्। नह्यत्र सिद्धान्ते "गत्यर्थाकर्मक" (पा०सू०३-४-७२) इत्येतत्प्रवर्त्तते, पयोरूपेण कर्मणा सकर्मकत्वात्। न चैवं सकर्मकत्वादेव कर्मवदित्यतिदेशो न भविष्यतीति वाच्यम, दुहिपच्योर्बहुलं सकर्मकयोरिति प्रतिप्रसवात। न च बहुलग्रहणादेव प्रवृत्तिः, तस्य भाष्ये प्रत्याख्यातत्वादिति दिक्।

वतिग्रहणन्तु शक्यमकर्तुम्। तथाहि, लकारवाच्यस्य कर्तुः कर्मसंज्ञैवास्तु। न च कर्मसंज्ञया कर्तृसंज्ञाया बाधः, एकसंज्ञाधिकारादन्यत्र संज्ञानां समावेशात्। न चैवं सकर्मकत्वाभावे लो न स्यादिति वाच्यम्, आनुपूर्व्या सिद्धत्वात। कर्मसंज्ञा हि लकारोत्पत्तिं प्रतीक्षते, लकारवाच्यस्यैव कर्तुस्तद्विधानात। ततः प्राक् चाकर्मकत्वानपायेन "भावे चाकर्मकेभ्य"(पा०सू०प०३-४-६१)इति भावे कर्तरि च लविधेरप्रत्यूहत्वात्। नन्वेवमपि यगात्मनेपदे न स्यातां, शुद्धयोः कर्मकर्त्रोः सावकाशयोर्यक्शपोः परत्वात् शप्प्रसङ्गात, "भावकर्मणोः" (पा० सू०१-३-१३) इत्यात्मनेपदस्य "शेषात्कर्तरि" (पा०सू०१-३-७८) इति परस्मैपदस्य च विप्रतिषेधेन परत्वात्परस्मैपदप्रसङ्गाच्चेति चेत्?न, भावकर्मणोर्विहितेन यका अपवादभूतेन आक्रान्तविषयं परिहृत्य सार्वधातुके शबिति उत्सर्गस्य प्रवृत्तिसम्भवात कर्त्तरिशबिति सूत्रे कर्तृग्रहणमतिरिच्यते। तस्यैतत्फलं—"कर्तैव यः कर्ता तत्र शबादयो यथा स्युः कर्मकर्त्तरि मा भूवन्" इति। नन्वस्मिन् हरदत्तपक्षे "न दुह" (पा०सू०३-१-८९) इत्यादिना यकि निषिद्धे शप् न स्यात। तथा च लिङ्लिटोरिव निर्विकरणप्रयोगापत्तिरिति चेत्? एवं तर्हि कर्त्तरीति योगो विभज्यते, भावकर्मणोरित्यत्रापि भावे, कर्मणि चेति। ततः कर्मणीत्यनुवर्त्य कर्मणि कर्त्तरि यक् भवति शपोऽपवादः। न दुहेत्यादौ अपवादाभावात्पुनरुत्सर्गस्य स्थितिः। एतच्च व्याख्यानं यग्विधावेव भाष्ये स्थितम्। एवन्तावद्यक् सिद्धः, न दुहस्नुनमामिति लिङ्गाच्च। तथा "कर्त्तरि कर्म" (पा०सू०१-३-१४) इत्यतः "कर्त्तरि" इत्यनुवर्त्य "कर्तैवः यः कर्ता तत्र परस्मैपदं, न तु कर्मकर्त्तरि"इति व्याख्यानादात्मनेपदम्। तस्माद्वत्करणे त्यक्तेऽपि सर्वमिष्टं सिद्धयतीति स्थितम्। क्रियमाणे तु वत्करणे अतिदेशोऽयमिति स्पष्टमेव। स च षोढा-रूपनिमित्ततादात्म्यव्यपदेशशास्त्रकार्यातिदेशभेदादिति "स्थानिवत्" (पा०सू०१-१-५६) सूत्रे व्युत्पादितम्। इह तु आदितस्त्रयाणामसम्भ-

वः । व्यपदेशातिदेशस्तु संज्ञापक्षान्न भिद्यते । तत्र वत्करणं व्यर्थम् । अतो द्वावेव शिष्येते । तत्रापि शास्त्रातिदेशे यगात्मनेपदसिद्ध्यर्थं पूर्वोकयत्न आस्थेय इति क्लिष्टता । प्रधानं च कार्यं तदर्थत्वादतिदेशान्तराणाम् । अतः कार्यातिदेश एवायम् । न चास्मिन्पक्षे द्वितीयाऽप्यतिदिश्येत, तथा च भिद्यते कुसूलेनेति भावे लकारे कर्तरि द्वितीया स्यादिति वाच्यम्, "लवाच्यस्यैव कर्तुः कर्मवदतिदेशः" इत्युक्तत्वात् । न चैवमपि 'भिद्यते कुसूलः' इत्यत्र दोषापत्तिः, अभिहितत्वेन द्वितीयाया अप्रवृत्तेः । नन्विह अनभिहिताधिकारो नास्तीति चेत् ? सत्यम् । तथापि वत्करणसामर्थ्यात् यथाऽनभिहिते कर्मणि प्रत्ययः तथैवानभिहिते कर्तर्यपि लभ्येत, तेन अभिधानमस्तीत्युक्तमेव । ननु निवृत्तप्रेषणा लुनातिभिनत्त्यादयोऽकर्मकाः द्विधा भवतीतिवत्, तत्कथं तत्कर्तुः कर्मणा तुल्यक्रियत्वम् इति चेत् ? न, नह्यस्मिन्प्रयोगे यत्कर्म तेन तुल्यक्रियतां ब्रूमः, किं तर्हि प्रयोगान्तरे यत्कर्म तेन । नन्वेवं 'पचत्योदनं देवदत्तः' 'राध्यत्योदनः स्वयमेव' इत्यादावतिप्रसङ्ग इति चेत् ? अत्र वार्तिकम्—

कर्मवत्कर्मणा तुल्यक्रियः कर्ता बहुलं ... 

कर्मवद्दृष्टश्चेत्समानधातौ (का०वा०) ॥ इति । न्यायसिद्धं चेदं, धातोरिति ह्यनुवर्तते कर्तृकर्मणी च धातोरन्यत्र न सम्भवत इति सामर्थ्यादेव सिद्धे तदनुवृत्तिरेकत्वविवक्षार्था । यस्मिन्नेव धातौ यत्कर्म तेन तुल्यक्रियस्तस्यैव कर्तेति । तेन धातुभेदे न भवति ।

स्यादेतत्, एकस्यापि रूपभेदेन कर्तृत्वं कर्मत्वं च दृश्यते, 'आत्मानमात्मना वेत्सि' इति यथा । एवं च 'ओदनः पच्यते' इत्यादावपि प्राकृते कर्मण्येव लकारोऽस्तु तत्किं निवृत्तप्रेषणत्वाश्रयणेन, किञ्च कर्मवदित्यतिदेशेन ? न चैवं 'भिद्यते कुसूलेन' इति भावे लो न स्यादिति वाच्यम्, इष्टापत्तेः । कर्मण्येव हि सोऽस्तु ।

अत्राहुः, एवं सति "न दुहस्नुनमाम्" (पा०सू०३-१-८९) इत्यादिना यक्चिणोः प्रतिषेधस्य विषयविभागो न लभ्येत । अपि च 'नमते दण्डः' 'कारयते अचीकरत वा कटः' इत्यादौ यक्चिणोः प्रतिषिद्धयोरपि शप्चङौ न स्याताम्, अकर्तृत्वात् । किं च 'पचत्योदनः' इत्यपि प्रयोगः प्रसज्येत । तस्मान्निवृत्तप्रेषणतामाश्रित्यातिदेशसूत्रमारब्धव्यमेवेति ।

करणेन तुल्यक्रियः कर्ता बहुलं कर्मवदिति वक्तव्यम् (का०वा०) ॥ परिवारयति कण्टकैर्वृक्षम् । परिवारयन्ते कण्टका वृक्षम् । अत्रात्मनेपदं सिध्यति । न च "णिचश्च" (पा०सू०१-३-७४) इत्यनेन तत्सिद्धिः,

क्रियाफलस्य कर्तृगामित्वे सत्येव तत्प्रवृत्तेः। इह तु तदभावेऽप्यात्मनेपदस्येष्यमाणत्वात्। बहुलग्रहणान्नेह—'साध्वसिश्छिनत्ति'।

सकर्मकाणां प्रतिषेधो वक्तव्यः (का०वा०)॥ अन्योन्यमाश्लिष्यतः। अन्योन्यं स्पृशतः। एतच्च न्यायासिद्धम्। तथाहि, कर्मस्थया क्रियया तुल्या क्रिया यस्य कर्तुरित्युक्ते सन्निधानादिदं गम्यते—यत्क्रियावेशादसौ कर्ता सैव चेत्कर्मत्वोपयोगिनीति। न चैतदिहास्ति, स्वयमनाश्लिष्यतोऽपि परेणाश्लिष्यमाणस्य कर्मत्वसम्भवात्। परसमवेतसंयोगाख्यफलानुकूलव्यापारयोश्चलनात्मकयोरेकधातूपात्तयोरपि स्वरूपेणात्र भेदात्। एतेन 'भिद्यमानः कुसूलः पात्राणि भिनत्ति' इत्यपि व्याख्यातम्। द्विधाभवनस्य दैवगत्या कुसूलनिष्ठत्वेऽपि पात्रनिष्ठकर्मतायामप्रयोजकत्वात्। स्वयमभिद्यमानोऽपि हि कुसूलः उपरि पतन् पात्राणि भिनत्त्येव। नन्वेवमपि पचिरुधादीनां द्विकर्मकाणामेकस्य कर्मणः कर्तृत्वेऽप्यपरेण सकर्मकत्वावस्थायां कर्मवद्भावः प्राप्तः, तन्निषेद्धुं सकर्मकाणां प्रतिषेधवचनं कर्तव्यमेवेति चेत्? योगविभागात्सिद्धम्। तथाहि,

तपेः॥ तपेरेव सकर्मकस्य न त्वन्यस्य। ततः, तपः कर्मकस्यैव। तपेरित्यनुवर्तते। यद्वा वार्तिके योगविभागः करिष्यते—

दुहिपच्योर्बहुलं सकर्मकयोः (का०वा०)॥ अत्र "दुहिपच्योः सकर्मकयोः" इत्येकं वाक्यं नियमार्थं–'दुहिपच्योरेव न त्वन्येषाम्' इति। दुग्धे गौः पयः। तस्मादुदुम्बरः सलोहितं फलं पच्यते॥ गौरुदुम्बरश्चात्र कर्मकर्ता। "अकथितं च" (पा०सू-७-४-५१) इति सूत्रे दुह्यादिपरिगणने पचिरपि बोध्य इत्युक्तं प्राक्। तत्रेदं वार्तिकमुपष्टम्भकमित्यवधेयम्।

ओदनं पचतीत्यादावतिप्रसङ्गनिवारणाय "बहुलम्" इति द्वितीयं वाक्यम। तच्च प्रत्याख्यातं भाष्ये। दुहिपच्योरिति हि कर्मकर्तृविषयकम्, कर्मस्थया क्रियया तुल्यक्रिय एव विधायकं नियामकं वा? उभयथाऽपि 'ओदनं पचति' इत्यादौ प्रसङ्ग एव नास्तीति। न च कर्मकर्तर्यैव परस्मैपदार्थं बहुलवचनं, तस्यानिष्टत्वादिति दिक्।

सृजियुज्योः श्यंस्तु (का०वा)॥ अनयोः सकर्मकयोः कर्ता बहुलं कर्मवद्भवतीति वक्तव्यम। यगपवादश्च श्यन्।

सृजेः श्रद्धोपपन्ने कर्तर्येवेति वक्तव्यम (का०वा०)॥ सृज्यते स्रजं भक्तः, श्रद्धया निष्पादयतीत्यर्थः। असर्जि, श्रद्धया निष्पादितवान्। युज्यते ब्रह्मचारी योगम। श्यनि सति प्रकृतेराद्युदात्तत्वं भवति। यांक

तु लसार्वधातुकानुदात्तत्वे यक एवोदात्तत्वं स्यात् । कौमुद्यां तु "श्रद्धावत्कर्तृकात् सृजेर्यक्चिणौ कर्तरि इति केचित्" इत्युक्तम् । तत्र यगित्यशुद्धम्, आत्मनेपदानुक्तेश्च न्यूनतेति दिक् ।

भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात् (का०वा०) ॥ भूषावाचिनां किरादीनां सन्नन्तानां च यक्चिणौ न भवत इति वक्तव्यमित्यर्थः । अलंकुरुते कन्या स्वयमेव । अलमकृत । भूषाफलस्य शोभाख्यस्य कर्मणि दर्शनात् कर्मस्था भूषा । ण्यन्तानां तु भूषार्थानां वक्ष्यमाणेनापि यक्चिणोः प्रतिषेधेन सिद्धत्वान्नेह मुख्योदाहरणता—भूषयते कन्या स्वयमेव । अबुभूषत कन्या स्वयमेव । किरादि—अवकिरते हस्ती स्वयमेव । अवाकीर्ष्ट हस्तिनं कश्चित् । पांस्वादिनाऽवकिरति । तत्र सौकर्यात् हस्ती कर्तृत्वेन विवक्ष्यते । गिरते । अगीर्ष्ट । किरादिस्तुदाद्यन्तर्गणः । सन्—चिकीर्षते कटः स्वयमेव । अचिकीर्षिष्ट । इहेच्छायाः कर्तृस्थत्वेऽपि करोतिक्रियापेक्षं कर्मस्थक्रियत्वम् ।

तपस्तपःकर्मकस्यैव (पा०सू०३-१-८८) ॥ तप सन्तापे (भ्वा०प० १०१०) । अस्य कर्त्ता कर्मवत्स्यात् स च तपःकर्मकस्यैव नान्यकर्मकस्य । क्रियाभेदाद्विध्यर्थमेतदिति वृत्तिः । तथाहि, उपवासादीनि तपांसि तापसं तपन्ति, दुःखयन्तीत्यर्थः । तथा च तापसस्य कर्मत्वे तपेर्दुःखनमर्थः । कर्तृत्वे तु अर्जनमर्थः । तापसस्तप्यते, तपोऽर्जयतीति यावत् । नन्वेवमपि शरीरसन्तापलक्षणक्रिया अवस्थाद्वयेऽपि तुल्या, नहि शरीरसन्तापादन्यत् अर्जनं नाम तापसस्य व्यापारोऽस्ति । तथा च भाष्यसम्मतं नियमार्थत्वमेव वृत्तिकृता कुतो नादृतमिति चेत् ?

अत्राहुः, वस्तुतश्शरीरसन्तापस्य सत्वेऽपि शब्दात्र तत्त्वेन भानं किं त्वर्जनत्वेनैव । अन्यथा तपसः कर्मत्वानुपपत्तेः । तथाच तुल्यक्रियत्वाभावाद् विध्यर्थतैवेति । लुङि-अतप्त तपस्तापसः । "तपोऽनुतापे च" (पा०सू०३-१-६५) इति चिणः प्रतिषेधात्सिच् । तस्य "झलो झलि" (पा०सू०८-२-२६) इति लोपः । तपःकर्मकस्येति किम् ? उत्तपति सुवर्णं सुवर्णकारः । एवकारस्तु व्यर्थ एव । श्रुतस्य तस्य अन्वयो वक्तव्य इति चेत् ? सत्यम् , वाक्यं भित्त्वा कथंचिदन्वयः प्रदर्शित एव ।

न दुहस्नुनमां यक्चिणौ (पा०सू०३-१-८९) ॥ एषां यक्चिणौ न स्तः । कर्मवदतिदेशेन प्राप्तयोरयं निषेधः, "अनन्तरस्य" (प०भा० ६३) इति न्यायात् । तेन शुद्धे कर्मणि भावे स्त एव । दुहेरनेन यक् निषिध्यते । चिण् तु "दुहश्च" (पा०सू०-३-१-६३) इति सूत्रेण प्रागेव विभाषितः, दुग्धे गौः स्वयमेव । अदुग्ध, अदोहि गौः स्वयमेव । यकि

प्रतिषिद्धे शप्, अदादित्वात्तस्य लुक्, "दादेः" (पा०सू०८-२-३२) इति घः, "झषस्तथोः" (पा०सू०८-२-४०) इति धत्वम्, जश्त्वम्। अप्रधाने दुहादीनामिति यस्मिन्कर्मणि लकारस्तस्य कर्तृत्वविवक्षा, प्रधानं कर्म तु कर्मैव।

'स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी'।

इतिवत्। चिणभावे क्सः, लुग्वादुहेति लुक्। प्रस्नुते। प्रास्नोष्ट, चिणि प्रतिषिद्धे सिच्। नमते दण्डः स्वयमेव। अनंस्त। अन्तर्भावितण्यर्थोऽत्र नमिः। तत्र यथा 'नमयति दण्डं देवदत्तः' 'नमयते दण्डः स्वयमेव' इति ण्यन्तस्य कर्मस्थक्रियत्वम्, एवमस्यापि द्रष्टव्यम्।

यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानम् (का०वा०)॥ कारयते कटः स्वयमेव। अचीकरत। उच्छ्रयते दण्डः स्वयमेव। उदशिश्रियत। ब्रूते कथा स्वयमेव। अवोचत। वचनं शब्दप्रकाशनफलत्वात्कर्मस्थम्। भारद्वाजीयाः पठन्ति—

णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम्॥ इति णीति णिङ्णिचोः सामान्यग्रहणम्। णिजुदाहृतः। णिङः-पुच्छमुदस्यति उत्पुच्छयते गौः। अस्यान्तर्भावितण्यर्थतायाम्—उत्पुच्छयते गाम्। पुनः सौकर्यातिशयेन कर्तृत्वविवक्षायाम्—उत्पुच्छयते गौः स्वयमेव। उदपुपुच्छत। इह ण्यन्तात् यक्चिणोः प्रतिषिद्धयोः शप्चङौ भवतः। कौमुद्यां तु कर्मकर्तरि चङ् नेत्याह। अकारयिष्टेत्युदाहृतं तदशुद्धमेव। श्रन्थ ग्रन्थ सन्दर्भे (चु०प०३०५,३०६)। चुरादावाधृषीयौ। तयोर्णिजभावपक्षे ग्रहणम्। ग्रन्थति ग्रन्थं देवदत्तः। श्रन्थति मेखलाम्। ग्रन्थते ग्रन्थः स्वयमेव। अग्रन्थिष्ट। श्रन्थते। अश्रन्थिष्ट। क्र्यादावपि इमौ पठ्येते, तयोरपीह ग्रहणम्। श्रथ्नीते ग्रथ्नीते स्वयमेव। आत्मनेपदविधावकर्मका ये धातवो निर्दिष्टास्ते यदाऽन्तर्भावितण्यर्थाः पुनश्च निवृत्तप्रेषणास्त इहोदाहरणम्। तद्यथा-"वेः शब्दकर्मणः" "अकर्मकाच्च" (पा०सू०१-३-३४,३५)। विकुर्वते सैन्धवाः, वल्गन्तीत्यर्थः। तान्विकरोति, वल्गयतीत्यर्थः। पुनः सौकर्यात्कर्तृत्वे-विकुर्वते सैन्धवाः स्वयमेव। व्यकृषत। यत्तु वृत्तौ पठ्यते 'आहन्ति माणवकम्, आहते माणवकः स्वयमेव' इति, तदयुक्तम्, 'आहन्ति माणवकम्'। इत्यस्य सकर्मकत्वादात्मनेपदाभावाच्चेति हरदत्तः।

अन्ये त्वाहुः-आत्मनेपदाकर्मकेति धातूपलक्षणं,हन्तिश्चायम् "आङो यमहनः" (पा०सू०१-३-२८) इत्यत्र यदा कर्माविवक्षया अकर्मकः, तदा आत्मनेपदस्य निमित्तम्। तस्यात्र सकर्मकत्वेऽपि अविरुद्धमुदाहरणमिति।

कुषिरजोः प्राचां श्यन् परस्मैपदं च (पा०सू०३-१-९०) ॥ कुष निष्कर्षे (क्र्या०प०४६)। रञ्ज रागे (भ्वा०उ०१०२४)। अनयोर्धात्वोः कर्मकर्तरि यक् न स्यात् किन्तु श्यन् परस्मैपदञ्च। आत्मनेपदापवादः। कुष्यति पादः स्वयमेव। रज्यति वस्त्रं स्वयमेव। प्राचाङ्ग्रहणं विकल्पार्थम्। कुष्यते। रज्यते। "न दुह" (पा०सू०३-१-८९) इति सूत्रात् यक् नेत्यनुवर्त्य तस्मिन्नेव स्थले श्यन् विहितः। तत्सन्नियोगशिष्टं च परस्मैपदम्। तेन आशीर्लिङ्लिटोः स्यादीनां च विषये श्यन् परस्मैपदे न भवतः। कोषिषीष्ट पादः स्वयमेव। रङ्क्षीष्ट वस्त्रं स्वयमेव। चुकुषे। ररञ्जे। कोषिष्यते। रङ्क्ष्यते। अकोषि। अरञ्जि इत्यादि। श्यन्यकोः स्वरे नुमि च विशेषः-कुष्यन्ती जङ्घा। श्यनि "शप्श्यनोर्नित्यम्" (पा०सू०७-१-८१) इति नुमागमः, नित्वादाद्युदात्तश्च। यकि तु "आच्छीनद्योः" (पा०सू० ७-१-८०) इति नुम्विकल्पः लसार्वधातुकानुदात्तत्वेन यक एवोदात्तत्वं च स्यात्।

धातोः (पा०सू०३-१-९१) ॥ आतृतीयसमाप्तेरधिकारोऽयम्। यद्यपि "धातोरेकाचो हलादेः" (पा०सू०३-१-२२) इति सूत्राद्धातुग्रहणमनुवर्तत एव, तथापि आर्द्धधातुकसंज्ञाया आश्रितशब्दव्यापारत्वलाभाय पुनर्धातुग्रहणम्। अन्यथा 'लूभ्याम' 'पूभ्याम्' इत्यादौ भ्यामादेरिट् प्रकृतेर्गुणश्च स्यात्। धातोरित्येवमविधानात्तु न भवति। तथा कृत्संज्ञा उपपदसंज्ञा चास्मिन्नेव धात्वधिकारे यथा स्यादित्येवमर्थमपीदम्। अन्यथा पूर्वत्रापि स्यात्, ततश्च 'करिष्यति' इत्यत्र स्यप्रत्ययस्य कृत्संज्ञायां कृदन्तस्य प्रातिपदिकत्वे सोरुत्पत्तिः स्यात्, एकवचनस्यौत्सर्गिकत्वात्। "प्रातिपदिकार्थ" (पा०सू०२-३-४६) इति सूत्रे वचनग्रहणाच्च। तथा "च्लि लुङि" (पा०सू०३-१-४३) इत्यस्य लुङन्ते उपपदे च्लिरित्यर्थः स्यात्। वासरूपविधेश्च पूर्वत्र प्रवृत्तौ क्सादिभिः सिचः समावेशः स्यादिति। तस्मात् धातोरिति कर्तव्यमिति स्थितम्। एतच्च शक्यं प्रत्याख्यातुम्। तथाहि, "शमि धातोः" (पा०सू०३-२-१४) इति यद्धातुग्रहणं तदेव द्वितीयं सार्वधातुकार्द्धधातुकसंज्ञयोरनुवर्तिष्यते। कृदुपपदसंज्ञे वासरूपविधिश्च अधिकारेणैव व्याख्यास्यन्ते। "प्रत्ययः" "परश्च" (पा०सू०३-१-१,२) इत्यादिवत्। तेन पूर्वत्र न तत्प्रसङ्गः।

तत्रोपपदं सप्तमीस्थम् (पा०सू०३-१-९२) ॥ सप्तम्यन्ते पदे "कर्मणि" इत्यादौ प्रतिपाद्यत्वेन स्थितं कुम्भादिकं सप्तमीस्थं तद्वाचकं पदमुपपदसंज्ञं स्यात्, तस्मिंश्च सत्येव वक्ष्यमाणः प्रत्ययः स्यात्, महासंज्ञाकरणसामर्थ्यात्। पदमत्र संज्ञि। तेन समर्थपरिभाषा व्याप्रियते। संज्ञाप्रदेशा "उपपदमतिङ्" (पा०सू०२-२-१९) इत्यादयः।

कृदतिङ् (पा०सू०३-१-९३) । अस्मिन् धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्सञ्ज्ञः स्यात् । कर्तव्यम् । करणीयम् । अतिङ् किम् ? चीयात् । सञ्ज्ञाप्रदेशाः कृत्तद्धितसमासाश्चेत्येवमादयः । "अतिङ्" इति शक्यमकर्तुम् । कथं चीयादिति ? ज्ञापकात्सिद्धम् । "अकृत्सार्वधातुकयोः" (पा०सू०७-४-२५) इति सूत्रे अकृदित्येव सिद्धे पुनः सार्वधातुकग्रहणं ज्ञापयति 'न तिङां कृत्सञ्ज्ञा भवति' इति । न च श्यन्निवृत्त्यर्थं सार्वधातुकग्रहणमिति वाच्यम्, दिवादिषु ह्रस्वान्तस्य दीर्घार्हस्याभावेन व्यावर्त्याप्रसिद्धेः । भाष्ये तु तिङां कृत्सञ्ज्ञायामिष्टापत्तिः कृता । न चैवं तिङन्तस्य प्रातिपदिकत्वात्स्वाद्युत्पत्तिः स्यादिति वाच्यम्, तिङा एकत्वादेरुक्तत्वात् । न च वचनग्रहणादुक्तेऽपि तदापत्तिः, 'एकः' इत्यादौ चरितार्थत्वात् । "अतिशायने तमबिष्ठनौ" "तिङश्च" (पा०सू०५-३-५५,५६) इत्यनेन तिङन्तानामसुबन्तत्वज्ञापनात् । न चैवमपि 'पचति' 'पठति' इत्यत्र "ह्रस्वस्य पिति कृति" (पा० सू०६-१-७१)इति तुक्प्रसङ्गः, तुग्विधौ "धात्वादेः" (पा०सू०६-१-६४) इति सूत्रात् धातुग्रहणानुवृत्तेः । एवमपि 'चिकीर्षति' 'जिहीर्षति' इत्यादौ स्यादिति चेत्,? न, शपा व्यवधानात् । एकादेशे कृते नास्ति व्यवधानमिति चेत् ? न,एकादेशस्य पूर्वविधौ स्थानिवद्भावात् । न च स्थानिवद्भावं बाधित्वा परत्वादन्तवद्भावः, तस्य प्रत्याख्यास्यमानत्वात् । न चैवमपि "अतिङ्" इति प्रत्याख्यायमाने 'पचेरन्' इत्यत्र प्रातिपदिकान्तत्वान्नलोपः स्यादिति वाच्यम्, "झस्य रन्" (पा०सू०३-४-१०५) इति नकारोच्चारणसामर्थ्यादेव लोपाप्रवृत्तेः । इह तर्हि 'चीयात्' इति कृद्यकारत्वाद्दीर्घो न स्यादिति चेत ? नैष दोषः, सार्वधातुकप्रतिषेधो ज्ञापयति "अकृतीति प्रतिषेधः तिङ्क्षु न प्रवर्तते" इति । न चैवमपि तिङ्समासे कृदुत्तरपदस्वरः स्यादिति वाच्यम्, इष्टापत्तेः, 'यो जात एव पर्यभूषात्' इत्यादौ तथैव पाठस्य निर्विवादत्वात्, गतिकारकोपपदात्कृत्' (पा०सू०६-२-१३९) इति सूत्रे कृद्ग्रहणस्य प्रत्याख्यास्यमानत्वाच्चेति दिक् ।

इति श्रीशब्दकौस्तुभे तृतीयाध्यायस्य प्रथमे पादे पञ्चममाह्निकम् ।

---

वाऽसरूपोऽस्त्रियाम् (पा०सू०३-१-९४) ॥ परिभाषेयम् । अस्मिन्धात्वधिकारे स्त्र्यधिकारव्यतिरेकेण यत्रासरूपोऽपवादप्रत्ययो विधीयते तत्र वेत्युपतिष्ठते। एवञ्च "ददातिदधात्योर्विभाषा"(पा०सू०३-१-१३९) इत्यादिवद्वैकल्पिकत्वेनैव अपवादे शास्त्रात्प्रमिते तद्वदेव पक्षे उत्सर्गः प्रवर्तते। इगुपधज्ञाप्रीकिरः कोऽपवादः तद्विषये ण्वुल्तृचावपि भवतः ।

विक्षेपकः, विक्षेप्ता, विक्षिपः। नचैवम् "आतोऽनुपसर्गे कः" (पा०सू०३-२-३) इति कस्य विषये "कर्मण्यण्" (पा०सू०३-२-१) इत्यपि पक्षे प्रवर्तेत। सरूपोऽसाविति चेत्? किं ततः? गुणवृद्धिशास्त्रेष्विक्पदस्येव कविधौ वेति पदस्य उपस्थितिर्हि ज्ञातैव। अन्यथा ण्वुलादेरपि दुर्लभत्वात्। सत्याञ्च वेत्यस्योपस्थितौ कथं सरूपस्यापि पक्षे प्रवृत्तिर्न भवेदिति चेत्? सत्यम्, असरूपग्रहणसामर्थ्यात् यम्प्रत्यसरूपता तं प्रत्येवास्य पाक्षिकता, अन्यं तु प्रति बाधकतैवेति न कश्चिद्दोषः। ततश्च असरूपोऽपवादप्रत्यय उत्सर्गस्य वा बाधकः स्यादिति फलितोऽर्थः। अस्त्रियां किम्? चिकीर्षा। अत्र क्तिन्न भवति। स्त्रीग्रहणं स्वर्यते। स्वरितेनाधिकारगतिर्भवतीति "स्त्रियां क्तिन्" (पा०सू०३-३-९४) इत्यधिकारे विकल्पो नेति सिद्धान्तः। यदि तु स्त्रियामभिधेयायां नेत्युच्येत तदा 'विक्षेपिका' 'विक्षेप्त्री' इति कविषये ण्वुल्तृचौ न स्याताम्। अथापि 'स्त्रियाम्' इत्येवंशब्दमुच्चार्य विहिते निषेधः इत्युच्येत, तर्हि 'व्यावक्रोशी' 'व्यावकृष्टिः' इति कर्मव्यतिहारे णचो विषये क्तिन्न स्यात्। द्वयोरपि 'स्त्रियाम्' इत्युच्चार्य विधानात्।

अत्र केचित्—उत्सर्गापवादयोर्द्वयोरपि स्त्र्यधिकारनिवेशितत्वे सति प्रतिषेधोऽयमित्याहुः। अन्ये तु अपवादमात्रस्यापीति। तत्राद्ये मते 'आसना' 'आस्या' स्त्र्यधिकारविहितेनापि युचाऽपवादेन सह ऋहलोर्ण्यतः (पा०सू०३-१-१२४) समावेशः सिध्यति। घञस्तु क्तिनादिनाऽनभिधानान्न समावेशः। द्वितीयपक्षे तु घञः क्तिन्नादिभिरसमावेशः सिध्यति। 'आस्या' इत्यत्र तु "कृत्यल्युटो बहुलम्" (पा०सू०३-३-११३) इति ण्यदिति विवेकः। नन्विह सारूप्यं प्रयोगे उपदेशे वा? नाद्यः, 'ग्रामणीः' 'ग्रामण्यः' इति क्विबादिविषयेऽणादीनामप्रवृत्तिप्रसङ्गात्। न हि क्विबादयः प्रयोगे रूपवन्तः, लोपविधानात्। नान्त्यः, अनुबन्धभिन्नेषु कणप्रभृतिष्वतिप्रसङ्गादिति चेत्? न, अनुबन्धानामनेकान्तत्वेन द्वितीयपक्षे दोषाभावात्। एकान्तत्वेऽपि "नानुबन्धकृतमसारूप्यम्" (प०भा०८) "ददातिदधात्योर्विभाषा" (पा०सू०३-१-१३९) इति लिङ्गात्। अन्यथाऽनुबन्धकृतादसारूप्यादेव 'ददः' 'दधः' इति शविषये 'दायः' 'धायः' णोऽपि इतिभविष्यतीति किं विभाषाग्रहणेन? अनित्येयं वासरूपपरिभाषा "अर्हे कृत्यतृचश्च" (पा०सू०३-३-१६९) इत्यत्र कृत्यतृज्ग्रहणाल्लिङ्गात्। तेन "क्तल्युटतुमुन्खलर्थेषु वाऽसरूपविधिर्न भवति" (प०भा०७०) इति सिद्धान्तः। हसितं हसनं छात्रस्य। अत्र क्तल्युड्विषये घञ् न। तुमुन्—इच्छति भोक्तुम्। अत्र "इच्छार्थेषु लिङ्लोटौ" (पा०सू०३-३-१५७)

इति लोण्न भवति। लिङ् तु भवत्येव, "लिङ् च" (पा०सू०३-३-१५९) इति वचनात्। एवं चास्मादेव नियमादिह लोट् सुपरिहरः। अतोऽत्र तुमुन्ग्रहणमापाततः। खलर्थः-आतोयुच्, ईषत्पानः। अत्र खल् न भवति। ननु स्त्र्यधिकारादूर्ध्वं "वाऽसरूप" (पा०सू०३-१-९४) न्यायो नास्तीत्येवाश्रीयताम्। मैवम्, 'आसित्वा भुङ्क्ते' 'आस्यते भोक्तुम्' इत्याद्यसिद्धिप्रसङ्गात्। इह हि भोजनार्थत्वादासनस्य पूर्वकालता गम्यते। क्त्वाप्रत्ययश्च तुमर्थाधिकाराद्भावे तत्रैव च लकार इति समानविषयत्वाद्बाध्यबाधकभावः स्यात्। "प्रैषातिसर्ग" (पा०सू०३-३-१६३) इति सूत्रे "स्त्रियां क्तिन्" (पा०सू०३-३-९४) इत्यत ऊर्ध्वं वासरूपविधेरभावादिति कौमुदीग्रन्थस्तु आकरविरुद्ध इति दिक्।

कृत्याः (पा०सू०३-१-९५)। अधिकारोऽयम्। अवधिविशेषस्तु ज्ञापकात्सिद्धः। "अर्हे कृत्यतृचश्च" (पा०सू०३-३-१६९) इति सूत्रे 'कृत्याः' इत्येव वक्तव्ये तृज्ग्रहणं योगापेक्षं ज्ञापकम्—'ण्वुल्तृचावित्येतद्योगात्प्राक् कृत्यसंज्ञाऽधिक्रियते' इति। संज्ञाप्रदेशाः-"कृत्यानां कर्तरि वा" (पा०सू०२-३-७१) इत्यादयः। बहुवचनमनुक्तसमुच्चयार्थम्। तेन "केलिमर उपसंख्यानम्" (का०वा०) इत्यादि सूत्रेणैव सूचितं भवति। अत्र सूत्रे वृत्तिकारः "प्राङ् ण्वुलः" इति प्रचिक्षेप।

तव्यत्तव्यानीयरः (पा०सू०३-१-९६)॥ धातोरेवैते प्रत्ययाः स्युः। तकाररेफौ स्वरार्थौ। कर्त्तव्यम्। करणीयम्।

वसेस्तव्यत्कर्तरि णिच्च (का०वा०)॥ वस निवासे (भ्वा०प०१०३०) इत्यस्य ग्रहणम्, न तु वस आच्छादने (अ०आ०१३) इत्यस्य लुग्विकरणस्य। तयोरेवेति वचनात् कर्त्तरि न प्राप्नोतीति वचनम्। वसतीति वास्तव्यः। तद्धितान्तो वा। वास्तुनि भवो वास्तव्यः। दिगादित्वाद्यत्। 'अवास्तव्यः' इत्यत्र स्वरभेदोऽपि नास्ति। तव्यत्प्रत्यये हि "कृत्योकेष्णुच्चार्वादयश्च" (पा०सू०६-२-१६०) इत्यन्तोदात्तत्वम्। यत्प्रत्यये तु "ययतोश्चातदर्थे" (पा०सू०६-२-१५६) इत्यनेनेति।

केलिमर उपसंख्यानम् (का०वा०)॥ कृत्या इति बहुवचनेनैतत्सूचितमित्युक्तम्। ककारो गुणवृद्धिनिषेधार्थः। रेफः स्वरार्थः। पचेलिमा माषाः। पक्तव्याः। भिदेलिमाः सरलाः। भेत्तव्याः। शुद्धे कर्मणि प्रत्ययो भाष्ये स्थितः। वृत्तिकारस्तु कर्मकर्तरि चायमिष्यते इत्याह। तद्भाष्यविरुद्धम्।

अचो यत् (पा०सू०३-१-९७)॥ अजन्ताद्धातोर्यत्स्यात्। चेयम्। जेयम्। ननु पूर्वसूत्रे एव यदपि निर्दिश्यताम्, अज्ग्रहणं च मास्तु, हल-

न्ताण्ण्यतं वक्ष्यति, परिशेषादजन्तेभ्य एव यद् भविष्यति इति चेत्? अजन्तभूतपूर्वादपि यथा स्यादित्येवमर्थमिदम् । दित्स्यं, धित्स्यम् । इह हि दाञो धाञश्च सन्नन्तस्य 'दित्स' 'धित्स' इति स्थिते आर्द्धधातुके इति विषयसप्तमीमाश्रित्य सनोऽतो लोपे कृते साम्प्रतिकं हलन्तत्वमस्तीति ण्यत् स्यात् । अज्ग्रहणात्तु भूतपूर्वमजन्तत्वमाश्रित्य यद्भवति । तेन "यतोऽनावः" (पा०सू०६-१-२१३) इत्याद्युदात्तत्वम् । ण्यति तु कृते तित्स्वरितत्वं स्यात् । 'चिकीर्ष्यम्' इत्यादौ तु ण्यद्यतोर्विशेषो नास्ति । "यतोऽनावः" इत्यत्र ह्यज्ग्रहणानुवृत्तेः । "आर्द्धधातुके" इत्यस्य परसप्तमीत्वे तु इहाज्ग्रहणं न कर्त्तव्यमेव ।

तकिशसिचतियतिजनीनामुपसंख्यानम् (का०वा०) ॥ तक हसने (भ्वा०प०११७) । शसु हिंसायाम् (भ्वा०प०७२८) । चते याचने (भ्वा० उ०८९०) । यती प्रयत्ने (भ्वा०आ०३०) । जनी प्रादुर्भावे (दि०आ०४३) । तक्यम् । शस्यम् । चत्यम् । यत्यम् । जन्यम् । अत्र जनेर्यद्विधानं "यतोऽनावः" (पा०सू०६-१-२१३) इति स्वरार्थं "जनिवध्योश्च" (पा०सू०७-३-३५) इति वृद्धिनिषेधेन ण्यत्यपि रूपे विशेषाभावात् । इह शंसिमपि केचित्पठन्तीति हरदत्तः । तेन "तद्वास्मराशंस्यं राध्यं च" अत्राद्युदात्तः सिध्यति । अपाठपक्षे तु ण्यन्तादचो यति सिध्यतीति बोध्यमिति वदन्ति । तदेतत्सर्वम् "ईडवन्द" (पा०सू०६-१-२१४) इत्यादिसूत्रविस्मरणमूलकत्वादुपेक्ष्यम् ।

हनो वा वधश्च (का०वा०) ॥ हन्तेर्वा यत्, तत्सन्नियोगेन च वधादेशो वक्तव्य इत्यर्थः । वध्यः । घात्यः । यदभावे ण्यत्, "हनस्तोऽचिण्णलोः" (पा०सू०७-३-३२) इति तत्वम् । "हो हन्तेः" (पा०सू०७-३-५४) इति कुत्वम् । यद्यपि 'वधमर्हतीति वध्यः' इति रूपं यादित्यनुवर्तमाने "दण्डादिभ्यः" (पा०सू०५-१-६६) इति तद्धितेन यताऽपि सिध्यति तथापि 'असिवध्यः' 'मुसलवध्यः' इत्यत्र समासो न सिध्येत् । कृति पुनः "कर्तृकरणे कृता" (पा०सू०२-१-३२) इति सिध्यति । न च असिवधमर्हतीति विग्रहे कृतसमासादेव तद्धितोऽस्त्विति वाच्यम्, दण्डादिषु केवलस्य वधशब्दस्य पाठात् । तदन्तविधेश्च प्रतिषेधात् स्वरे भेदाच्च । असिवधशब्दाद्यति हि "तित्स्वरितम्" (पा०सू०६-१-१८५) इति स्वरितः प्रसज्येत । कृदन्तेन समासे तु कृदुत्तरपदप्रकृतिस्वरेण वध्यशब्द आद्युदात्तः । अत एव वध्यशब्देन तद्धितान्तेन सह "सुप्सुपा" (पा०सू०२-१-४) इति समास इत्यपि न वाच्यम्, अन्तोदात्तप्रसङ्गात् । वध्यशब्दे कृत्तद्धितान्ते प्रकारकृतविशेषस्य सत्त्वा-

च्च । एतेन "गिरौ डश्छन्दसि" (का०वा०) इति वार्तिकप्रत्याख्यानपरं भाष्यमप्यपास्तम् । अत एव "कृतलब्धक्रीतकुशलाः" (पा०सू०४-३-३८) इत्यादीनां चारितार्थ्यमिति दिक् ।

अत्रत्यभाष्यादिपर्यालोचनया असमस्तवध्यशब्दे विशेषाभाव इति लभ्यते । तथा च दण्डादिभ्य इत्येव सूत्रं, यच्चानुवर्तते । दण्डादिभ्यो य इति निरनुबन्धपाठस्तु प्रामादिक इति माधवो हन्तिधातौ स्फुटीचकार । हरदत्तग्रन्थपर्यालोचने तु इदं च वचनं यद्विधौ भाष्यादौ पठितमपि क्यब्विधौ "मृजेर्विभाषा" (पा०सू०३-१-११३) इत्यस्याग्रे एव पाठ्यमित्येव भाष्यतात्पर्यं युक्तम्, विकल्पाकरणेन लघुत्वादिति लभ्यते । तस्मिन्नपि पक्षे वध्यशब्दो धातुस्वरेणाद्युदात्तः, क्यप्तु पित्वादनुदात्तः । न च नञ्समासे "ययतोश्चातदर्थे" (पा०सू०६-२-१५६) इत्यस्य प्रवृत्त्यभावेन स्वरे दोष इति वाच्यम्, "कृत्योकेष्णुच्चार्वादयश्च" (पा०सू०६-२-१६०) इत्यस्य प्रवृत्त्येष्टसिद्धेः । असमस्ते एव विशेषाभावस्य प्रतिपाद्यत्वाच्च ।

पोरदुपधात् ( पा०सू०३-१-९८) ॥ पवर्गान्तादकारोपधात् धातोर्यत् स्यात् । ण्यतोऽपवादः । शप्यम् । लभ्यम् । पोः किम् ? वाक्यम् । "चजोः कु घिण्ण्यतोः" (पा०सू०७-३-५२) इति कुत्वम् । अदुपधात्किम् ? कोप्यम् । तपरकरणं किम् ? आप्यम् । कुप कोपने (दि०प० १२७) आप्लृ व्याप्तौ (स्वा०प०१४) आभ्यां ण्यति तित्स्वरः । यति तु "यतोऽनावः" (पा०सू०६-१-२१३) इति स्यात् ।

शकिसहोश्च (पा०सू०३-१-९९) ॥ स्पष्टम् । शक्यम्, सह्यम् ।

गदमदचरयमश्चानुपसर्गे (पा०सू०३-१-१००) ॥ व्यत्ययेन पञ्चम्यर्थे सप्तमी । एभ्योऽनुपसर्गेभ्यो यत्स्यात् । गद्यम् । मद्यम् । चर्यम् । यम्यम् । अनुपसर्गे किम् ? "न नैषधे कार्यमिदं निगाद्यम्" । प्रमाद्यम् । प्रचार्यम् । यमेः पूर्वेणैव सिद्धे नियमार्थं वचनम् "अनुपसर्गादेव यथा स्यात् सोपसर्गान्मा भूत्" इति । कथं तर्हि "तेन न तत्र भवेद्विनियम्यम्" "अनियम्यस्य नायुक्तिः" "त्वया नियम्या ननु दिव्यचक्षुषा" इत्यादि ? प्रमादपाठ एवायम् । 'विनियाम्यम्' इत्यादि दीर्घ एव तु पठनीय इति हरदत्तः । नियमे साधुर्नियम्य इति "तत्र साधुः" (पा०सू० ४-४-९८) इति यदित्यन्ये । केवलाद्यतं कृत्वा निशब्देन समास इत्यपरे ।

चरेराङि चागुरौ (का०वा०) ॥ सोपसर्गार्थं वार्तिकम् । आचर्यो देशः । गन्तव्य इत्यर्थः । अगुरौ किम् ? आचार्यो गुरुः ।

अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु (पा०सू०३-१-१०१) ॥ अव-

धादयस्त्रयो यथासंख्यं गर्ह्यादिष्वर्थेषु निपात्यन्ते । तत्र वदेर्नञि उपपदे "वदः सुपि क्यप् च" (पा०सू०३-१-१०६) इति यत्क्यपोः प्राप्तयोर्यदेव यथा स्यात्, सोऽपि गर्हायामेव यथा स्यादित्युभयार्थं निपातनम् । अवद्यं पापम् । अवचनार्हत्वात् । गर्ह्ये किम् ? अनुद्यं गुरुनाम । तद्धि न गर्ह्यं वचनार्हं तु न भवति,

आत्मनाम गुरोर्नाम नामातिकृपणस्य च ।
श्रेयस्कामो न गृह्णीयात् ज्येष्ठापत्यकलत्रयोः ॥

इति स्मृतेः । अत्र "वदः सुपि" (पा०सू०३-१-१०६) इति क्यबेव भवति । यजादित्वात् सम्प्रसारणम् । "नलोपो नञः" "तस्मान्नुडचि" (पा०सू०६-३-७३,७४) । पणेर्व्यवहारार्थात् ण्यति प्राप्ते यत् विधीयते । पण्यः कम्बलः । पण्या गौः । पाण्यम् अन्यत् । स्तुत्यर्हम् इत्यर्थः । 'पणितव्य'शब्दस्य साधारणत्वेऽपि निपातनस्य रूढ्यर्थत्वात् पण्यशब्दस्य व्यवहर्तव्ये एव रूढत्वादर्थनियमो लभ्यते । उक्तञ्च—

धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च ।
अनुबन्धविकाराणां रूढ्यर्थं च निपातनम् ॥ इति ।

वृङ् सम्भक्तौ (क्या०आ०३७) अस्माद्यत् अप्रतिबन्धे । शतेन सहस्रेण वर्या कन्या । शतसहस्रशब्दावनियतवचनौ, कन्याया वरणे वरयितॄणां नियमो नास्तीत्यर्थः । 'वृङ' एवेदं निपातनम्, तत्रैव अनिरोधसम्भवात् । तेन 'वृञ् वरणे' (स्वा०उ०८) इत्यस्मात् "एतिस्तुशास्" (पा०सू०३-१-१०९) इत्यादिना क्यबेव, वृत्या । इह सूत्रे अवद्यादीनि अविभक्तिकानि पृथक् पदानि, न तु द्वन्द्वस्य जसन्तस्य निर्देशः । तेन 'वर्या' इति स्त्रियामेव निपात्यते । अस्त्रियान्तु "ऋहलोः" (पा०सू०३-३-१२४) इति ण्यदेव-वार्या ऋत्विजः, इति वृत्तिकारमतम् । न चात्र "एतिस्तु" (पा०सू०३-१-१०९) इति क्यप् शङ्क्यः, तत्र 'वृञ' एव ग्रहणं न तु 'वृङ' इति वक्ष्यमाणत्वात् ।

भट्टिस्तु द्वन्द्वाज्जसा निर्देशं मन्वानः पुल्लिङ्गेऽपि यतं प्रायुङ्क्त—
सुग्रीवो मम वर्योऽसौ भवता चारुविक्रमः । इति ।

पुरुषोत्तमादयोऽप्येवम् ।

वह्यं करणम् (पा०सू०३-१-१०२) ॥ वह्यं निपात्यते करणं चेद्भवति । वहन्त्यनेनेति वह्यं शकटम् । करणे किम् ? वाह्यम् अन्यत्, वहनकर्मेत्यर्थः ।

अर्यः स्वामिवैश्ययोः (पा०सू०३-१-१०३) ॥ ऋ गतौ (भ्वा०प०९६१) अस्मात् ण्यति प्राप्ते यत् निपात्यते । अर्यः स्वामी वैश्यो वा । स्वामि

वैश्ययोः किम्? आर्यो ब्राह्मणः। प्राप्तव्य इत्यर्थः। अत्र भाष्ये 'स्वामिन्यन्तोदात्तत्वञ्च' इत्युक्तम्। वैश्ये तु "यतोऽनावः" (पा०सू०६-१-२१३) इति आद्युदात्तमेव। अथ यो वैश्यः स्वामी च तत्र कथमिति चेत्? वैश्यत्वविवक्षायामाद्युदात्तम्, स्वामित्वविवक्षायामन्तोदात्तम्। अत एव 'अर्यः स्वाम्याख्या चेत्' इति फिट्सूत्रे आख्याग्रहणं कृतम्। तथा चेदृशे विषये युगपदर्थद्वयविवक्षा न कर्तव्यैवेति फलितोऽर्थः।

उपसर्या काल्या प्रजने (पा०सू०३-१-१०४)॥ उपपूर्वात्सृधातोर्भौवादिकात् जौहोत्यादिकाच्च यत् निपात्यते प्रथमगर्भग्रहणे प्राप्तकाला चेत्। उपसर्या गौः, गर्भाधानार्थं वृषभेणोपगन्तुं योग्या इत्यर्थः। काल्याप्रजने इति किम्? उपसार्या शरदि मथुरा, प्राप्तव्या इत्यर्थः। कर्मणि ण्यत्। 'काल्या' इत्यत्र 'तदस्यप्राप्तम्' इति वर्तमाने "कालाद्यत्" (पा०सू०५-१-१०७) इति यत्। प्रजननं प्रजनः, भावे घञ्। "जनिवध्योश्च" (पा०सू०७-३-३५) इति वृद्धिनिषेधः।

अजर्यं सङ्गतम् (पा०सू०३-१-१०५)॥ नञ्पूर्वाज्जीर्यतेः कर्तरि यन्निपात्यते सङ्गतं चेद्विशेष्यम्। 'सङ्गतम्' इति नपुंसके भावे क्तः। न जीर्यतीत्यजर्यं सतां सङ्गतम्। इह 'अजर्यम्' इति समुदायस्य सङ्गतं वाच्यम् इत्यर्थो न ग्राह्यः, उदाहरणे सहप्रयोगानुपपत्तेः। न च 'घटः कलशः' इतिवत् व्याख्यानपरतया सहप्रयोगः,

तेन सङ्गतमार्येण रामाजर्यं कुरु द्रुतम्।

इति भट्टिप्रयोगात्।

मृगैरजर्यं जरसोपदिष्टमदेहबन्धाय पुनर्बबन्ध।

इति कालिदासप्रयोगस्तु 'सङ्गतम्' इत्यध्याहृत्य व्याख्येयः। सङ्गतं किम्? अजरिता कम्बलः। कर्तरि निपातनम् इत्युक्तत्वात् भावे सङ्गतकर्तृकेऽपि ण्यदेव भवति। 'अजार्यं सङ्गतेन' इति।

वदः सुपि क्यप् च (पा०सू०३-१-१०६)॥ 'अनुपसर्गे इति वर्तते' इति वृत्तिकृत्। वदेर्धातोरनुपसर्गे सुप्युपपदे क्यप् स्यात् चाद्यत्। ब्रह्मोद्यम्, ब्रह्मवद्यम्, भावे क्यप् पूर्ववत्सम्प्रसारणम्। ब्रह्म वेदः, तस्य वदनमित्यर्थः। ननु सकर्मकाद्भावे कृत् प्रत्ययो दुर्लभः, "भावे चाकर्मकेभ्यः" "तयोरेव कृत्यक्तखलर्थाः" (पा०सू०३-४-६९,७०) इति वक्ष्यमाणत्वादिति चेत्? सत्यम्, उत्तरसूत्रादिह भावग्रहणस्यापकर्षणान्नोक्तदोषः। इह सूत्रे अनुपसर्गग्रहणस्यानुवृत्तिर्यद्यपि वृत्तिभाष्यादिषु स्थिता, तथापि सा नावश्यकी, "सत्सूद्विष" (पा०सू०३-२-६१) इति सूत्रे उपसर्गग्रहणं ज्ञापकम्—'अन्यत्र सुब्ग्रहणे उपसर्गग्र-

हणं न' इति वक्ष्यमाणेन गतार्थत्वात् । 'सर्वथाऽप्युपसर्गे न' इति फलं निर्विवादम् । तेनेह ण्यदेव-प्रवाद्यम्, अनुवाद्यम्, अपवाद्यम् । यत्तु भट्टवार्त्तिके 'अनूद्यम्' इति प्रयुक्तं व्याकरणाधिकरणे, तत्र निश्चयार्थेनुशब्दे उपपदे क्यपं विधाय नञ्समासे सति कथञ्चित्समाधेयमिति न्यायसुधायामेव स्पष्टम् ।

भुवो भावे (पा०सू०३-१-१०७) ॥ भवतेरनुपसर्गे सुप्युपपदे क्यप् स्यात् भावे । यत्तु नानुवर्त्तते, पूर्वसूत्रे चानुकृष्टत्वात् । ब्रह्मणो भावो ब्रह्मभूयम् । सुपि इत्येव-भव्यम् । अनुपसर्गे इत्येव—प्रभव्यम् । ननु अनुपसर्गे भवतिरकर्मकः, तस्माद्भावे एव भविष्यति, तत्किं भावग्रहणेनेति चेत् ? नैवम्, प्राप्त्यर्थात्कर्मणि प्रसङ्गात्सत्तार्थकादपि कालादिकर्मणि प्रसङ्गात् उत्तरार्थत्वाच्च ।

हनस्त च (पा०सू०३-१-१०८) ॥ हन्तेर्धातोरनुपसर्गे सुबन्ते उपपदे भावे क्यप् स्यात् तकारश्चान्तादेशः । ब्रह्महत्या । एतत्सूत्रविहितक्यप्प्रत्ययान्तस्य स्वभावात् स्त्रीलिङ्गत्वमेव लोके । छन्दसि तु क्लीबतापीष्यते । सनादेव दस्युहत्याय जज्ञिषे ।

छन्दसि स्त्रियां क्यप् चिद्वक्तव्यः (का०वा०) ॥ तरति ब्रह्महत्यां योऽश्वमेधेन यजते । सुपीति किम् ? घातो वर्त्तते । ण्यत्तु न भवति, सकर्मकाद्भावे विधानाभावात् । कर्माविवक्षायामकर्मकत्वेऽपि न भवति, अनभिधानात् । अनुपसर्गे इत्येव । प्रघातो वर्त्तते ।

एतिस्तुशास्वृदृजुषः क्यप् (पा०सू०३-१-१०९) ॥ सुप्यनुपसर्गे भाव इति निवृत्तम् । एभ्यः क्यप् स्यात् । 'एति' इति इण एव ग्रहणं नेङिकोः, तयोरधिपूर्वयोरेव प्रयोगात् 'एति' इति निर्देशानुपपत्तेः । तथा च "रक्षार्थं वेदानामध्येयं व्याकरणम्" इति भाष्ये यदेव प्रयुक्तः । केचित्तु "इण्वदिक इति वक्तव्यम्" (का०वा०) इति वचनादधीत्यमित्युदाहरन्ति । इत्यः । कथन्तर्हि उपेयमिति ? ईङ् गतौ (दि०आ०३७) इति दैवादिकाद्यत् । स्तुत्यः । शिष्यः, "शास इदङ्हलोः" (पा०सू०६-४-३४) इति इत्वम्, "शासिवसि" (पा०सू०८-३-६०) इति षत्वम् । 'आङः शासु इच्छायाम्" (अ०आ०१२) इत्यस्यापि ग्रहणम्, अविशेषात् । तेन 'आशास्यम्' इति धातुस्वरेण मध्योदात्तं पदं भवति । ण्यति तु "गतिकारकोपपदात्कृत्" इति अन्तस्वरितत्वं स्यात् । केचित्तु "शासु अनुशिष्टौ" (अ०प०६५) इत्यस्यैव ग्रहणमिच्छन्ति । 'वृ' इति वृञो ग्रहणं न वृङः पूर्वोत्तरसाहचर्येणोभयपदिनो ग्रहणाज् ज्ञापकात् । यदयं "ईडवन्दवृशंसदुहां ण्यतः" (पा०सू०६-१-२१) इति वार्या-

शब्दस्याद्युदात्तत्वं शास्ति। तत्र हि ईडिवन्दिभ्याम् अकारवद्धिकरण प्रकृतिभ्यां साहचर्यात् आत्मनेपदिनो वृङो ग्रहणम्। वृत्यः। इत्यः। जुष्यः। 'क्यप्' इति वर्तमाने पुनः क्यब्ग्रहणं बाधकबाधनार्थम्। तेन "ओरावश्यके" (पा०सू०३-१-१२५) इति ण्यतं बाधित्वा क्यबेव भवति। तथाहि, इह सूत्रे स्तौतेर्ग्रहणस्यावकाश आवश्यकाविवक्षायां स्तुत्य इति, "ओरावश्यके" इत्यस्यावकाशो 'अवश्यलाव्यम्'। 'अवश्यस्तुत्यः' इत्यत्र उभयप्रसङ्गे परत्वात् ण्यत् स्यात्, पुनः क्यब्ग्रहणात् क्यबेव भवति।

शंसिदुहिगुहिभ्यो वेति वक्तव्यम् (का०वा०)॥ शस्यम्, शंस्यम्। दुह्यम्, दोह्यम्। गुह्यम्, गोह्यम्। एतच्च वृत्तावेव स्थितम्। भाष्ये तु नास्ति तत्र "प्रशस्यस्य श्रः" (पा०सू०५-३-६०) "ईडवन्दवृशंसदुहां ण्यतः" (पा०सू०६-१-२१४) इति सूत्रद्वयप्रामाण्यात् शंसेः सिद्धम्। इतरयोस्तु मूलं मृग्यम्।

आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम् (का०वा०)॥ अञ्जू व्यक्तिम्रक्षणादिषु (रु०प०२१)। अस्मात् बाहुलकात्करणे क्यप्। "अनिदितां हल" (पा०सू०६-४-२४) इति नलोपः, आज्यम्। ननु ण्यत्येव नलोपः कस्मान्नोक्त इति चेत्? न, कुत्वप्रसङ्गात्, तित्स्वरप्रसङ्गाच्च। तस्मात्क्यबन्त एवायम्। नन्वेवमवग्रहः प्राप्नोति, न चेष्टापत्तिः, "आज्यं किमासीत्परिधिः क आसीत्" इत्यादौ पदकारैस्तदकरणात्। इति चेत्?

अत्र भाष्यम्—न लक्षणेन पदकारा अनुवर्त्याः पदकारैस्तु लक्षणमनुवर्त्यमिति। अयमाशयः—संहितैव नित्या पदाविच्छेदस्तु पौरुषेयः। अत एवार्थविनिश्चयाभावान्नावगृह्णन्ति। यथा 'हरिद्रव' इति। अत्र किं हरिशब्द इकारान्तः; उत हरिच्छब्दस्तकारान्त इति सन्देहः, किञ्च "वनेन वायः" इति मन्त्रे "वेति चय इति च चकार शाकल्यः" इत्युपन्यस्य "उदात्तं त्वेवमाख्यातमभविष्यत्" इति अधायिशब्दे अट्स्वरप्रसङ्गेन दूषयित्वा वेरपत्यं 'वाय' इत्येकपद्येन सिद्धान्तं कुर्वन् यास्कः पदविभागस्य पौरुषेयत्वं स्पष्टमेवाचष्टे। अपि च सति पदत्वे अवग्रहः, असति तु न, इति द्वयमपि प्रायोवादमात्रं सम्प्रदायानुरोधादुभयस्यापि बहुधा परित्यागो दृश्यते एव, "गोभिर्मदाय" "गोभ्यो गातुम्" इत्यादौ अवग्रहाभावात् "ईयिवांसमतिस्त्रिधः" "देवयन्तो यथामतिम्" इत्यादाववग्रहाच्चेति दिक्।

प्रक्रियाकौमुद्यान्तु 'अज गतौ क्षेपणे च' (भ्वा०प०२३०) इत्यस्य

'आज्यम्' इत्युक्तं, तत्तु भाष्यविरुद्धम्, अर्थाननुगुणञ्च, इति प्रामाणिकैरुपेक्ष्यमेव।

ऋदुपधाच्चाक्लृपिचृतेः (पा०सू०३-१-११०)॥ ऋकारोपधाद्धातोः क्यप् स्यात् क्लृपिचृती वर्जयित्वा। वृत्-वृत्यम्। वृध्-वृध्यम्। अक्लृपिचृतेरिति किम्? कृपू सामर्थ्ये (भ्वा०आ०७६३) कल्प्यम्। कृपेर्लत्वस्यासिद्धत्वात् ऋकारऌकारयोः सवर्णसंज्ञाविधानाच्च ऋदुपधत्वम्। चृती हिंसाग्रन्थनयोः (तु०प०४४) चर्त्यम्। तपरकरणं किम्? कृत संशब्दने (चु०प०१२०), णिजभावे ण्यदेव भवति। कीर्त्यम्। इदमेव च तपरकरणं लिङ्गम्, "अनित्यण्यन्ताश्चुरादयः" इत्यत्र। णिजन्तात्तु णिलोपे कृते चाकृते च दित्स्यमितिवद्यदेव। तेन "यतोऽनावः" (पा०सू०६-१-२१३) इत्याद्युदात्तता भवति।

ई च खनः (पा०सू०३-१-१११)॥ खनः क्यप् स्यात् ईकारश्चान्तादेशः। दीर्घनिर्देशः प्रश्लेषार्थः। तत्र द्वितीय इकारो "ये विभाषा" (पा०सू०६-४-४३) इत्यात्वबाधनार्थः। अन्यथा "ये विभाषा" इत्यस्यावकाशः—'खायते' 'खन्यते'। इत्वस्यावकाशः यस्मिन्पक्षे आत्वं नास्ति। आत्वपक्षे उभयप्रसङ्गे परत्वादन्तरङ्गत्वाच्चात्वं स्यात्। "ये विभाषा" इति विषयसप्तमी। तथा च यकारादौ बुद्धिस्थे एव भवदात्वमन्तरङ्गम्। अयंत्विकारः क्यपा सह विधानाद्बहिरङ्गः। तदित्थम्-"ये विभाषा" इति विषयसप्तमीति पक्षमाश्रित्य सूत्रकृता दीर्घोच्चारणं कृतम्। भाष्यकृता तु परसप्तमीमाश्रित्य प्रत्याख्यातम्। तथाहि, परसप्तमीपक्षे इत्वमन्तरङ्गम्, परनिमित्तमनपेक्ष्य विधानात्। क्यप्सन्नियोगशिष्टं हि तत्। तथाच तदेवात्वस्य बाधकम्। 'ननु ह्रस्वादेशे तस्य पूर्वेण सह आद् गुणे सत्यपि "षत्वतुकोरासिद्धः" (पा०सू०६-१-८६) इति एकादेशस्यासिद्धतया "ह्रस्वस्य पिति कृति तुक्" (पा०सू०६-१-७१) इति तुक् स्यात् अतो दीर्घ एव विधेयः इति चेत्? न, पदान्तपदाद्योरेकादेशस्तुग्विधावसिद्धः, न त्वन्योऽपि इति वक्ष्यमाणत्वात्। अन्यथा 'वृक्षे छत्रम्' इत्यत्र ङौ आद्गुणस्यासिद्धत्वात् "छे च" (पा०सू०६-१-७३) इति ह्रस्वाश्रयो नित्यस्तुक् स्यात्, इष्यते तु "दीर्घात्" "पदान्ताद्वा" (पा०सू०६-१-७५,७६) इति दिक्। खेयम्।

भृञोऽसंज्ञायाम् (पा०सू०३-१-११२)॥ क्यप् स्यात्। भृत्याः कर्मकराः, भर्त्तव्या इत्यर्थः। तथा च क्रियाशब्दोऽयं, न तु संज्ञा।

समश्च बहुलम् (का०वा०)॥ असंज्ञायामेव। सूत्रेण नित्यं प्राप्तस्य क्यपो विकल्पार्थमिदं वार्त्तिकम्। सम्भृत्याः, सम्भार्याः। असंज्ञायां

किम् ? भार्यो नाम क्षत्रियः।

संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिध्यति।
स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिध्यति॥
अथवा बहुलं कृत्याः संज्ञायामिति च स्मृतम्।
यथा पत्यं यथा जन्यं यथा भित्तिस्तथैव सा॥

अस्यार्थः-ते तव सूत्रकारस्य भार्याशब्दो न सिध्यति, ण्यतं बाधित्वा "संज्ञायां समजनिषद" (पा०सू०३-३-९९) इत्यादिना क्यपः प्रसङ्गात्। ननु "भृञोऽसंज्ञायाम्" (पा०सू०३-१-११२) इति प्रकृतसूत्रे संज्ञायां निषेधसामर्थ्यात् "संज्ञायां समज" (पा०सू०३-३-९९) इत्यादिसूत्रान्तरप्राप्तोऽपि क्यप् भृञः संज्ञायां न भविष्यति। न चैवं तत्र "संज्ञायाम्" इत्यस्य वैयर्थ्यं, धात्वन्तरेषु चरितार्थत्वात्, इत्याशङ्क्याह-संज्ञायामित्यादि। प्रतिषेधस्येति शेषः, 'असंज्ञायाम्' इत्यस्य प्रतिषेधस्य पुंसि 'भार्यो नाम क्षत्रियः' इत्यत्र दृष्टत्वात् चरितार्थत्वात्। तथा च सामर्थ्यं नास्तीति भावः। तस्मात् भार्याशब्दो न सिध्यतीति चोद्यं सुस्थम्।

उत्तरमाह—स्त्रियां भावाधिकारोऽस्तीति। ननु "संज्ञायां समज" (पा०सू०३-३-९९) इति सूत्रे वृत्तिकृद्वक्ष्यति भाव इति न स्वर्यते पूर्वएवाधिकार इति। युक्तं चैतत्, 'समजन्ति तस्यामिति समज्या' 'निषीदन्ति तस्यामिति निषद्या' इत्यादिदर्शनात्। तत्कथमुच्यते 'स्त्रियां भावाधिकारोऽस्तीति ? सत्यम्। स्त्रियां-स्त्रीप्रकरणे "संज्ञायां समज" इत्यादिना क्यपि विधीयमाने भावस्याधिकारः अभिधेयत्वोपगमलक्षणो व्यापारोऽस्ति। शब्दशक्तिस्वाभाव्याद्भाव एव क्यप् न तु कर्मणीत्याशयः।

एतदपरितोषादेवाह-अथवेति। न पतन्त्यनेनेत्यपत्यम्। अजन्तात् भावकर्मणोर्विधीयमानोऽपि यत् हलन्तात्करणे च भवति। 'जन्यम्' इत्यत्रापि हलन्ताद्यत्, 'भित्तिः' इत्यत्र "षिद्भिदादिभ्योऽङ्" (पा०सू०३-३-१०४) इत्यङो विषये क्तिन्। सर्वमिदं यथा बाहुलकाद्भवति, एवं भार्याशब्दे क्यब्विषये ण्यद्भवतीत्यर्थः। अथवा इत्थं समाधेयम्-क्यब्विधौ भृञ् भरणे (भ्वा०उ०९२३) इति भ्वादिरेव गृह्यते न जौहोत्यादिको डुभृञ् (जु०उ०५), द्व्यनुबन्धकत्वात्। एवञ्च बिभर्तेर्वा 'भृञ्भरणे' (क्र्या०प०१९) इति दीर्घान्तात् क्र्यादेर्वा ण्यति भार्याशब्दो निर्बाध एवेति।

मृजेर्विभाषा (पा०सू०३-१-११३)॥ ऋदुपधत्वान्नित्यं क्यपि प्राप्ते विकल्पार्थं सूत्रम्। परिमृज्यः। परिमार्ग्यः। ण्यत्पक्षे "मृजेर्वृद्धिः" (पा०सू०७-२-११४) 'चजोः' (पा०सू०७-३-५२) इति कुत्वम्॥

राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः (पा०सू०३-१-११४)॥ एते सप्त क्यबन्ता निपात्यन्ते । अभिषिक्तः क्षत्रियो राजा तेन सोतव्योऽभिषवद्वारेण निष्पादयितव्य इत्यर्थे कर्मणि क्यप् । दीर्घत्वञ्च निपात्यते रूढ्यर्थम् । यद्वा लतात्मकः सोमो राजा, "राजानं क्रीणन्ति" इत्यादौ दर्शनात् । स सूयते कण्ड्यते अत्र इत्यर्थे अधिकरणे क्यप् । निपातनं रूढ्यर्थम् । तेन आद्यपक्षे अश्वमेधादौ द्वितीयपक्षे ज्योतिष्टोमादौ च नातिप्रसङ्गः । राजसूयशब्दश्च पुन्नपुंसकलिङ्गोऽर्धर्चादित्वात् । सरत्याकाशमार्गे इति सूर्यः । 'सृ गतौ' (भ्वा०प०९६०) । कर्तरि क्यप् निपातनादुत्वं, रपरत्वं, "हलि च" (पा०सू०८-२-७७) इति दीर्घः । यद्वा 'षू प्रेरणे' (तु०प०१२८) तुदादिः । सुवति-कर्माणि लोकं प्रेरयति इत्यर्थे कर्तरि क्यपि कृते क्यपो रुडागमश्च निपात्यते । मृषोपपदाद्वदेः कर्मणि क्यप् । पक्षे यति प्राप्ते नित्यं क्यप् निपात्यते । विशेष्यनिघ्नोऽयम् ।

भवन्ति नोद्दामगिरां कवीना-
मुच्छ्रायसौन्दर्यगुणा मृषोद्याः । (मा०का०४-१०)

इति माघः । रोचते असौ रुच्यः । कर्त्तरि क्यप् ।

गुपेरादेः कुत्वञ्च संज्ञायाम् । कुप्यम् । सुवर्णरजतातिरिक्तस्य धनस्येयं संज्ञा । कृष्टे स्वयमेव पच्यन्ते कृष्टपच्याः । कर्मकर्त्तरि निपातनम् । इहान्तोदात्तत्वमपि निपात्यते । शुद्धे तु कर्मणि 'कृष्टपाक्यः' इत्येव भवति । न व्यथते अव्यथ्यः, कर्तरि क्यप् । अत्र वार्तिकानि—

सूयरुच्याव्यथ्याः कर्तरि (का०वा) ॥

सूसर्तिभ्याञ्च सर्तेरुत्वम् (का०वा०) ॥

सुवतेर्वा रुडागमः (का०वा०) ॥ कुप्यं संज्ञायाम् (का०वा०) इति ।

भिद्योद्ध्यौ नदे (पा०सू०३-१-११५) ॥ भिदेरुज्झेश्च कर्तरि क्यप् उज्झेर्धत्वञ्च । भिनत्ति कूलं भिद्यः । उज्झत्युदकम् उद्ध्यः । नदे किम् ? भेत्ता । उज्झिता ।

पुष्यसिध्यौ नक्षत्रे (पा०सू०३-१-११६) ॥ पुषेः सिधेश्च अधिकरणे क्यप् निपात्यते नक्षत्रे अभिधेये । पुष्यन्त्यस्मिन्नारब्धा अर्था इति पुष्यः । सिध्यन्त्यस्मिन्निति सिध्यः । नक्षत्रे इति किम् ? पोषणं, सेधनम् । पुष्यसिध्यशब्दौ पर्यायौ । स्वरूपपरत्वात्तु सूत्रे द्वन्द्वः । 'पुष्ये तु सिध्यतिष्यौ' (अ०को०३-२४) इत्यमरः । तत्र तुष तुष्टौ (दि०प०७८) इत्यस्मात् बाहुलकादधिकरणे यति "सूर्यतिष्य" (पा०सू०६-४-१४९) इति निपातनादुकारस्येकार इत्येके । 'तिष्यः पुष्ये कलियुगे' (अ०को०

३-३-१५५) इत्यमरव्याख्याने क्षीरस्वामी त्वाह—त्विष दीप्तौ (भ्वा० उ०१०२६) "अघ्न्यादयश्च" (उ०सू०५६१) इत्यौणादिकयकप्रत्ययान्तः। निपातनाद्धलोपः।

विपूयविनीयजित्या मुञ्जकल्कहलिषु (पा०सू०३-१-११७)॥ पूङ्-नीजिभ्यः क्यप् निपात्यते यथासंख्यं मुञ्जादिषु वाच्येषु। पूङ् पवने (भ्वा०आ०९९१) विपूर्वः। विपूयो मुञ्जः। 'रज्ज्वादिकरणाय शोधयितव्यः' इत्यर्थः। मुञ्जस्तृणविशेषः। विनीयः कल्कः। कल्कशब्दोऽयमस्ति पिष्टे औषधविशेषे। यथा—

पथ्या शुण्ठी सैन्धवांशस्य कल्कः पेयो नित्यं सर्वरोगक्षयाय। इति।

अस्ति च पापे, 'तपो न कल्कोऽध्ययनं न कल्कः' इत्युपक्रम्य 'तान्येव भावोपहतानि कल्कः' इति महाभारते दर्शनात्। इह तु प्रथमस्य ग्रहणमिति केचित्। अविशेषेणेति हरदत्तः। तथाच माघः प्रायुङ्क्त—'अविनीयसम्भ्रमविकासिभक्तिभिः' इति। जि अभिभवे (भ्वा०प०९७१)। जित्यो हलिः। 'बलेन कृष्टव्यः' इत्यर्थः। महद्धलं हलिः। कृष्टसमीकरणार्थं स्थूलकाष्ठमुच्यते। विपव्यम्। विनेयम्। जेयश्चान्यत्। सर्वत्र "अचो यत्" (पा०सू०३-१-९७)।

प्रत्यपिभ्यां ग्रहेः (पा०सू०३-१-११८)॥ क्यप् स्यात्। मत्तस्य न प्रतिगृह्यम्। तस्मान्नापिगृह्यम्।

छन्दसीति वक्तव्यम्(का०वा०)॥ लोके तु—प्रतिग्राह्यम्, अपिग्राह्यम्।

पदास्वैरिबाह्यापक्ष्येषु च (पा०सू०३-१-११९)॥ एषु चतुर्ष्वर्थेषु गृहेर्धातोः क्यप् स्यात्। प्रगृह्यम्पदम्। यस्य प्रगृह्यसंज्ञा विहितेति वृत्तिः। यद्यपि पदावयवस्य द्विवचनादेः प्रगृह्यसंज्ञा न तु पदस्य, तथापि अवयवधर्मस्य समुदाये उपचारो बोध्यः। यद्वा यौगिकोऽयं पदशब्दः पठ्यते, गम्यतेऽनेनार्थ इति। असन्निकर्षश्चात्र गृहेरर्थः, 'अग्नी अत्र' इत्यादौ हि प्रकृतिभावात यणाद्यभावे कियताऽपि कालेन व्यवधानात् परस्परमचो न सन्निकृष्यन्ते। तथा च बह्वृचप्रातिशाख्यम्—स्वरान्तरं तु विवृत्तिः, सा वा स्वरभक्तिकालेति। स्वरभक्तिकालस्तु अर्द्धमात्रा पादमात्रा वा, द्राघीयसी सार्द्धमात्रेति तत्रैवोक्तत्वात। तथा चाचोरन्तरालस्य विवृत्तिसंज्ञकस्य वर्णशून्यकालस्य क्वचिदर्द्धमात्रत्वं क्वचित्पादमात्रत्वं चेति फलितोऽर्थः। एतद्व्यवस्था तु शिक्षासु बोद्धव्या। अवगृह्यं पदम्, यस्यावग्रहः क्रियते इति वृत्तिः। अवग्रहो विच्छेदः। अत्रापि गृह्णातेरर्थः प्राग्वत्, मात्रा ह्रस्व-

स्तावदवग्रहान्तरमिति प्रातिशाख्यात्। अत्र पदकाले समासे पूर्वपदमेवगृह्यमिति हरदत्तः। उपलक्षणञ्चैतत्, 'हरिभिः' इत्यादेरपि सङ्ग्राह्यत्वात्। तस्मात् महापदसंज्ञाक्रान्ते य एकदेशः पदकाले विच्छिद्य पठ्यते, स सर्वोऽप्यवगृह्यमिति स्थितिः। स्वेनैव ईरितुं शीलमस्य स्वैरी स्वतन्त्रः। अस्वैरी परतन्त्रः। गृह्यका इमे, 'गृहीतका' इत्यर्थः। उभयत्रानुकम्पायां कन्। पञ्जरादिबन्धेन परतन्त्रीकृताः शुकादय उच्यन्ते।

गृहासक्ताः पक्षिमृगाः छेकास्ते गृह्यकाश्च ते।

(अ०को०५-४६) इत्यमरः। बाह्यायाम्—ग्रामगृह्या, नगरगृह्या सेना। 'ग्रामनगराभ्यां बहिर्भूता' इत्यर्थः। स्त्रीलिङ्गनिर्देशात्पुन्नपुंसकयोर्न भवति। पक्षे भवः—पक्ष्यः। दिगादित्वाद्यत्। वासुदेवगृह्यः। आर्यगृह्यः। तत्पक्षाश्रित इत्यर्थः।

विभाषा कृवृषोः (पा०सू०३-१-१२०) ॥ क्यप् स्यात्। पक्षे ण्यत्। कृत्यम्। कार्यम्। वृषु सेचने (भ्वा०प०७०७)। वृष्यम्। वर्ष्यम्।

युग्यञ्च पत्रे (पा०सू०३-१-१२१) ॥ पतन्त्यनेन पत्रं वाहनम्। "दाम्नीशस" (पा०सू०३-२-१८२) इत्यादिना करणे ष्ट्रन्। तस्मिन्नर्थे युजेः कर्मणि क्यप् कुत्वञ्च निपात्यते। युग्यो गौः। पत्रे किम्? 'योग्यम्' अन्यत्। ण्यति "चजोः" (पा०सू०७-३-५२) इति कुत्वम्।

अत्र हरदत्तः—प्राग्घितीयेन यतेदं सिद्धम् "तद्वहतिरथयुगप्रासङ्गम्" (पा०सू०४-४-७६) इति। स्वरेऽपि नास्ति भेदः। क्यपि धातुस्वरः, यत्यपि "यतोऽनावः" (पा०सू०६-१-२१३) इत्याद्युदात्तत्वम्। 'अयुग्यम्' इत्यत्रापि न स्वरभेदः। 'ययतोश्चातदर्थे" (पा०सू०६-२-१५६) "कृत्योकेष्णुच्चार्वादयश्च" (पा०सू०६-२-१६०) इत्युभयत्रापि अन्तोदात्तत्वविधानात्। तस्मादिदं सूत्रं शक्यमकर्तुमिति।

अत्रेदं वक्तव्यम्। 'युग्यो गौः' इत्यादिसिद्धावपि 'युग्योहस्ती' इति वृत्तावुदाहृतं तद्धितेन न सिध्यति, नहि हस्ती युगं वहतीति। कृता तु सिध्यति युज्यते सम्बध्यते ह्यसौ कुथादिनेति। किञ्च असत्यस्मिन्सूत्रे ण्यत्प्रत्ययेन 'योग्यो गौः' इत्यपि स्यात्। अपि च स्वरभेदोऽपि पाक्षिकोऽस्त्येव। "क्रतुर्भवत्युक्थ्यः" इत्यादौ तित्स्वरदर्शनात्। "यतोऽनावः" (पा०सू०६-१-२१३) इति सूत्रं यदन्ते द्व्यच्के एकाचप्रकृतिक एव प्रवर्तत इति वेदभाष्यकारप्रतिपादिते पक्षे स्वरभेदस्य दुर्वारत्वादिति दिक्।

अमावस्यदन्यतरस्याम् (पा०सू०३-१-१२२) ॥ अमाशब्दः सहार्थे

वर्त्तते, 'अमात्यः' इत्यादौ दर्शनात्। तस्मिन्नुपपदे वसेर्धातोरधिकरणे ण्यत् तन्निमित्तायां वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते। निपातनादेव कालविशेषे रूढिर्लभ्यते। अमा सह सन्निकृष्टौ वसतोऽस्यां चन्द्रार्कौ इत्यमावस्या, अमावास्या। एकदेशविकृतस्यानन्यत्वात् "अमावास्याया वा" (पा०सू०४-३-३०) इति दीर्घमध्यमनूद्य विहितस्तद्धितो ह्रस्वमध्यादपि सिद्ध्यति। यदि तु यत्प्रत्ययान्तस्येदं पाक्षिकं निपातनमित्याश्रीयेत तदा यता मुक्ते 'अमावास्या' इत्यधिकरणे ण्यदेव तावद् दुर्लभः। अथापि बाहुलकाल्लभ्येत, एवमपि "अमावास्याया वा" (पा०सू०४-३-३०) इत्यत्र ण्यदन्तग्रहणे यदन्तं न गृह्येत। किञ्च ण्यत्पक्षे उपपदसमासो न स्यात्। मयूरव्यंसकादित्वाद्भविष्यतीति चेत्? एवमपि "गतिकारकोपपदात्" (पा०सू०६-२-१३९) इति स्वरो न स्यात्, किं त्वन्तोदात्तः स्यात्, इष्यते तु तित्स्वर एव "अमावास्या सुभगा सुशेवा" 'यदाग्नेयोऽष्टाकपालोऽमावास्यायाम्' इत्यादौ स्वाशब्दे स्वरितत्वस्य शेषनिघातस्य च पठ्यमानत्वात्। तस्मात् "ण्यदन्तस्यैव वृद्धौ सत्यां पक्षे ह्रस्वो निपात्यते" इति यथाव्याख्यानमेवादर्त्तव्यम्। तथा च भाष्यम्—

अमावसोरहं ण्यतोर्निपातयाम्यवृद्धिताम्।
तथैकवृत्तिता तयोः स्वरश्च मे प्रसिध्यति॥

इह व्यक्तिभेदाश्रयो द्विवचननिर्देशः। एकस्येति शेषः। ण्यतोः—ण्यदन्तयोः। अमापूर्वयोर्वसोर्मध्ये एकस्य अवृद्धितां ह्रस्वम् अहं निपातयामि। सूत्रकारेणैकयमापन्नस्येयमुक्तिः। तथा सति तयोः शब्दयोरेका तद्धितवृत्तिर्ययोः तत्ता सिध्यति एकदेशविकृतस्यानन्यत्वात्। एवं निपातयतो मे स्वरोऽपि सिध्यति। स च व्याख्यात एव। न च सिद्धान्तेऽपि उत्तरपदप्रकृतिस्वरो दुर्लभः, सूत्रे सप्तम्यभावेन उपपदसंज्ञाया अप्रवृत्तौ उपपदात्परत्वाभावादिति वाच्यम्, 'अमा' इति सप्तम्या लुका निर्देशादिति भावः।

छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि (पा०सू०३-१-१२३)॥ एतानि सप्तदश छन्दसि निपात्यन्ते। कृती छेदने (तु०प०१५५) अस्मात् निस्पूर्वात्क्यपि प्राप्ते ण्यत्, आद्यन्तयोर्विपर्यासः, निसः षत्वं च निपात्यते, निष्टर्क्यं चिन्वीत पशुकामः। देवशब्द उपपदे ह्वयतेर्जुहोतेर्वा क्यप् दीर्घत्वं तुगभावश्च, स्पर्द्धन्ते वा उ देवहूये। अत्र प्रपूर्वादुत्पूर्वाच्च नयतेः क्यप्, प्रणीयः, उन्नीयः।

उत्पूर्वाच्छिषेः क्यप्, उच्छिष्यम् । मृङ् प्राणत्यागे (तु०आ०१२३), स्तृञ् आच्छादने (स्वा०उ०६), धृ हूर्छने (भ्वा०प०९६४) एभ्यो यत्, मर्यः, स्तर्या, स्त्रियामेवास्य निपातनम् । ध्वर्यः । खनेर्यत्ण्यतौ, खन्यः, खान्यः । देवशब्द उपपदे यजेर्यप्रत्ययः, शुन्धध्वं दैव्याय कर्मणे देवयज्यायै । प्रत्ययस्वरेणान्तोदात्तत्वे कृदुत्तरपदप्रकृतिस्वरः । स्त्रीलिङ्ग एवेदं निपातनम् । आङ्पूर्वात्पृच्छेः क्यप्, आपृच्छ्यं धरुणं वाज्यर्षति । प्रतिपूर्वात्सीव्यतेः क्यप् षत्वञ्च, प्रतिषीव्यः । ब्रह्मण्युपपदे वदेर्ण्यत्, "वदः सुपि क्यप् च" (पा०सू०३-१-१०६) इति प्राप्तयोः क्यब्यतोरपवादः, ब्रह्मवाद्यम् । अथ कथं 'ब्रह्मोद्यं वदन्ति' (ऋ०ब्रा०सू०२-४) इति? छन्दसि विशेषविहितेन ण्यता लोके चरितार्थस्य "वदः सुपि" इति क्यपो बाधप्रसङ्गात् । न च "वासरूप" (पा०सू०३-१-९३) न्यायः सरूपत्वात्, "नानुबन्धकृतमसारूप्यम्" (प०भा०८) इत्युक्तत्वात् । सत्यम्, कृद्व्यत्यययोऽत्र बोध्यः । उक्तं हि, "कालहलच्स्वरकर्तृयङां च" इति । तत्र हि कर्तृग्रहणं कृत्प्रत्ययपरमित्यवोचाम ।

भवतेः स्तौतेश्च ण्यत्, भाव्यः, स्ताव्यः । उपपूर्वाच्चिनोतेर्ण्यत् आयादेशश्च निपात्यते पृडे उत्तरपदे । मृड सुखने, पृड च (तु०प०४७,४८) । इत्येतस्मादिगुपधलक्षणः कः, उपचाय्यपृडम् ।

हिरण्य इति वक्तव्यम (का०वा०) ॥ उपचेयपृडमेवान्यत् । अत्र वार्त्तिकम्—

निष्टर्क्ये व्यत्ययं विद्यात् निसः षत्वं निपातनात् ।
ण्यदायादेश इत्येतौ उपचाय्ये निपातितौ ॥
ण्यदेकस्माच्चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः ।
ण्यदेकस्माद्यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः ॥

व्यत्ययमिति, आद्यन्तविपर्यासमित्यर्थः । 'चतुर्भ्यः' इति देवहूयादिषु चतुर्भ्यो धातुभ्यः क्यप्, उपसर्गभेदान्नयतेर्भेदः । द्वौ क्यपाविति, द्वाभ्यां धातुभ्यां द्वाविति भावः । ण्यद्विधिश्चतुरिति सुजन्तम् । 'चतुरो वारान् ण्यद्विधीयते' इत्यर्थः ॥

ऋहलोर्ण्यत् (पा०सू०३-१-१२४) ॥ ऋवर्णान्तात् धातोर्हलन्ताच्च ण्यत् स्यात् । कार्यम् । हार्यम् । वाच्यम् । पाच्यम् । सूत्रे पञ्चम्यर्थे षष्ठी । 'ऋ' इति च अर्तेर्ग्रहणं न भवति, किन्तु वर्णग्रहणम, हला साहचर्यात् । 'परङ्कार्यम्' (पा०सू०१-४-२) इति निर्देशात् । "ईडवन्दवृशंसदुहां ण्यतः" (पा०सू०६-४-२१४) इति लिङ्गाच्च । अत्र वार्त्तिकानि--

पाणौ सृजेर्ण्यद्विधिः (का०वा०) ॥ ऋतुपधत्वात्प्राप्तस्य क्यपोऽपवा-

दुः । पाणिभ्यां सृज्यते पाणिसर्ग्या रज्जुः ।

समवपूर्वाच्चेति वक्तव्यम (का०वा०) ॥ समवसर्ग्या ।

लपिदभिभ्यांश्चेति वक्तव्यम् (का०वा०) ॥ अपलाप्यम् । अवदाभ्यम् । आभ्यां "पोरदुपधात्" (पा०सू०३-१-९८) इति प्राप्तस्य यतोऽपवादः । अत्र 'दभिः' धातुष्वपठितोऽपि वार्त्तिकवचनात् चुराद्यन्ते "बहुलमेतन्निदर्शनम्" (चु०ग०सू०) इति बहुलग्रहणाच्चुलुम्पादिवत्साधुः । तथा च प्रयुज्यते-"न तानशन्ति न दभाति तस्करः" इति, "विष्णुर्गोपा अदाभ्यः" इति च । जयादित्यस्तु आद्यं वार्त्तिकद्वयम् "एतिस्तुशास्वृ" (पा०सू०३-१-१०९) इति सूत्रे पठित्वा तृतीयवार्त्तिकोक्तयोर्धात्वोर्मध्ये लपिम्, "आसुयुवपि" (पा०सू०३-१-१२६) इति सूत्रे रपेरुपरि प्रक्षिप्य अनुक्तसमुच्चयार्थेन चकारेण दभेः सङ्ग्रहमाह । तत्र वैरूप्यं निर्बीजमेवेत्यवधेयम् ।

ओरावश्यके (पा०सू०३-१-१२५) ॥ उवर्णान्ताद्धातोर्ण्यत् स्यात आवश्यके द्योत्ये । अवश्यं भाव आवश्यकम् । मनोज्ञादित्वाद् वुञ् । "अव्ययानां भमात्रे टिलोपः" (का०वा०) । लाव्यम् । पाव्यम । द्योतितार्थस्यापि क्वचित्प्रयोगो दृश्यते, लाघवं प्रत्यनादरात् । अवश्यलाव्यम् । अत्रोपपदसमासासम्भवेऽपि मयूरव्यंसकादेराकृतिगणत्वात्समासः । उत्तरपदप्रकृतिस्वरत्वमपि तत्रैव निपातनाद्बोध्यम् ।

आसुयुवपिरपित्रपिचमश्च (पा०सू०३-१-१२६) ॥ आङ्पूर्वात्सुनोतेर्युप्रभृतिभ्यश्च ण्यत् स्यात् । "अचो यत्" "पोरदुपधात्" (पा०सू०३-१-९७,९८) इति यथायोगं प्राप्तस्य यतोऽपवादः । अत्र रपेरुपरि लपिर्वृत्तिकृता प्रक्षिप्त इत्युक्तम् । षुञ् अभिषवे (स्वा०उ०१) । आसाव्यम् । यु मिश्रणे (अ०प०२३) । याव्यम् । 'युञ् बन्धने' (क्र्या०उ०७) इत्यस्य तु सानुबन्धकत्वान्नेह ग्रहणम् । वाप्यम् । राप्यम् । अपत्राप्यम् । आचाम्यम् ।

आनाय्योऽनित्ये (पा०सू०३-१-१२७) ॥ नयतेराङ्पूर्वात् ण्यदायादेशौ निपात्येते । रूढ्यर्थमपि निपातनम् । तेन घटादौ न भवति । किन्तु दक्षिणाग्निविशेष एव भवति । तथाहि—दक्षिणाग्नेर्योनिर्विकल्प्यते वैश्यकुलाद्वित्तवतः भ्राष्ट्राद्वा गार्हपत्याद्वेति । तत्र यो गार्हपत्यादानीयते आहवनीयेन सहैकयोनिः, तत्रैवेदं निपातनं, तस्य चानित्यत्वम्, सततमप्रज्वलनात् । अत्र भाष्यम्—

आनाय्योऽनित्यइति चेद्दक्षिणाग्नौ कृतं भवेत् ।
एकयोनौ तु तं विद्यादानेयो ह्यन्यथा भवेत् ॥

चेदित्यस्यानन्तरं घटादिष्वतिप्रसङ्ग इति शेषः । भवेदिति सम्भा-

वने लिङ्, निपातनादेव रूढिः सम्भाव्यत इत्यर्थः। एकयोनाविति। आहवनीयेन सहेति शेषः। आनेय इति। घटादावनित्ये भिन्नयोनौ च दक्षिणाग्नौ "अचो यत्" (पा०सू०३-१-९७) इति यदेव भवतीत्यर्थः।

प्रणाय्योऽसम्मतौ (पा०सू०३-१-१२८) ॥ सम्मननं सम्मतिः। प्रीतिविषयभावोपगमनं कर्मव्यापारोऽत्र विवक्षितः। तथा भोगविषय आदरोऽपि सम्मतिः। तन्त्रेणार्थद्वयं विवक्षितम्। तेन पूजानर्हे निष्कामे च प्रपूर्वान्नयतेः ण्यदायादेशौ निपात्येते। प्रणाय्यश्चोरः। ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्यायान्तेवासिने नान्यस्मै कस्मै चन।

पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु (पा० सू०३-१-१२९) ॥ यथासंख्यं चतुर्षु चत्वारो निपात्यन्ते। पाय्यं मानम्। मीयतेऽनेन मानम्। माङो ण्यत्प्रत्ययः करणे। "आतो युक् चिण्कृतोः" (पा०सू०७-३-३३) इति युक्। धात्वादेः पत्वञ्च निपातनात्। मेयमन्यत्। सान्नाय्यं हविर्विशेषः। सम्यङ् नीयते होमार्थमग्निं प्रतीति। सम्पूर्वान्नयतेर्ण्यदायादेशौ उपसर्गदीर्घत्वञ्च निपात्यते। ऐन्द्रन्दध्यमावास्यायाम्, ऐन्द्रं पयोऽमावास्यायामिति विहितयोर्दधिपयसोः संज्ञेयम्।

माघस्तु यथाश्रुतग्राही हविर्मात्रे प्रायुङ्क्त—

प्रतिशरणमशीर्णज्योतिरग्न्याहितानां
विधिविहितविरिब्धैः सामिधेनीरधीत्य।
कृतगुरुदुरितौघध्वंसमध्वर्युमुख्यै-
र्हुतमयमवलीढे साधुसान्नाय्यमग्निः ॥ इति। (मा०का०११-४१)

नन्विदमपि दधिपयोविषयकमेव किं न स्यादिति वाच्यम्, चन्द्रोदयास्तमयवर्णनपूर्वकं सूर्योदयं प्रक्रम्य पठितस्यास्य कृष्णप्रतिपद्विषयत्वेन तत्र दधिपयोयोगस्यासम्भवात्। हविर्विशेषवाचकस्य सामान्ये विशेषान्तरे वा लक्षणेत्यपि बोध्यम्। निकाय्यो निवासः। निपूर्वाच्चिनोतेरधिकरणे ण्यत्, आयादेशः, आदेः कत्वञ्च निपात्यते। निचीयतेऽस्मिन्धान्यादिकमिति विग्रहः। निचेयमन्यत्। अत्रैवार्थे निकायशब्दोऽप्यस्ति। स च "निवासचितिशरीरोपसमाधानेष्वादेश्च कः" (पा०सू०३-३-४१) इत्यत्र व्युत्पादयिष्यते। धाञो ण्यत्प्रत्ययः सामिधेन्याम्। समिधामाधानी सामिधेनी। "समिधामाधाने षेण्यण्" (का०वा०)। "प्रवोवाजाः" इत्यादिका ऋचः सामिधेन्यः। अत्र च न सर्वा सामिधेनी धाय्येत्युच्यते, किन्तु समिध्यमानवन्तीं समिद्धवन्तीं चान्तरेण विकृतिषु प्रक्षिप्यमाणा "पृथुपाजा अमर्त्यः" इत्यादिकैव। सूत्रे सामिधेनीग्रहणं प्रयोगविषयोपलक्षणार्थम्। तथा चासामिधे-

न्यामपि दृश्यते—धाय्याः शंसति । "अग्निर्नेता" "त्वं सोमक्रतुभिः" इति ज्योतिष्टोमे मरुत्वतीये शस्त्रविधानमेतत् । तत्र 'धीयते अनया समित्' इति करणे ण्यदिति हरदत्तग्रन्थः "पृथुपाजाः" इत्यादिविषयः, 'धीयत इति धाय्या' इति कर्मणि ण्यदिति माधवग्रन्थस्तु "अग्निर्नेता" इत्यादिसाधारण इति विवेकः । सर्वश्चायं विशेषो निपातनस्य रूढ्यर्थत्वाल्लभ्यते ।

क्रतौ कुण्डपाय्यसञ्चाय्यौ (पा०सू०-३-१-१३०) ॥ एतौ निपात्येते क्रतौ वाच्ये । तत्र कुण्डशब्दे तृतीयान्ते उपपदे पिबतेर्धातोरधिकरणे यत् प्रत्ययो निपात्यते युक्च । कुण्डेन पीयते अस्मिन्सोम इति कुण्डपाय्यः क्रतुः । ननु अत्र ण्यदेव निपात्यतां प्रकृतत्वात् , एवञ्च युक् न निपातनीयः, "आतो युक्" (पा०सू०७-३-३३) इत्येव सिद्धत्वादिति लाघवमपीति चेत् ? मैवम् , तित्स्वरप्रसङ्गात् । इष्यते तु "यतोऽनावः" (पा०सू०६-१-२१३) इत्याद्युदात्तत्वम् , कृदुत्तरपदप्रकृतिस्वरेण तस्यैव परिनिष्ठितत्वात् । तथा च प्रयुज्यते—"यस्ते शृङ्गवृषो नपात प्रणपात् कुण्डपाय्यः" इति । सम्पूर्वाच्चिनोतेर्ण्यत् आयादेशश्च निपात्यते । सञ्चीयते असौ सञ्चाय्यः क्रतुः । क्रताविति किम् ? कुण्डपानं, सञ्चेयः ।

अग्नौ परिचाय्योपचाय्यसमूह्याः (पा०सू०३-१-१३१) ॥ एते निपात्यन्ते अग्नावभिधेये । अग्निश्चेह न ज्वलनः, किन्तु तद्धारणार्थमिष्टकाचयननिर्मितस्थलविशेषः, तत्रैव निरूढत्वात । परिपूर्वादुपपूर्वाच्च चिनोतेर्ण्यदायादेशौ निपात्येते-परिचाय्यः । उपचाय्यः, सम्पूर्वाद्वहेः सम्प्रसारणं दीर्घत्वञ्च निपात्यते—समूह्यं चिन्वीत पशुकामः । अग्नाविति किम् ? परिचेयम् । उपचेयम् । संवाह्यम् । इह सम्पूर्वात् "ऊह वितर्के" (भ्वा०आ०६४९) इत्यस्मादनेकार्थत्वाद्वहेरर्थे वर्तमानाद्धलन्तत्वाण्ण्यति 'समूह्यम्' इति सिद्धम् । युक्तं चैतत् , "समूह्यं चिन्वीत पशुकामः । पशवो वै पुरुषः । पशुनेवास्मै तत्समूहति" इति वह्यर्थेन ऊहिना ब्राह्मणे समूह्यशब्दस्य निरुक्तत्वात । उक्तञ्च वार्तिककृता-

'समूह्य' इत्यनर्थकं वचनं सामान्यकृतत्वात् । वह्यर्थमिति चेद्वहते स्तदर्थत्वात्सिद्धम् । ऊहिविग्रहाच्च ब्राह्मणे सिद्धमिति ।

चित्याग्निचित्ये च (पा०सू०३-१-१३२) । चित्येत्यत्र कर्मणि क्यप् निपात्यते । यतोऽपवादः । धातुस्वरेणाद्युदात्तं पदम् । चीयते असौ चित्योऽग्निः । अग्नेश्चयनमग्निचित्या । भावे यकारप्रत्ययस्तुक् च निपात्यते, न तु क्यप् । तेनान्तोदात्तत्वं भवति । इह सूत्रे 'अग्नौ' इत्यनु-

वर्त्तते, तच्च चित्यशब्दस्यैव विशेषणं, नाग्निचित्याशब्दस्य, तस्य भावे निपातितत्वात् । तेनाग्नेरन्यत्र 'चेयम्' इत्येव भवति ।

समाप्ताः कृत्याः ॥

ण्वुल्तृचौ (पा०सू०३-१-१३३) ॥ धातोर्ण्वुल्तृचौ स्तः । इत ऊर्ध्वमध्यायपरिसमाप्तेरुत्सर्गतः "कर्तरि कृत्" (पा०सू०३-४-६७) इत्युक्तेः कर्तरि प्रत्ययाः । पाचकः । पक्ता । तृचश्चकारः सामान्यग्रहणाविघातार्थः । "तुश्छन्दसि" (पा०सू०५-३-५९) "तुरिष्ठेमेयः सु" (पा० सू०६-४-१५४) इति । एवञ्च "अप्तृन्" (पा०सू०६-४-११) इति सूत्रेऽपि तृन्तृचोः इति पृथक्ग्रहणं विहाय 'अप्तृ स्वसृ' इत्येव ग्रहणमुचितम् ।

नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः (पा०सू०३-१-१३४) ॥ नन्द्यादेर्ल्युः, ग्रह्यादेर्णिनिः, पचादेरच् स्यात् । नन्दिग्रहिपचादयश्च न धातुपाठे सन्निविष्टाः संगृह्यन्ते । किन्तर्हि नन्दन रमण इत्येवमादिषु प्रातिपदिकगणेषु ये प्रकृतिभागास्ते इह बुद्ध्या पृथक् कृत्य गृह्यन्ते । नन्वेवं किमनेन सूत्रेण, गणपाठादेव नन्दनादिशब्दानां साधुत्वोपपत्तेरिति चेत् ?

अत्र हरदत्तः--असत्यस्मिन्नष्टाध्याय्यां क्वचिदप्यनुपयोगात् गणपाठो नापेक्षिष्यते इति । तस्यायमाशयः--एत एव साधव इति स्वरूपनियमपरं हि व्याकरणशास्त्रं तच्च "सूत्रेष्वेव हि तत्सर्वम्" इति न्यायेन सूत्रात्मकम् । तथा च यत्सूत्रैः कथमपि न विषयीकृतं, तस्य गाव्यादिवदर्थादसाधुत्वं प्रसज्येतेति ।

नन्दिवाशिमदिदूषिसाधिवर्द्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम् ( ग०सू० ) ॥ टुनदि समृद्धौ ( भ्वा०प०६७ ) । नन्दयतीति नन्दनः । वाशृ शब्दे (दि०आ०७७) । वाशनः । मदी हर्षे (दि० प०१०२) । मदनः । दुष वैकृत्ये (दि०प०७९) । "दोषो णौ" (पा०सू० ६-४-९०) इत्यूत्वम् , दूषणः । राध साध संसिद्धौ (स्वा०प०१६,१७) । विप्रो यज्ञस्य साधनः । ल्युः कर्त्तरीति पुंस्त्वम् । कथन्तर्हि 'होतुराहुतिसाधनं धेनुः' इति ? करणे ल्युटि सामान्ये नपुंसकं भविष्यति । वृधु वृद्धौ (भ्वा०आ०७६०) वर्द्धनः । शुभ शुम्भ शोभार्थे (तु०प०४१, ४२) शोभनः । रुच दीप्तौ (भ्वा०आ०७४६) । रोचनः ।

सहितपिदमः संज्ञायाम् (ग०सू०) ॥ षह मर्षणे (भ्वा०आ० ८७७) सहनः । तप सन्तापे (भ्वा०प०१०१०) तपनः । दमु उपशमे (दि०प०९७) । दमनः । जप जल्प व्यक्तायां वाचि (भ्वा०प०३९७,

३९८)। जल्पनः। रमु क्रीडायां (भ्वा०आ०८७८) रमणः। दृप हर्षविमोचनयोः (दि०प०९०) दर्पणः। क्रदि आह्वाने रोदने च (भ्वा०प०७१) सङ्क्रन्दनः। कृष विलेखने (भ्वा०प०१०१६) सङ्कर्षणः। हृषु अलीके (भ्वा०प०७१०) हर्षणः। अर्द हिंसायाम् (भ्वा०प०५५) जनमर्दयतीति जनार्दनः। कर्मण्यणि प्राप्ते। एवमुत्तरत्रापि कर्मण्युपपदे द्रष्टव्यम्। यु मिश्रणे (अ०प०२३)। यवनः। षूद क्षरणे (भ्वा०आ०२५)। मधुर्नामाऽसुरस्तं सूदयतीति मधुसूदनः। ञिभी भये (जु०प०२)। विपूर्वात् णिचि "भियो हेतुभये षुक्" (पा०सू०७-३-४०) इति षुक्, विभीषणः। लूञ् छेदने (क्र्या०उ०११)। निपातनाण्णत्वम्, लवणः। णश अदर्शने (दि०प०८८), दमु उपशमे (दि०प०९७)। ण्यन्तौ। वित्तं नाशयतीति वित्तनाशनः। कुलं दमयतीति कुलदमनः, शत्रुदमनः। इति नन्द्यादिः।

ग्रह उपादाने (क्र्या०उ०६१)। ग्राही। षह मर्षणे (भ्वा०आ०८७७) उत्साही। दसु उपक्षये (दि०प०१०७) उद्दासी। भस भर्त्सनदीप्त्योः (जु०प०१८) उद्भासी। तिष्ठतेः "आतो युक्" (पा०सू०७३-३३)। स्थायी। मन्त्रि गुप्तपरिभाषणे (चु०आ०१४६) चुरादिः, मन्त्री। अर्द हिंसायाम् (चु०उ०२९६)। समर्दी।

रक्षश्रुवपशां नौ (ग०सू०)॥ रक्ष पालने (भ्वा०प०६५९) निरक्षी। श्रु श्रवणे (भ्वा०प०९६७)। निश्रावी। डुवप् बीजसन्ताने (भ्वा०उ०१०२८) निवापी। शो तनूकरणे (दि०प०३९) निशायी। चत्वारोऽमी निपूर्वाः।

याचृव्याहृसंव्याहृव्रजवदवसां नञ्पूर्वाणाम् (ग०सू०)॥ टुयाचृ याच्ञायाम् (भ्वा०उ०८८८)। हृञ् हरणे (भ्वा०उ०९२४)। व्रज गतौ (भ्वा०प०२५४)। वद व्यक्तायां वाचि (भ्वा०प०१०३४)। वस निवासे (भ्वा०प०१०३४)। अयाची। अव्याहारी। असंव्याहारी। अव्राजी। अवादी। अवासी।

अचामचित्तवत्कर्तृकाणाम् (ग०सू०)॥ अजन्तानां धातूनाम् अचेतनकर्तृकाणां णिनिर्भवति। प्रतिषिद्धार्थानामेव। अकारी। अहारी। शीङ् स्वप्ने (अ०आ०२२) विशयी, वृद्ध्यभावो निपातनात्। षिञ् बन्धने (स्वा०उ०२) विषयी, वृद्ध्यभावः प्राग्वत्। इह षत्वमपि निपातनादिति गणरत्नमहोदधिव्याख्यायां वर्द्धमानः। 'विशयी विषयी देशे' इति वृत्तिः। अभिभावी भूते। अभिभूतवान् अभिभावी। राध संसिद्धौ (स्वा०प०१६) अपराधी। रुधिर् आवरणे (रु०उ०१) अवरोधी। उपरोधी। परिभावी। इह पाक्षिको वृद्ध्यभावो निपात्यते। इति ग्रहादिः।

डुपचष् पाके (भ्वा०उ०१०२१) वच परिभाषणे (अ०प०५३) इत्यादि।

आकृतिगणोऽयम्। तथा च "शिवशमरिष्टस्य करे" (पा०सू०४-४-१४३) इति सूत्रे कृञोऽच्प्रत्ययः कृतः। "कर्मणि घटोऽठच्" (पा०सू० ५-२-३५) इति सूत्रे च घटेः। तथा "यङोऽचि च" (पा०सू०२-४-७४) इति सूत्रेण अस्मिन्नच् प्रत्यये परे यङो लुग्विहितः। भाष्ये च "अजपि सर्वधातुभ्यो वक्तव्यः" इत्युक्तम्। किमर्थं तर्हि पचाद्यनुक्रमणमिति चेत्? नदट् इत्यादौ अनुबन्धासञ्जनार्थम्, कर्मोपपदानामिगुपधानां च बाधनार्थम्। अन्येषान्तु प्रपञ्चार्थम्। तथाहि—नदट्, भषट्, प्लवट्, चरट्, गरट्, तरट्, चोरट्, देवट्, सूदट् एते टितः। नद अव्यक्ते शब्दे (भ्वा०प०५४), टो ङीबर्थः, नदः। नदी। भष भर्त्सने (भ्वा०प०६९६) भषी। प्लुङ् गतौ (भ्वा०आ०९८३) प्लवी। चर गतौ (भ्वा०प०५६०) चरी। गॄ निगरणे (तु०प०१३०) गरी। तॄ प्लवनतरणयोः (भ्वा०प० ९९४) तरी। चुर स्तेये (चु०प०१) चोरी। दिवु क्रीडादौ (दि०प० ७) देवी। सूदिरुक्तार्थः, सूदी। मिष स्पर्द्धायाम् (तु०प०७२) मेषः। कुप क्रोधे (दि०प०१२७) कोपः। सृप्लृ गतौ (भ्वा०प०१००८) सर्पः। इह दिविप्रभृतिषु इगुपधत्वात्कः प्राप्तः। डुभृञ् (जु०उ०५) जारं बिभर्तीति जारभरा। श्वानं पचतीति श्वपचा। अनयोः कर्मण्यण् प्राप्तः। न्यङ्क्वादिषु श्वपाकशब्दस्य पाठात् पक्षे "कर्मण्यण्" (पा० सू०३-२-१) अपि भवतीति कैयटादयः। जृष्मृङ्प्रभृतीनान्तु पाठः प्रपञ्चार्थ एवेति विवेकः।

इगुपधज्ञाप्रीकिरः कः (पा०३-१-१३५)॥ इगुपधेभ्यो जानातेः प्रीणातेः किरतेश्च कः प्रत्ययः स्यात्। विक्षिपः। विलिखः। विबुधः। कृशः। जानातीति ज्ञः। "आतो लोप इटि च" (पा०सू०६-४-६४) इत्यालोपः। प्रीञ् तर्पणे (क्र्यां०उ०२) इयङादेशः, प्राणातीति प्रियः। कॄ विक्षेपे (तु०प०१२९) "ऋत इद्धातोः" (पा०सू०७-१-१००), किरतीति किरः। सूत्रे तु इतरेतरयोगद्वन्द्वे व्यत्ययेन पञ्चम्येकवचने कृशब्दस्य धात्वनुकरणत्वेन "प्रकृतिवदनुकरणम्" इत्यतिदेशात् ऋत इत्वं बोध्यम्। समाहारद्वन्द्वे तु नपुंसकत्वेन ह्रस्वे सतीत्वं न स्यात्।

आतश्चोपसर्गे (पा०सू०३-१-१३६)॥ आकारान्ताद्धातोरुपसर्गे उपपदे कप्रत्ययः स्यात्। "श्याद्व्यधा" (पा०सू०३-१-१४१) इति प्राप्तस्य णप्रत्ययस्यापवादः। प्रस्थः। सुग्लः। सुम्लः।

पाघ्राध्माधेट्दृशः शः (पा०सू०३-१-१३७)॥ एभ्यः पञ्चभ्यः शप्रत्ययः स्यात्। पिबतीति पिबः। जिघ्रः। धमः। धयः। स्त्रियान्तु टाप्,

धया। यद्यपि धेटष्टित्वात् स्तनन्धयीत्यत्रेव इहापि ङीप् प्राप्नोति। तथापि "खशन्ते एव ङीप् न तु शप्रत्ययान्ते" इति "नासिकास्तनयोः" (पा०सू०३-२-२९) इति सूत्रे हरदत्तः। इह सूत्रे 'उपसर्गे' इति केचिदनुवर्तयन्ति, तत्तु बहूनामसम्मतम्। तथा च प्रायुङ्क्त श्रीहर्षः—फलानि धूमस्य धयानधोमुखानिति। श्रूयते च—यदा पश्यः पश्यते रुक्मवर्णमिति। अत्र पिबतेरेव ग्रहणं न तु 'पा रक्षणे' (अ०प०४६) इत्यस्य, लुग्विकरणत्वात्।

घ्रः सञ्ज्ञायां प्रतिषेधः (का०वा०)॥ अत्र च "व्याघ्रादिभिः" (पा०सू०प०२-१-५६) इति सौत्रनिर्देशो लिङ्गम्। व्याघ्रः। "आतश्चोपसर्गे" (पा०सू०३-१-१२६) इति कः।

अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च (पा०सू०३-१-१३८)॥ अनुपसर्गेभ्यो लिम्पादिभ्यः शप्रत्ययः स्यात्। लिम्पतीति लिम्पः। विन्दतीति विन्दः। सूत्रे लिम्पविन्देति भाविना नुमा सनुम्कौ निर्दिष्टौ। तेन विकरणेतराणामग्रहणम्। लाभार्थस्यैव तु ग्रहणम्। धृञ् धारणे (भ्वा०उ०९२५), धृङ् अवस्थाने (तु०आ०१३२), ण्यन्तयोर्द्वयोरपि ग्रहणम्। धारयः। अथ कथं "न मद्यमत्रोत्तरधारयस्य ते" इति श्रीहर्षः? परत्वाद्धि सूत्रधारादिष्विव कर्मण्यणा भाव्यम्। तथा च वार्त्तिकम्—अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन (का०वा०) इति। सत्यम्, कर्मणः शेषत्वविवक्षायामणोऽप्राप्त्या शे कृते शेषषष्ठ्यन्तेन समासो भविष्यति। एतेन गङ्गाधरभूधरजलधरादयो व्याख्याताः। पार कर्मसमाप्तौ (चु०प०३७९) पारयतीति पारयः। विद चेतनाख्यानादिषु (चु०आ०१७५) चुरादिः। ज्ञानाद्यर्थानामन्यतमो वा हेतुमण्ण्यन्तः। वेदयतीति वेदयः। एजृ कम्पने (भ्वा०आ०१७३) ण्यन्तः। उदेजयतीत्युदेजयः। चिति संज्ञाने (चु०प०२) चुरादिः। चेतयतीति चेतयः। सत सुखे चुरादिण्यन्त इति बोपदेवः। सातिः सौत्रो हेतुमण्ण्यन्त इति हरदत्तः। सातयः। वासरूपन्यायेन क्विपि सात्। सम्पदादित्वाद्भावे क्विप्वा। एवञ्च एष एवानन्दयतीति श्रुतिबलादानन्दयितृविज्ञानमानन्दामित्यादि श्रुतिबलादानन्दरूपं ब्रह्म सात्छब्दार्थः। तदस्त्येषामिति सात्वन्तो भक्ताः। एतेन "सात्वतां पतये नमः" इत्यादि व्याख्यातम्। सदेव सात् इत्युक्त्वा आर्षत्वञ्च वदन्तः प्रत्याख्याताः। 'षह मर्षणे' (भ्वा०आ०८७७) चुरादिर्हेतुमण्ण्यन्तो वा, साहयः। उदाहरणेषु लिम्पिविन्दिभ्यां "तुदादिभ्यः शः" (पा०सू०३-१-७७) "शे मुचादीनाम्" (पा०सू०७ १-५९) इति नुम्। धारयादिषु शबगु-

णायादेशाः। अनुपसर्गादिति किम्? प्रलिपः।

नौ लिम्पेरिति वक्तव्यम् (का०वा०)॥ निलिम्पा नाम देवाः।

गवादिषु विन्देः संज्ञायामिति वक्तव्यम् (का०वा०)॥ गोविन्दः। अरविन्दः। चक्रस्य नाभिनेम्योरन्तराले स्थितानि काष्ठानि अरः, तदाकाराणि दलानि सादृश्यात्तच्छब्दभाञ्जि लभत इत्यर्थे कर्मण्यणो बाधनायेदम्।

ददातिदधात्योर्विभाषा (पा०सू०३-१-१३९)॥ शः स्यात्। पक्षे "श्याद्व्यधा" (पा०सू०३-१-१४१) इति णः। ददः। दधः। दायः। धायः। अनुपसर्गादित्येव। प्रदः। प्रधः। दद दाने (भ्वा०आ१७) दध धारणे (भ्वा०आ०८) आभ्यामचि 'ददः' 'दधः' इति सिद्धम्। दाधाभ्यां णे 'दायः' 'धायः' इति। सत्यम्, स्वरार्थमिदं सूत्रम्। अददः। अदधः। अत्र नञ्स्वरेण आद्युदात्तत्वं यथा स्यात्। अजन्तत्वे तु "अच्कावशक्तौ" (पा०सू०६-२-१५७) इति अन्तोदात्तत्वमिति महान् भेदः।

ज्वलितिकसन्तेभ्यो णः (पा०सू०३-१-१४०)॥ इतिशब्द आद्यर्थः। 'ज्वल दीप्तौ' (भ्वा०प०८५६) इत्येवमादिभ्यो धातुभ्यः 'कस गतौ' (भ्वा० पँ०८८५) इत्यन्तेभ्यो णो वा स्यात्। ज्वलः, ज्वालः। चलः, चालः। अनुपसर्गादित्येव, प्रज्वलः। कसिमधीत्य 'वृत्' इति ये पठन्ति तेषां मते कसन्तग्रहणं चिन्त्यप्रयोजनम्। ज्वलधातुश्च यद्यपि घटादिषु परस्ताच्चेति द्विः पठ्यते तथापि द्वितीय एवेह गृह्यते, घटादिपाठस्य मित्संज्ञायां चरितार्थत्वात्। इतरस्य चानन्यार्थत्वात् ज्वलादिषु 'भ्रमु चलने' (भ्वा०प०८७५) इति पठ्यते। तस्माण्णे 'भ्रमः' इति रूपं, "नोदात्तोपदेशस्य" (पा०सू०७-३-३४) इति वृद्धिनिषेधात्। ज्वलादिपाठस्तु स्वरार्थः 'अभ्रमः' इत्यत्र "अच्कावशक्तौ" (पा०सू०६-२-१५७) इति स्वरो मा भूदिति।

तनोर्णे उपसंख्यानम् (का०वा०)। अवतनोतीत्यवतानः। विभाषेत्यनुपसर्गादिति च नात्र वार्त्तिके सम्बध्यते।

श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च (पा०सू०३-१-१४१)॥ अनुपसर्गादिति निवृत्तम्, उत्तरसूत्रे पुनरनुपसर्गग्रहणात्। एवञ्च तत्सम्बद्धं विभाषाग्रहणमपि निवर्त्तते। श्यैङ्प्रभृतिभ्यो णः स्यात्। श्यैङ् गतौ (भ्वा०आ०९८८) अस्य आदन्तत्वादेव सिद्धे उपसर्गे कं बाधितुं ग्रहणम्। अवश्यायः, प्रतिश्यायः। "आतो युक्" (पा०सू० ७-३-३३) इति युक्। एतेनावस्यतेर्ग्रहणं व्याख्यातम्। आत्-दायः, धायः। इह सूत्रे 'श्या आत्' इति प्रश्लेषो न तु शीङो यणादेशेन, नापि

अततेः, अच्छब्दान्तानां वा यतिप्रभृतीनाम्। नाप्यकारान्तानाम्। अत्र च व्याख्यानमेव शरणम्। व्यध ताडने (दि०प०७५) व्याधः। स्रु गतौ (भ्वा०प०९६०) आङ्पूर्वः सम्पूर्वश्च। आस्रावः। संस्रावः। इण् गतौ (पा०सू३५) अति पूर्वः। अत्यायः। षोऽन्तकर्मणि (दि०प०४१)। हृञ् हरणे (भ्वा०उ०९२४)। अवपूर्वः। अवसायः। अवहारः। लिह आस्वादने (अ०उ०६) लेहः। श्लिष आलिङ्गने (दि०प०८०) श्लेषः। श्वस प्राणने (अ०प०५९) श्वासः।

दुन्योरनुपसर्गे (पा०सू०३-१-१४२)॥ दुनोतेर्नयतेश्च अनुपसर्गाण्णः स्यात्। दुनोतीति दावः। नयतिसाहचर्यात्सानुबन्धकस्य दुनोतेरिह ग्रहणम्। निरनुबन्धकाद्द्रवतेस्तु पचाद्यच्, दवः। करणसाधनो वा "ऋदोरप्" (पा०सू०३-३-५७) इत्यबन्तः। "दवदावौ वनारण्यवह्नी" (अ०को०३-३-२१४) इत्यमरः। नयतीति नायः। अनुपसर्गे किम्? प्रदवः। प्रणयः।

विभाषा ग्रहः (पा०सू०३-१-१४३)। णः स्यात्। पक्षे अच्। व्यवस्थितविभाषेयम्। तेन जलचरे-ग्राहः। ज्योतिषि-ग्रहः।

भवतेश्चेति वक्तव्यम् (का०वा०)॥ भवो देवः संसारश्च। भावाः पदार्थाः। एतद्वक्तव्यं भाष्ये नास्ति। 'भावाः' इति तु प्राप्त्यर्थाच्चुरादिण्यन्तादचि बोध्यम्।

गेहे कः (पा०सू०३-१-१४४)॥ ग्रहेः कः स्यात् गेहे कर्तरि। गृह्णाति धान्यादिकमिति गृहम्। तात्स्थ्याद् गृहा दाराः। गृहशब्दोऽर्धर्चादिः। तत्र पुंल्लिङ्गो बहुवचनान्त एव। नपुंसकस्तु अभिधेयवचनः। द्विविधोऽपि वेश्मनि मुख्यः। दारेषु गौणः। तथा च—

न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते।

इति वेश्मनि मुख्यतामभिप्रेत्यैव व्यवहरन्ति। वृत्तिकारस्तु तन्त्रावृत्त्योरन्यतराश्रयणेन सूत्रे गेहशब्देन अर्थद्वयं निर्दिश्य प्रत्ययविधानाद् दारेष्वपि गृहशब्दं मुख्यमेवेच्छन्ति। 'गेह' इति च प्रत्ययार्थस्य कर्तुर्विशेषणं न तूपपदं "गृहपतिना संयुक्ते" (पा०सू०४-४-९०) इति निर्देशादिति न्यासकारहरदत्तौ। गृह ग्रहणे (चु०आ०३६७) इति चुरादावदन्ताण्णिाचि पचाद्यचा भ्वादेरिगुपलक्षणेन कप्रत्ययेन वा गृहशब्दस्य सिद्धौ निर्देशस्यान्यथोपपत्तेर्दुर्बलमिदं ज्ञापकम्। व्याख्यानादेव तु कर्तृविशेषणतेत्यवधेयम्।

वस्तुतस्तूक्तरीत्यैव गृहशब्दसिद्धेः "गेहे कः" इति सूत्रं शक्यमकर्तुमिति दिक्।

शिल्पिनि ष्वुन् (पा०सू०३-१-१४५)॥ धातोः ष्वुन् स्यात् शिल्पिनि कर्तरि। क्रियाकौशलं शिल्पं, तदस्यास्तीति शिल्पी। पूर्वेण साहचर्यात् 'शिल्पिनि'इत्यपि प्रत्ययार्थस्य विशेषणम्। अत्र भाष्ये "नृतिखनि रञ्जिभ्यः" इति परिगणनं कृतम्। नर्तकः। नर्तकी। खनकः। खनकी। "जनीजृष्क्नसुरञ्जोऽमन्ताश्च" (ग०सू०) इति मित्त्वोक्तिर्ज्ञापयति—रञ्जेः ष्वुन्यपि क्वचिदनुनासिकलोपो भवतीति न्यासकारहरदत्तादयः। एवञ्च "रञ्जेणौ मृगरमणे" (का०वा०) इति "रजकरजनरजस्सूपसङ्ख्यानम्" (का०वा०) इति च वार्त्तिकं ज्ञापनसिद्धार्थानुवादकम्। रजकः। रजकी। षित्त्वान्ङीष्।

भाष्यमते तु ङीष् न भवति। तथाहि—षष्ठे "रजकरजनरजःसूपसङ्ख्यानम्"इति वार्त्तिकं प्रत्याख्यातुं भाष्यकृतोक्तं "कित एते औणादिकाः" इति,

तत्र कैयटः—'रजकः' इति "क्वुन् शिल्पिसंज्ञयोः" (उ०सू०२००) इति क्वुन्। 'रजनम्' इति "रञ्जेः क्युन्" (उ०सू०२४६) इति क्युन्। 'रजः' इति "भूरञ्जिभ्यां कित्" (उ०सू०६६६) इत्यसुन्प्रत्ययः। 'रजकी'इत्यत्र तु पुंयोगलक्षणो ङीष्। अपुंयोगे तु ङीषा न भाव्यमिति भाष्यकाराभिप्राय इति। एवञ्च भाष्यमते नृतिखनिभ्यामेव ष्वुन् न तु रञ्जेरिति स्थितम्।

गस्थकन् (पा० सू० ३-१-१४६)॥ गायतेस्थकन् स्यात् शिल्पिनि कर्त्तरि। गाथकः। गामादाग्रहणेष्वविशेषेऽपि 'गै शब्दे' (भ्वा०प०९४२) इति इह गृह्यते न तु 'गाङ् गतौ' (भ्वा०आ०९७५) इति। थकन्प्रत्ययो हि गायत्यर्थविषयमेव शिल्पिनमभिधातुं समर्थः।

ण्युट् च (पा० सू० ३-१-१४७)॥ गायतेर्ण्युट् स्यात् शिल्पिनि कर्त्तरि। गायनः। गायनी। योगविभाग उत्तरत्रास्यैवानुवृत्त्यर्थः।

हश्च व्रीहिकालयोः (पा० सू० ३-१-१४८)॥ जहातेर्जिहातेश्च ण्युट् स्यात् व्रीहौ काले च कर्त्तरि। जहात्युदकमिति हायनो व्रीहिः। अम्बुनोऽधिकं वर्धनात्। जिहीते जलमिति वा विग्रहः। जलं प्रायेणापेक्षते इत्यर्थः। जाङ्गलदेशोद्भवा व्रीहिविशेषा हायना इत्याहुः।

प्रलयावस्थायां जहाति भावानिति, जिहीते गच्छति परिच्छेदकत्वेन व्याप्नोतीति वा हायनो वर्षम्। अत्रापि व्रीहिकालयोरिति नोपपदम्, "त्रिचतुर्भ्यां हायनस्य" (का०वा०) इति लिङ्गात्।

प्रुसृल्वः समभिहारे वुन् (पा० सू० ३-१-१४९)॥ एभ्यो वुन् स्यात् साधुकारिणि कर्त्तरि। समभिहारग्रहणेन साधुकारित्वं लक्ष्यते, भूयः

सहचारात्। यो हि यां क्रियां पुनः पुनरनुतिष्ठति स तत्र कौशलं लभते इत्युत्सर्गः। तेन सकृदपि यः सुष्ठु करोति तत्र भवति। बहुशोऽपि दुष्टं कुर्वति न भवति। प्रवकः। सरकः। लवकः। सूत्रे 'प्रुसृल्वः' इति पञ्चम्याः स्थाने जस्।

आशिषि च (पा०सू०३-१-१५०)॥ अप्राप्तप्रार्थनाविषयीभूतेऽर्थे वर्त्तमानाद्धातोर्वुन् स्यात्कर्तरि। जीवतात् जीवकः। नन्दतात् नन्दकः। आशीश्चेह प्रयोक्तृधर्मः। पित्रादिगतेच्छाविषयीभूतयोर्जीवननन्दनयोः कर्तरि पुत्रादौ पित्रादेरियमुक्तिः।

इति श्रीशब्दकौस्तुभे तृतीयाध्यायस्य प्रथमे पादे
षष्ठमाह्निकम् ॥ पादश्च समाप्तः ॥

कर्मण्यण् (पा० सू० ३-२-१) ॥ कर्मण्युपपदे धातोरण् प्रत्ययः स्यात्। कर्म च सप्तधेत्युक्तम्। तत्सर्वमविशेषादिह गृह्यते। निर्वर्त्ये—कुम्भं करोतीति कुम्भकारः। विकार्ये—काण्डलावः। प्राप्ये—वेदाध्यायः। यद्येवं 'ग्रामं गच्छति' 'आदित्यं पश्यति' 'हिमवन्तं शृणोति' इत्यादौ प्राप्नोति? सत्यम्, अनभिधानान्नेति भाष्यम्। तच्चानभिधानं यत्राभिन्नरुक्तं तत्रैव। अन्यत्र तु यथालक्षणं भवत्येव।

यत्तु वृत्तौ 'त्रिविधं कर्मेह गृह्यते' इत्युक्तं, तस्यायमाशयः-'आदित्यं पश्यति' इत्यादौ मा भूदित्येवमर्थं 'कर्मणि निर्वर्त्यमाने विक्रीयमाणे इति वक्तव्यम्' इत्याशङ्क्य वार्त्तिककृतोक्तम्-कर्मणि निर्वर्त्यमाने विक्रयमाण इति चेद्वेदाध्यायादीनामुपसङ्ख्यानमित्यादि। एवं स्थिते त्रिविधमपीह कर्म गृह्यते, न तु प्राप्यं न गृह्यत इति। एवञ्च त्रिविधमिति वृत्तिं दृष्ट्वा सूत्रान्तरोक्तं नेह गृह्यत इति न भ्रमितव्यम्। तथा च "दिवः कर्म च" (पा०सू०१-४-४३) इत्यत्र संज्ञासमावेशस्य प्रयोजनमुक्तम्-'मनसा देवः' इत्यत्र कर्मत्वादण्, करणत्वात्तृतीयेति। एवञ्च 'वृक्षावासः' 'पर्वतावासः' इत्याद्यपि यथाऽभिधानं भवत्येव।

शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वञ्च (का०वा०)॥ 'शील समाधौ' (भ्वा०प०५२४)। 'कमु कान्तौ' (भ्वा०आ०४४४)। 'भक्ष अदने' (चु०प०२४) चुरादिण्यन्तः। चरिर्गत्यर्थ आङ्पूर्वः। णस्य णित्करणं चरेर्वृद्ध्यर्थम्। कृदुत्तरपदप्रकृतिस्वरं बाधितुं पूर्वपदेत्यादि। मांसं शीलयति मांसशीला। मांसकामा। मांसभक्षा। अत्र अणि सति ङीप्स्यात्। णेऽप्यणकार्यमिति तु ताच्छीलिक एवेति वक्ष्यते। "मनेर्दीर्घश्च" (उ०सू०३५१) इति सप्रत्ययान्तत्वादन्तोदात्तो मांसशब्दः। कल्या-

णाचारा। कल्याणशब्दो "लघावन्ते" (फि०सू०४२) इति मध्योदात्तः।

ईक्षिक्षमिभ्यां चेति वक्तव्यम् (का०वा०)॥ अत्रापि पूर्वपदप्रकृतिस्वरत्वं चेति सम्बध्यत एव। वाक्यभेदस्तु वैचित्र्यार्थः। सुखप्रतीक्षा। बहुक्षमा।

स्यादेतत्। यो मांसं भक्षयति तस्य मांसं भक्षो भवति। तत्र भक्षयतेः कर्मण्येरजन्तस्य बहुव्रीहिणा सिद्धम्। एवमन्यत्रापि। यस्तु अण्यन्तस्तस्य घञन्तस्य बहुव्रीहिः। न च 'बहुभक्षः' इत्यत्र "बहोर्नञ्वत्" (पा०सू०६-२-१७५) इति उत्तरपदान्तोदात्तत्वं स्यादिति वाच्यम्, भावे अजन्तेन बहुषु भक्षोऽस्येति विग्रहोपपत्तेः। न ह्यत्र बहुस्वरप्राप्तिरस्ति, उत्तरपदार्थस्य बहुत्वाभावात्। एवञ्च वार्त्तिकद्वयमपि नारम्भणीयमिति चेत्? मैवम्, कर्मण्यणं बाधितुं तस्यावश्यारभ्यत्वात्।

अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन (का०वा०)॥ पचादिभ्योऽच् अनुपपद अकारः, तस्यावकाशः-पचतीति पचः। कर्मोपपदस्यावकाशः-काण्डलावो व्रजति। 'ओदनपाचः' इत्यत्र उभयप्रसङ्गे परत्वादणेव। तेनोपधावृद्धिः उपपदसमासश्च नित्यो भवति। अचि तु षष्ठीसमासो वैकल्पिकः स्यात्। कथं तर्हि 'गङ्गाधरः' 'श्रीधरः' 'वज्रधरः' 'भूधरः' 'स्रग्धरः' इत्यादि?

अत्र केचित्—युगपद्विवक्षायां हि भवतु विप्रतिषेधः, केवलप्रकृत्यर्थविवक्षायान्तु अचि कृते पश्चात्कर्मसम्बन्धे सिद्धं रूपमिति।

अत्र हरदत्तः-एवं सति 'ओदनपचः' इत्यपि स्यात्, तच्चानिष्टम्। किञ्चोक्तरीतिर्न्यायविरुद्धा, एकत्वात्प्रयोगस्य। न हि तस्मिन्नेव प्रयोगे विवक्षितं चाविवक्षितं च कर्म भवति। तस्मात् 'ओदनपचः'इत्यसाधुरेव। गङ्गाधरादयस्तु संज्ञाशब्दा इत्याह।

अत्रेदं वक्तव्यम्, परिनिष्ठिते प्रयोगे कर्मान्वयसत्त्वेऽपि प्रक्रियादशायां क्रमेण विवक्षायां न क्षतिः। कथमन्यथा शकयश्चेत्यादौ अन्तरङ्गः पदसंस्कारो बहिरङ्गस्त्रीत्वेन न विहन्येतेत्यादि तत्र तत्रोच्यते। किञ्च कर्मणः शेषत्वविवक्षयाऽपि गङ्गाधरादिशब्दानां सौष्ठवे सम्भवति रथन्तरादिवन्न केवलं संज्ञात्वमाश्रयितुं युक्तम्। ओदनपचशब्दोऽपि उक्तरीत्या प्राप्नोत्येव। यदि त्वस्यासाधुत्वे प्रमाणमस्ति तर्ह्यनभिधानं शरणीक्रियतामित्यास्तां तावत्।

प्रकृतमनुसरामः—पचादिभ्य एवाजिति यथाश्रुतसूत्रमनुसृत्य विप्रतिषेध उदाहृतः। यदा तु 'अजपि सर्वधातुभ्यः' इति पक्षस्तदा

अपवादत्वादेव तस्याण् बाधको बोध्यः। किञ्चेगुपधज्ञाप्रीकिरः कोऽनुपपदः। तस्यावकाशः-'विक्षिपः' 'विलिखः'। कर्मोपपदस्य स एव। 'काष्ठभेदः' इत्यत्र परत्वादण्। तथा "अनुपसर्गाल्लिम्पविन्द" (पा०सू० ३-१-१३८) इति अनुपपदः शः। तस्यावकाशः-'लिम्पतीति लिम्पः'। कर्मोपपदस्य स एव। 'कुड्यलेपः' इत्यत्र परत्वादण्। तथा "आतश्चोपसर्गे" (पा०सू०३-१-१३६) इति कः अनुपपदः 'सुग्लः' 'सुम्लः' इत्यत्र सावकाशः। कर्मोपपदस्तत्रैव। 'गोसन्दायः' इत्यत्र परत्वादणेव भवति।

ह्वावामश्च (पा०सू०३-२-२) ॥ एभ्यः कर्मण्युपपदे अण् स्यात्। कस्यापवादः। 'ह्वेञ् स्पर्द्धायां शब्दे च' (भ्वा०आ०१०३३)। स्वर्गह्वायः। 'वेञ् तन्तुसन्ताने' (भ्वा०आ०१०३१)। तन्तुवायः। 'वा गतिगन्धनयोः' (अ०प०४०) इत्ययन्तु नेह गृह्यते, अकर्मकत्वात्। भ्रमणार्थो ह्यसौ। यद्यपि सोपसर्गस्य सकर्मकत्वं दृश्यते "सर्वा दिश आवान्ति" "वात आवा तु भेषजम्" इति। तथापि तत्र पूर्वेणैवाण् सिद्धः। "वाता वान्ति दिशो दश" इति तु प्रयोगश्चिन्त्यः। अथापि क्वचित्कथञ्चित् सकर्मकत्वं निर्वाह्यते, तथापि ह्वेञा सानुबन्धेन साहचर्यात् वेञ एव ग्रहणं, न तु वातेः। 'माङ् माने' (जु०आ०६,दि०आ०३६) 'मेङ् प्रणिदाने' (भ्वा०आ०९८६) उभयोरपि ग्रहणम्। धान्यमापः। 'मा माने' (अ०प०५२) इत्यस्य तु सम्भावनार्थस्याकर्मकत्वादग्रहणम्।

आतोऽनुपसर्गे कः (पा०सू०३-२-३) ॥ आदन्ताद्धातोरनुपसर्गात् कर्मण्युपपदे कप्रत्ययः स्यात्। अणोऽपवादः। गोदः। पार्ष्णित्रम्। अनुपसर्गे किम्? गोसन्दायः। अत्र वार्त्तिकम्—

कविधौ सर्वत्र प्रसारणिभ्यो डः (का०वा०) ॥ सम्प्रसारणभाजः प्रसारणिनः। 'ज्या वयोहानौ' (क्र्या०प०२७)। ब्रह्म जिनातीति ब्रह्मज्यः। सर्वत्रग्रहणान्नेहैव "आतश्चोपसर्गे" (पा०सू३-१-१३६) आह्वः। प्रह्वः। अत्र के सति सम्प्रसारणं स्यात्। 'आ ह्वा अ' इति स्थिते सम्प्रसारणे पूर्वत्वे च कृते उवङादेशे 'आहुवः' 'प्रहुवः' इति प्राप्नोति। एवं 'ब्रह्मजियः' इति प्राप्नोति। न च "एरनेकाचः" (पा०सू०६-४-८२) इत्यनेन यण्, अङ्गस्य एकाच्त्वात्। ननूभयत्रापि सम्प्रसारणे कृते आतो लोपः। तस्य स्थानिवद्भावादियङुवङौ न भविष्यत इति चेत्?

स्यादेवम्। यद्यातोलोपो लभ्येत। स तु दुर्लभः, अन्तरङ्गेण पूर्वत्वेन बाधात्। न च "वार्णादाङ्गं बलीयः" (प०भा०५६), व्याश्रयत्वात्। नन्वेवमपि व्यर्थमेव वार्त्तिकम्, प्रागेव सम्प्रसारणादातो लोपे कृते तस्य स्थानिवद्भावादसिद्धत्वाद्वा उवङोऽप्रवृत्तौ यणादेशेन 'आह्वः' 'प्रह्वः'

इत्यादेः सिद्धत्वात्। तथाहि-नित्यं सम्प्रसारणम्, आतो लोपे कृते अकृते प्रसक्तित्वात्। आल्लोपस्तु कृते च सम्प्रसारणे यद्यपि पूर्वत्वेन बाध्यते तथापि "यस्य च निमित्तं लक्षणान्तरेण न विहन्यते तदपि नित्यम्" इति नित्य एव। द्वयोर्नित्ययोः परत्वादाल्लोपः, ततः सम्प्रसारणं, तत इयङुवङौ प्रसक्तौ आतो लोपस्य स्थानिवत्त्वान्न भविष्यतः। न च अनादिष्टादचः पूर्वत्वं नास्तीति वाच्यम, स्थानिद्वारकस्य सत्त्वात्।

यत्त्विह कैयटेनोक्तं शास्त्रीयकार्यसिद्धये स्थानिवद्भावो विधीयते न त्वनादिष्टादचः पूर्वत्वे लौकिके इति, तदापाततः, "अचः परस्मिन्" (पा०सू०१-१-५७) इत्यतिदेशस्याशास्त्रीयतया तस्यैव "स्थानिवत्" (पा०सू०१-१-५६) सूत्रेणातिदेशः सम्भवतीति "न पदान्त" (पा०सू० १-१-५८) सूत्रीयसवर्णग्रहणाद्युपष्टम्भेन प्रागेव वर्णितत्वात्। किञ्चाकारलोपस्य आभीयत्वेनासिद्धत्वान्न दोषः। न चैवं 'जुहुवतुः' 'जुहुवुः' अत्राप्युवङ् न स्यादिति वाच्यम्, स्थानिद्वारकस्य अनादिष्टादचः पूर्वत्वस्य आभीयासिद्धत्वस्य च अनित्यत्वेनेहाप्रवृत्तेः। अथवा "सम्प्रसारणाच्च" "एङः पदान्तात्" (पा०सू०६-१-१०८,१०९) इत्यत्र 'एङः' इति योगो विभज्यते। सम्प्रसारणादेङि परे पूर्वपरयोः पूर्व एकादेशो भवतीति। सम्प्रसारणाच्चेत्येव सिद्धे ज्ञापनार्थमिदम्-यत्र सम्प्रसारणात्पर एङ् सम्भवति तत्र अनैमित्तिकत्वेनान्तरङ्गमप्यात्वमकृत्वा सम्प्रसारणं कर्तव्यमिति। तेन 'जुहुवतुः' इत्यत्र एङन्तादेव लिटि विहिते सम्प्रसारणं पूर्वत्वम्। ततश्च न स्थानिवत्त्वं नाप्यसिद्धत्वमिति सिद्धमिष्टम। 'आह्वः' 'प्रह्वः' इत्यत्र तु आकारान्तलक्षणः प्रत्ययो असत्यात्वे कर्तुमशक्यः। अतः पूर्वमात्वम्। ततः प्रत्ययः, आल्लोपः, सम्प्रसारणं, स्थानिवद्भावादसिद्धत्वाद्वा इयङुवङोरभावः। तस्मान्मास्तु वार्त्तिकमिति चेत्? सत्यम्, इत्थं प्रत्याख्यातमेव भाष्ये, किन्तु अस्ति वार्त्तिकस्योक्तिसम्भवः। "आभात्" (पा०सू०प०६-४-२२) सूत्रप्रत्याख्यानपक्षे हि स्थानिवत्त्वमेव शरणम्। तत्र च स्थानिद्वारकमनादिष्टादचः पूर्वत्वमाश्रयणीयं तच्चानित्यमिति ज्ञापयितुमिदं वार्त्तिकमिति। एतत्प्रत्याख्यातुं प्रवृत्तो भाष्यकारोऽपि स्थानिवद्भावमुपन्यस्य दूषयित्वा असिद्धतां शरणीकुर्वन् स्थानिद्वारिकायाः अनादिष्टादचः पूर्वतायाः क्वाचित्कतां ध्वनयति। तत्फलन्तु "अचः परस्मिन्" (पा०सू०१-१-५७) इति सूत्रे एवावोचामेत्यलं बहुना।

•सुपि स्थः (पा०सू०३-२-४)॥ सुबन्ते उपपदे तिष्ठतेर्धातोः कः प्रत्ययः स्यात्। समस्थः। विषमस्थः। अत्र 'सुपि' इति योगो विभ-

च्यते । सुपि आकारान्तेभ्यो धातुभ्यः कप्रत्ययः स्यात् । द्वाभ्यां पिबतीति द्विपः ।

स्थः ॥ सुपि तिष्ठतेः कः स्यात् भावे । आखूनामुत्थानमाखूत्थः । प्रक्रियाकौमुद्यान्तु 'आखूत्थम्'इति नपुंसकं पठ्यते तत्प्रामादिकम्, भाष्यादौ सर्वत्र पुल्लिङ्गस्यैवोदाहृतत्वात्,

ल्युः कर्त्तरीमनिज् भावे को घोः किः प्रादितोऽन्यतः ।

( अ०को०३-५-१५ )

इत्यमरकोशाद्भावे कस्य पुंस्त्वविधानाच्च, भावे "नणकचिद्घ्योऽन्यः" इति नपुंसकविधाने कस्य पर्युदासाच्च । ननु "स्थः" इति सूत्रेण विधीयमानोऽपि कः कृत्त्वात्कर्त्तर्यैव स्यादिति चेत्? न, "आतः" (पा०सू०३-२-३) इत्यनेनैव सिद्धेः । तथा च 'स्थः' इत्यारम्भसामर्थ्यान्न कर्त्तरि किन्त्वनिर्दिष्टार्थत्वात्स्वार्थे । धातोश्च स्वार्थो भाव एव । नन्वेवं "घञर्थे कविधानम्" (का०वा०) इत्यनेनैव गतार्थत्वमिति चेत्? न, वार्त्तिकं दृष्ट्वा सूत्रकृतोऽप्रवृत्तेः । किञ्च नित्यसमासार्थमिदम् । अन्यथा हि "षष्ठी" (पा०सू०२-२-८) इति सूत्रेण पाक्षिकः समासः स्यात् । इष्यते तु नित्यमुपपदसमासः । तथा च आखूनामुत्थानमिति अस्वपदविग्रहः क्रियते । "घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् इत्यत्र स्थाग्रहणन्तु कर्तृवर्जिते कारके यथा स्यादित्येवमर्थम् ।

इत ऊर्ध्वं कर्मणि सुपीति च द्वयमप्यनुवर्त्तते । तत्र सकर्मकेषु कर्मणीत्युपतिष्ठते "स्पृशोऽनुदके" (पा०सू०३-२-५८) इति यावत् । अन्यत्र सुपीति "सुप्यजातौ णिनिः" (पा०सू०३-२-७८) इति यावत् । एवञ्च प्रकृतस्य सुब्ग्रहणस्य उपसर्गेतरपरत्वं "सत्सूद्विष" (पा०सू० ३-२-६१) इति सूत्रस्थेन'उपसर्गेऽपि' इत्यनेन ज्ञापितमिति सुप्मात्रपरिग्रहार्थं णिनिविधौ पुनः सुप्ग्रहणमिति वक्ष्यामः ।

तुन्दशोकयोः परिमृजापनुदोः (पा०सू०३-२-५) ॥ तुन्दशोकयोः कर्मणोरुपपदयोः परिमृजापनुदिभ्यां धातुभ्यां कप्रत्ययः स्यात् ।

आलस्यसुखाहरणयोरिति वक्तव्यम् (का०वा०) ॥ आलस्ये सुखोत्पादने च गम्यमाने प्रत्यय इत्यर्थः । तत्र सामर्थ्यादलसे कर्त्तरि सुखस्य चाहर्त्तरि प्रत्यय इति फलितं भवति । तुन्दं परिमार्ष्टीति तुन्दपरिमृजोऽलसः ।

अत्र मृजेरजादाविति वैकल्पिकी वृद्धिर्नेति हरदत्तः । भवतीत्यपरे । एतन्मतद्वयबलाबलं तु "क्ङिति च" (पा०सू०१-१-५) इति सूत्रे प्रतिपादितम् । अलसादन्यत्र 'तुन्दपरिमार्जः' इत्येव भवति । शोका-

पनुदः सुखस्याहर्त्ता। यस्तु संसारासारत्वाद्युपदेशेन शोकमेव केवल-मपनुदति न तु सुखमुत्पादयति स शोकापनोदः।

कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम् (का०वा०) ॥ तादर्थ्ये एषा चतुर्थी। मूलविभुजादिसिध्यर्थमित्यर्थः। मूलानि विभुजतीति मूलविभुजो रथः। नखान्मुञ्चतीति नखमुचानि धनूंषि। कौ मोदते कुमुदं सरोरुहम्। इह यद्यपि 'काकगुहास्तिलाः' इति भाष्यवृत्त्यादिषु उदाहृतं तथापि काकेभ्यो गूहितव्या इति कर्मार्थावगतेः "घञर्थे कवि-धानम्" (का०वा०) इत्यत्रेदं द्रष्टव्यमिति हरदत्तः।

आकृतिगणोऽयम्। तेन महीध्रकुध्रशिरोध्रशिरोरुहादि सिद्धम्।

प्रे दाज्ञः (पा०सू०३-२-६) ॥ दारूपाज्ज्ञानातेश्च प्रोपसृष्टात्कर्मण्यु-पपदे कप्रत्ययः स्यात्। अणोऽपवादः। सर्वप्रदः। पथिप्रज्ञः। प्रे इति किम्? गोसन्दायः। अनुपसर्ग इत्यनुवृत्तेः प्रेत्यस्मादन्यस्मिन्नुपसर्गे सति को न भवति, किन्त्वणेव, गोसम्प्रदायः। इह वृत्तौ ददातेरित्युक्तं, तत्तु सर्वेषां दारूपाणामुपलक्षणम्। गामादाग्रहणेष्वविशेषादिति हरदत्तः।

समि ख्यः (पा०सू०३-२-७) ॥ सम्पूर्वात्ख्या इत्यस्मात्कर्मण्युपपदे कप्रत्ययः स्यात्। गाः सञ्चष्टे गोसंख्यः। चक्षिङः ख्याञादेशः। 'ख्या प्रकथने'(अ०प०५०) इत्यस्य तु सम्पूर्वस्य प्रयोगो नास्तीति न्यासकारः।

गापोष्टक् (पा०सू०३-२-८) ॥ आभ्यां टक् स्यादनुपसर्गे कर्मण्युप-पदे। सामगः। सामगी। अत्र वार्त्तिकम्—

सुराशीध्वोः पिबतेरिति (का०वा०) ॥ अत्र पिबतेरिति लुग्विक-रणपरिभाषालब्धार्थकथनम्। उपपदपरिगणनन्तु वाचनिकमेव। सुरापः। सुरापी। शीधुपः। शीधुपी। सुराशीध्वोः किम्? क्षीरपा ब्राह्मणी। पिबतेरिति किम्? सुरां पाति रक्षतीति सुरापा। अनुपसर्गे किम्? सामसङ्गायः। गामादाग्रहणेष्वविशेषेपि 'गै शब्दे'(भ्वा०प०९४२) इत्यस्यैवात्र ग्रहणं न तु 'गाङ् गतौ'(भ्वा०आ०९७)इत्यस्य सानुबन्ध-स्य, नापि 'गा स्तुतौ, (जु०प०२४) इति जुहोत्यादेः, निरनुबन्धेन अलु-प्तविकरणेन च पिबतिना साहचर्यात्, अनभिधानाद्वा।

बहुलं तणि (का०वा०) ॥ या ब्राह्मणी सुरापा भवति नैतां देवाः पतिलोकं नयन्ति।

हरतेरनुद्यमनेऽच् (पा०सू०३-२-९) ॥ उत्क्षेपणादन्यस्मिन्नर्थे वर्त्त-मानाद्धरतेर्धातोः कर्मण्युपपदेऽच् स्यात्। अणोऽपवादः। अंशहरः। रिक्थहरः। अनुद्यमने किम्? भारहारः।

अच्प्रकरणे शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुःषु ग्रहेरुप-

संख्यानम् (का०वा०)॥ शक्तिग्रहः । लाङ्गलग्रहः, इत्यादि । लिङ्गविशिष्टपरिभाषया घटग्रहणेनैव सिद्धे घटीग्रहणं परिभाषाया अनित्यत्वज्ञापनार्थम् । तेन 'मद्रराज्ञी' इत्यत्र टच् न । 'द्विषतीतापः' इत्यत्र "द्विषत्परयोः"(पा०सू०३-२-३९) इति खच् नेति दिक् ।

सूत्रे च धार्यर्थे (का०वा०) ॥ ग्रहेरुपसंख्यानमित्येव । सूत्रग्रहः । धार्यर्थे इति किम् ? यः सूत्रं केवलमुपादत्ते न तु धारयति तत्राणेव यथा स्यात्, सूत्रग्राहः ।

वयसि च (पा०सू०३-२-१०) ॥ वयसि गम्यमाने हरतेर्धातोः कर्मण्युपपदे अच् स्यात् । अणोऽपवादः । उद्यमनार्थ आरम्भः । कवचहरः क्षत्रियकुमारः । इह कवचोद्यमनं क्रियमाणे सम्भाव्यमानं वा वयो गमयति । तेनासत्यपि कवचग्रहणे 'कवचहरः' इति भवति ।

आङि ताच्छील्ये (पा०सू०३-२-११) ॥ आङ्पूर्वाद्धरतेः कर्मण्युपपदेऽच्प्रत्ययः स्यात्ताच्छील्ये गम्यमाने । पुष्पाण्याहरति तच्छीलः पुष्पाहरः । फलाहरः । ताच्छील्ये किम् ? भारमाहरति भाराहारः ।

अर्हः (पा०सू०३-२-१२) ॥ अर्ह पूजायामित्यस्मात्कर्मण्युपपदेऽच् स्यात् । अणोऽपवादः । स्त्रियां विशेषः, पूजार्हा ब्राह्मणी ।

स्तम्बकर्णयोरमिजपोः(पा०सू०३-२-१३)॥ स्तम्बकर्णयोरुपपदयोः यथासंख्यं रमिजपिभ्यामच्प्रत्ययः स्यात् । रमिस्तावदकर्मकः । जपिस्तु शब्दकर्मकः 'मन्त्रं जपति'इत्यादिदर्शनात् । उभावपि प्रति स्तम्बकर्णयोः कर्मत्वासम्भवात् सुपीत्येवात्र सम्बध्यते ।

हस्तिसूचकयोरिति वक्तव्यम् (का०वा०) ॥ स्तम्बे रमते इति स्तम्बेरमो हस्ती । "तत्पुरुषे कृति बहुलम्" (पा०सू०६-३-१४) इत्यलुक्, "हलदन्तात्" (पा०सू०६-३-९) इति वा । कर्णेजपः सूचकः । हस्तिसूचकाभ्यामन्यत्र तु स्तम्बरन्ता । कर्णजपिता मशकः । उपांशुशब्दायितेत्यर्थः ।

शमि धातोः संज्ञायाम् (पा०सू०३-२-१४) ॥ शमि उपपदे धातुमात्रात् संज्ञायां विषये अच् स्यात् । शङ्करः । शम्भवः । शंवदः । धात्वधिकारे पुनर्धातुग्रहणमपवादविषयेऽपि प्रवृत्त्यर्थम् । तथा च वार्त्तिकम्—

शमिसंज्ञायां धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थमिति (का० वा०)॥ असति धातुग्रहणे शमिसंज्ञायामित्यस्यावकाशः-शम्भवः, शंवदः । "कृञो हेतुताच्छील्य" (पा०सू०३-२-२०) इत्यस्यावकाशः—'श्राद्धकरः' । 'शङ्करः' इत्यत्रोभयप्रसङ्गे परत्वाट्ट एव स्यात् । धातुग्रहणसामर्थ्यादजेव भवति । शङ्करा नाम परिव्राजिका तच्छीला । कुणरवाड-

वस्त्वाचार्यो मन्यते। गृणातेः शब्दकर्मण एतद्रूपम्। पृषोदरादित्वाद्गका-रस्य ककार इति। तन्मते धातुग्रहणं चिन्त्यप्रयोजनम्।

अधिकरणे शेतेः (पा०सू०३-२-१५) ॥ सुपीति सम्बध्यते। अच् स्यात्। खे शेते खशयः।

पार्श्वादिषूपसङ्ख्यानम् (का०वा०) ॥ पार्श्वाभ्यां शेते पार्श्वशयः। पृष्ठशयः। उदरशयः।

दिग्धसहपूर्वाच्च (का०वा०) ॥ दिग्धेन सह शेत इति विग्रहे दिग्ध-सहशयः। अत्र दिग्धसहशब्दो मयूरव्यंसकादिः। तस्य शयशब्देन सह उपपदसमासः।

उत्तानादिषु कर्तृषु (का०वा०)॥ उत्तानः शेते उत्तानशयः। अवमूर्ध-शयः। अवनतो मूर्धा यस्य अवमूर्धः। अधोमुखः शेते इत्यर्थः।

गिरौ डश्छन्दसि (का०वा०) ॥ गिरौ शेते गिरिशः।

तद्धितो वा (का०वा०) ॥ गिरिरस्यास्तीति गिरिशः। लोमादित्वा-च्छः। इह यद्यपि कृत्तद्धिताभ्यां गिरिशशब्दो द्वेधा भाष्यवार्त्तिकयोर्व्यु-त्पादितस्तथापि लोके तद्धितान्त एव, न तु कृदन्तः, "डश्छन्दसि" (का०वा०) इत्युक्तेः। एवञ्च "प्रत्याहतास्त्रो गिरिशप्रभावात्" "आरो-पितं यद्गिरिशेन पश्चात्" "गिरिशमुपचचार प्रत्यहं सा सुकेशी" इत्यादि प्रयुञ्जानानां कवीनां न कोऽप्यपराधः। 'गिरौ शेते' इति व्या-चक्षाणानां तु प्रमाद इत्यवधेयम्।

चरेष्टः (पा०सू०३-२-१६) ॥ अधिकरणे उपपदे चरेष्टः स्यात्। कु-रुचरः। कुरुचरी।

भिक्षासेनादायेषु च (पा०सू०३-२-१७) ॥ एषु उपपदेषु चरेष्टः स्यात्। भिक्षां चरतीति भिक्षाचरः। चरतिरत्र चरणपूर्वके अर्जने वर्त्त-ते। चरणेन भिक्षामर्जयतीत्यर्थः। सेनां चरति प्रविशतीति सेनाचरः। आदायेति ल्यबन्तं, आदाय चरति गच्छतीत्यादायचरः। भक्षयती-ति वा। कथं—

"प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहम्" इति ?

पचादिषु चरडिति पठ्यते। "सुप्सुपा" (पा०सू०२-१-४) इति समासः। टविधानं तु नित्यसमासार्थम्।

पुरोऽग्रतोऽग्रेषु सर्तेः (पा०सू०३-२-१८)॥ टः स्यात्। पुरः सरतीति पुरःसरः। अग्रतःसरः। अग्रमग्रेणाग्रे वा सरतीत्यग्रेसरः। सूत्रे अग्र-शब्दस्य एदन्तत्वमपि निपात्यते। कथन्तर्हि—

"यूथं तदग्रसरगर्वितकृष्णसारम्" इति ? बाहुलकादिति हरदत्तः।

पूर्वे कर्त्तरि (पा०सू०३-२-१९) ॥ कर्तृवाचिनि पूर्वशब्द उपपदे सर्तेष्टः स्यात् । पूर्वः सरतीति पूर्वसरः । कर्त्तरीति किम् ? पूर्वं देशं सरतीति पूर्वसारः ।

कृञो हेतुताच्छील्यानुलोम्येषु (पा०सू०३-२-२०) ॥ हेत्वादिषु द्योत्येषु करोतेष्टः स्यात् । हेतुरिह लौकिकः । यशस्करी विद्या । "अतः कृकमि" (पा०सू०८-३-४६) इति सः । ताच्छील्ये-श्राद्धकरः । आनुलोम्ये-वचनकरः । एषु किम् ? कुम्भकारः । इह प्रसिद्धतरत्वात् पृथगनुबन्धकोऽपि करोतिरेव गृह्यते न तु 'कृञ् हिंसायाम्' (स्वा०उ०७) इति । हेतुः कारणम् । आनुलोम्यमाराध्यचित्तानुवर्त्तनम् ।

दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु (पा०सू० ३-२-२१) ॥ एषु सुबन्तेषु यथायोगं कर्मसु चोपपदेषु करोतेष्टः स्यात् । अहेत्वाद्यर्थ आरम्भः । दिवा दिवसे करोति प्राणिनश्चेष्टायुक्तानिति दिवाकरः । अत्र दिवाशब्दः अन्हीति सप्तम्यन्तस्यार्थे वर्त्तत इति तस्य कर्मत्वानुपपत्तेः सुपीत्यनेन सम्बन्धः । शेषाणां तु कर्मणीत्येव । यदि तु वृत्तिविषये दोषामन्यमहर्दिवामन्या रात्रिरितिवत् कर्मत्वमभ्युपगम्यते तदा सर्वेषां कर्मणीत्यनेनैव सम्बन्धो बोध्यः । विभाकरः । निशाकरः । प्रभाकरः । भास्करः । सूत्रे भास्कारान्तेति भाःशब्दस्य प्रत्ययसन्नियोगेन सकारो निपात्यते । तेन 'भास्करः' इत्यत्र विसर्जनीयजिह्वामूलीयौ न भवतः । यद्वा कस्कादिषु बोध्यः । कारकरः । कर एव कारः । प्रज्ञादित्वात्स्वार्थे अण् । अन्तकरः । अनन्तकरः । अन्तकरशब्देन नञ्समासेऽप्येतदेव रूपम् । स्वरे तु विशेषः । नञ्समासे हि सतिशिष्टोऽव्ययपूर्वपदप्रकृतिस्वरः । अनन्तशब्दस्योपपदत्वे तु कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम् । आदिकरः । बहुकरः । बहुशब्दोऽत्र वैपुल्यवचनः । संख्यावचनस्य तु संख्यावचनग्रहणेनैव सिद्धेः । नान्दीकरः । किङ्करः । लिपिलिबिशब्दौ पर्यायौ । लिपिकरः । लिबिकरः । बलिकरः । भक्तिकरः । कर्तृकरः । चित्रकरः । क्षेत्रकरः । संख्या-एककरः । द्विकरः । जङ्घाकरः । बाहुकरः । अहस्करः । अहन्, "रोऽसुपि" (पा०सू०८-२-६९) इति रेफः, कस्कादित्वात्सः । यत्करः । तत्करः । धनुष्करः । अरुष्करः । "नित्यं समासेऽनुत्तरपदस्थस्य" (पा०सू०८-३-८५ ) इति षत्वम् ।

किंयत्तद्बहुषु कृञोऽज्विधानम् (का०वा०) ॥ वार्त्तिकमेतदिति कैयटहरदत्तौ । इष्टिरिति माधवः । किङ्करा । यत्करा । तत्करा । वार्त्ति·

केन सूत्रबाधाट्टस्याभावात् 'किंकरी' इत्यसाधुरिति कैयटः। हेत्वादावपि टं बाधित्वा परत्वादजेवेति तस्याशयः। वृत्तौ तु पक्षान्तरमप्युक्तम्-अथ वा पचादिपाठः करिष्यते इति। इह किमादिग्रहणमपनीय पचादिष्वेव किंयत्तद्बहुषु कृञिति पठितव्यमिति तस्यार्थः। वार्त्तिकमपीत्थमेव व्याख्येयमित्याशयः। अस्मिन्पक्षे हेत्वादिविवक्षायां परत्वाट्टेन भाव्यम्। तेन किंकरणशीला 'किंकरी' इति भवत्येव।

पुंयोगविवक्षायां तु निर्विवादो ङीष्। किंयत्तद्बहुष्वज्वेति प्रक्रियायां विकल्पोक्तिस्तु आकरविरुद्धत्वात्कर्मण्यणोऽपि पक्षे प्रसङ्गाच्चायुक्तैव। न चाजभावे सौत्रष्टः, सूत्रे किमादिग्रहणापनयनस्य हरदत्तादिभिरुक्तत्वात्। अथवा सौत्रस्यापनयनं मास्त्विति प्रौढिवादेन नेया, ताच्छील्यादौ व्याख्यानभेदात् फलितं विकल्पमाश्रित्य विषयविशेषाभिप्रायेण कथंचिद्वा नेया।

कर्मणि भृतौ (पा०सू०३-२-२२)॥ कर्मशब्दे कर्मण्युपपदे करोतेष्टः स्याद् भृतौ गम्यमानायाम्। भृतिर्वेतनम्। कर्म निर्वेशः क्रियायाः निष्क्रयाय देयं भक्तादि द्रव्यमिति यावत्। कर्मकरो भृतकः। कर्मकारोऽन्यः।

न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु (पा०सू०३-२-२३)॥ एषूपपदेषु करोतेष्टो न स्यात्। हेत्वादिषु प्राप्तः प्रतिषिध्यते। शब्दकारः। श्लोककार इत्यादि।

स्तम्बशकृतोरिन् (पा०सू०३-२-२४)॥ एतयोः कर्मणोरुपपदयोः करोतेरिन्प्रत्ययः स्यात्।

व्रीहिवत्सयोरिति वक्तव्यम् (का०वा०)॥ स्तम्बकरिर्व्रीहिः। शकृत्करिर्वत्सः। इनो नित्वात्कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदमाद्युदात्तम्। व्रीहिवत्सयोः किम्? स्तम्बकारः। शकृत्कारः।

हरतेर्दृतिनाथयोः पशौ (पा०सू०३-२-२५)॥ दृतिनाथयोः कर्मणोरुपपदयोर्हरतेर्धातोः पशौ कर्त्तरि इन् प्रत्ययः स्यात्। दृतिं हरतीति दृतिहरिः। नाथं नासारज्जुं हरतीति नाथहरिः। इह प्रत्ययार्थस्य कर्तुः पशुर्विशेषणं न तु तस्य बाधकः, प्रकृतिप्रत्ययार्थयोरन्वयप्रसङ्गात्। प्रकृत्यर्थो हि प्रत्ययार्थं विशिनष्टि। प्रकृतिश्चेह धातुः। तदर्थश्च क्रिया। सा च साधनेन सम्बन्धार्हा। पशुशब्दस्तु चतुष्पाज्जातीयं वस्तु स्वरूपेणाचष्टे न शक्तिमद्रूपेण, नतरां शक्तिरूपेण। अतस्तथैव च प्रत्याख्यमानः पशुः प्रत्ययार्थो भवितुं नार्हति। अतः कर्त्तैव प्रत्ययार्थः। तद्विशेषणं च पशुः सूत्रवाक्यजन्ये बोधे पशुरूपे कर्त्तरि वाच्ये प्रत्ययो भवतीति हि विषयः।

उदाहरणे तु पशुरेव विशेष्यः। तत्राभेदेन सम्बन्धेन कर्त्ता विशेषणम्। तत्र प्रकृत्यर्थः परमविशेष्यः। पशुस्तु समुदायशक्त्या उपतिष्ठते। एतेन पङ्कजप्रभृतयो व्याख्याताः। पङ्कजनिकर्तृ पद्ममिति हि तत्रार्थः। एवं विधिवाक्येषु अलसमुखाहर्त्रीर्व्रीहिवत्सयोरित्यादिषु सर्वत्र प्रत्ययार्थविशेषणत्वम्। उदाहरणेषु च विशेषणत्वमलसादीनां द्रष्टव्यम्। पशौ किम्? हतिहारः। नाथहारः।

फलेग्रहिरात्मम्भरिश्च (पा०सू०३-२-२६)॥ एतौ निपात्येते। फलानि गृह्णातीति फलेग्रहिर्वृक्षः। "स्यादवन्ध्यः फलेग्रहिः" (अ०को०२-४-६) इत्यमरः। भट्टिकाव्ये तु फलग्राहिमात्रे इन् प्रयुज्यते "फलेग्रहीर्हंसिवनस्पतीनाम्" इति। उपपदस्यैदन्तत्वं इन्प्रत्ययश्च ग्रहेर्निपात्यते। आत्मानं बिभर्तीत्यात्मम्भरिः। आत्मशब्दस्योपपदस्य मुमागमः, इन्प्रत्ययश्च भृञो निपात्यते। चकारोऽनुक्तसमुच्चयार्थ इति वृत्तिः। कुक्षिम्भरिः। छन्दसि फलशब्दस्यादन्तत्वमपि दृश्यते। "यो वनस्पतीनां फलग्रहिः" इति। इदमपि कुक्षिम्भरिवच्चकारेण सङ्ग्राह्यमिति हरदत्तः। चान्द्रास्तु आत्मोदरकुक्षिष्विति पठन्ति। तथा च मुरारिः—

ज्योत्स्नाकरम्भमुदरम्भरयश्चकोराः। इति।

देवापिवातापिप्रभृतयोऽप्यनेन सिद्धाः। भाष्ये तु भृञः कुक्ष्यात्मनोर्नुम् चेत्येतावदेव स्थितम्।

छन्दसि वनसनरक्षिमथाम् (पा०सू०३-२-२७)॥ एभ्यः कर्मण्युपपदे इन्प्रत्ययः स्याच्छन्दसि। 'वन षण सम्भक्तौ' (भ्वा०प०४६४, ४६५) गणे सहनिर्दिष्टौ भौवादिकौ इमावेव गृह्येते न तु 'वनु याचने' (त०आ०८) 'षणु दाने' (त०उ०२) इति तानादिकौ, निरनुबन्धकत्वात् साहचर्याच्च। ब्रह्मवनिं त्वा क्षत्रवनिम्। ब्रह्म वनाति क्षत्रं वनातीति विवक्षायामिन् प्रत्ययः। तदन्ताद् द्वितीयैकवचनम्। उत नो गोषणिन्धियम्। सुषामादित्वात् षत्वं, गां सनतीति विग्रहः। यौतेश्वानौ यमरक्षितारौ चतुरक्षौ पथिरक्षी। ये पथां पथिरक्षयः। पन्थानं रक्षतः रक्षन्ति चेति विग्रहः। हविर्मथीनामभ्याविवासताम्। हविर्मथन्तीति हविर्मथयः तेषाम्।

एजेः खश् (पा०सू०३-२-२८)॥ एजृ कम्पने (भ्वा०प०२३४)। अस्माण्ण्यन्तात् कर्मण्युपपदे खश् स्यात्। जनम् एजयतीति जनमेजयः। सूत्रे 'एजेः' इति ण्यन्तस्य निर्देशः न तु शुद्धस्यैव, खशः शित्करणात्। तद्धि सार्वधातुकत्वे सति शब्यथा स्यादिति। न च शुद्धस्य

शपि सत्यसति वा विशेषोऽस्ति । नचोत्तरार्थं शित्त्वमिति वाच्यम्, इहार्थत्वे सम्भवति केवलोत्तरार्थत्वस्यायुक्तत्वात् । खशः शित्त्वं मुमर्थम् । 'शुनिन्धयः' इत्यादौ ह्रस्वत्वार्थम्—

खश्प्रकरणे वातशुनीतिलशर्द्धेष्वजधेट्तुदजहातिभ्य उपसंख्यानम् (का०वा०) ॥ वातमजा मृगाः। शुनिन्धयः। "खित्यनव्ययस्य" (पा०सू० ६-३-६६) इति ह्रस्वः। तिलन्तुदः । शर्द्धञ्जहा माषाः । ओहाक् त्यागे (जु०प०८) । जुहोत्यादित्वाच्छपः श्लौ द्विर्वचनम् । "श्नाभ्यस्तयोः" (पा०सू०६-४-११२) इत्यालोपः । शर्द्धोऽपानशब्दः, तञ्जहतीति विग्रहः । माधवस्तु 'शर्द्धञ्जहा माषाः' इत्युदाजहार । दुर्गसिंहोऽप्येवम् । तत्र जहातिरन्तर्भावितण्यर्थः साध्वसिच्छिनत्तीतिवत् । माषाणां करणकर्तृत्वमिति वा ।

नासिकास्तनयोर्ध्माधेटोः (पा०सू०३-२-२९) ॥ खश् स्यात् । तत्र यथासंख्यं वारयितुं वार्तिकम्—

स्तने धेटः (का०वा०) ॥

नासिकायां ध्मश्च धेटश्च (का०वा०) ॥ स्तनं धयतीति स्तनन्धयः । धेटष्टित्त्वस्य अवयवे अचरितार्थत्वात्स्तनन्धयी । अत्रैव च ङीबिष्यते नान्यत्रेत्याहुरिति हरदत्तः । अत्रैवेति खश्प्रत्ययान्तोपलक्षणम् । तथा च क्षीरस्वामी 'स्तनन्धयीत्यादौ ङीबर्थः' इति । वर्द्धमानोऽपि-शुनिन्धयी । स्तनन्धयी । खश्प्रत्ययान्त एव ङीबिति । तेन "पाघ्राध्माधेट्दृशः शः" (पा०सू०३-१-१३७) इति शप्रत्यये "आतोऽनुपसर्गे" (पा०सू० ३-२-३) इति कप्रत्यये च टाबेव ।

अत्र च सम्प्रदाय एव शरणम् । नासिकन्धमः । "पाघ्रा" (पा०सू० ७-३-७८) इति धमादेशः । नासिकन्धयः ।

नाडीमुष्ट्योश्च (पा०सू०३-२-३०) ॥ एतयोः कर्मणोरुपपदयोर्ध्माधेटोः खश् स्यात् । अत्र यथासंख्यं नेष्यत इति भाष्ये वृत्तौ च स्थितम् । "यथासंख्यमनुदेशः" (पा०सू०१-३-१०) इति सूत्रे तु भाष्ये यथासंख्यमस्तीत्युक्तम् । तन्मतभेदेन बोध्यम् । नाडिन्धमः, नाडिन्धयः। मुष्टिन्धमः, मुष्टिन्धयः । भाष्ये घटीखारीशब्दावप्युपसंख्यातौ । घटी-घटः । घटिन्धमः । घटिन्धयः । खारिन्धमः । खारिन्धयः । खारीशब्दः परिमाणवचनः । 'खरी' इति पाठान्तरम् । खरी गर्द्दभी । जातिलक्षणो ङीष् । खरिन्धमः । खरिन्धयः । जयादित्यस्तु वातशब्दमप्युदाजहार, वातन्धमः । वातन्धय इति । तत्तु भाष्यादौ न दृश्यते ।

उदिकूले रुजिवहोः (पा०सू०३-२-३१) ॥ उत्पूर्वाभ्यां रुजिवहिभ्यां

कूले कर्मण्युपपदे खश् स्यात् । कूलमुद्रुजतीति कूलमुद्रुजः । कूलमुद्वहः । धातूपसर्गयोः कार्यस्यान्तरङ्गत्वात्पूर्वं गतिसमासः पश्चादुपपदसमासः । ननु "तत्रोपपदं सप्तमीस्थम्" (पा०सू०३-१-९२) इत्यत्र यत्र सति प्रत्ययः स्यात् तत्रैव च सप्तमीनिर्दिष्टमुपपदम् इति व्याख्यानाद् उपपदमित्यनेन प्रत्यय आक्षिप्यते । ततश्च प्रत्ययेनैव समासः स्यान्न तु तदन्तेन समासः । संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणस्य दुर्लभत्वादिति चेत् ? न, प्रत्ययमात्रेण सामर्थ्याभावात्संज्ञाविधावपि "प्रत्ययग्रहण" (प०भा०२३) परिभाषाऽप्रवृत्तेः । न चैवमपि तदादितदन्तनियमादुपसर्गविशिष्टेन समासानुपपत्तिः, कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् । न चेदं कृद्ग्रहणमिति भ्रमितव्यम्, उपपदसंज्ञामात्रस्य मा भूदित्यादौ माङादिष्वपि प्रवृत्तिसम्भवेन कृत्प्रत्ययव्यभिचारित्वेऽप्युपपदसमासस्य कृत्प्रत्ययाव्यभिचारात् । यत्कार्यं हि कृत्प्रत्ययं न व्यभिचरति तत्र कृद्ग्रहणपरिभाषा प्रवर्त्तते । यथा "धातोः स्वरूपग्रहणे" इत्येषा परिभाषा यत्कार्यं धातुं न व्यभिचरति तत्र प्रवर्त्तते । अत एव 'घृतस्पृग्भ्याम्' इत्यत्र "अनुदात्तस्य चर्दुपधस्य" (पा० सू०६-१-५९) इत्यमागमो न प्रवर्त्तते । एतेन 'गोसन्दायः' इत्यादि व्याख्यातम् । तत्रापि हि धातुमात्रात्कर्मण्यणि गतिसमासे च सगतिकेनोपपदसमासः ।

स्यादेतत्, सप्तमीनिर्दिष्टत्वाविशेषात्कूलस्येवोच्छब्दस्याप्युपपदत्वं स्यात् । ततश्चोपपदयोः रुजिवहोश्च यथासङ्ख्यं स्यादिति चेत् ? मैवम् । तत्र हि प्रत्येकमुपपदत्वमिच्छति तत्र समुदायात्सप्तमीमुच्चारयति, लाघवात् । "नाडीमुष्टयोः" (पा०सू०३-२-३०) इति यथा । इह तु विपर्ययः कृतः । तस्मात् 'उदि' इति पञ्चम्याः स्थाने सप्तमी । 'रुजिवहोः' इति पञ्चम्याः स्थाने षष्ठी । तेनोक्तार्थलाभः । एतच्च यथासंख्यसूत्रे कैयटे स्पष्टम् ।

वहाभ्रे लिहः (पा०सू०३-२-३२) ॥ वहाभ्रयोः कर्मणोरुपपदयोर्लिहेः खश् स्यात् । वहः स्कन्धः, तं लेढीति वहंलिहो गौः । लिह आस्वादने (अ०उ०६) । अदादित्वाच्छपो लुक् । खशो ङित्त्वान्न गुणः । अभ्रंलिहो वायुः ।

परिमाणे पचः (पा०सू०३-२-३३) ॥ परिमाणं प्रस्थादि, तस्मिन्कर्मण्युपपदे पचेः खश् स्यात् । प्रस्थं पचतीति प्रस्थम्पचा स्थाली । खारिम्पचः कटाहः । इह सूत्रे परिमाण इति न स्वरूपग्रहणं, तस्य पाकं प्रति कर्मत्वायोगात् । अतस्तद्विशेषाः प्रस्थादयो गृह्यन्ते । तेऽपि यदि

परिमाणनिष्ठा एव स्युस्तर्हि विक्लेदनवाचिना पचिना सह कर्मत्वा-सम्भव एव । अतः परिमिते व्रीह्यादौ वर्त्तमाना इह ग्राह्याः ।

मितनखे च (पा०सू०३-२-३४) ॥ एतयोः कर्मणोः पचेः खश् स्यात् । मितंपचा ब्राह्मणी । नखंपचा यवागूः । पचिरत्र तापवचनः ।

विध्वरुषोस्तुदः (पा०सू०३-२-३५) ॥ एतयोः कर्मणोरुपपदयोस्तुदेर्धातोः खश् स्यात् । विधुं तुदतीति विधुन्तुदः । अरुन्तुदः । "अरुर्द्विषदजन्तस्य मुम्" (पा०सू०६-३-६७) इत्युकारात्परो मुम् । "संयोगान्तस्य लोपः" (पा०सू०८-२-२३) । "सैंहिकेयो विधुन्तुदः" (अ०को० १-३-२८) । "व्रणोऽस्त्रियामीर्ममरुः" (अ०को०२-६-५४) "अरुन्तुदं तु मर्मस्पृक्" (अ०को०३-१-८१) इत्यमरः ।

असूर्यललाटयोर्दृशितपोः (पा०सू०३-२-३६) ॥ एतयोः कर्मणोरुपपदयोर्यथासङ्ख्यं दृशितपिभ्यां खश् स्यात् । 'असूर्यम्' इत्यसमर्थसमासः, दृशिना नञः सम्बन्धात् । सूर्यं न पश्यन्तीत्यसूर्यंपश्या राजदाराः । "पाघ्राध्मा" (पा०सू०७-३-७८) इति पश्यादेशः । गुप्तिपरञ्चेदं । एवञ्च नाम गुप्ता यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्तीति । तेन सत्यपि सूर्यदर्शने प्रयोगो न विरुध्यते । यदा तु सूर्यदर्शनाभावमात्रं विवक्षितं तदा न भवितव्यमेव प्रत्ययेनानभिधानादिति न्यासकारः ।

उग्रम्पश्येरम्मदपाणिन्धमाश्च (पा०सू०३-२-३७) ॥ एते निपात्यन्ते । 'उग्रम्' इति क्रियाविशेषणं, तस्मिन्नुपपदे दृशेः खश् । उग्रं पश्यतीत्युग्रम्पश्यः । इरा उदकं तेन माद्यति दीप्यते अबिन्धनत्वादिति इरम्मदो मेघज्योतिः । मदी हर्षे (दि०प०१०२), अस्मादेव निपातनात् "दिवादिभ्यः श्यन्" (पा०सू०३-१-६९) भवति । पाणयो ध्मायन्तेऽस्मिन्निति पाणिन्धमोऽध्वा । स पुनरस्मिन् गच्छद्भिः सर्पाद्यपनोदनाय पाणयः शब्द्यन्ते तादृशः अन्धकाराद्यावृतो मार्गः ।

प्रियवशे वदः खच् (पा०सू०३-२-३८) ॥ 'प्रिय' 'वश' इत्येतयोः कर्मणोरुपपदयोर्वदेर्धातोः खच् स्यात् । प्रियंवदः । वशंवदः । खकारो मुमर्थः चकारस्तु "खचि ह्रस्वः" इति विशेषणार्थ इति वृत्तिः । "खे ह्रस्वः" इत्युच्यमाने "एजेः खश्" (पा०सू०३-२-२८) जनमेजयः, अत्रापि स्यादिति भावः । ननु एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येति खशि न भविष्यति । न चैवमपि "कुलात्खः" (पा०सू०४-१-१३९) कुलीनः, "यस्य" (पा०सू६-४-१४८) इति लोपाप्रवृत्तये ह्रस्वः स्यादिति वाच्यम्, प्रकरणसाहचर्याद्धातुप्रत्ययस्यैव ग्रहणात् । किञ्च "दोषो णौ" (पा०सू०६-४-९०) इति सूत्रादत्र णावित्यनुवर्त्य खे परे णौ ह्रस्वो

विधीयते। अतः कुलीने न दोषः। जनमेजये तु उक्तैव गतिः। सत्यम्, चिन्त्यप्रयोजन एवायं चकारः। प्रत्ययान्तरकरणमुत्तरार्थम्। 'द्विषन्तपः' इत्यत्र ह्रस्वणिलोपौ यथा स्यातां, शप् च मा भूदिति। नन्वेवमुत्तरत्रैव क्रियतामिति चेत्? सत्यम्, इह करणमन्यतोऽपि भवतीति ज्ञापनार्थम्। तेनानुपदमेव वक्ष्यमाणं वार्त्तिकं गतार्थम्।

खच्प्रकरणे गमेः सुपि (का०वा०)॥ असंज्ञार्थमिदं वार्त्तिकम्। संज्ञायां तु वक्ष्यमाणेन "गमश्च" (पा०सू०३-२-४७) इति सूत्रेणैव सिद्धम्। इदञ्च वार्त्तिकं ज्ञापकसिद्धार्थमित्युक्तम्। मितङ्गमो हस्ती।

विहायसो विह च (का०वा०)॥ विहायसो 'विह' इत्ययमादेशो वक्तव्यः। खच्च डिद्वा वक्तव्यः। विहङ्गः। विहङ्गमः।

डे च (का०वा०)॥ डे परे विहायसो विहादेशो वक्तव्यः। विहगः। "अन्यत्रापि दृश्यते" (का०वा०) इति डप्रकरणे वक्ष्यमाणेनेह डः।

द्विषत्परयोस्तापेः (पा०सू०३-२-३९)॥ एतयोः कर्मणोरुपपदयोस्तापेः खच् स्यात्। तप दाहे (चु०प०२८६) चुरादिः, तप सन्तापे (भ्वा०प०१०१०) भ्वादिः, द्वयोरपि ग्रहणम्। द्विषन्तं तापयतीति द्विषन्तपः। "अरुर्द्विषत्' (पा०सू०६-३-६७) इति मुमि संयोगान्तलोपः। परन्तपः। 'द्विषत्परयोः' इति द्वितकारको निर्देशः। तत्रैकेन द्विषच्छब्दो विशेष्यते, तकारान्तो यो द्विषच्छब्द इति। सौत्रत्वान्निर्देशस्य विशेषणस्य परनिपातः। तेन स्त्रियां न भवति। घटघटीग्रहणेन "लिङ्गविशिष्ट" (प०भा०७३) परिभाषाया अनित्यत्वज्ञापनाद्वा। द्विषन्तीं तापयतीति द्विषतीतापः। "कर्मण्यण्" (पा०सू०३-२-१) एव भवति।

वाचि यमो व्रते (पा०सू०३-२-४०)॥ वाक्शब्दे कर्मवाचिन्युपपदे यमेः खच् स्यात् व्रते गम्यमाने। शास्त्रेण बोधितः सङ्कल्पविशेषो व्रतम्। वाचं यच्छतीति वाचंयमः। "वाचंयमपुरन्दरौ च" (पा०सू०६-३-६९) इति पूर्वपदस्यामन्तत्वम्। न चैवं खच्प्रत्ययोऽपि तत्रैव निपात्यतामिति वाच्यम्, व्रतादन्यत्रापि प्रसङ्गात्। यदि तु निपातनबलादेव व्रतविषयता आश्रीयते तत्रैव वा व्रतग्रहणं क्रियते, वाचंयमो व्रते पुरन्दरश्चेति, तदेह "वाचियमो व्रते' इति सूत्रं "पूः सर्वयोः" (पा०सू०३-२-४१) इत्यत्र 'पुरिदारेः' इत्यंशश्च शक्यमकर्तुम्। व्रते किम्? यो ह्यशक्त्यादिना वाचं यच्छति तत्राणेव यथा स्यात्। वाग्यामः।

पूः सर्वयोर्दारिसहोः (पा०सू०३-२-४१)॥ 'पुर्' 'सर्व' इत्येतयोः कर्मणोरुपपदयोर्यथासङ्ख्यं दारिसहोर्धात्वोः खच् स्यात्। पुरं दारयतीति पुरन्दरः, "वाचंयमपुरन्दरौ च" (पा०सू०६-३-६०) इत्यम्। सर्वंसहं

राजा। इह सूत्रे 'दॄ विदारणे' (क्र्या०प०२१) इत्यस्य ग्रहणं, न तु 'दृ भये' (भ्वा०प०८१०) 'दृङ् आदरे' (तु०आ०१३१) इत्येतयोरित्युपदेशः। सहिग्रहणमसंज्ञार्थम्। संज्ञायान्तु "भृतॄवृजि" (पा०सू०प०३-२-४६) इत्यादि वक्ष्यति।

"भगे च दारेरिति वक्तव्यम्" इति काशिका। भाष्यादावदृष्टम-पीदं बाहुलकेन लभ्यते। भगं दारयतीति भगन्दरः।

सर्वकूलाभ्रकरीषेषु कषः (पा०सू०३-२-४२)॥ एषु चतुर्षु कर्मसू-पपदेषु कषेः खच् स्यात्। सर्वङ्कषः खलः। कूलङ्कषा नदी। अभ्रङ्कषो वायुः। करीषङ्कषा वात्या।

मेघर्तिभयेषु कृञः (पा०सू०३-२-४३)॥ एषु त्रिषु कर्मसूपपदेषु करोतेः खच् स्यात्। मेघङ्करः। ऋतिङ्करः। भयङ्करः। उपपदविधौ भयादिग्रहणं तदन्तविधिं प्रयोजयतीत्युक्तत्वात् अभयङ्करः।

क्षेमप्रियमद्रेऽण् च (पा०सू०३-२-४४)॥ त्रिष्वेषु कर्मसूपपदेषु करो-तेरण् स्याच्चात्खच्। क्षेमङ्करः। क्षेमकारः। प्रियङ्करः। प्रियकारः। मद्रङ्करः। मद्रकारः। वेति वक्तव्ये अण्ग्रहणं हेत्वादिषु टप्रतिषेधा-र्थम्। कथन्तर्हि 'अल्पारम्भाः क्षेमकराः' इति? कर्मणः शेषत्वविवक्षायां पचाद्यच् भविष्यति।

छन्दसि 'शिवङ्करः' इत्यपि दृश्यते। तथा चाथर्वशाखायां 'शिव एको ध्येयः शिवङ्करः सर्वमन्यत्परित्यज्य' इति। कर्तृव्यत्ययात्सिद्धम्।

आशिते भुवः करणभावयोः (पा०सू०३-२-४५)॥ अत्र 'सुपि' इत्यु-पतिष्ठते न तु 'कर्मणि' इति, भवतेरकर्मकत्वात्। यद्यपि सोपसर्गस्य प्राप्त्यर्थस्य च भवतेः सकर्मकत्वमस्ति तथापि तत्र खचा न भवित-व्यमनभिधानादित्याहुः।

आशितशब्दश्च द्विविधोऽत्र गृह्यते। 'अश भोजने' (क्र्या०प०५१) इत्यस्मादाङ्पूर्वादविवक्षिते कर्मणि कर्त्तरि क्तप्रत्ययान्त एकः। अशे-र्ण्यन्तात्प्रयोज्यकर्मणि क्तप्रत्यये कृते अपरः। "आशितः कर्ता" (पा० सू०६-१-२०७) इत्याद्युदात्तविधिरप्युभयोरविशिष्टः। तत्र द्वितीये प्रयोज्य एव भूतपूर्वगत्या कर्त्तोच्यते। प्रत्यवसानार्थानामणौ कर्त्तुर्णौ कर्मसंज्ञाविधानात्। "कृषन्नित्फालआशितं कृणोति" इत्यत्रापि अयमेव प्राह्यः। अवग्रहादर्शनात्। आद्ये तु साम्प्रतिकमेव कर्तृत्वम्। यस्तु "ध्रौ-व्यगतिप्रत्यवसानार्थेभ्यः" (पा०सू०प०३-४-७६) इति भावकर्माधिकर-णेषु क्तः, तदन्तो नात्र गृह्यते, अनभिधानात्। सूत्रार्थस्तु आशित-शब्दे सुबन्त उपपदे भवतेर्धातोः करणे भावे चार्थे खच् स्यात्। आ-

शितो भवत्यनेन आशितम्भव ओदनः। यावता ओदनेन अतिथ्यादिर्भोजितो भवति स एवमुच्यते। भावे-आशितस्य भवनमाशितम्भवः। इह "वासरूप"(पा०सू०३-१-९४)विधिना ल्युडपि भवति। 'आशितभवनम्'इति। घञ् तु बाध्यते एव, सरूपत्वादित्याहुः।

न चात्र "क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्न"(प०भा०७०) इति निषेधः शङ्क्यः, यत्र हि घञादेरपवादत्वेन ल्युट् प्रसक्तः, स उत्सर्गं नित्यं बाधते न तु विकल्पेनेति तदर्थः। इह तु ल्युटोऽपवादोऽयं खच्। तत्र वासरूपन्यायो निर्बाध एव। 'आशितभवनम्' इत्युदाहरतो जयादित्यस्य सम्मतश्चेति दिक्।

संज्ञायां भृतृवृजिधारिसहितपिदमः (पा०सू०३-२-४६)॥ भृप्रभृतिभ्योऽष्टभ्यः यथायोगं कर्मणि सुबन्ते चोपपदे खच् स्यात्संज्ञायाम्। विश्वं बिभर्तीति विश्वम्भरः कैटभजित्। "रसा विश्वम्भरा स्थिरा"(अ०को०२-१-२)। रथन्तरं साम। रथेन तरतीति व्युत्पत्तिमात्रम्, स्वरसंस्कारावग्रहादिसिद्ध्यर्थम्। न त्वत्रावयवार्थानुगमोऽस्ति, "रथन्तरमाजभारा वसिष्ठः" इत्यत्र हि रथमित्यवगृह्णन्ति। अन्तोदात्तं चाधीयते। अखण्डत्वे तु अवग्रहो न स्यात्। "नब्विषयस्य"(फि०सू० २६) इत्याद्युदात्तश्च स्यात्। पतिंवरा कन्या। शत्रुञ्जयो हस्ती। युगन्धरः पर्वतः। शत्रुंसहः। शत्रुन्तपः। अरिन्दमः। अन्तर्भावितण्यर्थोऽत्र दमिः। संज्ञायां किम्? कुटुम्बं बिभर्तीति कुटुम्बभारः।

गमश्च (पा०सू०३-२-४७)॥ अस्मात् खच् स्यात्कर्मण्युपपदे संज्ञायाम्। सुतङ्गमः। पूर्वसूत्रे एव गमिर्नोक्तः। उत्तरसूत्रे गमेरेवानुवृत्तिर्यथा स्यात्, भृतृप्रभृतीनां मा भूदिति।

अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः (पा०सू०३-२-४८)॥ 'संज्ञायाम्'इति निवृत्तम्। सप्तसु कर्मसूपपदेषु गमेर्डः स्यात्। अन्तं गच्छतीत्यन्तगः। अत्यन्तगः। अध्वगः। दूरगः। पारगः। सर्वगः। अनन्तगः। डित्वसामर्थ्यादभस्यापि टेर्लोपः।

सर्वत्रपन्नयोरुपसंख्यानम्(का०वा०)॥ सर्वत्रगः। पन्नं पतितं यथा स्यात्तथा गच्छतीति पन्नगः। 'पन्नम्' इति क्रियाविशेषणं पठ्यते क्तान्तम्।

उरसो लोपश्च (का०वा०)॥ उरसा गच्छतीत्युरगः।

सुदुरोरधिकरणे (का०वा०)॥ सुखेन गच्छत्यत्रेति सुगः। दुर्गः। कर्मणि तु खलेव। सुगमः। दुर्गमः।

निरो देशे (का०वा०)॥ निर्गो देशः।

अन्यत्रापि दृश्यते इति वक्तव्यम(का०वा०)। ग्रामगः। गुरुतल्पगः।

आशिषि हनः (पा०सू०३-२-४९) ॥ कर्मण्युपपदे हन्तेर्डः स्यादाशिषि गम्यमानायाम् । शत्रुं वध्यात् शत्रुहः । आशिषि किम् ? शत्रुघातः । अत्र वार्त्तिकानि—

दारावाहनोऽणन्तस्य च टः संज्ञायाम् (का०वा०) । 'दारौ' इति शब्दापेक्षया पुल्लिङ्गता । दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण्, अन्तस्य च टकारादेशो वक्तव्य इत्यर्थः । टविधानार्थमिदम् । अण् तु "कर्मण्यण्"(पा०सू०३-२-१)इत्येव सिद्धः । अन्तग्रहणं स्पष्टार्थम् "अलोऽन्त्यस्य"(पा०सू०१-१-५२)इत्येव सिद्धेः । अन्यथा हि टः प्रत्ययः सम्भाव्येत । गोधाकालकादार्वाघाटस्ते वनस्पतीनाम् ।

चारौ वा (का०वा०) ॥ चारुशब्दे उपपदे प्रागुक्तं वा वक्तव्यमित्यर्थः । चार्वाघाटः । चार्वाघातः ।

कर्मणि समि च (का०वा०)॥ कर्मण्युपपदे सम्पूर्वाद्धन्तरेण्, अन्त्यस्य च टो वा वक्तव्यः । वर्णान्संहन्तीति वर्णसंघाटः । वर्णसंघातः । पदसंघातः । पदसंघाटः ।

अपे क्लेशतमसोः (पा०सू०३-२-५०) ॥ अपपूर्वाद्धन्तेर्डः स्यात्क्लेशतमसोः कर्मणोरुपपदयोः । क्लेशापहः पुत्रः । तमोऽपहः सूर्यः । अनाशीरर्थोऽयमारम्भः ॥

कुमारशीर्षयोर्णिनिः(पा०सू०३-२-५१) ॥ एतयोः कर्मणोरुपपदयोर्हन्तेर्णिनिः स्यात् । कुमारघाती । शीर्षघाती । "सुप्यजातौ" (पा०सू०३-२-७८) इत्येवमादिभिः सिद्धे ताच्छील्यावश्यकाधमर्ण्यादिविरहेऽपि यथा स्यादित्येवमर्थं, शिरसः शीर्षभावार्थश्च वचनम् ।

लक्षणे जायापत्योष्टक् (पा०सू०३-२-५२) ॥ हन्तेर्धातोर्जायापत्योः कर्मणोरुपपदयोर्लक्षणवति कर्त्तरि टक्प्रत्ययः स्यात् । जायाघ्नो ब्राह्मणः । पतिघ्नी वृषली । सूत्रे लक्षणशब्दोऽर्शआद्यच्प्रत्ययान्तो न तु केवलः, सूत्रारम्भसामर्थ्यात् । केवले हि लक्षणे तिलकरेखाविशेषादौ कर्तृत्वेन विवक्षिते उत्तरसूत्रेणैव सिद्धः प्रत्ययः । तस्माद्यस्य तिलकादि जायामरणनिमित्तमस्ति स तां हन्तीति गौणो वादः । एवं 'पतिघ्नी' इत्यत्रापि ।

अमनुष्यकर्तृके च (पा०सू०३-२-५३) ॥ मनुष्यभिन्नकर्तृकेऽर्थे वर्त्तमानाद्धातोः कर्मण्युपपदे टक् स्यात् । जायाघ्नस्तिलकालकः । पतिघ्नी पाणिरेखा । पित्तघ्नं घृतम् । अमनुष्यकर्तृके इति किम् ? आखुघातः शूद्रः । यद्यपि अमनुष्यशब्दो रक्षःपिशाचादिषु रूढस्तथापीह लक्ष्यानुरोधिनो व्याख्यानान्मनुष्यादन्यत्सर्वमेवाह । ननु पूर्वसूत्रे लक्ष-

नग्रहणं यथा प्रत्ययार्थविशेषणम्, तथेहाप्यमनुष्यग्रहणमस्तु, किं कर्तृग्रहणेनेति चेत् ? मैवम्, 'अमनुष्य'इत्युच्यमाने उपपदत्वं विज्ञायेत, पूर्वसूत्रे तु उपपदान्तरसत्त्वात्प्रत्ययार्थविशेषणता निश्चीयत इति वैषम्यात् । अथ कथं 'कृतघ्ने नास्ति निष्कृतिः' 'बलभद्रः प्रलम्बघ्नः' 'शत्रुघ्नः' इत्यादि ? मूलविभुजादिषु द्रष्टव्याः । कथन्तर्हि 'चोरघातो नगरघातो हस्ती' इति ? बाहुलकादणिति वृत्तिर्भाष्यञ्च ।

शक्तौ हस्तिकपाटयोः (पा०सू०३-२-५४)॥ शक्तौ गम्यमानायां हस्तिकपाटयोः कर्मणोरुपपदयोर्हन्तेर्धातोष्टक् स्यात् । मनुष्यकर्तृकार्थ आरम्भः । हस्तिघ्नो मनुष्यः । कपाटघ्नश्चोरः । शक्ताविति किम् ? विषेण हस्तिनं हन्तीति हस्तिघातः । यद्यपीह शक्तिरस्ति अशक्तस्य कर्तृत्वानुपपत्तेस्तथापि शक्तिग्रहणसामर्थ्यात्प्रकर्षविज्ञानम् । तेन स्वबलेनैव हन्तुं या शक्तिः सा गृह्यते । एवं चोदाहरणेऽपि हस्तिनं हन्तुं मा वा वधीत् । सामर्थ्यातिशयमात्रात्तु 'हस्तिघ्नः' इत्याद्युच्यते । कं शिरः पाटयति प्रविशते इति कपाटम् । 'कवाटम्' इति पाठे तु अटतेः पचाद्यच् । "कवञ्चोष्णे" (पा०सू०६-३-१०७) इत्यत्र योगविभागात्कोः कवादेश इति हरदत्तः ।

पाणिघताडघौ शिल्पिनि (पा०सू०३-२-५५) ॥ एतौ निपात्येते शिल्पिनि कर्त्तरि वाच्ये । 'पाणि' 'ताड' इत्येतयोरुपपदयोर्हन्तेर्धातोष्टक्प्रत्ययः तस्मिंश्च टिलोपः घत्वञ्च निपात्यते । पाणिघः । ताडघः । शिल्पिनीति किम् ? पाणिघातः । ताडघातः ।

राजघ उपसङ्ख्यानम् (का०वा०) ॥ राजानं हन्तीति राजघः ।

आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् (पा०सू०३-२-५६) ॥ आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु सप्तसु कर्मसूपपदेषु करोतेः ख्युन् स्यात् । करणे च्वेर्वैकल्पिकत्वाद् द्विविधाश्च्व्यर्था आढ्यादयः, च्व्यन्ता अच्व्यन्ताश्च । तत्र च्व्यन्ताः पर्युदस्यन्ते । अनाढ्यमाढ्यं करोत्यनेन आढ्यङ्करणम् । सुभगङ्करणमित्यादि । च्व्यर्थेष्विति किम् ? आढ्यन्तैलेन कुर्वन्ति । अभ्यञ्जयन्तीत्यर्थोऽनेकार्थत्वाद्धातूनाम् । तेन नात्र प्रागनाढ्यः सन् आढ्यः क्रियते इति अभूततद्भावाभावः । अस्तु वा अभूततद्भावः, तथापि प्रकृतेरविवक्षायां प्रत्युदाहरणम् । प्रकृतिरेव परिणामिनीत्वेन यदा विवक्ष्यते यथा अपटास्तन्तवः पटीभवन्तीति, तदा च्विप्रत्ययः । तथा च तत्र वार्तिकम्—

प्रकृतिविवक्षाग्रहणं च(का०वा०) । इति । अच्वाविति किम् ? आ-

ढ्यीकरोत्यनेन।

स्यादेतत्। "करणाधिकरणयोश्च" (पा०सू०३-३-११७) इति ल्युटाऽत्र भवितव्यम्। न च ल्युटः ख्युनश्चेह विशेषोऽस्ति, उभयथाऽपि हि 'आढ्यीकरणम्' इत्येव रूपम्। "खित्यनव्ययस्य" अरुर्द्विषदजन्तस्य मुम्' (पा०सू०६-३-६६,६७) इति हि ह्रस्वत्वं मुम् चानव्ययस्य विधीयते। च्व्यन्तश्चाव्ययम्, "ऊर्यादिच्विडाचश्च" (पा०सू०१-४-६१) इति निपातत्वात्। न च ख्युनि सति "उपपदमतिङ्" (पा०सू०२-२-१९) इति नित्यसमासो लभ्यते ल्युटि तु नेति वाच्यम्। ल्युट्यपि गतिसमासस्य सम्भवात् तस्यापि नित्यसमासत्वाविशेषात्। न च स्त्रीप्रत्यये विशेषः, उभयत्रापि ङीबेव भवति। ल्युटि "टिड्ढाणञ्" (पा०सू०४-१-१५) इति सूत्रेण, ख्युनि तु तत्रत्येन ख्युन उपसंख्यानेन। न च स्वरे विशेषः, ल्युटि हि लित्स्वरेण कृञ उदात्तत्वं ख्युन्यपि नित्स्वरेण तथैवेति। तस्मात् 'अच्वौ' इति व्यर्थमिति चेत्? सत्यम्, उत्तरार्थं तदुक्तमिति भाष्यकाराः। एवञ्च 'आढ्यीकरणम्' इत्यादि रूपं ल्युटा भवत्येवेति भाव इति कैयटः। यत्तु जयादित्येनोक्तम्—प्रतिषेधसामर्थ्यात् ख्युन्यसति ल्युडपि न भवति। तेन ल्युटोऽप्ययमर्थतः प्रतिषेध इति। तस्यायमाशयः—केवलोत्तरार्थत्वे तत्रैवाच्वाविति ब्रूयात्। इहकरणसामर्थ्यात्तु ल्युडपि न। यथा "इकोऽचि विभक्तौ" (पा०सू०७-१-७३) इत्यज्ग्रहणस्य उत्तरार्थत्वे सत्यपि इहकरणसामर्थ्यात् "न लुमता" (पा०सू०१-१-६३) इत्यस्यानित्यता ज्ञाप्यते इत्यभिप्रायेणाह-इह किञ्चित् त्रपो इतीति वक्ष्यते। तथा चोत्तरार्थतापि काममस्तु न तु केवलोत्तरार्थतेति। भाष्यवार्त्तिकस्वरसेन तु केवलोत्तरार्थत्वं लभ्यते। अतस्तद्विरोधाद्वृत्तिकृन्मतमयुक्तमिति कैयटः।

कर्त्तरि भुवः खिष्णुच्खुकञौ (पा०सू०३-२-५७)॥ आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु सुबन्तेषूपपदेषु भवतेर्धातोः कर्त्तरि खिष्णुच् खुकञ् एतौ स्तः। आढ्यम्भविष्णुः। आढ्यम्भावुकः। सुभगम्भविष्णुः। सुभगम्भावुक इत्यादि। कर्तृग्रहणं करणनिवृत्त्यर्थमुत्तरार्थञ्च। खकारो मुमर्थः। ञकारो वृद्ध्यर्थः।

स्यादेतत्। खिष्णुच इकारो मास्तु 'ग्लस्नुः' इति 'स्नुच्' इति वोच्यताम्। तत्रायमप्यर्थः, स्वरार्थश्चकारो न कर्त्तव्यः, प्रत्ययस्वरेणैवाभिमतासिद्धेः। कथन्तर्हि इकारादित्वमिति चेत्? इडागमेनेति गृहाण। न च "एकाच उपदेशे" (पा०सू०७-२-१०) इतीण्निषेधः,

भवतेरुदात्तत्वात्। अत्रोत्तरं वार्तिककार आह—

नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्णुचः॥ इति।

'नञः' इति पञ्चमी। नञ उत्तरस्य खिष्णुजन्तस्य स्वरसिद्ध्यर्थमित्यर्थः। यद्ययमिकारादिर्न क्रियेत ततः सत्यपीटि "कृत्योकेष्णुच्चार्वादयश्च" (पा०सू०६-२-१६०) इति सूत्रे अस्य ग्रहणं न स्यात्। अस्य चकारानुबन्धाभावात्।

अथोच्येत-अयमपि चित्। 'खस्नुच्' इति। एवमपि लाक्षणिकत्वात्षत्वणत्वयोश्चासिद्धत्वात् 'इष्णुच्' इति रूपाभावात् ग्रहणं न स्यादेव। तत इकारादित्वं क्रियते।

अत्रेदं वक्तव्यम्-सत्यपीकारादित्वे "तदनुबन्धकग्रहणे नातदनुबन्धकस्य" (प०भा०८४) इति परिभाषया अलङ्कृञादिष्णुच एव ग्रहणेन भाव्यं, नास्य।

अथोच्येत। इकारोच्चारणसामर्थ्यादस्यापि ग्रहणमिति। हन्तैवं ख्स्नुजयमस्तु तत्रेटि कृते चकारानुबन्धसामर्थ्यादस्यापि ग्रहणमस्त्विति किमिकारेण? तस्माच्चिन्त्यमेतत्। यत्तु हरदत्तेन षत्वणत्वयोः सामर्थ्यादस्यग्रहणं भवतीत्युक्तम्, तदप्यापाततः स्नुजपेक्षया ष्णुजुक्तौ प्रत्युत प्रक्रियालाघवेन षत्वणत्वयोः करणस्योचिततया सामर्थ्यायोगादिति दिक्।

स्पृशोऽनुदके क्विन् (पा०सू०३-२-५८)॥ अनुदके सुबन्ते उपपदे स्पृशेः क्विन् स्यात्। यद्यपि स्पृशेः सकर्मकत्वात्कर्मण्युपपदे इत्येव प्राप्तस्तथापि पूर्वसूत्रात् 'कर्त्तरि' इत्यनुवृत्तेः 'सुपि' इत्येवोपपदं निर्णीयते। तथाहि-"कर्तरि कृत्' इत्येव कर्तरि क्विनः सिद्धत्वात्कर्त्रनुवृत्तिः कर्तृप्रचयार्था। कर्मण्युपपदे एकः कर्ता, करणादौ चापर इत्येवं कर्तृप्रचयः। तथा च सुबन्ते उपपदे इति फलितं भवति। घृतं स्पृशतीति घृतस्पृक्। मन्त्रेण स्पृशतीति मन्त्रस्पृक्इति प्राञ्चः।

वस्तुतस्तु पूर्वसूत्रे कर्तृग्रहणं व्यर्थमेव। तद्धि न तत्रैव करणानुवृत्तिनिरासार्थम्, अस्वरितत्वादेव तत्सिद्धेः। नापीह कर्तृप्रचयार्थम्, 'मन्त्रस्पृक्' इत्यादेः क्विपाऽपि सिद्धेः। न च क्विपि कुत्वं न स्यादिति वाच्यम्, क्विन्प्रत्ययो यस्मात्तस्यान्यत्रापि कुत्वम् इति वक्ष्यमाणत्वात्। अन्यथा 'असृक्' इत्याद्यसिद्धेरित्यवधेयम्।

अनुदके इति किम? उदकस्पर्शः। न चेह क्विपा 'उदकस्पृक्' इति रूपं दुर्वारमिति वाच्यम्, अनुदके इति पर्युदाससामर्थ्यात्क्विपोऽप्यप्रवृत्तेः। कथन्तर्हि 'मन्त्रस्पृक्' इत्यादेः क्विपा सिद्धिरुक्तेति-

चेत् ? उक्ते क्विपोऽप्रवृत्तावपि मन्त्रादावुपपदे प्रवृत्तौ बाधकाभावादिति दिक् ।

क्विनः ककारो गुणप्रतिषेधार्थः । इकारो "वेरपृक्तस्य" (पा०सू०६-१-६७) इति विशेषणार्थः । नकारस्तु यद्यपि नाद्युदात्तार्थः, एकाज्भ्यः क्विनो विधानात्तत्र धातुस्वरेणैव सिद्धेः, यस्त्वनेकाच् 'दधृक्' इति, तत्रान्तोदात्तस्य वक्ष्यमाणत्वात्, तथापि "क्विन्प्रत्ययस्य कुः" (पा०सू० ८-२-६२) इति विशेषणार्थः । "क्विप्प्रत्ययस्य" इत्युच्यमाने सन्देहः स्यात् । क्वेः क्विपो वा निर्देश इति । न च क्वेर्निर्देश एकः पकारः, क्विपस्तु द्वाविति विशेषः । क्वेरपि निर्देशे पकारस्य "अनचि च" (पा०सू०८-४-४७) इति द्विर्वचनोपपत्तेः । न चैवं क्विपि पकारत्रयमिति वाच्यम्, "झरो झरि" (पा० सू०८-४-६५) इति लोपोपपत्तेः । व्यञ्जनपरस्यैकस्यानेकस्य वोच्चारणे विशेषानुपलम्भाच्च ।

ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च (पा०सू०३-२-५९) ॥
आद्याः पञ्च क्विन्नन्ता निपात्यन्ते । ततस्त्रिभ्यः क्विन्विधीयते । तत्रापि निपातनैः सह निर्देशात्किञ्चिदलाक्षणिकमस्ति । तद्यथा-अञ्चेः सकर्मकत्वात्कर्मण्येव प्राप्तः सुबन्तमात्रे विधीयते । युजिक्रुञ्चिभ्यान्तु केवलाभ्यामेव । युजेर्विधानसामर्थ्याच्च । न हि सोपपदाद्युजेः क्विनि क्विपि वा विशेषोऽस्ति, कुत्वस्य "चोः कुः" (पा०सू०८-२-३०) इत्यनेनैव सिद्धत्वात् । अनुपपदे तु "युजेरसमासे" (पा०सू०७-१-७१) इति नुमि कृते नकारस्य कुत्वार्थं क्विनो विधानं भवति सार्थकम् । क्रुञ्चेर्नलोपाभावश्च निपात्यते । ऋतौ यजति ऋत्विक् । इह ऋतुशब्दे उपपदे यजेः क्विन् । ञिधृषा प्रागल्भ्ये (स्वा०प०२३), अस्य क्विन् द्विर्वचनमन्तोदात्तत्वञ्च निपात्यते, दधृक् । सृजेः कर्मणि क्विन्, अमागमश्च निपात्यते । सृज्यते इति स्रक् । दिशेः कर्मणि क्विन् । दिश्यते इति दिक् ।

उत्पूर्वात्स्निहेः क्विन्, उपसर्गान्तलोपः, सस्य षत्वञ्च, उष्णिक् । प्राङ् । प्रत्यङ् । युङ्, युञ्जौ । सोपपदात्तु "सत्सूद्विष" (पा०सू०३-२-६१) इति क्विप् । अश्वयुक् । यदि तु निपातनसाहचर्यात्सोपपदादनुपपदाच्च युजेः क्विन् भवतीत्युच्येत, तदा "सत्सूद्विष" इति सूत्रे युजिग्रहणं शक्यमकर्तुम् । क्रुञ्च क्रुञ्च कौटिल्याल्पीभावयोः (भ्वा०प० १८५,१८६) । नोपधाविमौ । तथा च निकुचितिरित्यत्र नलोपो दृश्यते । "सन्निपात" (प०भा०८७) परिभाषायाः फलानि पठन् वार्त्तिककारोऽप्याह—"उदुपधत्वमकित्त्वस्य निकुचितः" इति । अकारस्तु "स्तोः"

(पा०सू०८-४-४०) इति चुत्वेन, तस्यासिद्धत्वात् "चोः कुः" (पा०सू०८-२-३०) इति कुत्वं न। अकारोपधं पठतां तु 'क्रुञ्चौ' 'क्रुञ्चः' इत्यादौ प्राप्तं कुत्वं साङि झलीति वचनाद्वार्यते। साङिति प्रत्याहारः सनः सशब्दा-दारभ्य आ महिङो ङकारात्।

अत्र केचित्—कुञ्चिरेक एव धातुः। तस्य ककारात्परो रेफोऽपि क्विन्सन्नियोगेन निपात्यते इत्याहुः। "चोः कुः" (पा०सू०८-२-३०) इति सूत्रे वामनकाशिकायां स्पष्टमेतत्।

त्यदादिषु दृशोऽनालोचने कञ् च (पा०सू०३-२-६०) ॥ अनालो-चनार्थाद् दृशेर्धातोस्त्यदादिषु कञ्स्याच्चात्क्विन्। तादृक्। तादृशः। यादृक्। यादृशः। कञो अकारो विशेषणार्थः ठक्ठञ्कञिति स्व-रार्थश्च। अनालोचने किम्? तत्पश्यतीति तद्दर्शः। तादृशादयस्तु रूढि-शब्दाः। ते च असताऽप्यवयवार्थेन व्युत्पाद्यन्ते। अत एव अ-नालोचने इत्युक्तम्। दृश्यर्थाभावेऽप्ययं विधिः। सति तु दृश्यर्थे अणेव भवतीति भावः।

भाष्ये तु कर्मकर्त्तरि व्युत्पत्तिर्दर्शिता। तमिवेमं पश्यन्ति जनाः, स इवायं पश्यति ज्ञानविषयो भवतीत्यर्थात्। तथा दृग्दृशदृक्षा इवार्थे तद्धितप्रत्यया एवेत्यपि पक्षान्तरं स्थितं भाष्ये। तच्च "टिड्ढाणञ्" (पा०सू०४-१-१५) इति सूत्रे व्युत्पादयिष्यामः।

समानान्ययोश्चेति वक्तव्यम् (का०वा०) ॥ सदृक्। सदृशः। अन्यादृक्। अन्यादृशः।

क्सोऽपि वक्तव्यः (का०वा०) ॥

त्यदादिषु समानान्ययोश्च (का०वा०) ॥ तादृक्षः। सदृक्षः॥ अन्यादृक्षः।

सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् (पा०सू०३-२-६१) ॥ सुपीति वर्त्तते। कर्मग्रहणं तु "स्पृशोऽनुदके" (पा०सू०३-२-५८) इत्यतः प्रभृति नानुवर्तते। तत्र ह्यनुवृत्तेन कर्तृप्र-चयार्थेन कर्तृग्रहणेन तन्निवृत्तिरित्युक्तम्। कर्तृग्रहणप्रत्याख्याने तु व्याख्यानादेव कर्मग्रहणनिवृत्तिरित्यन्यदेतत्।

सदादिभ्यो धातुभ्यः सुप्युपसर्गेऽप्यनुपसर्गेऽप्युपपदे क्विप् स्यात्। उपसर्गग्रहणं ज्ञापनार्थम्। "सुपि स्थः" (पा०सू०३-२-४) इत्यतः प्रकृतस्य सुप्ग्रहणस्य उपसर्गेतरपरत्वमिति। युक्तञ्चैतत्, विशेषसन्निधौ आम्नातस्य सामान्यशब्दस्य तदतिरिक्तपरत्वौचि-त्यात्। तत्फलन्तु "स्पृशोऽनुदके क्विन्" (पा०सू०३-२-५८) इत्यत्र

उपसर्गस्याग्रहणमिति कैयटः।

यत्तु सामान्यापेक्षं ज्ञापकमाश्रित्य "वदः सुपि क्यप्च" (पा०सू० ३-१-१०६) इत्यत्रापि उपसर्गेतरपरत्वमुक्तं भाष्यवृत्त्योस्तत्तु मन्दप्रयोजनम्। तत्रत्यभाष्ये "गदमदचरयमश्च" (पा०सू०३-१-१००) इति सूत्रादनुपसर्गग्रहणमनुवर्तत इति सिद्धान्तितत्वात्।

वस्तुतस्तु कैयटोक्तमपि फलं चिन्त्यमेव, स्पृशेरुपसर्गे क्विनभावेऽपि क्विपो दुर्वारत्वात्। तत्र च क्विन्क्विपोः स्वरे रूपे वा विशेषस्य दुर्लभत्वात्।

अथ वा सत्यभिधाने यङ्लुगन्ते अनेकाच्कत्वेन स्वरे विशेषो वर्णनीयः।

वस्तुतस्तु "अनुदके" इति पर्युदासादत्र सत्त्ववाचकस्यैव ग्रहणेनोपसर्गे प्राप्तिरेव नास्ति। यत्तु "गापोष्टक्" (पा०सू०३-२-८) इत्यत्र फलमित्याहुः, तन्न, तत्रापि "अनुपसर्गे" इत्यनुवृत्तेः। 'कर्मणि' इत्यस्य सम्बन्धेऽपि 'सुपि' इत्यस्यासम्बन्धेन ज्ञापकाप्रवृत्तेश्च। तस्मात् "सुपि स्थः" (पा०सू०३-२-४) इत्यत्रैव यथाकथञ्चित्फलविशेषो वर्णनीय इत्यास्तान्तावत्।

हंसः शुचिषत्। "पूर्वपदात्" (पा०सू०८-४-३) इति षत्वम्। तत्र च 'छन्दसि' इति वर्त्तते। तेन भाषायां 'शुचिसत्' इत्येव भवति। तथा च माघः—"मनस्सु येन द्युसदां न्यधीयते" इति। "आदितेया दिविषदः" (अ०को०१-१-३) इत्यत्र तु सुषामादिपाठात् षत्वमिति माधवः। उपनिषत्। "सदिरप्रतेः" (पा०सू०८-३-६६) इति षत्वम्। 'सू' इति द्विषा साहचर्यात्सूतेरादादिकस्य ग्रहणम्, न तु सुवतिसूयत्योः। अण्डसूः। प्रसूः। मित्रद्विट्। प्रद्विट्। मित्रध्रुक्। प्रध्रुक्। गोधुक्। प्रधुक्। युजिर् योगे (रु०उ०७) युज समाधौ (दि०आ०७१) द्वयोरपि ग्रहणम। अश्वयुक्। प्रयुक्। विद ज्ञाने (अ०प०५४) विद विचारणे (रु०आ०१३) विद सत्तायाम् (दि०आ०६५) त्रयाणामपि ग्रहणम्, न लाभार्थस्य विदेः, अकारस्य विवक्षितत्वात्। वेदवित्। प्रवित्। काष्ठभित्। प्रभित्। रज्जुच्छित्। प्रच्छित। शत्रुजित्। सेनानीः। प्रणीः। "उपसर्गादसमासेऽपि" (पा०सू०८-४-१४) इति णत्वम्। अग्रणीः। ग्रामणीः। अत्र ज्ञापकाण्णत्वम्। "स एषां ग्रामणीः" इति निर्देशो हि पूर्वपदस्थान्निमित्तादुत्तरस्य नयतेर्नकारस्य असंज्ञायामपि णत्वं ज्ञापयति। नारूपविषयं चेदं ज्ञापकम्। तेन 'ग्रामनायः' इति कर्मण्यणि णत्वन्न। ज्ञापकस्य सामान्यापेक्ष-

त्वादग्रशब्दादपि णत्वम् । नन्वेवं रामादिशब्देभ्योऽपि प्राप्नोतीति चेत् ? इष्टापत्तिरित्येके । अग्रग्रामाभ्यां नयतेरिति वचनाज्ज्ञापनमपि उपपदद्वयमात्रविषयम् । निरूपमाग्रविषयता तु वचनस्याप्यवधेयेत्यन्ये।

स्वराट् । विराट् । सम्राट् । "मो राजि"(पा०सू०८-३-२५) इति मत्वम् । इह युजिग्रहणं शक्यमकर्तुमिति "ऋत्विग्दधृक्" (पा०सू० ३-२-५९) इतिसूत्रे एवावोचाम ।

अत्र जयादित्यः–"अन्येभ्योऽपि दृश्यते" (पा०सू०३-२-१७८) इति सामान्येन क्विब्वक्ष्यते तस्यैवायं प्रपञ्च इति ।

नन्वेतदसङ्गतम्, तस्य ताच्छीलिकत्वादिति चेत् ? सत्यम्, "क्विप् च" (पा०सू०३-२-७६) इति सूत्रमिह विवक्षितम् । तत्रापि हि "विजुपे छन्दसि" "आतो मनिन्क्वनिब्वनिपश्च" "अन्येभ्योऽपि दृश्यन्ते" (पा०सू०३-२-७३,७४,७५) इति सन्निहितं दृशिग्रहणमनुवर्त्य वचनविपरिणामेन व्याख्यातुं शक्यत इत्याशयेनोदाहृतजयादित्यग्रन्थप्रवृत्तेः । एतेन "स्थः क च" (पा०सू०३-२-७७) इति सूत्रे क्विप् सिद्धोऽन्येभ्योऽपि दृश्यते इति इति भाष्यं तत्रत्यवृत्तिश्चेत्युभयमपि व्याख्यातम् ।

अत्रेदमवधेयम्, सूत्रस्य प्रपञ्चार्थत्वे स्थिते सुविदेत्यत्र धातुविशेषणपरिग्रहे वृत्तिकृतोक्तो यत्नो निष्फलः, सुवतिसूयत्योर्विन्दतेश्च "क्विप् च" (पा०सू०३-२-७६) इति क्विपो दुर्वारत्वात् । न चेह धातुविशेषग्रहणं नियमार्थं तेन सुवत्यादिषु "क्विप् च" इति सूत्रं न प्रवर्त्तत इति वाच्यम्, प्रपञ्चार्थमिदं सूत्रमिति स्वोक्तिविरोधात् । किञ्च "लुग्विकरणालुग्विकरणयोः"(प०भा०९२) इति परिभाषया सुवतिसूयत्योरेव ग्रहणं न्याय्यं, साहचर्यमात्रपुरस्कारे वा उच्चारणार्थाकारवद्भिः पूर्वोक्तैः साहचर्यमुपेक्ष्य कथं विदेत्यकारविवक्षोक्ता, कथं वा युजेत्युभयग्रहणमवोचत्, न हि युजविदयोरण्वपि वैषम्यमस्ति, तस्मादिह वृत्तिकृतान्तदनुगामिनामन्येषाञ्च धातुविशेषपरिग्रहे अभिनिवेशो निर्मूलो निष्फलश्च ।

ननु प्रपञ्चत्वोक्त्या सूत्रमर्थात्प्रत्याख्यातम्, तथा च सुब्ग्रहणे उपसर्गनिवृत्तिर्न ज्ञाप्येतेति चेत् ? मा ज्ञापि, तत्फलस्य प्रागेव शिथिलीकृतत्वात् । एवञ्च णिनिविधौ सुब्ग्रहणमपि न कर्त्तव्यम् इति महदेव लाघवमिति दिक् ।

भजो ण्विः (पा०सू०३-२-६२) । सुप्युपसर्गे चोपपदे भजेर्ण्विः स्यात् । अर्द्धभाक् । प्रभाक् ।

छन्दसि सहः (पा०सू०३-२-६३)॥ सुप्युपपदे उपसर्गे च सहेर्धातोश्छन्दसि ण्विप्रत्ययः स्यात्। दुश्च्यवनः पृतनाषाळयुध्यः। अभीदमेकमेकोऽस्मि निःषाट्। कथन्तर्हि "तुरासाहं पुरोधाय" "धरातुरासाहिमदर्थयाञ्च"इत्यादि, छन्दसीत्युक्तेर्भाषायां ण्विप्रत्ययानुपपत्तेरिति चेत्? चिन्त्यमिति हरदत्तः। सहतेरभिभवार्थान्निवृत्तप्रेषणात्प्राकृतेऽर्थे णिचि क्विब्विचोरन्यतर इति वा समाधेयम्।

वहश्च (पा०सू०३-२-६४)॥ वहतेर्धातोः सुप्युपसर्गे चोपपदे छन्दसि विषये ण्विः स्यात्। दित्यवाट् च मे दित्यौही च मे। योगविभाग उत्तरार्थः।

कव्यपुरीषपुरीष्येषु ञ्युट् (पा०सू०३-२-६५)॥ एषूपपदेषु छन्दसि वहेर्ञ्युट्प्रत्ययः स्यात्। कव्यवाहनः पितॄणाम्। पुरीषवाहनः। पुरीष्यवाहनः।

हव्येऽनन्तःपादम् (पा०सू०३-२-६६)॥ हव्यशब्दे उपपदे छन्दसि वहेर्ञ्युट् स्यात् पादान्ते। अग्निश्च हव्यवाहनः। पादमध्ये तु "वहश्च" (पा०सू०३-२-६४) इति ण्विरेव। हव्यवाळग्निरजरः पिता नः।

जनसनखनक्रमगमो विट् (पा०सू०३-२-६७)॥ उपसर्गे सुपि चोपपदे छन्दसि विट् प्रत्ययः स्यात्। "वेरपृक्तस्य"(पा०सू०६-१-६७) इत्यादौ सामान्यग्रहणाविघातार्थष्टकारः,"विड्वनोः"(पा०सू०६-४-४१) इत्यादौ विशेषणार्थश्च। जन जनने (जु०प०२३), जनी प्रादुर्भावे (दि०आ०४३) द्वयोरपि ग्रहणम्। अब्जाः। गोजाः। षणु दाने (त०उ०२), षण सम्भक्तौ (भ्वा०प०४६५) द्वयोरपि ग्रहणम्। गोषा इन्द्रो नृषा अस्यश्वसा वाजसा उत। इयं शुष्मेभिर्बिसखा इवारुजत्। आदधिक्राः शवसा पञ्च कृष्टीः। अग्निमुषसमश्विनान्दधिक्रान्ताः सूर्यो अग्रे शुक्रोअग्रेगाः। उदाहरणेषु "विड्वनोरनुनासिक स्यात्"(पा०सू०६-४-४१) इत्यात्वम्। 'गोषा' 'नृषा' इत्यत्र "सनोतेरनः" (पा०सू०८-३-१०८) इति षत्वम्। अग्रेगा इति सप्तम्या अलुक्।

अदोऽनन्ने (पा०सू०३-२-६८)॥ 'छन्दसि' इति निवृत्तम्। अन्नभिन्ने सुप्युपपदे अदेर्विट् स्यात्। आममत्ति आमात्। सस्यात्। अनन्ने किम्? अन्नादः। भाषायां "कर्मण्यण्" (पा०सू०३-२-१)। छन्दसि तु कृद्व्यत्ययेन पचाद्यच् इत्युक्तम्। तेन 'अन्नादः' इत्यत्र 'अन्न अदः' इत्यवग्रहः सिध्यति।

क्रव्ये च (पा०सू०३-२-६९)॥ क्रव्योपपदे अदेर्धातोर्विट् प्रत्ययः स्यात्। क्रव्यमत्ति क्रव्यात्। पूर्वेणैव सिद्धे वचनमसरूपबाधनार्थम्।

तेनाण् न भवति। कथन्तर्हि "क्रव्यादोऽस्रप आशरः" (अ०को०१-१-६२) इत्यमरः?

अत्राहुः—कृत्तविकृत्तपक्वमांसशब्दे उपपदे अण्। तस्य च पृषोदरादित्वात्क्रव्यभाव इति। अस्यार्थः—कृत्तं छिन्नं तदेव पुनर्विशेषतः कृत्तं, "पूर्वकाल"(पा०सू०२-१-४८) इति समासः, तस्य पक्वशब्देन पुनः स एव समासः, ततो मांसशब्देन पुनर्विशेषणसमासः, तस्य क्रव्यादेशः। नन्वेवं 'क्रव्यादः' इति रूपस्यावर्जनीयतया किं वासरूपबाधनार्थेनानेन वचनेन। वार्त्तिकविरोधश्च। यदाह—अदोऽनन्ने क्रव्यग्रहणं वासरूपनिवृत्त्यर्थमितीति चेत्? मैवम्, अर्थभेदादुभयसाधुत्वोपपत्तेः। आममांसभक्षको हि क्रव्यात्। विशिष्टपक्वभक्षस्तु 'क्रव्यादः' इति।

दुहः कब्घश्च (पा०सू०३-२-७०)॥ दुहेः सुप्युपपदे कप् स्याद्धश्चान्तादेशः। कामदुघा धेनुः।

मन्त्रे श्वेतवहोकथशस्पुरोडाशो ण्विन् (पा०सू०३-२-७१)॥ श्वेतादिपूर्वेभ्यो वहादिभ्यो धातुभ्यो ण्विन्प्रत्ययः स्यान्मन्त्रे। धातूपपदसमुदायाश्चेह निपात्यन्ते अलाक्षणिककार्यार्थं, प्रत्ययस्तु विधीयते। श्वेतशब्दे कर्तृवाचिन्युपपदे वहेर्धातोः कर्मणि कारके ण्विन्प्रत्ययो भवति। श्वेता एनं वहन्ति श्वेतवा इन्द्रः, तं श्वेतवाहम्। उक्थे कर्मणि करणे वोपपदे शंसतेः प्रत्ययो नलोपश्च। उक्थानि उक्थैर्वा शंसति उक्थशा यजमानः। उक्थशासौ। उक्थशासः। दाशृ दाने (भ्वा० उ०९०७) अस्य पुरस्पूर्वस्य आदेर्डत्वं कर्मणि च प्रत्ययः। पुरो दाश्यते पुरोडाशः।

श्वेतवाहादीनां डस् पदस्येति वक्तव्यम् (का०वा०)। यत्र डसन्तस्य पदत्वं भविष्यति तत्र ण्विनोऽपवादो डस्प्रत्ययो वक्तव्य इत्यर्थः। ततश्च 'श्वेतवाहौ' इत्यादावपदान्तविषय एव सूत्रोक्तो ण्विनुदाहार्यः। 'श्वेतवाः' इत्यादि तु सौत्रस्य ण्विनोऽपवादेन औपसंख्यानिकेन डस्प्रत्ययेनैव सिध्यतीत्यवधेयम्।

वृत्तौ ण्विनं प्रक्रम्य 'श्वेतवाः' इत्याद्युदाहरणन्तु डस्विषये ण्विनोऽपि प्राप्तिः स्थितेत्येतावन्मात्राभिप्रायकतया कथञ्चिन्नेयम्। न च डसं विनापि "अवयाः श्वेतवाः"(पा०सू०८-३-६७) इत्यनेन रुत्वं निपात्यतामिति वाच्यम्, अविशेषेण निपातने 'श्वेतवाहौ'इत्यादावतिप्रसक्तेः। पदान्तविषयत्वेऽपि 'श्वेतवोभ्याम्' इत्यादावुत्वं न सिध्येत्। तस्माड्डस् वाच्य एव। नन्वेवं 'श्वेतवाः' इत्यादिनिपातनं व्यर्थमिति चेत्? न, तस्य सम्बुद्ध्यर्थत्वात्। एवञ्च 'उक्थशाः' इत्यपि सम्बुद्ध्यर्थं

निपातनं कर्त्तव्यं यदि मन्त्रे दर्शनमस्ति इति कैयटादयः। एवं स्थिते मन्त्रमात्रविषयाणामेषां शब्दानां प्रक्रियाकौमुद्यां लौकिकेषूदाहरणमनुचितम्। वैदिकप्रक्रियायान्तु युज्यते। डसन्तत्वेन सान्तप्रातिपदिकेष्वेवोदाहर्त्तुमुचिता अप्येतेऽपदान्तविषये हकारान्तत्वादिकं पुरस्कृत्य यथायथं तत्तत्प्रघट्टकेषूक्ता इति बोध्यम्।

अवे यजः (पा०सू०३-२-७२)॥ ण्विन् स्यान्मन्त्रे। त्वं यज्ञे वरुणस्यावया असि इति काशिका। इह 'अवयाः' इति प्रतीकमुपादाय पूर्वसूत्रेऽपि 'श्वेतवाः' इत्याद्युद्दिश्य "अवयाः श्वेतवाः पुरोडाश्च" (पा०सू० ८-२-६७) इति निपातनाद्रुत्वमिति हरदत्तः।

एतच्च सर्वं प्रामादिकम्, ण्विनपवादो डस् इति भाष्यकैयटादौ स्वग्रन्थे च निर्णीतत्वात्। तस्माद्वृत्त्युदाहृतं डस एवोदाहरणम्। सूत्रस्य त्वपदान्तविषयं मन्त्रान्तरमन्वेषणीयमिति दिक्।

पूर्वसूत्रे एवावयजिर्न पठितः। उत्तरत्र हि श्वेतवाहादयोऽप्यनुवर्त्तेरन्। यजिश्चावपूर्व एवानुवर्तेत। केवल एव तु सिद्धान्तेऽनुवर्त्तते।

विजुपे छन्दसि (पा०सू०३-२७३)॥ उपे उपपदे यजेर्विच् स्याच्छन्दसि। उपयड्भिरूर्ध्वं यजन्ति तदुपयजामुपयट्त्वम्। मन्त्रे इत्यनुवृत्त्यैव भाषाव्यावृत्तौ सत्यां छन्दोग्रहणं ब्राह्मणसङ्ग्रहार्थम्। उत्तरसूत्रे एव विज्ग्रहणे छन्दोग्रहणे च क्रियमाणे यद्यपि सर्वं सिध्यति तथापि नियमार्थमिदम्। उपयजेश्छन्दस्येव न भाषायाम इति वृत्तिकारः। ननु दृशिग्रहणादेव भाषायां न भविष्यतीति चेत्? सत्यम्, तस्यैवायं प्रपञ्च इति हरदत्तः।

आतो मनिन्क्वनिब्वनिपश्च (पा०सू०३-२-७४)॥ सुप्युपसर्गे चोपपदे आकारान्तेभ्यो धातुभ्यश्छन्दसि विषये मनिनादयस्त्रयः प्रत्ययाः स्युः। चकाराद्विच्। सुदामा। अश्व इव तिष्ठतीत्यश्वत्थामा। पृषोदरादित्वात्सकारस्य तकारः। सुधीवा। सुपीवा। "घुमास्थादि" (पा०सू०६-४-६६) सूत्रेणेत्वम्। भूरिदावा। घृतपावा। विचि तु कीलालपाः।

अन्येभ्योऽपि दृश्यन्ते (पा०सू०३-२-७५)॥'छन्दसि' इति निवृत्तम्। अपिशब्दः सर्वोपाधिव्यभिचारार्थः। अनाकारान्तेभ्योऽपि धातुभ्यो मनिन् क्वनिप् वनिप् विच् एते प्रत्ययाः स्युरुपपदे सत्यसति च। सुशर्मा। प्रातरित्वा। विजावा। रेडसि पर्णं नवेः।

क्विप् च (पा०सू०३-२-७६)॥ धातोः क्विप्स्यात्कर्त्तरि। उखास्रत्। पर्णध्वत्। वाहाद् भ्रश्यति वाहभ्रट्। वृत्तौ तु 'वहाभ्रट्' इति

पाठः। तत्र वहाद् भ्रश्यतीति विग्रहः। "अन्येषामपि दृश्यते" (पा० सू०६-३-१३७) इति दीर्घ इति हरदत्तः।

स्थः क च (पा०सू०३-२-७७)॥ तिष्ठतेः सुप्युपपदे कः स्यात्क्विप्च। सूत्रे 'क' इत्यविभक्तिको निर्देशः। शंस्थः। शंस्थाः। इह "सुपि स्थः" (पा०सू०३-२-४-) इति कः प्राप्तः। तिष्ठतेरन्तर्भावितण्यर्थतया 'शम्' इत्यस्य कर्मत्वे तु "आतोऽनुपसर्गे कः" (पा०सू०३-२-३ इति कः प्राप्तः "क्विप्च" (पा०सू०३-२-७६) इति क्विबपि। न च विशेषविहितेन कप्रत्ययेन क्विपो बाधः शङ्क्यः, "वाऽसरूप" (पा०सू० ३-१-९४) इत्युक्तेः। तदित्थम्—कक्विपोः पर्याये प्राप्ते तदुभयबाधेन "शमि धातोः संज्ञायाम्" (पा०सू०३-२-१४) इति अच् प्राप्तः। स हि धातुग्रहणसामर्थ्यात्कृञो हेत्वादिषु टं यथा बाधते तथा तिष्ठतेः कक्विपावपि बाधेत। अतस्तमप्यचं बाधितुं कक्विपाविह पुनर्विधीयेते।

ननु 'शंस्थाः' इत्यत्र क्विपि लुप्ते प्रत्ययलक्षणेन घुमास्थेतीत्वं स्यादिति चेत्? न, स्थानिवद्भावस्य "अनल्विधौ" (पा०सू०प०१-१-५६) इति निषेधात् "प्रत्ययलोपे" (पा०सू०१-१-६२) इति सूत्रन्तु नियमार्थमिति सिद्धान्तात्। यत्त्विह कैयटेनोक्तम् ईत्वमवकारादाविति वचनाद् भाष्यकारवचनप्रामाण्याद्वा प्रत्ययलक्षणेनेत्वाभाव इति। तद्ल्विध्यर्थं "प्रत्ययलोपे" इति सूत्रमिति पूर्वपक्षमभिप्रेत्य, तत्राप्यवकारादाविति वचनस्वीकारे 'सुधीवा' इति न सिध्येदित्यपरितोषेण द्वितीयपक्षस्वीकार इति बोध्यम्।

स्यादेतत् "शमि धातोः" (पा०सू०३-२-१४) इत्यस्यानन्तरमेव "स्थः क च" इति सूत्र्यताञ्चकारेण 'अच्' समुच्चीयताम्। तत्र सवर्णदीर्घे 'शंस्थाः' इति भविष्यति। एवञ्चोत्सर्गापवादयोः समानदेशतया सन्दर्भशुद्धिरपि लभ्यते। ईत्वाभावार्थं च न यतनीयमिति।

मैवम्, 'अशंस्थाः' इत्यत्र "अच्कावशक्तौ" (पा०सू०६-२-१५७) इत्युत्तरपदान्तोदात्तत्वापत्तेः। "कृद्ग्रहणे गतिकारकपूर्वस्यापि"(प०भा० २८) इति 'शंस्थाः' इत्यस्याजन्तत्वात्। क्विबन्तेन नञ्समासे तु नञ्पूर्वपदप्रकृतिस्वर एव सिध्यति।

सुप्यजातौ णिनिस्ताच्छील्ये (पा०सू०३-२-७८)॥ अजातिवाचिनि सुबन्ते उपपदे ताच्छील्ये द्योत्ये धातोः कर्त्तरि णिनिः स्यात्। उष्णभोजी। शीतभोजी। अजाताविति किम्? ब्राह्मणानामन्त्रयिता। ताच्छील्यस्य विवक्षितत्वात् "न लोक" (पा०सू०२-३-६९) इति षष्ठीप्रतिषेधः। ताच्छील्ये किम्? उष्णं भुङ्क्ते कदाचित्।

अत्र भाष्यम्—सुपीति वर्त्तमाने पुनः सुब्ग्रहणं किमर्थम्, 'अनुपसर्ग' इत्येवं तदभूत्। इदं तु सुब्मात्रे यथा स्यात्। उदासारिण्यः प्रत्यासारिण्य इति।

अस्यायमाशयः—"सत्सूद्विष" (पा०सू०३-२-६१) इति सूत्रे "सुपि स्थः" (पा०सू०३-२-४) इत्यतः 'सुपि' इत्यनुवर्त्तते, तच्चोपसर्गेतरपरम् "उपसर्गेऽपि" इति पृथगुक्तेः। तदिहानुवर्तमानमर्थाधिकारादुपसर्गेतरपरमेव स्यात्। न चोपसर्गेपीत्यंशोपीहानुवर्त्तयितुं शक्यः, केवलभञ्जसाधनार्थत्वेन निर्णीते "स्थः क च" (पा०सू०३-२-७७) इति पूर्वसूत्रे "उपसर्गेपि" इत्यंशस्य फलाभावेन विच्छिन्नत्वादिति। यद्यप्युत्तरार्थतया पूर्वत्राप्यनुवृत्तिरिति वा मण्डूकप्लुतिन्यायेनेहैव सम्बन्ध इति वा सुब्ग्रहणस्यैव शब्दाधिकार इति वा "सत्सूद्विष" (पा०सू०३-२-६१) इति सूत्रे वर्णितरीत्या तस्यानावश्यकतेति वा सुवचं, तथापि सूत्रकाराशयवर्णनमात्रमेतत्। निष्कर्षे तु मा भूदिह सुब्ग्रहणमनुवृत्त्यैव निर्वाहात्। सर्वथाऽपि सुब्मात्रे उपपदे णिनिः न त्वनुपसर्ग एवेति सिद्धान्तः। तथा च प्रयुज्यते—"स बभूवोपजीविनाम्" "न्यषेधि शेषोऽप्यनुयायिवर्गः" "अरिष्टशय्यां परितो विसारिणा" "पतत्यधो धाम विसारि सर्वतः" "विसारिभिः सौधमिवांशुजालैः" "प्रभाविनं भाविनमन्तमात्मनः" "न वञ्चनीयाः प्रभवोऽनुजीविभिः" इत्यादि। यत्त्विह वृत्तिकृतोक्तं सुपीति वर्त्तमाने पुनः सुब्ग्रहणमुपसर्गनिवृत्त्यर्थमिति, तन्न, भाष्यविरोधात्, उदाहृतप्रयोगविरोधाच्च। न चैते प्रयोगा आवश्यकादिणिनिना कथं चिन्निर्वाह्या इति वाच्यम्, यथाश्रुते बाधकाभावात्। यद्यपि वृत्तिकृतोक्तम् "उत्प्रतिभ्यामाङि सर्त्तेरुपसंख्यानम्" (का०वा०) इति; तदपि न। भाष्ये तादृशवार्त्तिकाभावात्। एतेन "उत्प्रतिभ्याम्" इति प्रतीकमुपादाय 'सुप्' इत्यस्योपसर्गनिवृत्त्यर्थत्वादयमारम्भ इति वदन् हरदत्तोऽपि प्रत्युक्तः, भाष्यविरोधात्, आष्टमिकसकलग्रन्थविरोधाच्च। तथाहि, "कृत्यचः" (पा०सू०८-४-२९) इति सूत्रे अनमानानीयानीनिनिष्ठादेशाः प्रयोजयन्तीत्येतद्वाक्यान्तर्गतेनिग्रहणव्याख्यावसरे "सुप्यजातौ णिनिः" "आवश्यके च" इति व्याख्यातम्। "सुप्यजातौ" इत्यस्योपसर्गे प्रवृत्त्यभावे असङ्गतमेव तत्स्यात्। "कृत्यचः" (पा०सू०८-४-२९) इत्यत्रोपसर्गादित्यनुवृत्तेः। यदपि "अनुगादिनष्ठक्" (पा०सू०५-४-१३) इत्यत्रास्मादेव निपातनाण्णिनिरिति "विसारिणो मत्स्ये" (पा०सू०५-४-१६) इत्यत्र च पूर्ववण्णिनिरिति तदप्येतेनापास्तम्। यदपि माधवेनोक्तम्—अस्मादेव वि-

सारिण इति निर्देशादण्सन्नियोगेनैव णिनिरित्युक्त्वा निषिद्धश्च पदमञ्जर्याम्—'विसारी' इति पृथक् प्रयोगः। पृथक्प्रयोगमसहमानेनैव न्यासकारेणापि ग्रहादित्वाण्णिनिरित्युक्त्वा अत एव निपातनादित्युक्तम्। निपातनञ्च प्रत्ययसन्नियोगेनैवेति सिद्धान्तितम्। तदपि न, "विसारिणो मत्स्ये"(पा०सू०५-३-१६) इत्यत्र मत्स्य इति किम्? विसारी देवदत्त इति प्रत्युदाहरता वृत्तिकृता सह विरोधात्। भाष्यविरोधस्त्वस्त्येव। एतेनोपसर्गनिवृत्त्यर्थम् इति वृत्तिकृद्वचनं केवलोपसर्गनिवृत्त्यर्थम् इति प्रसादकारोक्तिरपि प्रत्युक्ता। यत्तु सप्तपदार्थीटीकायां 'व्यापि'इत्याङ्प्रश्लेषात 'उदासारिण्यः''प्रत्यासारिण्यः' इति बत्साधुरित्युक्तम्, तदपि उदाहृतप्रसादकारवाक्ये केवलपदस्य असहायपरतया अनेकोपसर्गे णिनिर्भवत्येवेत्यर्थं गृहीत्वा रभसादेवोक्तमिति सर्वमिदं भाष्यतत्त्वज्ञैरुपेक्ष्यमेवेति दिक्। अत्र वार्त्तिकद्वयं—

णिन्विधौ साधुकारिण्युपसंख्यानम् (का०वा०)। अताच्छील्यार्थमिदम्। एतच्च ज्ञापकात्सिद्धम्। यदयम् "आ क्वेः" (पा०सू०३-२-१३४) इति सूत्रे 'तच्छीलतद्धर्म' इत्यभिधाय साधुकारग्रहणं करोति तज् ज्ञापयति साधुकारिणि अताच्छील्येऽपि णिनिर्भवतीति। साधुकारी। साधुदायी।

ब्रह्मणि वद उपसंख्यानम् (का०वा०)। ब्रह्मवादिनो वदन्ति। ब्रह्म वेदः। इदमपि वार्त्तिकम् अताच्छील्यार्थम् इति कैयटहरदत्तौ। यत्तु भट्टवार्त्तिके ब्रह्मवादिशब्दस्य तच्छीलतद्धर्मतत्साधुकारिपरतया व्याख्यानं कृतं, तस्यायमाशयः—"सुप्यजातौ"इति सूत्रेण ताच्छील्ये समनन्तरोक्तवार्त्तिकेन साधुकारिणि च णिनिः। "आवश्यकाधमर्ण्ययोर्णिनिः" (पा०सू०३-३-१७०) इति आवश्यके णिनिस्तु तद्धर्मे पर्यवस्यति। न त्विह "आ क्वेः" (पा०सू०३-२-१३४) इति सूत्रस्य व्यापारोऽस्तीति दिक्।

कर्त्तर्युपमाने (पा०सू०३-२-७९)॥ कर्तृवाचिन्युपमाने उपपदे धातोर्णिनिः स्यात्। उपपदं कर्त्ता प्रत्ययार्थस्य कर्तुरुपमानम्। उष्ट्र इव क्रोशति उष्ट्रक्रोशी। ध्वाङ्क्षरावी। अताच्छील्यार्थं जात्यर्थञ्च वचनम्। कर्तरि किम्? अपूपानिव भक्षयति माषान्। उपमाने किम्? उष्ट्रः क्रोशति।

व्रते (पा०सू०३-२-८०)॥ सुप्युपपदे धातोर्णिनिः स्याद्व्रते गम्यमाने। समुदायोपाधिरयम्। धातूपपदप्रत्ययसमुदायाच्चेद् व्रतं गम्यत इत्यर्थः। स्थण्डिलशायी। अश्राद्धभोजी। यद्यपि द्विधा नियमः स-

म्भवति 'स्थण्डिले शेते एव' 'अश्राद्धं भुङ्क्ते एव' इति वा, 'स्थण्डिले एव शेते' 'अश्राद्धमेव भुङ्क्ते' इति च, तथापि आद्ये प्रत्ययो न भवति 'व्रते' इत्युक्तेः । शास्त्रसिद्धो नियमो हि व्रतं, न च शयितव्यमेव भोक्तव्यमेवेत्येवंरूपं शास्त्रमस्ति । अस्ति तु स्थण्डिले एव शयितव्यम्, अश्राद्धमेव भोक्तव्यम् इति । तस्मात्तत्रैव प्रत्ययः । अताच्छील्यार्थमजात्यर्थं वा आरम्भः ।

बहुलमाभीक्ष्ण्ये (पा०सू०३-२-८१) ॥ सुप्युपपदे धातोर्बहुलं णिनिः स्यात् पौनःपुन्ये द्योत्ये । क्षीरपायिण उशीनराः ।

मनः (पा०सू०३-२-८२) ॥ सुप्युपपदे मन्यतेर्णिनिः स्यात् । दर्शनीयमानी । बहुलग्रहणादिह दैवादिकस्यैव ग्रहणं न तु तानादिकस्य । तेनोत्तरसूत्रे खश श्यनेव भवति ।

आत्ममाने खश्च (पा०सू०३-२-८३) ॥ मननं मानः । आत्मशब्दः स्वपरः । कर्मणि षष्ठ्या समासः । प्रत्ययार्थत्वेन सन्निहितः कर्त्ता स्वपदार्थः । आत्मकर्मकमनने वर्त्तमानान्मन्यतेर्धातोः सुप्युपपदे खश् स्यात् चाण्णिनिः । यद्यपि वासरूपविधिना सिद्धोऽसौ तथाप्यविच्छेदाय समुच्चीयते । तेन "करणे यजः" (पा०सू०३-२-८५) इत्यादौ णिनिरेवानुवर्त्तते न तु खश् । दर्शनीयमात्मानं मन्यते दर्शनीयम्मन्यः । दर्शनीयमानी । पण्डितम्मन्यः । पण्डितमानी । आत्ममाने इति किम् ? दर्शनीयमानी देवदत्तो यज्ञदत्तस्य । खशः खकारो मुमर्थः, 'दर्शनीयम्मन्या कुमारी' इत्यादौ ह्रस्वार्थश्च । शकारः सार्वधातुकसंज्ञार्थः । दिवादित्वात् श्यन् । स्वरस्तु सतिशिष्टोऽपि विकरणस्वरः सार्वधातुकस्वरं न बाधते इति खश एव भवति न तु नित्स्वर इति भाष्यकैयटपदमञ्जर्यादिषु स्थितम् ।

एवञ्च सतिशिष्टोऽपि विकरणस्वरो लसार्वधातुकस्वरं न बाधते इति यत्नतस्तत्रतत्र प्राचां ग्रन्थेषूक्तम् । तत्र लादेशत्वमविवक्षितमित्यवधेयम् । अत एव दिवादिभ्यश्शानशि श्यनि नित्स्वरेण आद्युदात्तत्वम् इत्येवंपरः कैयटग्रन्थ आपाततो न तु श्रद्धेय इति प्रपञ्चितमस्माभिः "स्थानिवत्" (पा०सू०१-१-५६) सूत्रे ॥

इति श्रीशब्दकौस्तुभे तृतीयाध्यायस्य द्वितीये पादे प्रथममाह्निकम् ॥

भूते (पा०सू०३-२-८४) ॥ अधिकारोऽयम् । "वर्तमाने लट्" (पा० सू०३-२-१२३) इति यावत् ।

करणे यजः (पा०सू०३-२-८५) ॥ करणे उपपदे भूतार्थवृत्तेर्यजेर्णिनिः स्यात्कर्त्तरि । सोमेनेष्टवान्सोमयाजी ।

स्यादेतत्, 'अग्निष्टोमयाजी' इत्यादौ यागसमानाधिकरणे उपपदे कथं णिनिरिति चेत् ?

अत्र काशिका—अग्निष्टोमः फलभावनायां करणम् इति ।

अयमाशयः-अस्ति हि सर्वधातूनां धातुत्वेन व्यापारे भावनापर-पर्याये शक्तिः । पचियजित्वादिविशेषरूपेण तु पाकयागादिविशेषेष्विति-भूवादिसूत्रे एवोक्तम् । तत्र यागस्य समानप्रकृत्युपात्तभावनां प्रति करणत्वे कटोऽपि कर्मेति न्यायेन ज्योतिष्टोमोऽपि करणमेव । अग्नि-ष्टोमादिशब्दास्तु यद्यपि संस्थावचनाः तथापि तद्वति लक्षणया याग-समानाधिकरणा एवेति दिक् ।

इह प्रघट्टके हरदत्तग्रन्थे अग्निष्टोमशब्दः कर्मनामधेयम् इति । दीक्षणीयादिरुदवसानीयान्तो ज्योतिष्टोमाख्यो याग एव स्वर्गभाव-नेति । द्विविधो यजमानस्य व्यापारः-सामान्यरूपो विशेषरूपश्च । तत्र सामान्यरूप आभ्यन्तर औदासीन्यप्रच्युतिरूपः कृतिप्रयत्नादिप-दाभिलप्यः, बाह्यस्तु-दीक्षणीयादिरुदवसानीयान्तः प्रसिद्ध एवेत्यादि व्यवहृतम् । एतच्च यद्यपि मीमांसाविरुद्धम्, अग्निष्टोमशब्दस्य सं-स्थावाचित्वात् । न च संस्थैवेह कर्मशब्दार्थो विवक्षितस्तत्कथमं-ग्निष्टोमस्य यजिं प्रति करणत्वं, न हि तदेव तत्र करणं भवति इति तदुत्तरतद्ग्रन्थविरोधात् । दीक्षणीयादेरुदवसानीयाया ज्योतिष्टोमाङ्ग-त्वेऽपि ज्योतिष्टोमाख्ययागशरीराप्रवेशात्, दीक्षणीयादीनां बाह्यत्वो-पवर्णनविरोधाच्च । देवतोद्देशेन द्रव्यत्यागरूपाणान्तेषामाभ्यन्तर-त्वात् । प्रक्षेपो हि बाह्यः न तु यागोऽपीति स्पष्टमेव । तथापि गौण्या लक्षणया वा कथञ्चिन्मीमांसासिद्धान्ताविरोधेन हरदत्तग्रन्थो व्या-ख्येय इति दिक् ।

कर्मणि हनः (पा०सू०३-२-८६) ॥ कर्मण्युपपदे भूतार्थाद्धन्तेर्णि-निः स्यात् । इदं कर्मग्रहणं "सहे च" (पा०सू०३-२-७६) इति यावदनु-वर्तते । पितृव्यघाती । मातुलघाती ।

अत्र काशिका—कुत्सितग्रहणं कर्तव्यम् । इह मा भूत, 'चोरं हत-वान्' इति । यद्यपि इदं भाष्ये नास्ति, तथापि शक्तिस्वाभाव्याल्लभ्य-ते इति भावः ।

ब्रह्मभ्रूणवृत्रेषु क्विप् (पा०सू०३-२-८७) ॥ ब्रह्मादिषु कर्मसूपपदेषु हन्तेर्भूते क्विप् स्यात् । ब्रह्महा । भ्रूणहा । वृत्रहा । "क्विप् च (पा० सू०३-२-७६) इत्यनेन सिद्धे नियमार्थमिदम् । नियमश्चेह चतुर्विधोऽपीष्यत इति वृत्तिकारः । तस्यायमाशयः—इह सूत्रे श्रुतत्वात्पूर्वं ब्रह्मादय उद्देश्याः । ततोऽनन्तरं प्रकृतित्वाद्धन्तिः । ततः परिशेषाद् भूते इति । क्विप् तु सर्वान्ते निर्दिष्टव्यः, विधेयत्वात् । तदेवं वचनव्यक्तिः ब्रह्मादिषूपपदेषु हन्तेर्भूते क्विबिति । एवं स्थिते यत्रैवकारस्ततोऽन्यत्र नियम इति न्यायेन नियमोऽन्यत्र भवन् अनन्तरे भवति । ततश्च ब्रह्मादिष्वेवेत्यवधारणे हन्तेस्तदनन्तरनिर्दिष्टत्वादुपपदान्तरसम्बन्धनिवृत्तिफलो नियमो भवति । ब्रह्मादिषु हन्तेरेव 'भूते' इति तु अनन्तरत्वाविशेषेऽपि प्राथम्यादुपपदनियमः । ब्रह्मादिषु हन्तेर्भूते एव । 'क्विप्' इति तु आनन्तर्ये क्विब्धात्वोरविशिष्टेऽपि प्राधान्यात्प्रत्ययनियमः । ब्रह्मादिषु हन्तेर्भूते क्विबेवेति वचनव्यक्तौ कालनियमः । सोऽयं प्रकृत्युपपदप्रत्ययकालनियमानां विवेकः । अगृह्यमाणविशेषत्वात्तु चतुर्विधस्यापीह ग्रहणम् । तत्र ब्रह्मादिष्वेव हन्तेरिति प्रकृतिनियमे 'भूते' इत्याश्रयणात्कालान्तरे उपपदान्तरेऽपि भवत्येव । पुरुषं हन्ति हनिष्यति वा पुरुषहा । अरिहयोगविचक्षणः । ब्रह्मादिषु हन्तेरेवेत्युपपदनियमेऽपि 'भूते' इत्याश्रयणात्कालान्तरे धात्वन्तरादपि भवत्येव । वृत्रं जयति जेष्यति वा वृत्रजित् इति । भूते एव क्विबिति प्रत्ययनियमोऽपि ब्रह्मादिष्वित्युक्तेः 'पुरुषहा' 'अरिहा' इति प्राग्वत् । भूते एव क्विबेवेति कालनियमेऽपि उपपदान्तरे भूतेऽपि प्रत्ययान्तरं भवत्येव । पितृव्यं हतवान् 'पितृव्यघाती' इति । सोपपदश्च प्रत्ययो नियमेन व्यावर्त्यते । निष्ठा तु भवत्येव, 'वृत्रं हतवान्' इति । भाष्यकारस्तु प्रकृतिकालनियमावेव अशिश्रियत् । तस्यायमाशयः—धातुकालौ हि नेह सूत्रे श्रुतौ किन्तु प्रकरणलक्षणजघन्यप्रमाणेनोपस्थितौ । अतस्तयोरेवोपरोधो न्याय्यः न तूपपदप्रत्यययोः, श्रुत्युपस्थापितत्वात् । एवं न्यायोपष्टम्भेन भाष्येण सह विरोधात् वृत्तिमतमुपेक्ष्यमेवेति कैयटे स्थितम् । यत्त्विह हरदत्तेनोक्तं धातूपपदविषयं नियमद्वयं भाष्ये प्रदर्शितमिति । तत्र 'धातुकालविषयम्' इति वक्तव्ये उपपदग्रहणं प्रामादिकमित्यवधेयम् ।

बहुलं छन्दसि ( पा०सू०३-२-८८ ) ॥ पूर्वेण नियमादप्राप्तः क्विप् प्रतिप्रसूयते । उपपदान्तरेऽपि हन्तेर्बहुलं क्विप् स्यात् । यो मातृहा पितृहा । क्व चिन्न, पितृघातः ।

सुकर्मपापमन्त्रपुण्येषु कृञः (पा०सू०३-२-८९) ॥ सुकर्मादिषु च कर्मसूपपदेषु कृञः क्विप् स्यात्। त्रिविधोऽत्र नियमः धातुनियमं वर्जयित्वेति वृत्तिः। सुकृत्। कर्मकृत्। पापकृत्। मन्त्रकृत्। पुण्यकृत्। कालनियमात् 'कर्म कृतवान्' इत्यत्राण् न भवति। उपपदनियमात् 'मन्त्रमधीतवान्मन्त्राध्याय' इत्यणेव भवति न क्विप्। प्रत्ययनियमात् मन्त्रं करोति करिष्यति वेति विवक्षायामणेव भवति न क्विप्। धातोरनियतत्वादन्यस्मिन्नप्युपपदे 'क्विप् च' इति क्विप् भवत्येव। शास्त्रकृत्। भाष्यकृत्।

सोमे सुञः (पा०सू०३-२-९०) ॥ सोमे कर्मण्युपपदे सुनोतेः क्विप् स्यात्। सोमसुत्। चतुर्विधोऽत्र नियम इति वृत्तिः।

अग्नौ चेः (पा०सू०३-२-९१) ॥ अग्नौ कर्मण्युपपदे चिनोतेः क्विप् स्यात्। अग्निचित्। अत्रापि चतुर्विधो नियम इति वृत्तिः।

कर्मण्यग्न्याख्यायाम् (पा०सू०३-२-९२) ॥ कर्मण्युपपदे चिनोतेर्धातोः कर्मण्येव कारके क्विप् स्यादग्न्याख्यायाम्। श्येन इव चीयते श्येनचित्। अग्निशब्द आहवनीयधारणार्थम् इष्टकानिर्मितस्थलविशेषे वेदे बहुशः प्रयुज्यते। य एवं विद्वानग्निं चिनुते। अग्निश्चेष्यमाण इति। स तत्र मुख्यो जघन्यो वास्तु इह त्वसत्याख्याग्रहणे लोकप्रसिद्धिवशेन ज्वलन एव गृह्येत। स मा ग्राहि, स्थलविशेष एव च गृह्यतामित्येतदर्थमाख्याग्रहणम्। एवं धातूपपदप्रत्ययसमुदायेन स्थलविशेषे गम्यमाने अयं प्रत्यय इति स्थितम्।

कर्मणीनिर्विक्रियः (पा०सू०३-२-९३) ॥ कर्मण्युपपदे विपूर्वात्क्रीणातेरिनिः स्यात्। अत्र वार्त्तिकम्—

कर्मणि कुत्सितग्रहणम् (का०वा०) इति ॥ एतच्च पुनः कर्मग्रहणसामर्थ्याल्लभ्यते। यत्कर्म क्रियया सम्बध्यमानं कर्तुः कुत्सामावहति तत्रेत्यर्थः। सोमादयश्च विक्रीयमाणाः शास्त्रे प्रतिषेधात्कुत्सावहाः। सोमविक्रयी। घृतविक्रयी। तैलविक्रयी। कुत्सितग्रहणान्नेह—धान्यविक्रायः।

दृशेः क्वनिप् (पा०सू०३-२-९४) ॥ कर्मण्युपपदे भूतार्थाद् दृशेः क्वनिप्स्यात्। "अन्येभ्योऽपि दृश्यते" (पा०सू०३-३-१३०) इति सिद्धे नियमार्थमिदं "क्वनिबेव यथा स्यात् तत्सहानिर्दिष्टं मनिनादि सोपपदश्चाणादि मा भूत्" इति। निष्ठा तु भवत्येव,'परलोकं दृष्टवान्' इति। एवं स्थिते 'विश्वदृश्वनयना वयमेव' इत्यादौ विश्वं पश्यन्तीति वर्त्तमानविग्रहेऽपि न क्षतिः, प्रत्ययान्तरनिवृत्त्यर्थं सूत्रम् इति वृत्तिकारादिभिर्व्याख्यातत्वात्। कालान्तरनिवृत्त्यर्थत्वस्य चाभियुक्तैरनुक्तत्वादिति दिक्।

राजनि युधिकृञः (पा०सू०३-२-९५) ॥ राजशब्दे कर्मवाचिन्युपपदे युध्यतेः करोतेश्च क्वनिप्स्यात् । युध्यतेरकर्मकत्वेऽप्यन्तर्भावितण्यर्थत्वात्सकर्मकत्वम् । राजानं योधितवान् राजयुध्वा । राजकृत्वा ।

सहे च (पा०सू०३-२-९६) ॥ 'कर्मणि' इति निवृत्तम्, असत्त्ववचनत्वेन इहानन्वयात्, उत्तरत्राप्यनुपयोगात् । सहशब्दे उपपदे युधेः कृञश्च क्वनिप्स्यात् । सहयुध्वा । सहकृत्वा । "दृशेः क्वनिप्" (पा०सू०३-२-९४) इति वदिदमपि सूत्रद्वयं नियमार्थमिति न्याय्यम् ।

वस्तुतस्तु दृशिग्रहणेन निर्वाहस्यागतिकगतित्वादियन्त्रिसूत्री विधात्रीत्यपि सुवचम् । प्राचां ग्रन्थास्त्विह उदासीना एवेति बोध्यम् ।

सप्तम्यां जनेर्डः (पा०सू०३-२-९७) ॥ सप्तम्यन्ते उपपदे जनेर्डः प्रत्ययः स्यात् । सरसिजम् । मन्दुरजः । वाजिशाला तु मन्दुरा । "ङ्याप्पोस्संज्ञाछन्दसोर्बहुलम्" (पा०सू०६-३-६३) इति ह्रस्वः ।

पञ्चम्यामजातौ (पा०सू०३-२-९८) ॥ जातिशब्दवर्जिते पञ्चम्यन्ते उपपदे जनेर्डः स्यात् । बुद्धिजः । संस्कारजः । गुणशब्दोऽयम् । यद्यपि बुद्धित्वं जातिरिति बहवस्तथापि गुणगतजात्यनभ्युपगममतेनेदम् । मतान्तरे तु "अन्येष्वपि" (पा०सू०३-२-१०१) इत्यनेन सिद्धम् । प्रकृतसूत्रोदाहरणन्तु अदृष्टजम् । इन्द्रियजम् । शरीरजम् इत्यादि बोध्यम् ।

उपसर्गे च संज्ञायाम् (पा०सू०३-२-९९) ॥ जनेर्डः स्यात् । "प्रजा स्यात्सन्ततौ जने" (अ०को० ३-३-३८) ॥

अनौ कर्मणि (पा०सू०३-२-१००) ॥ अनुपूर्वाज्जनेः कर्मण्युपपदे डः स्यात् । पुमांसमनुरुध्य जाता पुमनुजा । इह जनिः सकर्मकः ।

अन्येष्वपि दृश्यते (पा०सू०३-२-१०१) ॥ उपपदान्तरेष्वपि जनेर्डः स्यात् । अजः । द्विजः । ब्राह्मणजः । अपिः सर्वोपाधिव्यभिचारार्थः । तेन धात्वन्तरादपि कारकान्तरेष्वपि यथादर्शनं भवति । परितः खाता परिखा । उखा । क्रोडादिगणे निपातनादुदोऽन्तलोप इति वर्धमानः । यत्त्वन्तात्यन्ताध्वेति प्रकरणे "अन्यत्रापि दृश्यते" इत्युपसङ्ख्यातं तद् भूतकालं विनाऽपि यथा स्यादित्येवमर्थम् ।

वस्तुतस्तु प्रकृतसूत्रस्थस्यापिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वाद्वार्त्तिकमनेनैव गतार्थम् । विभावितं चेदम् "इको गुणवृद्धी" (पा०सू०१-१-३) इति सूत्रे जनेर्डं प्रक्रम्य "गमेरप्ययण्डो वक्तव्यः" इति वदता भाष्यकारेण । एवञ्च प्रकृतसूत्रस्थम् "अन्येभ्योऽपि दृश्यते" इति वार्त्तिकमपि गतार्थम् ।

निष्ठा (पा०सू०३-२-१०२) ॥ धातोर्भूते निष्ठा स्यात्। "तयोरेव" (पा०सू०३-४-७०) इति क्तः कर्मणि, क्तवतुस्तु कर्त्तरि। कृतः कटः। कटं कृतवान्।

आदिकर्मणि निष्ठा वक्तव्या (का०वा०) ॥ कृतः कटः। कर्त्तुमारब्ध इत्यर्थः। न्याय्यं त्वाद्यपवर्गात्। उपसङ्ख्यानप्रत्याख्यानमेतत्। आदिभूतो यः क्रियाक्षणः अपवृक्तः तस्मिन्नेव अवयवे समूहरूपारोपात्सिद्धः प्रत्यय इति भावः। अत एव लुङादयोऽपि प्रयुज्यन्ते। उक्तञ्च—

समूहः स तथाभूतः प्रतिभेदं समूहिषु।
समाप्यते ततो भेदे कालभेदस्य सम्भवः॥ इति।

सुयजोर्ङ्वनिप् (पा०सू०३-२-१०३)॥ सुनोतेर्यजेश्च ङ्वनिप् स्यात्। सुत्वा। सुत्वानौ। सुत्वानः। यज्वा। यज्वानौ। यज्वानः। इह तु 'सु गतौ' 'षु प्रसवैश्वर्ययोः' (भ्वा०प०९६६) इत्यनयोरेव निरनुबन्धकयोर्ग्रहणं प्राप्तम् अनभिधानादुभयपदिना साहचर्याद्वा न भवति। ङकारः सुनोतेर्गुणप्रतिषेधार्थः। पकारः स्वरार्थस्तुगर्थश्च।

जीर्यतेरतृन् (पा०सू०३-२-१०४) ॥ स्पष्टम्। जरन्। जरन्तौ। जरन्तः। वासरूपेण निष्ठा। "जनिो जीर्णो जरन्नपि" (अ०का०२-६-४२) इत्यमरः।

छन्दसि लिट् (पा०सू०३-२-१०५) ॥ स्पष्टम्। अहं द्यावापृथिवी आततान। ननु "छन्दसि लुङ्लङ्लिटः" (पा०सू०३-४-६) इति सिद्धमिति चेत्? न, "धातुसम्बन्धे प्रत्ययाः" (पा०सू०३-४-१) इत्यधिकृत्य तद्विधेः। इह त्वविशेषेणेति भेदात्। लिट इकारटकारावनुबन्धौ।

लिटः कानज्वा (पा०सू०३-२-१०६) ॥ "लिट्यभ्यासस्य" (पा०सू०६-१-१७) इत्यादौ विशेषणार्थः टकारष्टेरेत्वार्थोऽपि।

क्वसुश्च (पा०सू०३-२-१०७) ॥ छन्दसि लिटः कानच्क्वसू वा स्तः। योगविभाग उत्तरार्थः। योऽग्निश्चिक्यानः। मन्दानः। सोमम्पपिवान्। अनन्तरस्यैव लिट इमावादेशौ। लिड्ग्रहणन्तु प्रत्ययान्तरत्वशङ्कानिवृत्यर्थम्। वावचनमुत्तरार्थम्। कानचश्चित्करणं स्वरार्थम्। क्वसोरुकार उगित्कार्यार्थः। 'जक्षिवान्' इत्यादौ "उगिदचाम्" (पा०सू०७-१-७०) इति नुम्। 'उपेयुषी' इत्यादौ "उगितश्च" (पा०सू०४-१-६) इति ङीप्। "वसोः सम्प्रसारणम्" (पा०सू०६-४-१३१) इत्यत्र सामान्यग्रहणमप्युकारस्य प्रयोजनम्।

अथ किमर्थं कित्करणम्, 'ईजानः, ससृजानः, तेपानः' इत्यादौ सम्प्रसारणं गुणनिषेध एत्वाभ्यासलोपश्चासंयोगाल्लिटः कित्त्वादेव सिद्धम्।

अस्तु तर्हि संयोगान्तार्थम् । बन्ध बन्धने (क्र्या०प०३६)। वृत्रस्य यद्बद्बधानस्य रोदसी । त्वमर्णवान् बद्बधानां अरम्णाः । अत्र "अनिदिताम्" (पा०सू०६-४-२४) इति नलोपः । अभ्यासधकारस्य हलादिशेषेण निवृत्तिः प्राप्ता छान्दसत्वान्न भवति । "झलाञ्जश् झशि" (पा० सू०८-४-५३) इति जश्त्वं दकारः । एवमञ्जेः-आजिवान् । उपधालोपः । नैवम्, छान्दसौ हि क्वसुकानचौ । लिट् च छन्दसि सार्वधातुकमपि भवति, "छन्दस्युभयथा" (पा०सू०३-४-११७) इति वचनात् । तत्र "सार्वधातुकमपित्" (पा०सू०१-२-४) इति ङित्वम् । न च संयोगान्तेषु कित्त्वङित्वयोर्विशेषोऽस्ति । तस्माद् व्यर्थमनयोः कित्त्वमिति चेत् ?

अत्राहुः, "ऋच्छत्यॄताम्" (पा०सू०७-४-११) इति ऋकारान्तानां प्रतिषेधविषये गुण आरभ्यते स यथेह भवति परितस्तेर तेरतुस्तेरुरिति, एवमिहापि स्यात् । यतः स्रुचा बर्हिरुतिस्तिराणाः । तथा तितीर्वानिति । तन्निवृत्तये कित्करणम् । नचैवम् "आरिवान्" "सर्वाम्रुणाम्यारुषी" इत्यत्रापि गुणो न स्यादिति वाच्यम्, ऋकारान्तरप्रश्लेषेण ऋधातौ पुनर्विधानादिति दिक् ।

यत्तु केचित् कित्करणसामर्थ्याद्भाषायामपि क्वसुकानचौ स्त इत्याहुः। तद्भाष्यविरुद्धम् । "भाषायां सद"(पा०सू०३-२-१०८) इत्यादिसूत्रविरुद्धश्चेत्युपेक्ष्यम् ।

भाषायां सदवसश्रुवः (पा०सू०३-२-१०८) ॥ एभ्यो भूतसामान्ये लिड् वा स्यात्तस्य च नित्यं क्वसुः स्यात् । पक्षे यथास्वं प्रत्ययाः । सेदिवान् । असदत् । असीदत् । ससाद । ऊषिवान् । अवात्सीत् । अवसत् । उवास । शुश्रुवान् । अश्रौषीत् । अशृणोत् शुश्राव । लङ्लिड्विषयेऽपि भवति, परस्तादनुवृत्तेः ।

उपेयिवाननाश्वाननूचानश्च (पा०सू०३-२-१०९) ॥ उपेत्याविवक्षितम्, व्याख्यानात् । "ईयिवांसमतिस्रिधः" इति दर्शनाच्च । इणो नञ्पूर्वादश्नातेरनुपूर्वाद्वचश्च भूतसामान्ये वा लिट् तस्य नित्यं क्वसुकानचौ । पक्षे तु लङादयः । अगात् । ऐत् । इयाय । अनाश्वान्, इहेडभावोऽपि निपात्यते । नाशीत् । नाश्नात् । नाश । वचेः कर्त्तर्येव कानच् न तु भावकर्मणोः, निपातनसामर्थ्यात् । अन्ववोचत् । अन्वब्रवीत् । अनूवाच ।

अत्रेदमवधेयम्—"भाषायां सदवस' (पा०सू०३-२-१०८) इति सूत्रे पक्षेण ग्राह्यः, 'उपेयिवान्' इति तु न निपात्यम्, क्वित्वात्प्रागेव

परत्वादिट्। नन्वेवं 'बिभिद्वान्' इत्यादावपीट्प्रसङ्गः, तत्र द्वित्वस्य नित्यत्वात्। इणस्तु इडपि नित्यः। द्वयोर्नित्ययोः परत्वादिट्। न च कृते द्वित्वेऽनेकाच्त्वादिण् न लभ्यत इति वाच्यम्, इयतुरित्यादाविव सवर्णदीर्घे सत्येकाच्त्वात्। न च "दीर्घ इणः किति" (पा०सू०७-४-६९) इति दीर्घसामर्थ्यादेकादेशबाधः। "इणो यण्" (पा०सू०६-४-८१) इति यणि कृते दीर्घस्य चरितार्थत्वात्। न च यणि कृतेऽपि स्थानिवद्भावेनैकादेशः स्यादिति वाच्यम्, पूर्वमात्रस्य विधौ स्थानिवद्भावः न तु पूर्वपरविधौ, विधिग्रहणसामर्थ्यादित्युक्तत्वादिति दिक्॥

लुङ् (पा०सू०३-२-११०)॥ भूतार्थवृत्तेर्धातोर्लुङ् स्यात्। अभूत्।

वसेर्लुङ् रात्रिशेषे जागरणसन्तताविति वाच्यम् (का०वा०)॥ रात्रेश्चतुर्थे यामे यदा वाक्यं प्रयुङ्क्ते तदा अनद्यतनत्वाल्लङि प्राप्ते तन्निवृत्त्यै लुङुपसंख्यायते। क्व भवानुषितः। अमुत्रावात्सम्। जागरणसन्ततावित किम्? यदा सुप्त्वा प्रबुध्य प्रयुङ्क्ते तदा लङो निवृत्तिर्मा भूत्। अमुत्रावसमिति।

अनद्यतने लङ् (पा०सू०३-२-१११)॥ नास्त्यद्यतनो यस्मिन् भूते तद्वृत्तेर्धातोर्लङ्। अभवत्। बहुव्रीहिव्याख्यानान्नेह, अद्य ह्यश्चाभुञ्ज्महि॥

परोक्षेऽपि लोकविज्ञाते सम्भावितप्रयोक्तृकर्तृकदर्शने लङ् वक्तव्यः (का०वा०)॥ लिटोऽपवादः। अरुणद्यवनः साकेतम्। लोकविज्ञाते किम्? चकार कटं देवदत्तः। सम्भावितेत्यादि किम्? कृष्णः कंसं जघान। नात्रेदानीन्तनस्य प्रयोक्तुर्दर्शनं सम्भाव्यते, चिरातीतत्वात्। यस्तु कृष्णावतारसमकालः प्रयोक्ता स लङं प्रयुक्तवानेव। अहनत् कंसमिति।

अभिज्ञावचने लृट् (पा०सू०३-२-११२)॥ स्मृतिबोधके उपपदे लङ्विषये लृट् स्यात्। अभिजानासि स्मरसि बुध्यसे चेतयसे वा प्रयागे वत्स्यामः।

न यदि (पा०सू०३-२-११३)॥ यच्छब्दयोगे पूर्वेण प्राप्तो निषिध्यते। अभिजानासि यत्काश्यामवसाम।

विभाषा साकाङ्क्षे (पा०सू०३-२-११४)॥ उभयत्र विभाषेयम्। यच्छब्दयोगे पूर्वेण निषेधादप्राप्ते अन्यत्र नित्यं प्राप्ते। अभिजानासि देवदत्त प्रयागे वत्स्यामः, तत्र माघं स्नास्यामः; अवसाम, अस्नामेति वा। एवं यच्छब्दप्रयोगेऽपि बोध्यम्। इह वासस्नानयोः लक्ष्यलक्षणभावस्य विवक्षितत्वात्साकाङ्क्षता बोध्या।

परोक्षे लिट् (पा०सू०३-२-११५) ॥ भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात । बभूव । अथ कथम् "अभून्नृपो विबुधसखः" इति भट्टिः, "अभूदभूमिः प्रतिपक्षजन्मनाम्" (मा०का०१-४२) इति माघश्चेति चेत् ? शृणु, वस्तुतो लिड्विषयस्यापि भूतत्वसामान्यांशमात्रविवक्षायां लुङ् ।

अत्यन्तापह्नवे लिड् वक्तव्यः (का०वा०) । नाहं कलिङ्गान् जगाम । अपरोक्षार्थमुपसङ्ख्यानम् । कलिङ्गाख्ये कुत्सिते देशविशेषे त्वया चिरं स्थितम् इत्याभियोगे कृते नावस्थानमात्रं निषिध्यते किन्तु तत्प्रयोजकं गमनमपीति सोऽयमत्यन्तापह्नवः ।

हशश्वतोर्लङ् च (पा०सू०३-२-११६) ॥ लिड्विषये लङ् चालिट् । इति हाकरोच्चकार वा । शश्वदकरोच्चकार वा ।

प्रश्ने चासन्नकाले (पा०सू०३-२-११७) ॥ पृच्छ्यते इति प्रश्नः । कर्माणि नङ् । पञ्चवर्षाभ्यन्तरमासन्नकालः । प्रश्नविषयीभूतासन्नकालभूतानद्यतनपरोक्षार्थाद्धातोर्लङ्लिटौ स्तः । अगच्छत्किं देवदत्तः, जगाम वा ।

लट् स्मे (पा०सू०३-२-११८) ॥ लिटोऽपवादः । यजति स्म युधिष्ठिरः । इयाज किलेत्यर्थः ।

अपरोक्षे च (पा०सू०३-२-११९) ॥ स्मे लट् स्यात् । लङोऽपवादः । एवं स्म पिता ब्रवीति ।

ननौ पृष्टप्रतिवचने (पा०सू०३-२-१२०) ॥ अनद्यतनपरोक्षे इति निवृत्तम् । भूतसामान्ये लट् स्यात् । अकार्षीः किम् ? ननु करोमि भोः ।

नन्वोर्विभाषा (पा०सू०३-२-१२१) ॥ भूतसामान्ये पृष्टप्रतिवचने लट् वा । अकार्षीः किम् ? न करोमि, नाकार्षम् । अहं नु करोम्यकार्षं वा ।

पुरि लुङ् चास्मे (पा०सू०३-२-१२२) ॥ अनद्यतनग्रहणं मण्डूकप्लुत्याऽनुवर्तते । स्मवर्जिते पुराशब्दे भूतानद्यतने लुङ्लटौ वा स्तः । तयोरभावे यथाप्राप्तम् । वसन्तीह पुरा छात्राः । अवात्सुः, अवसन्, ऊषुर्वा । अस्मे किम् ? नडेन स्म पुराऽधीयते । नडाख्यं तृणविशेषं हस्ते गृहीत्वेत्यर्थः ।

वर्त्तमाने लट् (पा०सू०३-२-१२३) वर्त्तमानार्थधातोर्लट् स्यात् । पचति । अधिश्रयणादिरधःश्रयणान्त एकफलावच्छिन्नो विततरूपो व्यापारकलापः पचेरर्थः । तस्य च वर्त्तमानत्वमारब्धापरिसमाप्तत्वम् । तच्च लटो द्योत्यम् ।

स्यादेतत् । 'आत्मा अस्ति' इत्यादौ आरम्भाभावात्कथं लट्, "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादौ भूतप्रत्ययाः, आत्मा भाविकल्पेऽपि भविष्यतीत्यादिभविष्यत्प्रत्ययाश्च कथमिति चेत् ? एकस्या अप्यात्मसत्तायास्तत्तत्क्रियोपहिताया औपाधिकं भेदं पुरस्कृत्य सर्वनिर्वाहात् ।

इति श्रीशब्दकौस्तुभे तृतीयस्याध्यायस्य द्वितीये पादे द्वितीयमान्हिकम् ॥

लटः शतृशानचावप्रथमासमानाधिकरणे (पा०सू० ३-२-१२४) ॥ द्वितीयाद्यन्तेन समानाधिकरणे लटि सति तस्य लटः स्थाने शतृशानचौ स्तः । पचन्तं पचमानं पश्य । पचता पचमानेन कृतम् । यद्यपि तिङन्तोपस्थाप्ययोः कर्तृकर्मणोरप्रथमान्तेन सामानाधिकरण्यं नास्त्येव, तथापि कृदन्तोपस्थाप्ययोः सामानाधिकरण्यदर्शनात्कृत्स्थानितया प्रक्रियावस्थायां कल्प्यमानो लकारः प्रकृत्यर्थं प्रति प्रधानभूते कर्तृकर्मणी अभिदधानः कल्प्यते । लकारवाच्यांशस्य तिङ्कृतोरविशेषेऽपि गुणप्रधानभावे वैलक्षण्यमस्तीति फलितोऽर्थः । अप्रथमेत्यादि किम् ? देवदत्तः पचति । कथन्तर्हि सन् ब्राह्मण इत्यादि ?

अत्राहुः । "लटः शतृशानचौ"(पा०सू०३-२-१२४)इति योगो विभज्यते । "लक्षणहेत्वोः क्रियायाः" (पा०सू०३-२-१२१) इत्यतो विभाषाऽनुवर्तते । व्यवस्थितविभाषेयम् । तेन यथादर्शनं प्रयोगोऽव्यवतिष्ठते । अप्रथमेत्यादि तु योगान्तरं विषयविशेषे शतृशानचोर्नित्यतायाः स्पष्टीकरणाय । एवं "सम्बोधने च"(पा०सू०३-२-१२५) इत्याद्यपि बोध्यम् ।

माङ्याक्रोशे इति वक्तव्यम् (का०वा०) । मा जीवन् । मा पचमानः । माङि लुङोऽपवादोऽत एव लट् ।

सम्बोधने च (पा०सू०३-२-१२५) ॥ हे पचन् । हे पचमान ।

लक्षणहेत्वोः क्रियायाः (पा०सू०३-२-१२६) ॥ लक्षणं चिन्हम् । हेतुः फलं साधनञ्च । क्रियाया लक्षणे हेतौ च यो धातुस्तस्माल्लटः शतृशानचौ स्तः । शयाना भुञ्जते यवनाः । इह शयनं भुजिक्रियायाः परिचायकम् । अर्जयन्वसति । अर्जनं वासस्य फलम् । विद्वान्मुच्यते । ज्ञानं मोक्षसाधनम् । इह लक्षणत्वादिकं द्योत्यम् । लडर्थस्तु कर्त्रादिरेवेति बोध्यम् । परिचायकशयनाश्रययवनरूपानेकाश्रयनिष्ठा वर्तमाना भुजिक्रिया । फलीभूतार्जनाश्रयकर्तृको वासः । जनकज्ञानाश्रयनिष्ठो मोक्षश्च वाक्यार्थ इति दिक् ।

तौ सत् (पा०सू०३-२-१२७) ॥ शतृशानचौ सत्संज्ञौ स्तः। संज्ञाप्रदेशाः पूरणगुणेत्यादयः। तौग्रहणसामर्थ्यादिह शतृशानचोरानुपूर्वीमात्रं गृह्यते। अन्यथा प्रकृतयोर्वर्त्तमानार्थयोरेव संज्ञा स्यात्। लृडादेशयोस्तु न स्यात्। तेन तद्योगे "पूरणगुण" (पा०सू०२-२-११) इति न प्रवर्तेत। "लृटः सद्वा"(पा०सू०३-३-१४) इति सूत्रं तु सत्सदृशौ स्त इत्येवंपरं स्यात्। यथा 'अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम्' इत्युक्ते सिंहशब्देन तदाकारतामात्रं लक्ष्यते मुख्यार्थस्य बाधात्तथेहापीति दिक्।

पूङ्यजोः शानन् (पा०सू०३-२-१२८) ॥ पवमानः। यजमानः। नन्वेते शानन्नादयः किन्तृजादिवत्स्वतन्त्रा उत लादेशाः? नाद्यः, 'सोमं पवमानः' इत्यादौ कृद्योगलक्षणषष्ठ्यापत्तेः। न हीदानीं "न लोक"(पा०सू०२-३-६९) इति निषेधोऽस्ति, अलादेशत्वात्। न द्वितीयः, भावकर्मणोरपि प्रसङ्गात् 'पचमानः' इत्यत्र ताच्छील्यादौ चानशो लसार्वधातुकस्वरापत्तेश्च। आत्मनेपदसंज्ञाप्रसङ्गेन परस्मैपदिभ्यश्चानशोऽनुत्पत्तिप्रसङ्गाच्चेति चेत्?

अत्राहुः, स्वतन्त्रा एवैते। "न लोक" (पा०सू०२-३-६९) इति सूत्रे तृन्निति प्रत्याहारः शतृतृशब्देन तृनो नकारेणेत्युक्तम्, अतो न षष्ठीति।

ताच्छील्यवयोवचनशक्तिषु चानश् (पा०सू०३-२-१२९) ॥ ताच्छील्यादिषु द्योत्येषु कर्तरि चानश् स्यात्। मण्डयमानः। शिखण्डं वहमानः। शत्रुं निघ्नानः।

इङ्धार्योः शत्रकृच्छ्रिणि (पा०सू०३-२-१३०) ॥ इङ्धारिभ्यां शतृप्रत्ययः स्यादनायासेन क्रियां निर्वर्तयति कर्त्तरि। अधीयन्पारायणम्। धारयन्नुपनिषदम्। अकृच्छ्रिणीति किम्? कृच्छ्रेणाधीते धारयति वा।

द्विषोऽमित्रे (पा०सू०३-२-१३१) ॥ शत्रौ कर्त्तरि द्विषेः शतृप्रत्ययः स्यात्। द्विषन् शत्रुः। अमित्रे किम्? द्वेष्टि पतिं भार्या।

सुञो यज्ञसंयोगे (पा०सू०३-२-१३२) ॥ सुनोतेः शता स्याद्यज्ञाधिकारिणि कर्तरि। ता अश्वदा अश्ववत्सोमसुत्वा। सर्वे सुन्वन्तः सत्रे यजमाना इत्थमुच्यन्ते। संयोगे किम्? अयजमानेषु ऋत्विक्षु मा भूत्।

अर्हः प्रशंसायाम् (पा०सू०३-२-१३३) ॥ पूजामर्हन्। प्रशंसाया किम्? अर्हति वधं चोरः।

आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु (पा०सू०३-२-१३४) ॥ "भ्रा-

जभास" (पा०सू०३-२-१७७) इति वक्ष्यमाणं क्विपमभिव्याप्य तच्छीलादिष्वित्यधिक्रियते। प्रत्ययार्थस्य कर्तुर्विशेषणञ्चेदम्। शीलादीनां त्रयाणां विशेषणं समर्पयितुं निर्दिष्टैस्तच्छब्दैः प्रकृतिभूतधात्वर्था निर्दिश्यन्ते।

तृन् (पा०सू०३-२-१३५) ॥ धातोस्तृन्स्यात्तच्छीलादिषु कर्तृषु। याता सुतमिन्द्रो अस्तु सोमम्। योद्धारः क्षत्रियाः। कर्ता कटम्।

तृन्विधौ ऋत्विक्षु चानुपसर्गस्येति वक्तव्यम् (का०वा०)। अतच्छीलयाद्यर्थ आरम्भः। होता। पोता। अनुपसर्गस्येति किम्? उद्गाता। प्रतिहर्ता। अत्र "तृन्तृचौ शासिक्षदादिभ्यः संज्ञायां चानिटौ" (उ०सू० २५९) इत्युणादिसूत्रेण तृजेव भवति। तत्र तृन्तृचौ शंसीति पाठान्तरम्। स्वरे विशेषः। तृनि हि सति "तादौ च निति कृत्यतौ" (पा० सू०६-२-५०) इति गतेः प्रकृतिस्वरः स्यात्। तृचि तु कृत्स्वरो भवति। "तृन्तृचौ" (उ०सू०२५९) इत्युणादिसूत्रस्यैव विषयव्यवस्थार्थमिदम्। अनुपसर्गेभ्यस्तृन् सोपसर्गेभ्यस्तु तृजिति।

नयतेः षुक् (का०वा०)। अयं गुणे कृते बोध्यः। नेष्टा नेषतिः। प्रकृत्यन्तरमिति वा।

त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वञ्च (का०वा०)। त्वष्टा। अत्रानिट्त्वमित्युक्तं वक्ष्यमाणसर्वोपसंख्यानशेषो बोध्यः। त्विषेः स्वत एवानिट्त्वात्। तेन 'पोता' 'क्षत्ता' इति सिद्धम्। "क्षदेश्च युक्ते" (का० वा०)। धातुष्वपठितोऽपि क्षदिरत एव वाक्यात्स्वीकार्यः। आत्मनेपदी चायम् "उक्षाणं वावेहतं वाक्षदन्तः" (ऐ०ब्रा०१-३) इति बह्वृचब्राह्मणप्रयोगात् "शतं मेषान्वृक्ये चक्षदानम्" इति मन्त्राच्च।

क्षत्ता स्यात्सारथौ द्वाःस्थे क्षत्रियायाश्च शूद्रजे।

(अ०को०३-३-६८) इत्यमरः।

अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् (पा०सू०३-२-१३६)। अलङ्करिष्णुः निराकरिष्णुः इत्यादि। इह पचत्यादयस्त्रय उत्पूर्वा उपात्ताः। तत्र "उदः पचपतमदः" इत्येव वक्तव्ये प्रत्येकमुत्पूर्वपाठ उपसर्गान्तरनिवृत्त्यर्थः। तेन 'समुत्पतिष्णुः' इत्यादि न भवतीत्याहुः।

पचेरनन्तरं पतिस्तान्तः पठ्यते।

उत्पतिष्णुसहिष्णू च चेरतुः खरदूषणौ॥

इति भट्टिः। "फलानामुत्पतिष्णवः" इति रघुकाव्यम्। केचित्तु तत्स्थाने दान्तं पठित्वा 'पद गतौ' (दि०आ०६३) अस्मात्प्रत्ययमाहुः।

णेश्छन्दसि (पा०सू०३-२-१३७) ॥ इष्णुच् स्यात् । वीरुधः पारयिष्णवः । "अयामन्ता" (पा०सू०६-४-५५) इत्यादयः ॥

भुवश्च (पा०सू०३-२-१३८) ॥ छन्दसीत्येव । भविष्णुः । योगविभाग उत्तरार्थः । कथन्तर्हि "जगत्प्रभोरप्रभविष्णु वैष्णवम्" (मा०का १-५४) इति माघः, "विष्णवे प्रभविष्णवे" (वि०स०१) इत्यादि च । निरङ्कुशाः कवय इति हरदत्तः ।

चकारोऽनुक्तसमुच्चयार्थः । तेन 'भ्राजिष्णुः' इति काशिका । एवञ्च 'क्षयिष्णुः' इत्यपि केषाञ्चित्प्रयोगः सङ्गच्छते । किन्तु चकारस्यानुक्तसमुच्चयार्थत्वं भाष्ये नोक्तमतो बहवो न पुरस्कुर्वन्ति ।

ग्लाजिस्थश्च क्स्नुः (पा०सू०३-२-१३९) ॥ चाद्भुवोऽपि । गिदयम् । कत्वन्तु सांहितिकचर्त्वेन बोध्यम् । यदत्र वक्तव्यं तत् "क्ङिति च" (पा०सू०१-१-५) इति सूत्रेऽवोचाम । ग्लास्नुः । जिष्णुः । स्थास्नुः । भूष्णुः ।

दंशेश्छन्दस्युपसङ्ख्यानम् (का०वा०) ॥ दंक्ष्णवः पशवः ।

त्रसिगृधिधृषिक्षिपेः क्नुः (पा०सू०३-२-१४०) ॥ त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः ।

शमित्यष्टाभ्यो घिनुण् (पा०सू०३-२-१४१) ॥ घकार उत्तरत्र कुत्वार्थः । उकार "उगितश्च" (पा०सू०६-३-४५) इति ह्रस्वविकल्पार्थः । शमिनितरा । शमिनीतरा । शमिनितमा । शमिनीतमा । न चैवं 'शमिनौ' 'शमिनः' इत्यत्र "उगिदचाम्" (पा०सू० ७-१-७०) इति नुम्प्रसङ्गः, नुम्विधौ झल्ग्रहणस्यापकर्षात् । इह च झलन्तत्वाभावादिति भाष्ये स्थितम् । वृत्तिकारस्तु-उकार उच्चारणार्थो नानुबन्ध इत्याह । शमिनितरादौ घरूपेति नित्यमेव ह्रस्वत्वमिष्यते इति तस्याशयो न्यासकृतोक्तः । तदेतत्सर्वं भाष्यविरोधादप्रमाणमिति प्रामाणिकाः ।

शमी । तमी । दमी । श्रमी । भ्रमी । क्षमी । क्लमी । इह सप्तसु "नोदात्तोपदेशस्य" (पा०सू०७-३-३४) इति वृद्धिनिषेधः । प्रमादी । कथन्तर्हि उन्मादीति, अलङ्कृञादिना उत्पूर्वाद्विशेषविहितस्येष्णुच एवोचितत्वादिति चेत् ? वासरूपन्यायेन घिनुणपि भविष्यति । ननु "ताच्छीलिकेषु वासरूपन्यायो नास्ति" इति ज्ञापयिष्यत इति चेत् ? न, तस्यानित्यताया अपि ज्ञापयिष्यमाणत्वेन सर्वसौष्ठवात् ।

सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च (पा०सू०३-२-१४२) ॥ सम्पर्की । अनु-

रोधी । आयामी । आयासी । परिसारी । संसर्गी । परिदेवी । सञ्ज्वारी । परिक्षेपी । परिराटी । परिवादी । परिदाही । परिमोही । दोषी । द्वेषी । द्रोही । दोही । योगी । आक्रोडी । विवेकी । त्यागी। रागी । भागी । अतिचारी । अपचारी । आमोषी । अभ्याघाती । येऽत्र सम्पूर्वास्तेषां द्वन्द्वं कृत्वा "सम पृच्" इति वक्तव्यम् । एवमाङ्पूर्वाणां परिपूर्वाणाञ्च । एवञ्च सिद्धे प्रत्येकपाठ उपसर्गान्तरविशिष्टे मा भूदित्येवमर्थः ।

वौ कषलसकत्थस्रम्भः (पा०सू०३-२-१४३) ॥ 'कष हिंसायां' (भ्वा०प०६८६) ।विकाषी । विलासी । विकत्थी । विस्रम्भी ॥

अपे च लषः (पा०सू०३-२-१४४) ॥ चाद्वौ । अपलाषी । विलाषी ॥

प्रे लपसृद्रुमथवदवसः (पा०सू०३-२-१४५) ॥ प्रलापी । प्रसारी । प्रद्रावी । प्रमाथी । प्रवादी । वस निवासे (भ्वा०प०१०३०) ! प्रवासी । आच्छादनार्थस्तु न गृह्यते, लुग्विकरणत्वात् ।

निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् (पा०सू०३-२-१४६) ॥ अत्र नश्यतेर्ण्यन्तस्य भाविना णिलोपेन निर्देशः । अकारस्तूच्चारणार्थः । केचित्तु 'विनाशी' इति ण्यन्तमेव पठन्ति । असूयतिः कण्वादियगन्तः । समाहारद्वन्द्वः । व्यत्ययेन पुंस्त्वम् । पञ्चम्यर्थे च प्रथमा । "निन्दकः' इत्यादि ।

स्यादेतत् । असूयतिभिन्नानामिह ग्रहणं व्यर्थम्, ण्वुलैव रूपसिद्धेः । असूयतेस्तु ण्वुलि प्रत्ययात्पूर्वमुदात्तं वुञि तु "ञ्नित्यादिः" (पा० सू०६-१-१९७) इति स्वरे विशेषः । इतरेषां त्वेकाच्त्वान्न स्वरे भेदः । न च तृना ण्वुलो बाधः, वासरूपन्यायस्य जागरूकत्वादिति चेत् ? सत्यम्, "ताच्छीलिकेषु वासरूपन्यायेन ण्वुल्तृजादयो न भवन्ति" इति ज्ञापनार्थमेतत् ।

देविक्रुशोश्चोपसर्गे (पा०सू०३-२-१४७) ॥ आदेवकः । परिक्रोशकः । उपसर्गे किम् ? देवयिता । क्रोष्टा । दीव्यतेर्हेतुमण्णिजन्तस्य 'दिवु कूजने' (चु०आ०१७३) इत्यस्य चुरादिण्यन्तस्य च ग्रहणमित्याहुः॥

चलनशब्दार्थादकर्मकाद्युच् (पा०सू०३-२-१४८) ॥ चलनः । चोपनः । शब्द शब्दने (चु०प०१८१) चुरादिः । शब्दनः । रवणः ।अकर्मकात्किम् ? पठिता विद्याम् ।

अनुदात्तेतश्च हलादेः (पा०सू०३-२-१४९ ) ॥ अकर्मकाद्युजित्यनुवर्त्तते । वर्तनः । अनुदात्तेतः किम् ? भविता । हलादेः किम् ? एधिता । आदिग्रहणं किम् ? हलन्तादित्यर्थो मा भूत् । तथाहि सति 'एधिता' इत्यादावतिप्रसङ्गः 'जुगुप्सनः' 'मीमांसनः' इत्यत्राव्याप्तिश्च स्यात् ।

णुपादिष्वनुबन्धः समुदायस्य विशेषक इत्युक्तत्वादस्तीहाप्युदात्तत्वम् । न चार्द्धधातुके विवक्षितेऽतोलोपे सति हलन्तत्वमस्त्येव । ततश्च व्याघात्यालाभात् तदन्तविधिबाधे हलादेरित्येवार्थोऽस्त्विति चेत् ? नैवम् , आर्धधातुके परे लोपाभ्युपगमात् ।

अत्र चेदमेवादिग्रहणं ज्ञापकम् । अत एव परनिमित्तत्वादल्लोपस्य स्थानिवत्त्वे 'घटयति' इत्यादौ न वृद्धिः । "न पदान्त" (पा०सू०१-१-५८) सूत्रे वरेग्रहणमपीह लिङ्गमित्युक्तम् । यत्तु "अचो यत्" (पा०सू०३-१-९७) इति सूत्रे दित्स्यं धित्स्यमित्यादावजन्तभूतपूर्वादपि प्रत्ययार्थमन्ग्रहणमित्युक्तं, तत् "आर्धधातुके" (पा०सू०२-४-३५) इत्यस्य विषयसप्तमीत्वमभ्युपेत्य ।

वस्तुतस्तु तत्राज्ग्रहणं व्यर्थमेवेति दिक् । अकर्मकात्किम् ? वसिता वस्त्रम् ।

जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः (पा०सू०३-२-१५०)॥ 'जु' इति सौत्रो धातुः । जवनः । चङ्क्रमणः । दन्द्रमणः । सरणः । गर्द्धनः । ज्वलनः । शोचनः । लषणः । पतनः । पदनः । ननु पदिग्रहणं व्यर्थम् , पूर्वसूत्रेण युचः सिद्धत्वादिति चेत् ? सकर्मकार्थमिति वृत्तिकारः । भाष्ये त्वनभिधानादेव सकर्मकान्न भविष्यतीत्यभिप्रेत्य पदिग्रहणं ज्ञापनार्थमित्युक्तम् । तथाहि, "लषपत" (पा०सू०३-२-१५४ ) इति सूत्रेण पदेरुकञ् विशेषविहितः युचं बाधेत । वासरूपन्यायेन युजपीति चेत्? "ताच्छीलिकेषु परस्परं वासरूपविधिर्नास्ति"इति ज्ञापनार्थमिदमिति । तेनालङ्कृञादिभ्यस्तृन्न । प्रायिकश्चेदमिति"सूददीप"(पा०सू०३-२-१५३) इत्यत्र वक्ष्यते ।

क्रुधमण्डार्थेभ्यश्च (पा०सू०३-२-१५१) ॥ क्रोधनः । रोषणः । मण्डनः । भूषणः ।

न यः (पा०सू०३-२-१५२) ॥ यकारान्ताद्धातोर्युच् न । क्नूयिता । क्ष्मायिता ।

सूददीपदीक्षश्च (पा०सू०३-२-१५३) ॥ युच् न । सूदिता । दीपिता । दीक्षिता । ननु दीपिग्रहणं व्यर्थम् । "नमिकम्पि"(पा०सू०३-२-१६७) इति रेणैव युचो बाधात् । "ताच्छीलिकेषु वासरूपविधिर्नास्ति" इति पदिग्रहणेन ज्ञापितत्वादिति चेत् ? सत्यम् , तस्यानित्यत्वमनेन ज्ञाप्यते । तेन—कम्रा । कमना । इह युज्रयोरेव समावेशो ज्ञाप्यते इति भाष्यस्वरसः । यदाहु—भवति युचा रेण समावेश इति । वृत्तिकारस्तु उपलक्षणमिदं मन्यते । तेन "वौ कषलस" (पा०३-२-१४३) इति घि·

नुणो विषयेऽपि अनुदात्तलक्षणो युच् भवति । 'विकत्थन' इति यथा ।

लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् (पा०सू०३-२-१५४) ॥ अभिलाषुकः । पातुकः । पादुकः । स्थायुकः' इत्यादि ।

जल्पभिक्षकुट्टलुण्टवृङः षाकन् (पा०सू०३-२-१५५) ॥ जल्पाकः । जल्पाकी । भिक्षाकः । भिक्षाकी इत्यादि ।

प्रजोरिनिः (पा०सू०३-२-१५६) ॥ प्रजवी ।

जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च (पा०सू०३-२-१५७)॥ जयी । दर्शी । क्षयी । विश्रयी । अत्ययी । वमी । व्यथ भयसञ्चलनयोः (भ्वा०आ०७६५) नञ्पूर्वः । सूत्रे निपातनादेव नञो धातुना समासः, ततो नलोपः, ततः प्रत्ययः । अव्यथी । परिभवी । प्रसवी । इह क्षि क्षये (भ्वा०प०२३६) क्षि निवासगत्योः, षु प्रेरणे (तु०प०१२७,१२८) एते गृह्यन्ते, निरनुबन्धकत्वात् । क्षि हिंसायाम् ( स्वा०प०३१) षूङ् प्राणिगर्भविमोचने (अ०आ०२१) षूङ् प्राणिप्रसवे (दि०आ०२६) एते न गृह्यन्ते, सानुबन्धकत्वात् । प्रजोरप्यत्रैव ग्रहणं कृत्वा सूत्रभेदश्चकारश्च सुत्यजः ।

स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ( पा०सू०३-२-१५८) ॥ स्पृह ईप्सायाम् (चु०प०३३९) गृह ग्रहणे (चु०आ०३६७) पत गतौ (चु०प०३२९) एते चुरादावदन्ताः । "अयामन्ता" (पा०सू० ६-४-५५) इत्ययादेशः । स्पृहयालुः । गृहयालुः । पतयालुः । निद्रालुः । तत्पूर्वको द्रा । अत्र समासस्तदो नान्तत्वञ्च निपात्यते । तन्द्रालुः । श्रद्धालुः ।

शीङो वाच्यः (का०वा०) । शयालुः । कथं 'कृपालुः' 'स्पर्धालुः' इति ? कृपां स्पर्धां च लातीति विग्रहे मृगय्वादित्वात्कुः ।

दाधेट्सिशदसदो रुः (पा०सू०३-२-१५९) ॥ दारुः । धारुः । सेरुः । शद्रुः । सद्रुः ।

सृघस्यदः क्मरच् (पा०सू०३-२-१६०) ॥ घसिः प्रकृत्यन्तरम् । सृमरः । घस्मरः । अद्मरः ।

भञ्जभासमिदो घुरच् (पा०सू०३-२-१६१) ॥ भङ्गुरम् । भासुरम् । मेदुरम् ।

विदिभिदिच्छिदेः कुरच् (पा०सू०३-२-१६२) ॥ वेत्तेरेव ग्रहणं, व्याख्यानात् । विदुरः । भिदुरः । छिदुरः ।

भञ्जेर्भिदिच्छिदिभ्याञ्च कर्मकर्त्तरि प्रत्ययौ ।

इति वृत्तिकाराः । न त्वेतद्भाष्ये दृष्टम् । तथा च माघः-शुद्धे कर्त-

रि प्रायुङ्क्त—

प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयाऽदुरयाचितमङ्गनाः(६-८)इति।

कथन्तर्हि "समुग्धकान्तास्तनसङ्गभङ्गुरैः" (१-४७) इति माघ इति चेत्? न हि वयं कर्मकर्तरि नेति ब्रूमः, तस्यापि कर्तृतया तत्र प्रत्ययस्याप्रत्यूहत्वात्। किन्तु शुद्धेऽपि कर्तरि यथासम्भवं भवत्येवेति।

स्यादेतत्। प्रकृतस्यैव घुरचो ङित्त्वमतिदिश्यतां विदिभिदिछिदेर्ङिदिति, किं प्रत्ययान्तरेणेति चेत्?

अत्र केचिदाहुः, आतिदेशिकं ङित्त्वमनित्यमिति ज्ञापनार्थेदम्। तेन 'धवित्रं' सिद्धम्। धू विधूनने (तु०प०११८) कुटादिः। इत्रस्य ङित्वाभावाद् गुण इति। अन्ये तु 'धुवित्रम्' इत्येवेच्छन्ति।

इणनशजिसर्तिभ्यः क्वरप् (पा०सू०३-२-१६३)॥ इत्वरः। नश्वरः। जित्वरः। सृत्वरः। "टिड्ढा"(पा०सू०४-१-१५) इति ङीप्। इत्वरी।

गत्वरश्च (पा०सू०३-२-१६४)॥ गमेरनुनासिकलोपोऽपि निपात्यते।

जागुरूकः (पा०सू०३-२-१६५)॥ जागुरिति पञ्चम्यन्तम्। 'जागरूकः' इत्येव तु न निपातितम् उत्तरसूत्रे 'ऊक' इत्यस्यानुवृत्तये।

यजजपदशां यङः (पा०सू०३-२-१६६)॥ दंशेर्भाविना नलोपेन निर्देशो लाघवार्थः। यायजूकः। जञ्जपूकः। दन्दशूकः।

नमिकम्पिस्म्यजसकमहिंसदीपो रः (पा०सू०३-२-१६७)॥ नम्रः। कम्प्रः। स्मेरः। जसु मोक्षणे (दि०प०१०५) नञ्पूर्वः क्रियासातत्ये वर्तते। ततो निपातनात्समासे कृते रः। अजस्रम्। 'कथमजस्रा अग्नयः' इति, अजस्रधारणादजस्राः।

सनाशंसभिक्ष उः (पा०सू०३-२-१६८)॥ सन् प्रत्ययो गृह्यते न तु 'षणु दाने'(त०उ०२) 'षण सम्भक्तौ' (भ्वा०स० ४६५) इति धातू, गर्गादिषु जिगीषुशब्दस्य पाठात्। 'आङः शंसु इच्छायाम्' (भ्वा०आ०६३०) इत्ययं गृह्यते न तु 'शंसु स्तुतौ' (भ्वा०प०७२९) इति, आङा सह निर्देशात्। चिकीर्षुः। आशंसुः। भिक्षुः।

विन्दुरिच्छुः (पा०सू०३-२-१६९)॥ विद ज्ञाने (अ०प०५४) इष इच्छायाम् (तु०प०७१)। आभ्यामुप्रत्ययः विदेर्नुम् इषेश्छत्वञ्च निपात्यते। बिन्दुशब्दस्तु पवर्गीयादिः। बिदि अवयवे (भ्वा०प०६४) अस्मान्मृगय्वादित्वात्कुप्रत्ययो बोध्यः।

क्याच्छन्दसि (पा०सू०३-२-१७०)॥ उः स्यात्। अदेवयुं विदथे देवयुभिः। 'कितः क्यः' इति व्याख्यानात्कण्ड्वादियगन्तादपि भवति। यमस्य योनौ शकुनं भुरण्युम्। तुरण्यवोऽङ्गिरसो नक्षन्त।

सपर्येम सपर्यवः। अथ कथं

सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः।

इति भट्टपादाः? मृगय्वादिषु द्रष्टव्य इति हरदत्तः।

आदृगमहनजनः किकिनौ लिट् च (पा०सू०३-२-१७१)॥ आकारान्तेभ्य ऋवर्णान्तेभ्यः गमादिभ्यश्च किकिनौ स्तश्छन्दसि, तौ च लिड्वत्। आदिति नायं तकारः। कस्तर्हि? दकारः, "ऋदोरप्" (पा०सू०३-३-५७) इतिवत्। तेन तादपि परस्तपर इत्येतन्न। पपिः सोमम्। ददिर्गाः। बभ्रिर्वज्रम्। ततुरिः। जगुरिः। जग्मिर्युवा नृषदनम्। जघ्निर्वृत्रममित्रियम्। जज्ञिः। स्वरूपाबाधेनातिदेशप्रवृत्तेरसिद्धादयो न। यद्यपि "असंयोगाल्लिट्" (पा०सू०१-२-५) इति कित्त्वं लभ्यत एव तथापि "ऋच्छत्यृताम्" (पा०सू०७-४-११) इति प्रतिप्रसूतमपि गुणं निषेद्धुं किकिनोः कित्करणम्। तेन तॄ, गॄ, एतयोर्गुणाभावादित्वे प्राप्ते "बहुलं छन्दसि" (पा०सू०७-१-१०३) इत्युत्वे 'ततुरिः' इत्यादि सिद्धम्।

छन्दसि सर्वेभ्यः किकिनौ वाच्यौ (का०वा०)॥ सेदिः। नेमिरित्यादि।

भाषायां धाञ्कृसृजनिनमिभ्यो वाच्यौ (का०वा०)॥ दधिः। चक्रिः। सस्रिः। जज्ञिः। नेमिः। इह काशिकायां धातुवृत्तौ च गमिरपि पठ्यते। जग्मिः।

सासहिवावहिचाचलिपापतीनाम् (का०वा०)॥ इति वार्त्तिकम्। सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ निपात्येते। "नीग्वञ्चु" (पा०सू०७-४-८४) इत्यादिना पतेरभ्यासस्य नीग् प्राप्तस्तदभावश्च। अत्र 'भाषायाम्' इत्यपेक्षते इति हरदत्तन्यासकारादयः। ननु वार्त्तिकद्वयेऽपि 'भाषायाम्' इति निष्फलम्। "अहिमंहीसासहिरस्तिकोऽन्यः" इति श्रीहर्षादिप्रयोगाणां निर्वाहः फलमिति चेत्? न, 'छन्दसि' इत्यस्यानुवृत्तिमात्रेण तन्निर्वाहात्। प्रत्युत 'भाषायाम्' इत्यनुवृत्तौ वेदे एषां किकिनौ नेति लभ्येत। तच्चायुक्तम् "अषाल्हमुग्रं पृतनासु सासहिम्" "ध्रुवस्तिष्ठा विचाचलिः" इत्यादिप्रयोगाविरोधादिति चेत्? सत्यम्, 'छन्दसि' इत्यस्येहासम्बन्धस्फोरणमात्रं फलम्।

स्वपितृषोर्नजिङ् (पा०सू०३-२-१७२)॥ स्वप्नक्। तृष्णक्। 'धृषेश्च' इति काशिका। धृष्णक्।

शॄवन्द्योरारुः (पा०सू०३-२-१७३)॥ शरारुः। वन्दारुः।

भियः क्रुक्लुकनौ (पा०सू०३-२-१७४)॥ भीरुः। भीलुकः।

क्रुकन्नपि वक्तव्यः (का०वा०) ॥ भीरुकः।

स्थेशभासपिसकसो वरच् (पा०सू०३-२-१७५) ॥ स्थावरः। ईश्वरः। भास्वरः। पेस्वरः। कस्वरः।

यश्च यङः (पा०सू०३-२-१७६) ॥ यातेर्यङन्ताद्वरच्। यायावरः।

भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप् (पा०सू०३-२-१७७) ॥ "व्रश्च"(पा०सू०८-२-३६) इति षत्वम्। विभ्राट्, विभ्राजौ। भाः, भासौ। "राल्लोपः" (पा०सू०६-४-२१) इति वलोपः। धूः, धुरौ। विद्युत्। ऊर्क्। पूः, पुरौ। दृशिग्रहणाज्जवतेर्दीर्घः। जूः, जुवौ, जुवः। ग्रावस्तुत्।

अन्येभ्योऽपि दृश्यते (पा०सू०३-२-१७८) ॥ दृशिग्रहणं विध्यन्तरोपसङ्ग्रहार्थम्। तच्च वार्तिककारः स्फुटीचकार। आह हि—

वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्च (का०वा०) ॥

द्युतिगमिजुहोतीनां द्वे च (का०वा०) ॥

दृणातेर्ह्रस्वश्च (का०वा०) ॥ ध्यायतेः सम्प्रसारणञ्च (का०वा०)। इति। वक्तीति वाक्। शब्दप्राट्। आयतस्तूः। कटप्रूः। जूः। श्रीः। वचिप्रच्छयोः सम्प्रसारणन्तु न, दीर्घवचनसामर्थ्यात्। अपर आह 'दृशिग्रहणादेव वचिप्रच्छयोः सम्प्रसारणन्न' इति। "द्युतिगमि" इति वार्त्तिके चकारेण दीर्घः समुच्चीयते, स च जुहोतेरेव, दीर्घश्रुत्युपस्थितेनाचा तदन्तविधिविज्ञापनात्। दिद्युत्। "द्युतिस्वाप्योः"(पा०सू० ७-४-६०) इत्यभ्यासस्य सम्प्रसारणम्। जगत्। जुहूः। नन्विहाभ्याससंज्ञैव दुर्लभा, प्रत्यासत्या षाष्ठद्वित्वे एव तत्प्रवृत्तेः। अत एवाष्टमिके सा न, इति चेत्? सत्यम्, दृशिग्रहणादेवाभ्याससंज्ञेति हरदत्तः।

वस्तुतस्तु "लिटि धातोः" (पा०सू०६-१-८) इत्यतो 'धातोः' इत्यनुवृत्त्या 'धातोः' इति द्वित्वेऽभ्याससंज्ञा। एवञ्च न कोऽपि दोष इत्यवधेयम्।

दृदृत्। दृणातेर्दीर्यतेर्वा। ध्यायतीति धीः। इह जुहूधीरित्यनयोः करणस्य कर्तृत्वाविवक्षायां प्रत्यय इति हरदत्तः।

भुवः संज्ञान्तरयोः (पा०सू०३-२-१७९) ॥ भवतेः क्विप्स्यात्संज्ञायामन्तरे च गम्यमाने। मित्रभूर्नाम कश्चित्। धनिकाधमर्णयोरन्तरे यस्तिष्ठति विश्वासार्थं स प्रतिभूः। यस्तु ग्रामयोरन्तरे तिष्ठति तत्र न, दृशिग्रहणस्यानुवृत्तेः।

विप्रसंभ्यो ड्वसंज्ञायाम् (पा०सू०३-२-१८०) ॥ एभ्यो भुवो डुः स्यात् न तु संज्ञायाम्। विभुः सर्वगतः। प्रभुः स्वामी। सम्भुर्जनिता।

असंज्ञायां किम्? विभूर्नाम कश्चित्।

मितद्र्वादिभ्य उपसंख्यानम् (का०वा०)॥ मितं द्रवतीति मितद्रुः। शम्भुः। अन्तर्भावितण्यर्थोऽत्र भवतिः, सुखं भावयतीत्यर्थात्॥

धः कर्मणि ष्ट्रन् (पा०सू०३-२-१८१)॥ धयतेर्दधातेश्च कर्मणि कारके ष्ट्रन् स्यात्। धीयते पीयते धात्री स्तनदायिनी। धीयते धार्यते भैषज्यार्थमिति धात्री आमलकी।

दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे (पा०सू०-३-२-१८२)॥ एभ्यः करणे ष्ट्रन्स्यात्। दात्यनेन दात्रम्। नेत्रम्। शस्त्रम्। योत्रम्। योक्त्रम्। स्तोत्रम्। तोत्त्रम्। सेत्रम्। सेक्त्रम्। मेढ्रम्। पत्त्रम्। अजादित्वाद्दंष्ट्रा। नद्ध्री। दंशेर्नलोपेन निर्देशो ज्ञापकः "क्वचिदक्ङित्यपि नलोपः" इति। तेन ल्युटि दशनाः। "अनिदिताम्" (पा०सू० ६-४-२४) इति सूत्रस्थभाष्यस्वरसस्तु शबन्तोऽयन्निर्देशः।

हलसूकरयोः पुवः (पा०सू०३-२-१८३)॥ पूङ्पूञोः करणे ष्ट्रन् स्याद्धलसूकरयोरवयवश्चेत्सः। पोत्रम्। हलस्य सूकरस्य च मुखम्।

अर्तिलूधूसूखनसहचर इत्रः (पा०सू०३-२-१८४)॥ करणे इत्येव। अरित्रं मूलम्। लवित्रम्। धुवित्रम्। सवित्रम्। खनित्रम्। सहित्रम्। चरित्रम्।

पुवः संज्ञायाम् (पा०सू०३-२-१८५)॥ पूङ्पूञ्भ्यां करणे इत्रः स्यात्। दर्भपवित्रम्। येनाज्यमुत्पूयते तत्पवित्रम्। जपादिष्वनामिकाङ्गुलिवेष्टनञ्च।

कर्तरि चर्षिदेवतयोः (पा०सू०३-२-१८६)॥ कर्तरि करणे च पुव इत्रः स्यात्। यथासङ्ख्यसम्बन्धात् ऋषौ करणे देवतायां कर्त्तरि इति काशिका। "कर्तरि कृत्" (पा०सू०३-४-६७) इतिसूत्रस्थभाष्यकैयटयोस्तु यथासंख्यं नेति गम्यते।

ऋषिर्मन्त्रः, 'तदुक्तमृषिणा' इति दर्शनात्। पूयतेऽनेनेति पवित्रस्पावमान्यादि। देवतायान्तु-अग्निः पवित्रं स मा पुनातु।

ञीतः क्तः (पा०सू०३-२-१८७)॥ ञीतो धातोर्वर्तमाने क्तः स्यात्। अनेन विशेषविधानात् ञीतः क्तस्य भूतविषयता बाध्यते। एवमुत्तरसूत्रे बोध्यम्। ञिधृषा-धृष्टः।

मतिबुद्धिपूजार्थेभ्यश्च (पा०सू०३-२-१८८)॥ मतिरिच्छा न तु बुद्धिः, तस्याः पृथगुपात्तत्वात्। राज्ञां मत इष्टः, बुद्धो विदितः, पूजितोऽर्चित इत्यादि। कथन्तर्हि "जनैरविदितविभवो भवानीपतिः" इति भारविः, "तेन" इत्यधिकारे "उपज्ञाते" (पा०सू०४-३-११५) इति सूत्रि-

तत्वाज्ज्ञानार्थेभ्यो भूतेऽपि क्तः । "पूजितो यः सुरासुरैः" इत्यादि तु चिन्त्यामिति हरदत्तः । सामान्यापेक्षं ज्ञापकमित्यनुन्यासादयः । चकारोऽनुक्तसमुच्चयार्थः । तथा च भाष्यम्—

शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ॥
हृष्टतुष्टौ तथाकान्तस्तथोभौ संयतोद्यतौ ।
कष्टम्भाविष्यतीत्याहुरमृताः पूर्ववत्स्मृताः ॥ इति ।

रुष रोषे (चु०प०१३७) "रुष्यमत्वर" (पा०सू०७-२-२८) इतीड्विकल्पः । कष्टशब्दो भविष्यत्काले । अमृतास्तु पूर्ववत् । वर्तमान इत्यर्थः । न म्रियन्ते अमृताः ।

इति श्रीशब्दकौस्तुभे तृतीयाध्यायस्य द्वितीये पादे
तृतीयमाह्निकं, समाप्तश्च द्वितीयपादः ॥

# स्फोटचन्द्रिका

श्रीमन्मौन्युपाह्वश्रीकृष्णभट्टविरचिता

काशीस्थराजकीयसंस्कृतप्रधानपाठशालाध्यापक-
नेने-इत्युपनामक गोपालशास्त्रिणा संस्कृता ।

THE

# SPHOṬA CHANDRĪKĀ

by

Pandit S'rī Kriṣṇa Bhaṭṭa Maunī.

Edited by

Pandit Gopal S'astrī Nene,

Professor, Government Sanskrit College, Benares.

* श्रीः *

# स्फोटचन्द्रिकाविषयसूची ।


| | पृ० | पं० |
|---|---|---|
| १ मङ्गलाचरणम् | १ | ३ |
| २ स्फोटशब्दार्थः | ,, | ५ |
| ३ स्फोटशब्दस्य योगरूढत्वम् | ,, | ७ |
| ४ स्फोटभेदा अष्टौ | ,, | १२ |
| ५ वाक्यस्फोटातिरिक्तानां सर्वेषां तदुपायत्वम् | ,, | १४ |
| ६ वर्णस्फोटनिरूपणम् | ,, | २१ |
| ७ तत्रादेशानामेव वाचकत्वम् | ,, | २४ |
| ८ वर्णस्फोटस्यैव तार्किकाणां पदस्फोटत्वम् | २ | १ |
| ९ शक्तस्य पदत्वनिरसनम् | ,, | ३ |
| १० तत्र पदचातुर्विध्यम् | ,, | ५ |
| ११ पाचकपदे शक्तस्य यौगिकत्वासम्भवः | ,, | ६ |
| १२ यौगिकलक्षणम् | ,, | ८ |
| १३ गोपदे रूढत्वाभावः | ,, | ११ |
| १४ रूढपदलक्षणम् | ,, | ,, |
| १५ योगरूढपदलक्षणम् | ,, | १३ |
| १६ यौगिकरूढनिरसनम् | ,, | १५ |
| १७ तार्किकोक्तरूढिलक्षणोदाहरणनिरसनम् | ,, | १९ |
| १८ द्विरेफपदस्य लाक्षणिकत्वनिरासः | ,, | २१ |
| १९ प्रत्येकं वर्णानां स्फोटत्वम् | ,, | २५ |
| २० स्फोटशब्दस्य भूषणोक्तयौगिकत्वनिरसनम् | ,, | २९ |
| २१ तार्किकमते ईश्वरेच्छाशक्तिः | ३ | ६ |
| २२ नव्यतार्किकाणां मीमांसकानां च मते पदार्थान्तरं शक्तिः | ,, | ,, |
| २३ साधुशब्दवदसाधुशब्देष्वपि शक्तिः | ,, | ११ |
| २४ असाधुषु सा नास्तीति तार्किकमतनिरासः | ,, | ,, |
| २५ तत्र असाधुभ्यः साधुशब्दस्मरणाद्बोधनिरासः | ,, | १२ |
| २६ एवं शक्तिभ्रमाद्बोधनिरासः | ,, | १४ |
| २७ शक्तिस्वरूपतार्किकोक्तसाधुत्वलक्षणनिरसनम् | ,, | २५ |
| २८ साधुत्वासाधुत्वलक्षणनिरूपणम् | ,, | २९ |
| २९ ईश्वरज्ञानं शक्तिरिति वर्धमानमतम् | ४ | ५ |

| | पृ० | पं० |
|---|---|---|
| ३० बोधजनकत्वं शक्तिरिति शाब्दिकमतम् | ,, | ६ |
| ३१ अनादिसंबन्धः शक्तिरिति ग्रन्थिकृन्मतम् | ,, | १५ |
| ३२ वन्ह्यादिवच्छेदशक्तेरपि अज्ञातायाः सत्या उपयोगः | ,, | १८ |
| ३३ नानार्थेऽपि एकैव शक्तिः | ,, | २५ |
| ३४ लक्षणोच्छेदस्येष्टत्वम् | ,, | २८ |
| ३५ शाब्दिकमतेऽपि वन्ह्यादावतिरिक्तशक्तिः | ५ | ३ |
| ३६ तार्किकमते विशिष्टस्य कारणतया वन्ह्यादौ शक्त्यभावः | ,, | ५ |
| ३७ समवायस्थाने तादात्म्यसम्बन्धः | ,, | ८ |
| ३८ गुणविशिष्टघटाद्युत्पत्तिर्विशिष्टस्यैव च कारणत्वम् | ,, | ११ |
| ३९ तार्किकाणामर्धजरती | ,, | १४ |
| ४० कर्णविवरवर्तिनभोनिष्ठशक्तेःशक्तिविशिष्ट नभसो वा श्रोत्रत्वम् | ,, | २० |
| ४१ श्रोत्रेन्द्रियस्य गुणमात्रसाक्षात्कारजनकत्वम् | ,, | २५ |
| ४२ रसनघ्राणेन्द्रिययोर्द्रव्याविशिष्टगुणग्राहकत्वम् | ,, | २७ |
| ४३ त्वक्चक्षुषोर्द्रव्यविशिष्टगुणस्य तद्विशिष्टद्रव्यस्य वा ग्राहकत्वम् | ६ | ६ |
| ४४ असाध्वन्तर्गतप्रतिवर्णं स्फोटत्वम् | ,, | ९ |
| ४५ साध्वनुकरणानां स्फोटत्वम् | ,, | १२ |
| ४६ असाध्वनुकरणानां विवक्षाभेदेन स्फोटत्वास्फोटत्वे | ,, | २१ |
| ४७ पदस्फोटनिरूपणम् | ,, | २४ |
| ४८ पदस्फोटस्य वर्णस्फोटापेक्षयाऽन्तरङ्गत्वम् | ,, | २५ |
| ४९ वर्णस्फोटस्य पदस्फोटापेक्षया बहिरङ्गत्वम् | ,, | २६ |
| ५० पदस्फोटभेदौ | ,, | २७ |
| ५१ सखण्डपदस्फोटस्तार्किकमते वाक्यस्फोटः | ,, | २८ |
| ५२ अखण्डपदस्फोटः | ,, | ३० |
| ५३ स्फोटस्य वाचकत्वेऽनुच्चरितस्याप्रत्यायकत्वपरभाष्य-विरोधपरिहारः | ७ | २ |
| ५४ तार्किकवेदान्तिमतनिराकरणम् | ,, | ७ |
| ५५ रूढयौगिकयोस्तार्किकसिद्धयोरेवाखण्डसखण्डस्फोटत्वं शाब्दिकानामित्यविरोधः | ,, | ३० |
| ५६ चित्ररूपनिरासः | ८ | ११ |
| ५७ निर्विकल्पकज्ञाननिरासः | ,, | १६ |

| | पृ० | पं० |
|---|---|---|
| ५८ अतिरिक्तकालपदार्थनिरासः | ,, | २० |
| ५९ पीलुपाकवादनिरासः | ९ | ३ |
| ६० वाक्यस्फोटनिरूपणम् | ,, | ८ |
| ६१ अखण्डवाक्यस्फोटः | ,, | १० |
| ६२ सखण्डवाक्यस्फोटः | ,, | १२ |
| ६३ वाक्यलक्षणं शाब्दिकमते | ,, | १४ |
| ६४ तार्किकमते वाक्यलक्षणम् | ,, | १७ |
| ६५ प्रत्यक्षानुमानयोरेकवाक्यत्वं तन्मते | ,, | २१ |
| ६६ तार्किकवाक्यलक्षणे दोषकथनम् | ,, | २३ |
| ६७ प्रत्यक्षानुमानयोरेकवाक्यत्वनिरासः | ,, | ३२ |
| ६८ प्रसङ्गतः प्रकरणलक्षणम् | १० | ६ |
| ६९ वाक्यस्फोटभेदाः | ,, | १६ |
| ७० प्रथमान्तमुख्यविशेष्यकबोधे दूषणानि | ११ | २ |
| ७१ तार्किकोक्तस्य वाक्यार्थकर्मत्वस्य निरासः | ,, | ७ |
| ७२ नीलो घटो भवतीत्यत्र व्युत्पत्तिवादोक्तबोधखण्डनम् | ,, | ३२ |
| ७३ तत्त्वमस्यादिवाक्येषु जहदजहल्लक्षणा | १२ | ६ |
| ७४ नामार्थयोरभेद इति व्युत्पत्तेर्लाघवमूलकत्वं न तु नियमत्वम् | ,, | १० |
| ७५ जहदजहल्लक्षणास्थले लाक्षणिकवाक्यस्फोटः | ,, | २३ |
| ७६ लाक्षणिकवाक्यस्फोटनिरासः | ,, | २५ |
| ७७ प्रकृतिगतसंख्यानुरोधश्चित्रविषये एव | १२ | ९ |
| ७८ वाक्यस्वरूपभेदाः | ,, | १५ |
| ७९ काव्यात्मकवाक्यलक्षणम् | ,, | १६ |
| ८० रसगङ्गाधरोक्तकाव्यलक्षणदूषणम् | ,, | २५ |
| ८१ तात्पर्यविषयाबाध एव योग्यता, तस्या एव बोधे कारणत्वं, तदभावनिश्चयस्य च प्रतिबन्धकत्वम् | १४ | ७ |
| ८२ यद्वा शाब्दबोधेऽयोग्यतानिश्चयस्य न प्रतिबन्धकत्वम् | ,, | २३ |
| ८३ लक्षणास्थले पूर्वं भ्रमात्मको बोध इति तार्किकोक्तनिरासः | १५ | ३ |
| ८४ अखण्डवाक्यस्फोटस्यैकवर्णात्मकत्वम् | ,, | १० |
| ८५ कामादीनामात्मधर्मत्वनिरासः | १६ | १ |

श्रीकृष्णभट्टमौनिरचिता

# स्फोटचन्द्रिका ।

पित्रोः पादयुगं नत्वा जानकीरघुनाथयोः ।
मौनिश्रीकृष्णभट्टेन तन्यते स्फोटचन्द्रिका ॥ १ ॥

शाब्दिकानां वाच्यलक्ष्यव्यङ्ग्यार्थप्रतिपादकानां वाचकलाक्षणिकव्यञ्जकानां शब्दानां तन्निष्ठजातेर्वा स्फोट इति व्यवहारः । स्फुटति अर्थो यस्मादिति व्युत्पत्त्या पङ्कजादिपदवद्योगरूढः स्फोटशब्दः । केवलयोगस्वीकारे वाच्यलक्ष्यव्यङ्ग्यानां चेष्टायाश्च व्यङ्ग्यार्थप्रतिपादकत्वेन तत्रातिव्याप्तिः । न च वाचकादिपर्यायः स्फोटशब्दोऽप्रसिद्धः,

अक्षराणामकारस्त्वं स्फोटस्त्वं वर्णसंश्रयः ।

इति हरिवंशे दृष्टत्वात् । तथा च वर्णपदवाक्याखण्डपदाखण्डवाक्येति पञ्च व्यक्तिस्फोटाः । शक्यतावच्छेदिकाया जातेर्वाच्यत्ववत् शक्ततावच्छेदिकाया जातेर्वाचकत्वमिति मते वर्णपदवाक्यभेदेन त्रिविधो जातिस्फोटः । एवं चाष्टौ स्फोटाः । यथाऽऽनन्दवल्ल्यां शुद्धब्रह्मज्ञानार्थमन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेति पञ्चसु कोशेषु अपारमार्थिकब्रह्मत्वप्रतिपादनमुपायः, यथा वाऽरुन्धतीज्ञानार्थं स्थूलनक्षत्रे अपारमार्थिकारुन्धतीत्वबोधनम्, तथा पारमार्थिकाखण्डवाक्यबोधार्थमेते वर्णपदवाक्याखण्डपदस्फोटा उपायाः । तदुक्तम्—

उपायाः शिक्षमाणानां बालानामुपलालनाः ।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥ इति ।

सुप्तिङन्तं पदमिति, एकतिङन्तार्थमुख्यविशेष्यकं वाक्यमिति पदवाक्यलक्षणानाक्रान्तवर्णसमूहस्य वर्णस्य वा प्रकृतिप्रत्ययरूपस्य व्याकरणेन गृहीतशक्तिकस्य पच् तिप् इत्यादिकस्य वाचकत्वे वर्णस्फोटः । ते च प्रयोगसमवायिनो विसर्गतिबादयो न तु तत्स्थानित्वेन कल्पिताः सकारलकारादयः, तेषामनियतत्वात् ।

तथाहि, विसर्गेण रोः स्मरणं, तेन सोः । एवं णला तिपः स्मरणं, तेन लकारस्य, एवञ्च गौरवं स्पष्टमेव । किञ्च स्थान्यादेशज्ञानशून्यस्यावैयाकरणस्यादेशमात्रादबोधापत्तेश्च । एवञ्च स्थान्येव वाचको लाघवात्, न त्वादेशो गौरवादिति तार्किकोक्तमपास्तम्, विपरीतगौ-

स्वापत्तेः। अयं तार्किकाणां पदस्फोटत्वेनाभिमतः, शक्तं पदमिति तैः स्वीकृतत्वात्।

तच्च मानाभावात् फलाभावात्स्वग्रन्थविरोधाच्चायुक्तमिति शाब्दिकाः। तथा हि, शक्तं पदं चतुर्द्धा–रूढं यौगिकं योगरूढं यौगिकरूढं चेति। गौः, पाचकः, पङ्कजम्, अश्वकर्णः, इति क्रमेणोदाहरणानि। तत्र 'पाचकः' इति यौगिकोदाहरणे यच्छक्तं पदं पच् अक इति, न तद्यौगिकं, समुदायस्तु यद्यपि यौगिकस्तथापि न शक्तः। एवञ्च शक्तं पदं यौगिकमित्यविचारिताभिधानम्। विशिष्टशक्त्यभावे सति व्याकरणबोधितार्थप्रकृतिप्रत्ययसमुदायरूपसुबन्ततिङन्तपदत्वं यौगिकपदत्वम्। सत्यन्तं योगरूढातिव्याप्तिवारणाय, तत्र विशिष्टे शक्तिग्रहात्। एवं गौरिति रूढ्युदाहरणमप्यसङ्गतम्, व्याकरणकल्पितप्रकृतिप्रत्ययार्थप्रत्ययाभावे सति समुदायसुबन्तस्यार्थबोधकत्वे रूढपदत्वं यथा मणिनूपुरादीति रूढिलक्षणानाक्रान्तत्वात्। शास्त्रकल्पितावयवार्थानुसन्धानपूर्वकसमुदायशक्त्याऽर्थबोधकपदत्वं योगरूढत्वम्। यथा पङ्कजादीति। तदाक्रान्तत्वाद्योगरूढत्वं युक्तम्। यौगिकरूढ इति तार्किकोक्तो भेदोऽपि न युक्तः, सकृदुच्चरितः सकृदर्थं प्रत्याययतीति न्यायान्मण्डपपदं गृहविशेषे रूढं भिन्नं, मण्डपानकर्तरि भिन्नमिति अतिरिक्तभेदस्वीकारे मानाभावात्।

एवं रूढिलक्षणायाः 'कर्मणि कुशलः' इत्युदाहरणमप्ययुक्तम्, उक्तरीत्या कुशले रूढत्वस्य कुशादानकर्त्तरि यौगिकत्वस्य सम्भवात्। द्विरेफपदं भ्रमरे रूढमेव, कोशे भ्रमरपर्याये उपादानात्। नहि कोशे लाक्षणिकोपादानं पर्यायेष्वस्ति। एवञ्च स्ववाच्यपदवाच्यत्वसम्बन्धेन द्विरेफपदस्य भ्रमरे लक्षणेति तार्किकोक्तमपास्तम्, अङ्कुरेऽपि उक्तसम्बन्धसत्त्वेन तत्रातिव्याप्तेश्च।

यद्वा, एकाक्षरकोशावधृतशक्तिकानां सर्वेषां वर्णानामेव स्फोटत्वम्, "अर्थवन्तो वर्णाः" इत्यनेन भाष्ये तथा प्रतिपादनात्। न चैवं धनं, वनमित्यादौ प्रातिपदिकसंज्ञापत्तिः, समुदायशक्तेः स्वाश्रयशक्तावच्छेदकानुपूर्वीभञ्जनकार्थकार्यं प्रति प्रतिबन्धकत्वात्(१)।

यत्तु भूषणे स्फुटति अर्थो यस्मादिति स्फोटः वाचक इति यावदिति केवलयौगिकः स्फोटशब्द उक्तः। तन्न सम्यक्, साधुशब्दाना-

---

(१) अवयवनिष्ठशक्तिनिरूपकार्थविषयकशाब्दबोधं प्रति समुदायनिष्ठशक्तिनिरूपकार्थविषयकतात्पर्यज्ञानस्य प्रतिबन्धकत्वादित्यर्थः।

मिवासाधुशब्दानामपि शक्तिसत्त्वेन वाचकत्वाविशेषात्स्फोटत्वापत्तेः । न चेष्टापत्तिः । शाब्दिकैस्तथाऽनङ्गीकारात्, लाक्षणिकव्यञ्जकयोरसंग्रहापत्तेः । न च 'शब्दोऽत्र व्यञ्जकास्त्रिधा' इति 'अत्र' ग्रहणात्काव्य एव व्यञ्जको न व्याकरणे इति भ्रमितव्यम्, पदेन स्फोटोऽखण्डो व्यज्यत इति वदद्भिस्तत्स्वीकृतत्वात् ।

ननु तार्किकमते ईश्वरेच्छा शक्तिः । मीमांसकमते अतिरिक्ता पदार्थान्तरं, नवीनतार्किकैरीश्वरेच्छाज्ञानं वा कृतिर्वेति विनिगमनाविरहान्मीमांसकमतमेवाङ्गीकृतम् । उभयथाऽपि साधुष्वेव सा, नासाधुषु । अन्यथा शक्तिमत्त्वं साधुत्वम् इति साधुत्वलक्षणाक्रान्तत्वेनासाधूनामपि साधुत्वापत्तेः, शक्तिग्राहकव्याकरणकोशादेरभावाच्च; इति चेत् ? न, तत्र शक्त्यभावेन तेभ्यो बोधानापत्तेः ।

न च शक्तिभ्रमात्साधुशब्दस्मरणाद्वा बोध इति तार्किकोक्तं युक्तम्, साधुशब्दस्मरणं विनापि व्युत्पन्नानामपि बोधस्यानुभवसिद्धत्वात् गौरवाच्च । भ्रमाद्बोध इत्यपि न, रजतभ्रमाद् गृहीतायाः शुक्ते रजतव्यवहारानाधायकत्ववच्छक्तिभ्रमाज्ज्ञातबोधस्यापि व्यवहारानाधायकत्वापत्तेः । सन्मात्रविषयिण्या ईश्वरेच्छायास्तत्र अभावस्य वक्तुमशक्यत्वात् ।

किञ्च शक्तिभ्रमः कस्य, सर्वव्यवहारकर्त्तुरीश्वरस्योतान्यस्य ? नाद्यः, ईश्वरस्य भ्रमित्वानुपपत्तेः । नान्त्यः, सर्गादौ प्रयोज्यप्रयोजकस्वरूपसाध्वसाधुशब्दव्यवहारकर्त्रीश्वरादन्यस्याभावात् । यथा पुण्यपापोभयजनिकाऽर्थसृष्टिरीश्वरकर्त्तृका तथैव साध्वसाधूभयविधशब्दसृष्टिरपीश्वरकर्त्तृकैव । तथा च भ्रम इति अयुक्तमेव । न च तटस्थबालस्यानुमितिभ्रमः, साधुशब्देष्विवासाधुशब्देष्वपि शक्त्यनुमापकसामग्रीसत्त्वेन बाधकाभावेन च भ्रमत्वायोगात् ।

नन्वसाधुष्वपि शक्तिस्वीकारे शक्तिमत्त्वं साधुत्वमिति तार्किकलक्षणाक्रान्तत्वात्साधुत्वापत्तिः । तथा च "न म्लेच्छितवै नापभाषितवै" इति निषेधानवकाशः-इति चेत् ? न, लाक्षणिकानामसाधुतापत्तेः । न च वृत्तिमत्त्वं तत्, शक्तिलक्षणान्यतरत्वनिवेशे गौरवात् ।

तस्मात्पुण्यजनकतावच्छेदकजातिविशेषः साधुत्वं, प्रत्यवायजनकतावच्छेदकश्चासाधुत्वम् । यद्वा, व्याकरणबोध्यत्वं साधुत्वं, तद्भिन्नत्वमसाधुत्वम् । तथा चैकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवतीति । व्याकरणेनार्थविशेषे प्रकृतिप्रत्ययेन व्युत्पा-

दित इति ज्ञातः। तादृशार्थविशेषे प्रयुक्तः। तेन गोणीशब्दस्य गोण्यामेव साधुत्वं न गवि।

विनिगमनाविरह इत्यपि न युक्तम्। अन्यतरपक्षपातिनी युक्तिर्हि विनिगमना। सा च ज्ञानस्य पूर्वाभिव्यक्तिरूपा प्रकृतेऽस्ति। अत एवेश्वरज्ञानं शक्तिरिति वर्द्धमानोपाध्यायाः।

शाब्दिकास्तु बोधजनकत्वं शक्तिः। तच्चानादिबोधजनकतावच्छेदकधर्मवत्त्वम्। तदुक्तं हरिणा—

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थैः सम्बन्धः शब्दानां योग्यता तथा॥ इति।

तज्जनकतावच्छेदकधर्मवत्त्वरूपा योग्यता। न चागृहीतशक्तिकस्य शाब्दबोधानुदयाच्छाब्दबोधे शक्तिग्रहस्य हेतुत्वाद् बोधोत्तरं शक्तिग्रहः शक्तिग्रहोत्तरं बोध इति अन्योऽन्याश्रयः, व्याकरणकोशादिना शक्तिग्रहात्। अन्यथेश्वरेच्छा शक्तिरिति पक्षेऽपि शक्तिग्रहोत्तरं बोधः बोधोत्तरं शक्तिग्रह इति अन्योऽन्याश्रयस्य तुल्यत्वात्।

यद्वा, शब्दार्थयोरनादिसम्बन्धः शक्तिः मम तु प्रतिभाति। शक्तिः सामर्थ्यं, यथा दीपादौ तेजसि ग्राह्यत्वग्राहकत्वसामर्थ्यं, वन्ह्यादौ दाहकत्वसामर्थ्यम्, इन्द्रियादौ विषयप्रकाशनं, तत्स्वरूपसदेवोपयुज्यते न तु ज्ञातम्। एवं शब्देऽपि ग्राह्यत्वग्राहकत्वसामर्थ्यं स्वरूपसदेवोपयुक्तं न तु ज्ञातम्। न चागृहीतशक्तिकस्यापि बोधापत्तिः, सन्निकर्षादिवत् बोधाभावप्रयोजकीभूताभावप्रतियोगितात्पर्यग्रहाभावात्। न च नानार्थेष्वेव तात्पर्यग्रहस्य कारणत्वमिति चेत्? सत्यम्, शाब्दिकमते सर्वेषां नानार्थत्वात्। अत एव "वृद्धिरादैच्" (पा०सू०१-१-१) इति सूत्रे भाष्ये "अनेकशक्तेः शब्दस्य" इत्युक्तम्। अनेकेष्वनेका वा शक्तिरस्येति विग्रहः। अवच्छेदकभेदे शक्तिभेद इति तार्किकादिसिद्धान्तः। लाघवाच्छक्तिरेकैवेति शाब्दिकराद्धान्तः।

न चान्याय्यश्चानेकार्थत्वमिति वाच्यम्, भवन्मतेऽपि तुल्यत्वात्। एतावान् परं भेदः—त्वन्मते वृत्तिभेदेन, मन्मते तु एकया वृत्त्या। न च लक्षणोच्छेदापत्तिः, इष्टत्वात्। यथा भवद्भिः सर्वानुभवसिद्धाऽपि व्यञ्जना लाघवान्न स्वीक्रियते। तत्र च व्यञ्जनोच्छेदापत्तेरदूषकत्ववन्मन्मतेऽपि लाघवाच्छक्त्यैव निर्वाहे लक्षणोच्छेदापत्तेरदूषकत्वात्।

वस्तुत एकवृत्त्यैव निर्वाहे अनेकवृत्तिकल्पनमन्याय्यमित्येव तदर्थः, अर्थपदस्य वृत्तिपरत्वात्। अन्याय्यश्चेत्यस्य लाघवमूलत्वात्।

न चानन्यलभ्यः शब्दार्थ इति वाच्यम्, तस्य लक्षणया लभ्ये शा-

क्तिकल्पनमन्याय्यमिति नार्थः, किन्तु संसर्गमर्यादया सिद्धे शक्तिकल्पनमयुक्तमिति तदर्थात् ।

एवञ्च शाब्दिकानां शब्दवद्वन्हौ अतिरिक्तशक्तिस्वीकारः । तार्किकाणां तु शब्दे शक्तिस्वीकारः वन्हौ तु नेत्यर्द्धजरतीयस्वीकारोऽनुचितः । न चोत्तेजकाभावविशिष्टमण्यभावेनोपपत्तौ तत्स्वीकारो व्यर्थ इति वाच्यम्, गुरुभूतविशिष्टस्य कारणतावच्छेदकत्वस्वीकारापेक्षया लघुभूतस्वीकृतातिरिक्तशक्तिसम्बन्धस्यैवोचितत्वात् । किञ्च शाब्दिकमते भेदसहिष्णुरभेदस्तादात्म्यम् । गुणत्वद्रव्यत्वादिना भेदेऽपि गुणं विना द्रव्यानुपलम्भाद् द्रव्यं विना गुणानुपलम्भाच्च तयोस्तादात्म्यम् । एवञ्च समवायो यत्र तत्र तादात्म्यमिति व्यवहारः । तथा च तैः गुणं प्रति घटस्य पूर्ववर्त्तित्वासम्भवेन कारणत्वाभावादन्यथानुपपत्त्या विशिष्टस्यैव कारणतावच्छेदकत्वमङ्गीकृत्य गुणविशिष्टघटं प्रति गुणविशिष्टकपालस्य कारणत्वमिति स्वीकृतम् ।

तार्किकैस्तु विशिष्टस्य कारणतानवच्छेदकत्वाद्विशिष्टस्य कारणत्वासम्भवान्निर्गुणघटोत्पत्तिः स्वीकृता, तत्र च गुणाश्रयत्वरूपद्रव्यत्वलक्षणानाक्रान्तत्वाद् गुणसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वमिति निष्कर्षः कृतः ।

सोऽयुक्त इति मम भाति । तथाहि, प्रतिबन्धकोत्तेजकाभ्यां वन्हौ ज्ञाताऽपि शक्तिरुत्तेजकाभावविशिष्टमण्यभावस्य कारणत्वं स्वीकृत्यातिरिक्ता शक्तिः खण्डिता, शब्दे च सा स्वीकृता । एवं विशिष्टस्य तत्र अवच्छेदकत्वं स्वीकृत्येह नेत्युक्त्वा खपुष्पवन्निर्गुणघटोत्पत्तिः स्वीकृता । सर्वेषामनुभवानारूढत्वादेतत्सर्वमयोग्यमिति दिक् ।

शाब्दिकैस्तु शब्दवद्वन्हौ कर्णविवरवर्त्तिनभसि चातिरिक्ता शक्तिः स्वीकृता । सैव श्रोत्रं, शक्तिविशिष्टं नभो वा । एवञ्च दूरस्थभेरीशब्दस्य स्वस्थानस्थितस्यैव श्रोत्रस्य दीपवत् प्रकाशनसामर्थ्यम् । एवञ्च वीचीतरङ्गन्यायेन भेरीशब्दस्य श्रवणदेशागमनमिति न मनोरमम्, साक्षात् भेरीशब्दं शृणोमीत्यनुभवापलापापत्तेः अनेकशब्दकल्पने गौरवाच्च । न च श्रोत्रमेव तत्र गच्छतीति युक्तम्, आकाशस्य गमनासम्भवात् कर्णविवरे आकाशाभावप्रसङ्गाच्च । श्रोत्रेन्द्रियं गुणमात्रसाक्षात्कारजनकम् ।

केचित्तु श्रोत्रेन्द्रियवद्रसनेन्द्रियघ्राणेन्द्रिययोरपि गुणमात्रसाक्षात्कारजनकत्वमिति वदन्ति ।

तदयुक्तमित्यपरे । तथाहि, शब्दस्याकाशगुणत्वात्समवायेन सा-

क्षात्सम्बन्धसत्त्वेन केवलप्रत्यक्षसम्भवेऽपि रसगन्धयोस्तु संयुक्तसमवायः सन्निकर्षः। स च द्रव्यसम्बन्धे घटते इति परस्परासम्बन्धः। तत्र द्रव्यसाक्षात्कारसन्निकर्षसत्त्वेन द्रव्यं विना केवलगुणस्यासत्त्वेन च केवलगुणसाक्षात्कारासम्भवः। तस्माद् द्रव्यविशिष्टगुणसाक्षात्कारजनकत्वं तयोः, न तु गुणविशिष्टद्रव्यसाक्षात्कारजनकत्वम्; अनुभवेन तथैव शक्त्युन्नयनात्। चक्षुरिन्द्रियत्वगिन्द्रिययोस्तु गुणविशिष्टद्रव्यं द्रव्यविशिष्टो वा गुण इत्युभयविधसाक्षात्कारजनकत्वम्। विस्तरस्तु मत्कृतशब्दार्थतर्कामृते द्रष्टव्यो गौरवभयान्नेह तन्यते इति दिक्।

प्रकृतमनुसरामः। असाधुशब्दस्य वाचकत्वेऽपि व्याकरणप्रतिपाद्यत्वा[illegible]स्फोटत्वाभावः। तदन्तर्गतवर्णानां तु एकाक्षरकोशावधृतशक्तिका[illegible]न्तरप्रकाशकत्वे पदस्फोट इति पदस्फोटे विवेचयिष्यते। अनुकरणशब्दानां तु अनुकार्यानुकरणयोर्भेदविवक्षयाऽनुकार्यरूपार्थप्रतिपादकत्वात् स्फोटत्वम्। ननु साध्वनुकरणस्य साधुत्वेन स्फोटत्वेऽप्यसाध्वनुकरणस्यासाधुत्वात्कथं स्फोटव्यवहार इति चेत्? न, असाध्वनुकरणस्यापि साधुत्वस्वीकारात्। दैत्यैर्हेऽरय इति प्रयोक्तव्ये हेऽलय इति प्रयुक्तं, तदनुकरणं हेलयो हेलय इति कुर्वन्तो न पराबभूवुरिति, न वाक्येऽपि तस्यासाधुत्वम्, तथा यद्वानः तद्वानः भवतु इत्यर्थे यर्वाणस्तर्वाणः भवतु इति प्रयुक्तं, तदनुकरणं कुर्वन्तो यर्वाणस्तर्वाणो नाम ऋषयो बभूवुरिति, न वाक्येऽपि तस्यासाधुत्वं कस्यापि सम्मतम्। तस्मादसाधोरनुकरणस्य साधुत्वं सर्वसम्मतम्। तत्र यदा तयोरभेदविवक्षा तदाऽर्थप्रकाशकत्वाभावान्न स्फोटत्वम्। शुद्धब्रह्मज्ञानाय सर्वबहिर्भूतान्नमयकोशवदखण्डवाक्यबोधनाय वर्णस्फोट इति दिक्।

इति वर्णस्फोटः॥

---

अथ पदस्फोटो वर्णस्फोटापेक्षया अन्नमयकोशापेक्षयाऽन्तरङ्गप्राणमयकोशवदन्तरङ्गो निरूप्यते। अन्तरङ्गत्वं तु साक्षाद्वाक्यघटकत्वेन। वर्णस्य बाहिरङ्गत्वं पदनिष्पत्तिद्वारा तद्घटकत्वम्। पदस्फोटो द्विधा—सखण्डोऽखण्डश्च। व्यवहारादिना पदे एव शक्तिग्रहात्। तत्र योऽस्माकं सखण्डपदस्फोटः 'पचति' 'रामः' इत्यादिसुबन्ततिङन्तरूपः, शक्तं पदमिति मते स एव वाक्यस्फोटस्तार्किकाणाम्॥

अथाखण्डपदस्फोटो निरूप्यते। स च सर्वैः पदस्थितवर्णैर्व्यज्यते। स चार्थप्रत्यायक इति शाब्दिकसिद्धान्तः। न च प्रतीतस्य प्रत्यायक-

त्वन्नास्ति, अन्यथा शब्दं वेत्तीत्यत्रार्थं वेत्तीति प्रत्ययापत्तेरिति अणुदित्सूत्रस्थभाष्यविरोधः । तस्य समान्यतः प्रतीतस्य प्रत्यायकत्वं नास्तीति नार्थः, किन्तु शब्दसंज्ञया प्रतीतस्य शब्दस्येति, प्रकरणानुरोधेन तस्य सङ्कोचात् । एवञ्च रहसि पुस्तकमीक्षमाणस्यार्थप्रत्ययानापत्तिमाशङ्क्य तत्रापि सूक्ष्मोच्चारणमस्त्येवेति नव्योक्तमपास्तम्, अनुभवविरोधाच्च ।

यत्त्वत्र तार्किकवेदान्तिनः—यावद्वर्णव्यङ्ग्यो वा यत्किञ्चिद्वर्णव्यङ्ग्यो वा चरमवर्णव्यङ्ग्यो वा सः ? न तावदाद्यः, आशुविनाशिनां मेलनासम्भवात् । न द्वितीयः, पशब्देनैव व्यञ्जिते स्फोटे टवर्णवैयर्थ्यम् । न तृतीयः, पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहितचरमवर्णेनैवार्थप्रतीतिसिद्धौ किं स्फोटेनेति ।

तन्न, वर्णानामाशुविनाशित्वे मानाभावात् । न चोत्पन्नो गकारः, नष्टो गकार इति प्रतीतिर्मानम् । "तस्माद्वाकाशः सम्भूतः" इतिवदाविर्भावतिरोभावेनाप्युपपत्तेः अनन्तप्रागभावध्वंसकल्पने गौरवाच्च । अनित्यत्वेऽपि वर्णानुभवजन्यसंस्कारजन्यस्मृतौ मेलनसम्भवात् ।

द्वितीयेऽपि न द्वितीयादिवर्णवैयर्थ्यम्, पशब्दोच्चारणे किं पस्फोट उत पटस्फोट उत पटः स्फोट इति सन्देहनिवर्त्तकत्वेन सार्थकयात् ।

तृतीये यथा पटपदशक्यः विजातीयतन्तुसंयोगविशिष्टचरमसंयोगस्यैव पटकार्यकारित्वेऽपि अतिरिक्तोऽवयवी स्वीक्रियते, तथा मयाऽपि स्वीक्रियते । न च तथाऽनुभवादतिरिक्तः पटः, स्फोटेऽपि तुल्यत्वात् गौरवाच्च ।

स्फोटे तु लाघवं कथमिति चेत् ? शृणु, ध्वनिभिरेव स्फोटो व्यज्यते । एवञ्चानन्तवर्णतत्प्रागभावध्वंसकल्पना, नदी दीन सरो रस जरा राज इत्यादौ भिन्नार्थप्रतीत्यर्थमानुपूर्व्याः पूर्ववर्णानुभवजन्यसंस्कारसहितचरमवर्णस्य कारणता च न वाच्येत्यतिलाघवम् । त्वया तु तद्वाच्यमिति गौरवम् । एतावत्प्रघट्टकेन वर्णातिरिक्तः वर्णव्यङ्ग्यः—

चैतन्ये सर्वभूतानां शब्दब्रह्मेति मे मतिः ।

इति शब्दब्रह्मरूपोऽतिरिक्तः स्फोटस्तार्किकादिदूषणाभासनिरसनपूर्वको व्याख्यातः ।

प्रकारान्तरेणाप्युच्यते । अखण्डपदस्फोटो नातिरिक्तः । यत्र तार्किकादिभिर्यौगिकं योगरूढं च पदमित्युच्यते 'पाचकः' 'पङ्कजम्' इत्यादि, तदेवास्माभिः सखण्डपदस्फोटत्वेन व्यवह्रियते, खण्डशक्त्यनुसन्धानपूर्वककोशादिना समुदायशक्तिग्रहात् । यस्य तु व्याकरणज्ञानशून्यस्य

केवलव्यवहारेण समुदायशक्तिग्रहस्तस्य स एवाखण्डपदस्फोटः। यत्तु रूढं पदं मणिनूपुरादि वः नः इत्यादि, तत्सर्वेषामपि अखण्डपद स्फोटत्वेनाभिमतम्, तत्र सर्वेषामपि अवयवार्थज्ञानाभावविशिष्टव्यवहारेण समुदाये शक्तिग्रहात्। एवञ्च रूढयौगिकपदयोः सखण्डाखण्डस्फोटयोश्च पर्यायत्वं नाममात्रे विवाद इति दिक्। एवञ्च तार्किकादीनां दूषणाभासा गर्भस्रावेणैव पराहता इति दिक्।

नहि तार्किकादितर्का एव सत्तर्का इति नियमः, तत्रापि बहुशोऽनुभवाविषयासत्तर्कदर्शनात्। तथा हि विशिष्टस्य कार्यत्वकारणत्वेनैव सिद्धौ निर्गुणघटोत्पत्तिरयुक्तेति पूर्वमुक्तम्। तथा रूपस्य व्याप्यवृत्तित्वनियमाद् घटस्य प्रत्यक्षान्यथानुपपत्त्या स्वीक्रियमाणातिरिक्तं चित्रं रूपमिति कल्पनाऽप्ययुक्तैव, तादृशनियमे प्रमाणाभावात्। अस्तु वा नियमः, तथापि (१)तत्तद्रूपावच्छिन्नतत्तदवयवसन्निकर्षसहितचरमरूपावच्छिन्नचरमावयवसन्निकर्षेणैव घटसाक्षात्कारसिद्धौ अतिरिक्तचित्ररूपस्वीकारे गौरवात्। एवं विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्तस्य चायं घट इत्यादावसम्भवात् घटघटत्वयोः सम्बन्धानवगाहिनिर्विकल्पकज्ञानकल्पनाऽप्ययोग्यत्वादयुक्तैव। नित्यसम्बन्धातिरिक्तसंयोगसम्बन्धादावेव तत्कल्पना 'दण्डी पुरुषः' इत्यादौ, न तु 'अयं घटः' इत्यादौ, तत्र विशिष्टज्ञानस्यैव जायमानत्वात्। एवञ्च निर्विकल्पकज्ञानं न स्वीकार्यमिति महल्लाघवम्।

एवमखण्डखण्डभेदेन कालद्वैविध्यकल्पनमप्ययुक्तमेव, अखण्डस्य व्यवहारानाधायकत्वात्। न च—

जन्यानां जनकः कालो जगतामाश्रयो मतः।

इति जगदाधारत्वेन जनकत्वेन च तत्स्वीकारः, ईश्वरस्यैव तत्प्रसिद्धत्वात्। न च पदार्थखण्डने 'दिक्कालौ नेश्वरादतिरिच्येते' इत्यादिनाऽस्माभिस्तदुक्तमिति वाच्यम्, तत्र दिक्कालयोरेव विशिष्येश्वराभेद उक्तः। स च "सर्वं खल्विदं ब्रह्म" इति श्रुतिविरुद्धः। तथा "यतो वा इमानि भूतानि जायन्ते" "तस्मिन्सर्वं प्रतिष्ठितम्" इत्यादिश्रुतिभिर्जगत्कर्तृत्वं जगदाधारकत्वं चेश्वरस्यैव, न तु कालस्य। तेन "जन्यानां जनकः कालः" इत्यस्य पृथिव्यादिसप्तपदार्थानामपीश्वराभेदेन विशिष्योभयोरेव तदभेदप्रतिपादनस्य चायुक्तत्वात्।

एवं खण्डकालोऽप्ययुक्तः। सूर्यगतिविशेषरूपोपाधिभेदेन हि खण्ड-

(१) 'तत्तद्द्रव्यावच्छिन्न' मुद्रिते।

कालः । एवञ्च सूर्यगतिविशेषस्यैवास्तु खण्डकालत्वं किं तदतिरेकेण। तथा च खण्डकालस्य क्रियात्वम् ।

एवं पीलुपाकवादिभिः परमाणौ पाकं स्वीकृत्य श्यामघटनाशः रक्तघटोत्पत्तिः स्वीकृता, तत्र चक्रदण्डादिनिमित्तकारणाभावात्कथमुत्पत्तिः । निमित्तकारणं विनाऽपि तत्स्वीकारे दण्डचक्रादीनां निमित्तकारणतैवोच्छिद्येत । एवंविधाऽनेकानुभवानारूढगुरुभूततर्काश्रयणं लाघवमूलातिरिक्ताखण्डस्फोटखण्डनं दूषणाभासैरनुचितमिति दिक् ।

वाक्यार्थज्ञानं प्रति पदार्थज्ञानस्य कारणत्वात्पदस्फोटं निरूप्य वाक्यस्फोटो निरूप्यते । स चाखण्डसखण्डभेदेन द्विधा । तत्राखण्डः पदातिरिक्तोऽखण्डपदव्यङ्ग्यो लाघवात्स्वीक्रियते । तच्चाखण्डपदस्फोटे निरूपितम् । अन्यच्चाकाङ्क्षायोग्यतासत्तीनां कारणता न वाच्येति महल्लाघवम् । सखण्डस्तु प्रसिद्ध एव । यद्वा, 'हरेऽव'इत्यादौ एकादेशे कृते पदविभागो दुर्वारस्तत्राखण्डवाक्यस्फोटोऽन्यत्र सखण्ड इति विवेकः । एवञ्च दूषणानां गर्भस्राव एव । तत्र वाक्यं नामैकातिङन्तार्थमुख्यविशेष्यकम् । यथा 'पचति भवति' इति । तत्रापि पचतीत्यस्य विशेष्य वेऽपि मुख्यविशेष्यत्वाभावान्नाव्याप्तिः ।

तार्किकास्तु पूर्वापरग्रन्थैकवाक्यताप्रतिपत्तये "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" (जै०सू०२-१-४६) इति मीमांसासूत्रमुपन्यस्य 'विशेष्यभूतभावनैकत्वात्' इति "अर्थैकत्वात्" इत्यस्य तेषामर्थं त्यक्त्वा 'तात्पर्यविषयैक्यम्' इति स्वयं तदर्थं व्याख्याय, प्रत्यक्षानुमानयोरेकवाक्यत्वमुक्तम् । स्वातन्त्र्ये यद्यत्संङ्गतिमत्तदेकं वाक्यमिति वक्तव्यं, न तु यत्किंचिदर्थकल्पनमुचितं दोषदुष्टञ्च । तथाहि, पठनतात्पर्ये यथैव देवदत्तः पठति तथ पुत्रस्तथैव पठतीत्यत्राप्येकवाक्यत्वापत्तिः । न चेष्टापत्तिः, समानवाक्यत्वात्तेआदेशापत्तेः । तथा "स्योनन्ते सदनं करोमि, घृतस्य धारया सुषेवं कल्पयामि" इति सदनप्रतिपादको मन्त्रः प्रत्यक्षग्रन्थवत् । तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान इति सादनप्रतिपादको मन्त्रः अनुमानवत् । प्रमाणनिरूपणवद्यागाङ्गनिरूपणं तात्पर्यविषयः । एवमनुमानस्य प्रत्यक्षापेक्षत्वेऽपि प्रत्यक्षस्य तदनपेक्षत्ववत् सादनप्रतिपादकमन्त्रस्य सदनप्रतिपादकापेक्षत्वेऽपि सदनप्रतिपादकस्य न तदपेक्षत्वम् । एवञ्चानयोरप्येकवाक्यत्वापत्तिः । न चेष्टापत्तिः, अर्थैक्यादित्यस्य भवदुक्तप्रत्युदाहरणविरोधात् । किञ्चेयं पदैकवाक्यता उत वाक्यैकवाक्यता उत ग्रन्थैकवाक्यता ? नाद्यः क्रियाकारकाणामेव तत्सम्भवात् । तयोरेव

परस्परमाकाङ्क्षासम्भवात् । उभयाकाङ्क्षायामेव तत्सम्भवेनान्यतराकाङ्क्षायां तदसम्भवाच्च । न द्वितीयः, इतरानिरपेक्षतया सिद्धैकवाक्येन सापेक्षेतरवाक्यस्यान्वयो हि सा । प्रकृते च वाक्यसंदर्भरूपग्रन्थयोरेव सा, न तु वाक्ययोः । अनुमानस्थितवाक्यानां 'परामर्शजन्यं ज्ञानमनुमितिः' इत्यादिवाक्यानां प्रत्यक्षवाक्याकाङ्क्षाभावाद् आसत्त्यभावाच्च । किञ्च वाक्यैकवाक्यता हि प्रकरणम्, अन्यतराकाङ्क्षा प्रकरणमिति तल्लक्षणात् । तस्याप्येकवाक्यत्वस्वीकारे वाक्यात्प्रकरणस्य दुर्बलत्वप्रतिपादकश्रुतिलिङ्गवाक्यप्रकरणेत्यादिबलाबलाधिकरणविरोधः । न तृतीयः । प्रत्यक्षानुमानयोराकाङ्क्षा आर्थी, न तु शाब्दी । तस्मादत्र सूत्रलिखनं यत्किंचिदर्थकल्पनमनुचितम्, शिरोमणिग्रन्थस्तु यद्यत्सङ्गतिमत्तदेकं वाक्यमित्यनेनैव सिद्धत्वादिति दिक् ।

प्रकृतमनुसरामः । व्यवहारेण वाक्ये शक्तिग्रहाद्वाक्यस्यैव वाचकत्वाद्वाक्यस्फोटः । न च पूर्वं गृहीताऽपि वाक्ये शक्तिरावापोद्वापाभ्यां त्यक्त्वा पदे गृह्यते इति वाच्यम्, एवं सति पदार्थज्ञानम्प्रति वाक्यार्थज्ञानस्य हेतुतापत्तौ वाक्यार्थज्ञानम्प्रति पदार्थज्ञानस्य हेतुत्वमिति सर्वसिद्धान्तभङ्गापत्तेः । वाक्यस्फोटो द्विधा सखण्डोऽखण्डश्च । अखण्डो द्विधा वर्णातिरिक्तोऽनतिरिक्तश्च । यदा वर्णा न स्वीक्रियन्ते गौरवात्, लाघवात् ध्वनिभिरेवाखण्डो वाक्यस्फोटो व्यज्यते इति मतं, तदाऽतिरिक्तः । अस्मिन्पक्षे वर्णाभावेन यावद्वर्णव्यङ्ग्य इत्यादिदूषणाभासा गर्भस्रावेणैव पराहताः । यदा तु ध्वनिभिर्वर्णा व्यज्यन्ते इति मतं तदा घटमानयेति सखण्डवाक्यस्फोटः, क्रियाकारकयोर्विभागस्य कर्तुं शक्यत्वात् । हरेऽव विष्णोऽवेत्यादौ एकादेशे कृते प्रातिपदिकाख्यातयोर्विभागाशक्यतयाऽनतिरिक्तवाक्यस्फोटः । क्रियाकारकज्ञानशून्यस्यावैयाकरणस्य घटमानयेत्ययमपि अनतिरिक्ताखण्डवाक्यस्फोट एव ।

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ।
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन ॥

इत्ययमखण्डातिरिक्तवाक्यस्फोटप्रकाशः । यथा वर्णे अवयवा न सन्ति तथेत्यर्थः । 'पश्य मृगो धावति' 'पचति भवति' इत्यादावपि अखण्डसखण्डातिरिक्तानतिरिक्तत्वं पूर्ववदेव बोद्धव्यम् । मृगकर्तृकवर्त्तमानधावनक्रियायाः दृशिक्रियायां कर्मतासम्बन्धेनान्वयः । देवदत्तकर्तृकपाचिक्रियाया वर्त्तमानभवनक्रियायामन्वयः । तदुक्तम्—

सुबन्तं हि यथाऽनेकं तिङन्तस्य विशेषणम् ।

तथा तिङन्तमध्याहुस्तिङन्तस्य विशेषणम् ॥ इति ।

यत्तु धावनानुकूलकृतिमान् मृग इति प्रथमान्तविशेष्यकशाब्दबोध इतिपक्षे मृगस्य दृशिधात्वर्थनिरूपितकर्मत्वात् द्वितीयापत्तिः, तमित्यध्याहारे च वाक्यभेदापत्तिरित्याशङ्क्य—

पश्य लक्ष्मण ! पम्पायां बकः परमधार्मिकः ।

इत्यादाविव वाक्यार्थस्य कर्मत्वान्न वाक्यभेद इति कैश्चित्समाहितम् । तन्मुधैव, अन्तरङ्गधावनाक्रियानिरूपितमृगस्य कर्तृत्वात्तस्य चाख्यातेनोक्तत्वात्प्रथमोत्पत्तौ बहिर्भूतदृशिधात्वर्थनिरूपितकर्मत्वेऽपि अन्तरङ्गत्वाज्जातसंस्कारबाधे मानाभावेनैव 'शक्यञ्च श्वमांसादिभिः क्षुदुपहन्तुम्'इतिवदुपपत्तेः ।एवञ्चात्र प्रथमान्तविशेष्यकपक्षेऽपि शाब्दिकदूषणाभावेऽपि एकदेवदत्तकर्तृकपचिक्रियाकर्तृकं भवनमित्यर्थे पचतिभवतीत्येकवाक्यतानापत्तेः।(१)ननु पाकानुकूलकृतिमान्देवदत्तो भवतीत्यर्थे निष्पन्ने"सविशेषणे विधिनिषेधौ विशेषणमुपसङ्क्रामतः सति विशेष्ये बाधे" इति न्यायेन क्रियाया एव कर्तृत्वं भविष्यति । एकवाक्यतायां फलाभावाच्च । न च "समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः" इति निघातः फलम् । "तिङ्ङतिङः" (पा०सू०८-१-२८) इति अतिङ्ग्रहणेन तदभावात् । सत्यम् । त्वत्सम्बन्धिनी देवदत्तकर्तृका पाचिक्रिया भवतीत्यर्थे 'देवदत्तः पचति ते भवति' इति प्रयोगे समानवाक्यत्वाभावेनादेशानापत्तेः । अनेकदेवदत्तकर्तृकैका पचिक्रियेत्यर्थे 'देवदत्ताः पचन्ति भवति' इति प्रयोगोऽपि न स्यात्, अनेककर्तृत्वेन भवतीत्यत्र बहुवचनापत्तेः, 'पश्य मृगो धावति' इत्यत्र निघातरूपप्रयोजनसत्त्वाच्च ।

किञ्चात्र वाक्यार्थस्य कर्मत्वमिति तार्किकोक्तं न युक्तिमत् । तथाहि, वाक्यार्थोऽतिरिक्तोऽनतिरिक्तो वा ? नाद्यः, तस्य वृत्त्यनुपस्थापितत्वेन दृशिक्रियायां कर्मतयाऽन्वयानुपपत्तेः; वृत्त्युपस्थापितस्यैव शाब्दबोधविषयत्वानियमात् ।अन्यथा घटपदात्समवायेनोपस्थिताकाशस्यापि शाब्दबोधविषयत्वापत्तेः । न द्वितीयः । विभक्त्यर्थमद्वारीकृत्य नामार्थस्य धात्वर्थेन समभेदसम्बन्धेनान्वयो ऽव्युत्पन्नः । अन्यथा 'ओदनः पचति'इत्यापत्तेः । न च तत्र वाक्यार्थस्य कर्मत्वं न नामार्थस्येति वाच्यम्; 'रमणीय ओदनः पचति' इत्यस्यानापत्तेः । "पश्य लक्ष्मण पम्पायाम्" इत्यादौ तामिति पदाध्याहारेण वाक्यभेद एव । एवञ्च वाक्यार्थस्य कर्मत्वमि(२)त्याविचारिताभिधानम् । एवं 'नीलो घटो भव-

(१) 'नच' मुद्रिते । (२) 'मित्यपिचारिता' मुद्रिते ।

ति' इति वाक्ये नीलकर्तृकभवनाश्रयो घट इति व्युत्पत्तिवादोक्तमपि न युक्तिमत्, नामार्थस्येत्यादिव्युत्पत्तिबाधे मानाभावात् नीलो घटो भवनाश्रय इति बोधसम्भवाच्च। सविशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामतः सति विशेष्ये बाधे इति विशेषणे नीले एव भवनस्यान्वयो भविष्यतीति दिक्।

एवं "तत्त्वमसि" "सोऽयं देवदत्तः" इत्यादौ सखण्डाखण्डत्वं पू(१)र्ववदेव बोध्यम्। "तत्त्वमसि" इत्यत्र तत्पदवाच्यसर्वज्ञत्वादिविशिष्टचैतन्यस्य त्वंपदवाच्येनान्तःकरणविशिष्टचैतन्येनैक्यासम्भवादैक्यासिद्ध्यर्थं स्वरूपे जहदजहल्लक्षणेति साम्प्रदायिकाः।

नन्वनयोरैक्ये किं मानम्? न च नामार्थैति व्युत्पत्तिः। तस्याः किं नामार्थयोरेवाभेदान्वय उत नामार्थयोरभेद एवेति? नाद्यः 'स्तोकं पचति' 'वैश्वदेवी आमिक्षा' इत्यादौ व्यभिचारात्। नान्त्यः, घटपटौ इत्यादौ व्यभिचारात्। तस्मात्सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यमिति लाघवमूलको हि सः।

सत्यम्। "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति भेदनिन्दापूर्वकाभेदप्रतिपादकश्रुतिर्मानम्। न च तत्रापि यः नाना इव पश्यति स मृत्योर्मृत्युमाप्नोति, यस्तु वस्तुतः नानात्वं पश्यति स नेतीतीवशब्दात्प्रतीयमानार्थेन भेदस्यैव प्रतीतिः, किञ्च राजपुरुष इत्यत्रेव तस्य त्वमिति षष्ठीसमासेनापि भेदस्यैव प्रतीतिः–इति वाच्यम, छान्दोग्येऽपि "सदेव सौम्येदमग्र आसीत्" इत्यारभ्य "तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इत्युपसंहारेणोपक्रमोपसंहारयोरेकरूपेण वेदतात्पर्यनिर्णायकेनैक्यस्य निर्णीतत्वात् "ब्रह्मतम्परादाद्योन्यत्रात्मनो ब्रह्म वेद" इति श्रुत्याऽपि ऐक्यावधारणात्। अस्मिन्पक्षे लाक्षणिकवाक्यस्फोटः।

वस्तुतस्तु अयं वाचकवाक्यस्फोट एव। तथाहि, विशिष्टशक्त्युपस्थापितयोस्तत्त्वंपदार्थयोरभेदान्वयानुपपत्तावपि विशेष्ययोः शक्त्युपस्थापितयोरभेदान्वये बाधकाभावः। यथा 'घटोऽनित्यः' इत्यत्र घटपदवाच्यैकदेशघटत्वस्यायोग्यत्वेऽपि योग्यघटव्यक्त्या सहानित्यत्वान्वयः। यद्वा, विशेष्ये एव शक्तिः, विशेषणं तूपलक्षणम्। अस्मिन्पक्षे न कोऽपि दोषः। यद्वा, यथा नानार्थस्थले संयोगादिनाऽभिधानियमनं तथाऽभेदान्वयानुरोधाद्विशेष्ये एवाभिधानियमनम्। अस्तु

(१) लाघवाद् ध्वनिभिरेव स्फोटो व्यज्यते, वर्णाश्च न स्वीक्रियन्ते गौरनान्तदाऽखण्डो वर्णस्वीकारपक्षे च सखण्ड इति यावत्।

वा लक्षणा, सा च जहल्लक्षणा । तथा च विशेषणांशत्यागमात्रं न तु विशेष्येऽपि तस्या उपयोगः, शक्त्यैव तदुपस्थितिसम्भवात् । एवं 'सोऽयं देवदत्तः' इत्यत्रापि । तथा च जहदजहल्लक्षणोदाहरणमसङ्गतमिति दिक् ।

एवम् 'एको वृक्षः पञ्च नौका भवन्ति' इति वाक्ये सखण्डाखण्डत्वे पूर्ववदेव बोध्ये । अत्र तार्किकाः—

गृह्णाति वाचकः सङ्ख्यां प्रकृतेर्विकृतेर्नहि ।

इति वचनात्प्रकृत्यर्थवृक्षगतमेकवचनमेव भूधातूत्तरं भवतीत्याहुः । तदयुक्तम्, गृह्णातीत्यस्य च्व्यन्तविषयत्वात् । यथा 'संघीभवन्ति ब्राह्मणाः' 'त्वद्भवाम्यहं' 'मद्भवसि त्वम्' इत्यादौ वचनपुरुषयोः प्रकृतिगतयोरेव दर्शनात् । ननु सङ्कोचे किं मानम् ? 'सुवर्णपिण्डः खदिराङ्गारसदृशे कुण्डले भवतः" इति भाष्यप्रयोग एव । उद्देश्यविधेयभावस्थले तु उद्देश्यगता सङ्ख्याऽऽख्यातप्रत्यये "शास्त्राणि चेत्प्रमाणं स्युः" इत्यादिषु ।

पुनरपि वाक्यं द्विधा—काव्यात्मकमकाव्यात्मकं च । द्वितीयं तूक्तम् । आद्यन्तु "तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" इत्यनेन लक्षितम् । अत्र यावद्दोषाभावो वक्तुमशक्यः, असम्भवात् । यत्किञ्चिद्दोषाभावे अदोषपदवैयर्थ्यम् । तस्मान्नञोऽल्प(१)त्वमर्थः 'अनुदरा कन्या' इतिवत् । अल्पत्वं च स्फुटप्रतीयमानदोषराहित्यम् ।

इदं काव्यलक्षणं रसगङ्गाधरे दूषितम्, शब्दार्थयोर्व्यासज्यवृत्तिकाव्यत्वे 'काव्यं श्रुतमर्थो न ज्ञातः' इति व्यवहारासम्भवात् ।

तदसमञ्जसम्, एकदेशे दग्धेऽपि 'पटो दग्धः' इतिवदेकदेशेऽपि प्रयोगसम्भवात् "समुदायवृत्ताः शब्दाः क्वचिदेकदेशेऽपि वर्तन्ते" इति भाष्यात् ।

तल्लक्षणमेव तु न समञ्जसम् । तथाहि, रमणीयार्थप्रतिपादकशब्दः काव्यम् । रमणीयत्वं च लोकोत्तराल्हादजनकज्ञानविषयत्वमिति तल्लक्षणम् । इदञ्च 'तत्त्वमसि' इत्यादावतिव्याप्तम् । न चाल्हादे वैजात्यम् । किन्ततः ? लोकोत्तराल्हादजनकज्ञानविषयत्वस्योभयत्र तुल्यत्वात् ब्रह्मानन्दत्वेन सर्वैर्वर्णितत्वाच्च । किञ्च रमणीयपदस्य रमणीयार्थप्रतिपादकत्वमस्ति न वा ? नाद्यः, रमणीयशब्दस्यापि रमणीयार्थप्रतिपादकशब्दत्वेन काव्यत्वापत्तेः । इदं च भाष्ये "अपशब्दार्थकः शब्दो ऽपशब्द इति चेन्न, अपशब्दस्यापि अपशब्दत्वापत्तेः" इत्यनेन

(१) तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥ इत्युक्तेः

ध्वनितम्। नान्त्यः, रमणीयार्थप्रतिपादकत्वाभावे लक्षणत्वानुपपत्तेः। तस्मात्प्रकाशोक्तमेव लक्षणं सम्यक्।

एवं 'वन्हिना सिञ्चति' इति वाक्यस्फोट एव। ननु वाक्यार्थबोधेऽयोग्यतानिश्चयस्य प्रतिबन्धकत्वं योग्यताज्ञानस्य कारणत्वं तार्किकादिसिद्धान्तसिद्धं, प्रकृते च वन्हिः सेककरणं नेति विषयबाधरूपाऽयोग्यतानिश्चयरूपबाधकसत्त्वाद्विषयाबाधरूपयोग्यताज्ञानासत्त्वात्कथमेतस्य वाक्यस्फोटत्वमिति चेत्? सत्यम्, तात्पर्यविषयाबाधो हि योग्यता। तदभावोऽयोग्यता। प्रकृते चात्युष्णजलेन सिञ्चतीति तात्पर्यविषयः। यथा—

अस्य क्षोणिपतेः परार्द्धपरया लक्षीकृताः संख्यया
प्रज्ञाचक्षुरवेक्षमाणबधिरप्रख्याः किलाकीर्तयः।
गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरात्
मूकानां प्रकरेण कूर्मरमणीदुग्धोदधे रोधसि॥
गगनं गगनाकारं सागराः सागरोपमाः।
रामरावणयोर्युद्धं रामरावणयोरिव॥
कैलासस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः
श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम्।
स्रस्तापाङ्गाः सरसबिसिनीकाण्डसञ्जातशङ्का
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति॥
पश्य नीलोत्पलद्वन्द्वान्निः सरन्ति शिताः शराः।

इत्याद्यालङ्कारिकवाक्येषु 'गङ्गायां घोषः' इत्यादौ 'तत्त्वमसि' इत्यादौ च तात्पर्यविषयाबाधो योग्यत्वमिति सर्वसिद्धान्तः, तथाऽत्रापि। यद्वा, शाब्दबोधे ऽयोग्यतानिश्चयस्य न प्रतिबन्धकत्वं तत्सत्त्वेऽपि 'त्वं बृहस्पतिः' इति स्तावकवाक्यात्सन्तोषोपलब्धेः 'नाहं रण्डापुत्रः' इति बाधनिश्चये सत्यपि 'त्वं रण्डापुत्रः' इति वाक्यात् क्रोधोपलब्धेश्च; शाब्दबोधाभावे एतदनुपपत्तेः। किञ्च 'पश्य नीलोत्पलद्वन्द्वात्' इत्यादिसाध्यवसानादिलक्षणास्थले शरा नीलोत्पलद्वन्द्वोपादानका नेत्ययोग्यतानिश्चये सति तद्वाक्यश्रवणानन्तरं वाक्यीयबोधोत्तरमयोग्यतानिश्चयः पूर्वं वा? नाद्यः, बाधनिश्चये सति बोधाभावात्। नान्त्यः, बोधाभावेऽन्वयानुपपत्तेरभावात्। न हि स्वरूपसती अन्वयानुपपत्तिर्लक्षणाबीजम्, किन्तु ज्ञाता। न च पूर्वमयोग्यतानिश्चयसत्त्वेन तज्ज्ञानमप्यस्त्येवेति वाच्यम्, वाक्यार्थबोधजन्यान्वयानुपपत्तिज्ञानस्य पूर्वमभावात्। गङ्गा घोषाधिकरणं नेति लौकिकज्ञानसत्त्वे 'गङ्गा-

षां घोषः' इति वाक्याद्गङ्गाधिकरणको घोष इति बोधोत्तरमन्वयानुपपत्तिर्हि अनुभवसिद्धा । न च तस्याः पूर्वं ज्ञानं सम्भवति । न च भ्रमात्मको बोध इति तार्किकोक्तं युक्तिमत्, अयोग्यतानिश्चयस्य प्रतिबन्धकत्वं योग्यताज्ञानस्य कारणत्वं प्रकल्पनीयम्, भ्रमात्मको बोधश्च कल्पनीय इति महद्गौरवम् । स्फोटवादिनां त्रितयमपि न कल्प्यमिति लाघवम्; वाक्यार्थबोधजन्यप्रवृत्तावेव तत्स्वीकारात् । किञ्च 'नाहं परमेश्वरः' इति बाधनिश्चये सति 'तत्त्वमसि' इति वाक्याद्बोधाभावे भ्रमात्मकबोधे वा न प्रमात्मकं ज्ञानं सम्भवति, भ्रमात्मकबोधस्य प्रमात्मकबोधजननायोग्यत्वात् । एवं 'दशमस्त्वमसि' इत्यत्रापि ।

ननु अनेकवर्णातिरिक्तोऽनेकध्वनिव्यङ्ग्योऽखण्डवाक्यस्फोटः कः पदार्थ इति चेत् ? शृणु । यथा तार्किकैः पूर्वोक्तमर्यादया गत्यन्तरसम्भवेऽपि चित्ररूपमतिरिक्तं स्वीक्रियते, यथा शाब्दिकैः रेफद्वयाज्भागविशिष्ट एको वर्णः "ऋति ऋ वा लृति लृ वा" इत्यत्र वार्त्तिके स्वीक्रियते, यथा वा "सिद्धमेतत् सस्थानत्वादेचोश्चोत्तरभूयस्त्वात्" इति वार्त्तिकेऽनेकाचामेकवर्णात्मकत्वमुक्तं तथा मयापि अनेकध्वनिव्यङ्ग्यः वाक्यात्मक एको वर्ण इति स्वीक्रियते । स च शब्दब्रह्मरूपः । तत्र मतत्रयम्—

> शब्दब्रह्मेति शब्दार्थः शब्दमित्यपरे जगुः ।
> चैतन्येसर्वभूतानां शब्दब्रह्मेति मे मतिः ॥ इति ।

शब्दब्रह्मेतिनिर्वचनेनापि तस्य वर्णत्वं सिद्धम् । अनुमानादपि । तथाहि, अखण्डवाक्यस्फोटः एकवर्णरूपः, श्रावणत्वात् ध्वनिव्यङ्ग्यत्वाद्वा, यन्नैवं तन्नैवं, यथा पृथिव्यादि । अन्वयदृष्टान्तस्तु मतान्तरसिद्धवर्णादि ।

वस्तुतस्तु अन्वयव्यतिरेक्यनुमानं व्यर्थम्, उपनीतभानेनैव गतार्थत्वात् । तथाहि, यथा चन्दनखण्डस्य लौकिकप्रत्यक्षं सौरभ्यस्यालौकिकं, तथा धूमस्य लौकिकं वन्हेरलौकिकमिति । अस्मिन्पक्षे उपनीतभानमिति विवेकः । यद्वा लाघवाद्दोषाभावाद् ध्वनिव्यङ्ग्यस्यान्यस्याभावाच्च वर्णत्वस्वीकारः । न च ध्वनिव्यङ्ग्यस्य गुणीभूतव्यङ्ग्यप्रभेदे काकाक्षिप्तस्यापि अन्यस्य सम्भव इति वाच्यम्, तस्य ध्वनिविकारकाकुव्यङ्ग्यत्वेऽपि ध्वनिव्यङ्ग्यत्वाभावात् ।

किञ्च "कामः सङ्कल्पो विचिकित्साश्रद्धाऽश्रद्धा भीः ह्रीः इत्येतत्सर्वं मन एव" इति श्रुत्या कामादीनां मनोधर्मत्वे प्रतिपादितेऽपि ता-

किंकैरात्मधर्मत्वमुक्तम्। तच्च सर्वैरप्यङ्गीकृतम् । तत्तु भ्रमात्मकम् । तद्बीजं तु यथा जपाकुसुमसान्निधाने स्फटिको लोहित इति ज्ञानम् । प्रकृते तु मनःसान्निध्यम् आत्मधर्मे बीजं श्रुतिबाधश्च । स्फोटे तु न तथा। तस्मादेकवर्णात्मकोऽखण्डवाक्यस्फोटो वाचक इति सिद्धम्॥

इति श्रीमन्मौनिकुलतिलकायमानगोवर्द्धनभट्टात्मजजानकीजानि-
रघुनाथभट्टात्मजश्रीकृष्णकृतस्फोटचन्द्रिका सम्पूर्णा।